अइउण् १। ऋलृक् २। एओङ् ३। ऐऔच् ४। हयवरट् ५। लण् ६

प्रये'ति शेषः। 'रच प्रतियत्ने। प्रतियत्नो गुणाधानम्। विपूर्वादस्माद्वर्तमानस... भविष्यदर्थे वर्तमानप्रत्ययः। **अइउणिति**। णोऽनुबन्धोऽणसंज्ञार्थः। या या संज्ञा सा प्रयोजनवती॥ **ऋलृगिति**। ककारस्त्वक्इक्उक्संज्ञार्थः॥ **एओङिति**। ङकार एङ्संज्ञार्थः॥ **ऐऔजिति**। चकारस्त्वच्इच्एच्ऐच्संज्ञार्थः। वर्णानामसन्धित्वेन बोधनाय संहिताया अविवक्षणादेतेष्वसन्धिः। स्वराणां चादिषु पाठात् 'चादयोऽसत्त्वे' इति निपातसंज्ञायां 'निपात एकाजनाङ्' इति प्रगृह्यत्वे प्रकृतिभावान्न सन्धिरित्यन्ये। स्यादेतत्। अकाराद्युपदेशेन यथा तत्सवर्णानामाकारादीनां लाभात्पृथगाकारादयो नोपदिष्टास्तथा ऋलृवर्णयोरपि सावर्ण्यादृकारोपदेशेनैवोभयसिद्धेः किं पृथगुपदेशेन?। नच जातिपक्षे ऋलृवर्णयोः पृथगुपदेश आवश्यकस्तयोर्भिन्नजातित्वादिति वाच्यम्, सावर्ण्यादेवैकजात्युपदेशे जात्यन्तरस्यापि लाभात्। ऋलृवर्णयोः प्रत्येकं वंशतः संज्ञासिद्धये 'अणुदित्सवर्णस्य-' इति सूत्रे अण्ग्रहणस्य जातिपक्षेऽप्यावश्यकत्वादिति चेत्। अत्राहुः—ऋलृवर्णयोः सावर्ण्यस्याऽनित्यतां ज्ञापयितुमुभयोर्निर्देशः, तत्फलं तु क्लृप्ता शिखा यस्य क्लृप्तशिखः, तस्य दूरात्संबोधने क्लृ३प्तशिखेति प्लुतः। ऋलृवर्णयोः सावर्ण्यस्य नित्यत्वे तु 'अनृतः' इति पर्युदासादृकारवल्लकारस्यापि प्लुतो न स्यादिति समाधानान्तरमपि 'ओर्गुणः' इत्यत्र दर्शयिष्यते॥ **हयवरडिति**। टोऽनुबन्धोऽट्संज्ञार्थः। हकारोपदेशस्तु अट्अश्हश्इण्ग्रहणेषु ... र्थः। अर्हेण। 'अड्व्यवायेऽपि' इति णत्वम्। देवा हसन्ति। 'भोभगो-' इति रोर्यत्वम्। देवो हसति। 'हशि च' इत्युत्वम्। लिलिहिध्वे लिलिहिढ्वे। 'विभाषेटः' इति ... **लणिति**। णकारोऽनुबन्धोऽण्इण्यण्संज्ञार्थः। नन्वणिति क्वचित्पूर्वणकारेण गृह्यते, क्वचित्तु परेण णकारेण, इणिति तु परणकारेणैव। तथाच निःसन्देहार्थमनुबन्धान्तरमेव कर्तुमुचितम्। सत्यम्। 'व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम्' इ...

**अइउण्**। एषां क्रमबोधकत्वेऽप्यादिरन्त्येनेत्यनेनैकवाक्यतया वृत्तिपरिच्छेदकत्वेन ... सूत्रत्वं, क्रमस्य सञ्ज्ञाद्वारैवोपयोगात्। एकवाक्यता च '–आदिरकारादिरन्त्येनेता तत्स... रादिना सहोच्चार्यमाण आद्यन्ताक्षिप्तानां सञ्ज्ञा–' इति। 'स्वौज'सित्यादीनामप्यतदेकवाक्य ... सञ्ज्ञासूत्रत्वं, स्वादिविधायकत्वञ्चेति बोद्धव्यम्। एषु संहिताया अ... न ... अनुकरणत्वेन–सौत्रत्वाच्च वर्णेभ्यो न विभक्त्युत्पत्तिः। कारप्रत्ययोऽपि ... जोऽप्यविरोधात् सन्धिर्न, तथा ह्यजादिसञ्ज्ञाग्रहकाले 'आद्गुण' इ... नार्मान... तद्...

**ञमङणनम् ७। झभञ् ८। घढधष् ९। जबगडदश् १०। खफछठथचटतव् ११। कपय् १२। शषसर् १३। हल् १४॥** इति माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि॥

---

ज्ञापनाय पुनर्णकारोऽनुबन्ध इति स्थितमाकरे। **ञमङणनमिति।** मकार इह अमुयमुङमुञमुम्संज्ञार्थः। **झभञिति।** ञकारो यञ्संज्ञार्थः। **घढधषिति।** षकारस्तु झष्भष्संज्ञार्थः। **जबगडदशिति।** शोऽनुबन्धो अश्हश्वश्झश्जश्बश्संज्ञार्थः। **खफछठथचटतविति।** वकारस्तु छव्संज्ञार्थः। **कपयिति।** यकारो यय्मय्झय्खय्चय्संज्ञार्थः। **शषसरिति।** रेफस्तु यर्झर्खर्चर्शर्संज्ञार्थः। **हलिति।** लकारः अल्हल्वल्रल्झल्शल्संज्ञार्थः। पुनर्हकारोपदेशस्तु वल्रल्झल्शल्षु हकारग्रहणार्थः। रुदिहि। स्वपिहि। 'रुदादिभ्यः सार्वधातुके' इति वलादिलक्षण इट्। स्निहित्वा। स्नेहित्वा। 'नक्त्वा सेट्' इति निषेधं बाधित्वा 'रलो व्युपधात्—' इति वा कित्त्वम्। अदाग्धाम्। घत्वस्यासिद्धत्वेऽपि हकारस्य झल्त्वात् 'झलो झलि' इति सलोपः। अलिक्षत्। 'शलः—' इति क्सः। ननु पुनर्हकारोपदेशस्यावश्यकत्वेऽपि शर्मध्य एव हकारं पठित्वा 'अलोऽन्त्यस्य', 'हलोऽनन्तराः संयोगः', 'झलो झलि', 'शल इगुपधा—' इत्यादिसूत्राणि यावन्ति लानुबन्धानि तानि 'अरोऽन्त्यस्य', 'हरोऽनन्तराः' इत्येवंरूपेण रेफानुबन्धान्येव च कृत्वा 'हल्' इति पृथक् सूत्रं त्यज्यताम्। मैवम्। तथाहि सति हरिर्हसति हरिर्हरिरित्यादि न [illegible] यत्र। तत्र 'खरवसानयोर्विसर्जनीयः', 'वा शरि' इत्यादिप्रसङ्गात्। अतो 'हल्' इति सूत्रमावश्यकमेव। एवञ्च 'हलिति सूत्रेऽन्त्यम्—' इति वक्ष्यमाणग्रन्थोऽपि स्वरसतः सङ्गच्छते। **अणादिसंज्ञार्थानीति।** अणादिसंज्ञा

---

रूपाऽकारादिषु गृहीताऽजादिपदशक्तिः पश्चादच्प्रत्याहारे ज्ञाते उपेन्द्र इवात्रापि तत्प्रवृत्तौ विरुद्ध्येत; न हि सन्धिकार्ये कृतेऽविकृतरूपश्रवणं भवति'—इति। तन्न। पुनरच्पदस्यार्थान्तरे शक्त्यग्रहेण तद्विरोधाभावात्। न च सन्धौ सन्देहः, व्याख्यानतो निर्णयसम्भवात्।

ननु 'चतुर्दशसूत्र्याम'क्षरसमाम्नाय' इतिव्यवहारानुपपत्तिराम्नायसमाम्नायशब्दयोर्वेदे एव [illegible]रित्यत आह—**माहेश्वराणीति।** महेश्वरादागतानीत्यर्थः, महेश्वरप्रसादलब्धानीति फलितम्। [illegible]नमानुपूर्वीका श्रुतिरेवैषा, तत्प्रसादात्पाणिनिना लब्धा। श्रुतिमूलकत्वादस्यैव वेदाङ्गत्वम्, अत्र [illegible]णं—"येनाक्षरसमाम्नायमधिगम्य महेश्वरात्। कृत्स्नं व्याकरणं प्रोक्तम्—" इति शिक्षावचनम्। [illegible]कारोपयाचा[illegible] [illegible]ृत्तिर्ज्ञापयति—व्याख्यानत इति'—इत्यादावा'चार्य'पदेन महेश्वरः। अनु[illegible] [illegible]हेश्वरकृता एवे[illegible] स्फुटीभविष्यति। 'ञमङणन'मित्यत्र मकारप्रत्याख्यानपरभाष्यन्तु [illegible]मेव तदुच्चारणमुत दृष्[illegible]णी'त्येवं विचारपरं, सर्वत्र प्रत्याख्यानमेवम्परमेव, अन्यथाऽ-

एषामन्त्या इतः ।

अर्थः प्रयोजनं येषां तानीति विग्रहः । अणादिसंज्ञाभ्य इमानि इत्यस्वपदविग्रहो वा । 'अर्थेन नित्यसमासो विशेष्यलिङ्गता च' इति वक्ष्यमाणत्वात् । **एषामन्त्या इत इति । एषां सूत्राणामन्त्या** णादयो 'हलन्त्यम्' इत्यनुपदं वक्ष्यमाणेनेत्संज्ञका इत्यर्थः ।

ज्ञानामपि पारायणे धर्मश्रवणेन तत्र-तत्र पाणिनिन्यासप्रत्याख्यानस्याप्यसङ्गतिः स्यात् । तदुक्तम्— 'इको यणची'ति सूत्रे—'सामर्थ्ययोगान्न हि किंचिदत्र पश्यामि शास्त्रे यदनर्थकं स्यात्' इति । 'किंचि-द्दृष्टाऽदृष्टार्थवत्, किंचिच्छुद्धाऽदृष्टार्थवत्, सर्वथाऽनर्थकं न किंचि'दिति तदर्थः । **'वृद्धि'**सूत्रस्थे- 'वर्णेनाप्यनर्थकेन न भवितव्य'मिति भाष्यग्रन्थेऽनर्थकत्वं बोध्यार्थराहित्यरूपमिति—न निष्प्रयोजनत्व-रूपानर्थक्येन तत्र-तत्र प्रत्याख्यानपरभाष्यासङ्गतिः । अत एव 'सोऽयमक्षरसमाम्नायः—पुष्पितः फलितश्चन्द्रतारकवत्प्रतिमण्डितो ब्रह्मराशि'रिति भाष्यमुपादायोक्तं **भर्तृहरिणा**,—'यथैवेदमव्युच्छिन्नं चन्द्रतारकादि, एवमस्याऽक्षरसमाम्नायस्य न कश्चिदाधुनिकः कर्त्तास्ति, एवमेव वेदपारम्पर्येण स्मर्य-माण' इति । **आधुनिकः**—शरीरी । **पुष्पितत्वं**—तन्मूलकशब्दशास्त्रद्वारेण । शब्दप्रयोगेण च— **फलितत्वम्** । उक्तञ्चैतच्चतुर्दशसूत्रव्याख्यायां नन्दिकेश्वरकृत—**काशिकायाम्**—

**"नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम् ।**
**उद्धर्त्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम् ॥**
**अत्र सर्वत्र सूत्रेषु अन्त्यं वर्णचतुर्दशम् ।**
**धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये ॥" इति ।**

**धात्वर्थं**—धातुमूलकशब्दशास्त्रप्रवृत्त्यर्थम् । अत एव—'अनुबन्धकरणा... वर्णानामुपदेशः' इत्युक्तं भाष्ये । अत्र 'करण'शब्दप्रयोगेणानुबन्धानां सादित्वं सूचितं, तत्करणश्चोपदेशकर्तृकर्त्तृकमेव— प्रत्यासत्तेः, तेन तद्व्यतिरिक्तस्य सर्वस्यानादित्वं सूचितम् । अत्र सनकाद्युद्धरणेच्छयाऽस्य ब्रह्मो-पदेशरूपत्वं सूचितं, तच्च श्रुतित्वाभावे न सङ्गच्छते, 'श्रोतव्यः श्रुतिवाक्येभ्यः—'इत्युक्तेः । **ऋक्तन्त्र-**व्याकरणे **शाकटायनो**ऽपि—'इदमक्षरच्छन्दो वर्णशः समनुक्रान्तं—यथाऽऽचार्या ऊचुर्ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्रायेन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यस्तं खल्विममक्षर-समाम्नायमित्याचक्षते, न भुक्त्वा न नक्तं प्रब्रूयाद्ब्रह्मराशि'रिति । **'ब्रह्मराशि'**रित्यस्य,—ऋ...ति-पादको वर्णराशिरित्यर्थः । तत्त्वञ्च नन्दिकेश्वरकृत**काशिकायां** स्पष्टम् । अत एव 'वृत्तिसमवायार्थो वर्णानामुपदेशः कर्त्तव्यः—' इति भाष्ये उक्तम् । पाणिनेर्लाघवेन शास्त्रप्रवृत्तिफलको यः **समवायो** वर्णानां क्रमेण सन्निवेशस्तदर्थं—इति तदर्थः । स चाऽणादिप्रत्याहारद्वारा शास्त्रप्रवृत्त्यर्थः । एवञ्च... ऽयमुपदेशः पाणिनेरन्यकृत इति स्पष्टमेवोक्तम् । 'मन्त्रोपदेश' इतिवच्चात्रो...देशपदप्रयोगः, अ...वा... 'स्य ज्ञाने सर्ववेदपारायणजं पुण्यं फल'मिति भाष्ये उक्तम् । व्याकरणमु...म्य—'वेदानां ... च्छन्दोगश्रुतिरप्येतत्परैवेति दिक् । तत्प्रयोजनमाह—**सञ्ज्ञार्थानीति** । एतच्चोपपादितम् । प्रणयनञ्च लाघवेन...

ञमङणनम् ७। झभञ् ८। घढधष् ९। जबगडदश् १०। खफछठथचटतव् ११। कपय् १२। शषसर् १३। हल् १४॥ इति माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि॥

ज्ञापनाय पुनर्णकारोऽनुबन्ध इति स्थितमाकरे। **ञमङणनमिति।** मकार इह अम्यम्ङम्ञम्ङम्संज्ञार्थः। **झभञिति।** ञकारो यञ्संज्ञार्थः। **घढधषिति।** षकारस्तु झष्भष्संज्ञार्थः। **जबगडदशिति।** शोऽनुबन्धो अश्हश्वश्झश्जश्बश्संज्ञार्थः। **खफछठथचटतविति।** वकारस्तु छव्संज्ञार्थः। **कपयिति।** यकारो यय्मय्झय्खय्चय्संज्ञार्थः। **शषसरिति।** रेफस्तु यरझरखरचरशर्संज्ञार्थः। **हलिति।** लकारः अल्हल्वल्रल्झल्शल्संज्ञार्थः। पुनर्हकारोपदेशस्तु वल्रल्झल्शल्षु हकारग्रहणार्थः। रुदिहि। स्वपिहि। 'रुदादिभ्यः सार्वधातुके' इति वलादिलक्षण इट्। स्निहित्वा। स्नेहित्वा। 'नक्त्वा सेट्' इति निषेधं बाधित्वा 'रलो व्युपधात्–'इति वा कित्त्वम्। अदाग्धाम्। घत्वस्यासिद्धत्वेऽपि हकारस्य झल्त्वात् 'झलो झलि' इति सलोपः। अलिक्षत्। 'शलः–' इति क्सः। ननु पुनर्हकारोपदेशस्यावश्यकत्वेऽपि शर्मध्य एव हकारं पठित्वा 'अलोऽन्त्यस्य', 'हलोऽनन्तराः संयोगः', 'झलो झलि', 'शल इगुपधा–' इत्यादिसूत्राणि यावन्ति लानुबन्धानि तानि 'अरोऽन्त्यस्य', 'हरोऽनन्तराः' इत्येवंरूपेण रेफानुबन्धान्येव च कृत्वा 'हल्' इति पृथक् सूत्रं त्यज्यताम्। मैवम्। तथाहि सति हरिर्हसति हरिर्हरिरित्यादि न [illegible] यत्र। तत्र 'खरवसानयोर्विसर्जनीयः', 'वा शरि' इत्यादिप्रसङ्गात्। अतो 'हल्' इति सूत्रमावश्यकमेव। एवञ्च 'हलिति सूत्रेऽन्त्यम्–' इति वक्ष्यमाणग्रन्थेऽपि स्वरसतः सङ्गच्छते। **अणादिसंज्ञार्थानीति।** अणादिसंज्ञा

रूपाऽकारादिषु गृहीताऽजादिपदशक्तिः पश्चादच्प्रत्याहारे ज्ञाते उपेन्द्र इवात्रापि तत्प्रवृत्तौ विरुद्धयेत; न हि सन्धिकार्ये कृतेऽविकृतरूपश्रवणं भवति'–इति। तन्न। पुनरच्पदस्यार्थान्तरे शक्त्यग्रहेण तद्विरोधाभावात्। न च सन्धौ सन्देहः, व्याख्यानतो निर्णयसम्भवात्।

ननु चतुर्दशसूत्र्याम'क्षरसमाम्नाय' इतिव्यवहारानुपपत्तिराम्नायसमाम्नायशब्दयोर्वेदे एव [illegible]रित्यत आह–**माहेश्वराणीति।** महेश्वरादागतानीत्यर्थः, महेश्वरप्रसादलब्धानीति फलितम्। [illegible]नुमानुपूर्वीका श्रुतिरेवैषा, तत्प्रसादात्पाणिनिना लब्धा। श्रुतिमूलकत्वादस्यैव वेदाङ्गत्वम्, अत्र [illegible]प–"येनाक्षरसमाम्नायमधिगम्य महेश्वरात्। कृत्स्नं व्याकरणं प्रोक्तम्–' इति शिक्षावचनम्। [illegible]कारोवपयाचार्य [illegible]त्तिर्ज्ञापयति–व्याख्यानत इति'–इत्यादावा'चार्य'पदेन महेश्वरः। अनु[illegible]हेश्वरकृता एवे[illegible] स्फुटीभविष्यति। 'ञमङणन'मित्यत्र मकारप्रत्याख्यानपरभाष्यन्तु [illegible]मेव तदुच्चारणमुत दृष्ट[illegible]मी'त्येवं विचारपरं, सर्वत्र प्रत्याख्यानमेवम्परमेव, अन्यथाऽ-

एषामन्त्या इतः।

अर्थः प्रयोजनं येषां तानीति विग्रहः। अणादिसंज्ञाभ्य इमानि इत्यस्वपदविग्रहो वा। 'अर्थेन नित्यसमासो विशेष्यलिङ्गता च' इति वक्ष्यमाणत्वात्। **एषामन्त्या इत इति।** **एषां सूत्राणामन्त्या** णादयो 'हलन्त्यम्' इत्यनुपदं वक्ष्यमाणेनेत्संज्ञका इत्यर्थः।

ज्ञानामपि पारायणे धर्मश्रवणेन तत्र-तत्र पाणिनिन्यासप्रत्याख्यानस्याप्यसङ्गतिः स्यात्। तदुक्तम्—'इको यणचि'ति सूत्रे—'सामर्थ्ययोगान्न हि किञ्चिदत्र पश्यामि शास्त्रे यदनर्थकं स्यात्' इति। 'किञ्चिद्दृष्टाऽदृष्टार्थवत्, किञ्चिच्छुद्धाऽदृष्टार्थवत्, सर्वथाऽनर्थकं न किञ्चि'दिति तदर्थः। **'वृद्धि'**सूत्रस्थे-'वर्णेनाप्यनर्थकेन न भवितव्य'मिति भाष्यग्रन्थेऽनर्थकत्वं बोध्यार्थराहित्यरूपमिति—न निष्प्रयोजनत्वरूपानर्थक्येन तत्र-तत्र प्रत्याख्यानपरभाष्यासङ्गतिः। अत एव 'सोऽयमक्षरसमाम्नायः—पुष्पितः फलितश्चन्द्रतारकवत्प्रतिमण्डितो ब्रह्मराशि'रिति भाष्यमुपादायोक्तं **भर्तृहरिणा,**—'यथैवेदमव्युच्छिन्नं चन्द्रतारकादि, एवमस्याऽक्षरसमाम्नायस्य न कश्चिदाधुनिकः कर्त्तास्ति, एवमेव वेदपारम्पर्येण स्मर्यमाण' इति। **आधुनिकः**—शरीरी। **पुष्पितत्वं**—तन्मूलकशब्दशास्त्रद्वारेण। शब्दप्रयोगेण च—**फलितत्वम्।** उक्तञ्चैतच्चतुर्दशसूत्रव्याख्यायां नन्दिकेश्वरकृत—**काशिकायाम्**—

**"नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम्।**
**उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम्॥**
**अत्र सर्वत्र सूत्रेषु अन्त्यं वर्णचतुर्दशम्।**
**धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये॥" इति।**

**धात्वर्थं**—धातुमूलकशब्दशास्त्रप्रवृत्त्यर्थम्। अत एव—'अनुबन्धकरणार्थं वर्णानामुपदेशः' इत्युक्तं भाष्ये। अत्र 'करण'शब्दप्रयोगेणानुबन्धानां सादित्वं सूचितं, तत्करणञ्चोपदेशकर्तृकर्तृकमेव—प्रत्यासत्तेः, तेन तद्व्यतिरिक्तस्य सर्वस्यानादित्वं सूचितम्। अत्र सनकाद्युद्धरणेच्छयाऽस्य ब्रह्मोपदेशरूपत्वं सूचितं, तच्च श्रुतित्वाभावे न सङ्गच्छते, 'श्रोतव्यः श्रुतिवाक्येभ्यः'—इत्युक्तेः। **ऋक्तन्त्र**व्याकरणे **शाकटायनो**ऽपि—'इदमक्षरच्छन्दो वर्णशः समनुक्रान्तं—यथाऽऽचार्या ऊचुर्ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्रायेन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यस्तं खल्विममक्षरसमाम्नायमित्याचक्षते, न भुक्त्वा न नक्तं प्रब्रूयाद्ब्रह्मराशि'रिति। **'ब्रह्मराशि'**रित्यस्य,—ऋक्प्रातिपादको वर्णराशिरित्यर्थः। तत्त्वञ्च नन्दिकेश्वरकृत**काशिकायां** स्पष्टम्। अत एव 'वृत्तिसमवायार्थो वर्णानामुपदेशः कर्त्तव्यः—' इति भाष्ये उक्तम्। पाणिनेर्लघवेन शास्त्रप्रवृत्तिफलको यः **समवायो** वर्णानां क्रमेण सन्निवेशस्तदर्थ—इति तदर्थः। स चाऽणादिप्रत्याहारद्वारा शास्त्रप्रवृत्त्यर्थः। एवञ्चायमुपदेशः पाणिनेरन्यकृत इति स्पष्टमेवोक्तम्। 'मन्त्रोपदेश' इतिवच्चात्रोपदेशपदप्रयोगः, अत एवा...रीति, ...स्य ज्ञाने सर्ववेदपारायणजं पुण्यं फल'मिति भाष्ये उक्तम्। व्याकरणमुप...म्य—'वेदानां ...पणि' च्छन्दोगश्रुतिरप्येतत्परैवेति दिक्। तत्प्रयोजनमाह—**सञ्ज्ञार्थानीति।** एतच्चोपपादितम्। प्रणयनञ्च लाघवेन ... **एषा**...

लण्सूत्रेऽकारश्च । हकारादिष्वकार उच्चारणार्थः ॥

**लण्सूत्रेऽकारश्चेति।** अनन्त्यत्वात्पृथगुक्तिः। वचनविपरिणामेनेदिति सम्बध्यते। इत्संज्ञा चास्य 'उपदेशेऽजनुनासिक इत्' इत्यनेन। एवञ्च णादिभिरिद्भिः 'आदिरन्त्येन—' इति वक्ष्यमाणेन प्रत्याहारग्रहणात् 'अणादिसंज्ञार्थानि' इति यदुक्तं तत्सङ्गच्छत इति भावः। **अकार उच्चारणार्थ इति।** ननु लण्सूत्रस्थाऽकार इव प्रयोजनार्थ इत्यर्थः।

**अकारश्चेति।** तेन 'र'प्रत्याहारसिद्धिः। अनन्त्यत्वात्पृथगुक्तिः। इदं तुल्यास्यसूत्रस्थकैयटानुरोधेन। **परे** लस्यानुनासिकत्वे—'अतो ले'ति सूत्रे पाणिनिर्लकारं नोच्चारयेत्, प्रत्याहारेणैव निर्वाहात्। किञ्चास्येत्सञ्ज्ञकत्वे बहुषु यण्पदघटितसूत्रेष्वर्द्धमात्रालाघवानुरोधेन 'य'प्रत्याहारेणैव व्यवहरेत्। किञ्चानुबन्धानामच्प्रत्याहारे ग्रहणाभावे—'आचारादप्रधानत्वाल्लोपश्च बलवत्तर' इति भाष्योक्तस्य—तृतीयहेतोरव्यापकत्वापत्तिः तव लोपस्य बलवत्त्वेऽपि हल्प्रत्याहारसिद्धेः प्रागच्पदार्थनिष्पत्त्यभावेनोपदेशेऽजित्यस्य वाक्यार्थाभावेन, लणित्यकारस्येत्सञ्ज्ञालोपयोरभावेन—प्रत्याहारेषु जातिग्रहणपक्षस्यैव भाष्यकृता सिद्धान्तितत्वेन—हल्प्रत्याहारे लणित्यकारप्रवेशे—'मामाँस्त्रायस्वे'त्यत्रानुनासिकपक्षेऽनुस्वारापत्तिर्दुर्वारा। 'सोऽस्त'त्यादौ सुलोपाद्यापत्तिश्च। अत एव 'प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु ने'त्यनेन '**प्रत्याहारे**—वर्णसमाम्नाये य एतेऽक्षु—अज्बोधकसूत्रेषु—प्रत्याहारार्था **अनुबन्धाः** क्रियन्ते—तेषामज्**ग्रहणेन** ग्रहणं कस्मान्ने'त्यर्थकेनाच्प्रत्याहारे शङ्का कृता, न हल्प्रत्याहारे। भाष्ये च 'अइउ'-णित्यादिसूत्रचतुष्टयोपादानेनैवास्य प्रवृत्तिर्दर्शिता। तत्र **प्राधान्यं**—प्रत्याहारेषु ग्रहणार्थत्वरूपम्, हल्षु च तथोपदेशस्तेषाम्, अक्षु तु स्वराणामेव तथोपदेश इति प्राधान्यात्तेषामेव सञ्ज्ञित्वमिति भाष्ये स्पष्टम्। न च हशादिप्रत्याहारे 'ट'ग्रहणस्यापत्तिरिति वाच्यं, हकारादिषु पुनः—पुनरकारोच्चारणेन—उच्चारणार्थवर्णरहितहलां तद्घटितप्रत्याहारे ग्रहणाभावस्य वक्तुं शक्यत्वात्। तद्विषयप्रयोगाणामनभिधानाच्च। तस्मादस्यानुनासिकत्वमप्रामाणिकम्, 'उरण्रपर' इत्यत्र 'ल'ग्रहणं कर्तव्यमेव, ऋलृवर्णयोः सावर्ण्यवदित्याहुः।

ननु 'हये'त्यादावकारोच्चारणेन तस्य हल्त्वप्रसङ्गोऽत आह—**हकारादिष्विति**। 'न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि भवती'ति—'उच्चैरुदात्तः' इतिसूत्रस्थभाष्यात्, 'एषा ह्याचार्यस्य शैली लक्ष्यते यत्तुल्यजातीयाँस्तुल्यजातीयेषूपदिशति, अचोऽक्षु हलो हल्षु' इति—'प्रत्याहारेऽनुबन्धाना'मित्यत्र भाष्याच्चेति भावः॥ **स्यादेतत्**—'न विभक्तौ'त्यादेः सार्थक्याय—'हलन्त्य'मित्यस्यो'पदेशेऽन्त्यं हल् इ'दित्यर्थस्यावश्यकत्वेन 'हलन्त्यम्' 'आदिरन्त्येने'त्यनयोः परस्परापेक्षत्वेनान्योन्याश्रया-[illegible]कारे इत्सञ्ज्ञामबोधयित्वा हलामित्सञ्ज्ञाबोधनं पाणिनेरयुक्तम्। न च 'हयवरे'त्यादेरावृत्त्या 'शषस'रित्यन्तं समुदायमुद्दिश्य—'ह'लित्यनेन हल्सञ्ज्ञाऽपि विधेयेति वाच्यं, दशसूत्रावृत्तौ गौरवात्। [illegible]देशे इदन्त्यम्', 'अच्', 'अनुनासिकः'—इति सूत्रत्रयमस्तु, 'अ'जित्यनन्त्यार्थं, तृतीयेऽजित्यनु-[illegible]र्गादच्चेदिद्भवति तर्ह्यनुनासिक एवेति नियमाश्रयणाद्बृप्रभृतौ न दोषः। योगविभागसामर्थ्या-[illegible]त्यायं बाधित्वा व्यवहितस्यापि तेन नियमः। 'मिदचोन्त्या'दिति ज्ञापकाच्च न विप-

**हलन्त्यम्** ।१।३।३। हलिति सूत्रेऽन्त्यमित्स्यात् ॥

**हलन्त्यम्** । अन्तेऽवसाने भवमन्त्यम् । दिगादित्वाद्यत् । 'उपदेशेऽजनुनासिक इत्' इत्यत 'उपदेशे' इति, 'इ'दिति चात्रानुवर्तते । 'आदिरन्त्येन–' इति सूत्रेण सहाऽन्योन्याश्रयमाशङ्क्य आवृत्त्या तं परिहरति–**हलिति सूत्रेऽन्त्यमिति** । हलि अन्त्यमिति विग्रहे 'सप्तमी' इति योगविभागात्, 'सुप्सुपा' इति वा समास इति

रीतनियमः, एवञ्च हल्ग्रहणमपि व्यर्थमन्योन्याश्रयश्च न। न च पाणिनिसूत्रभेदे पारायणादावदृष्टहानिः, तथा च तत्र–तत्र भाष्यम्–'अपाणिनीयन्तु भवती'ति वाच्यं, कल्प्यमानन्यासस्य लघुत्वेऽस्याऽदोषत्वात्–, 'सूत्रभेदं तमुपाचरन्ति यत्र तदेवाऽन्यत्सूत्रं क्रियते, भूयो वा, यदि तदेवोपसंहृत्य क्रियते–नासौ सूत्रभेदः' इति 'अच उपसर्गात्तः' इति सूत्रभाष्यात् । 'नासौ सूत्रभेद' इत्यस्य–'दोषाये'ति शेषः । सति सम्भवे दृष्टद्वारैवाज्ञानामदृष्टार्थत्वमिति तदाशयः । अत एव तत्र–तत्र ज्ञापकपरसकलभाष्योच्छेदो नेति चेन्न, योगविभागनियमज्ञापकाश्रयणेऽतिगौरवात्, न हि 'वर्णाभिव्यक्तिजनककण्ठाद्यभिघातगौरवमेवादर्त्तव्यं, न तु ज्ञानजनकमनोव्यापारगौरव'मिति–राजाज्ञाऽस्ति ! । न च 'सह आ–समन्तात्, **एति**–गच्छतीति–**सहेता**–मध्यमो वर्ण'इत्यर्थ इत्यतो नान्योन्याश्रय इति वाच्यम्, अन्योन्याश्रय–तत्परिहारादीन् वदता भाष्यकारेण–'कटी' 'वी'त्यत्र प्रश्लिष्टादीङ्गतावित्यतश्च 'सहाऽऽङ्पूर्वात्तृजभावबोधनात् । किञ्च योगमर्यादया तत उक्तार्थालाभः, 'आ समन्ता'दित्यस्यानन्वितार्थत्वं –व्यर्थत्वञ्च । रूढौ तु न मानमतः सूत्रावृत्त्या तं परिहरति–**हलन्त्यमिति** । भाष्येऽप्यन्योन्याश्रयमाशङ्क्य–'हलन्त्यमित्सञ्ज्ञं भवति, लकारश्चेद्भवतीति वक्तव्य'–मित्युक्त्वा–'एकशेषनिर्देशाद्वा सिद्धम्' हल् च हल् च हल्–हलन्त्यमित्' इत्युक्तम्। तस्यायं भावः,–कृतैकशेषेण हलपदेन सम्बन्धसामान्यषष्ठ्या समासोऽन्त्यशब्दस्य च द्वन्द्वान्ते श्रूयमाणस्येवोभयत्रान्वयः, एवञ्च हल्सूत्रान्त्यं हल्रूपान्त्यञ्चेति बोधः । अन्त्ये–'राहोः शिर' इतिवत्षष्ठी'ति । अत्रोच्चारयितुरेकशेषनिर्देशो बोद्धुस्त्वावृत्त्या बोधः । 'हसमीपो लकार इत्, हल्रूपान्त्यञ्चे'ति कैयटोक्तव्याख्यायान्तु–'हल् इत्सञ्ज्ञम्भवति, हलन्त्यञ्चे'दिति वदेदित्यूह्यम् । नन्वेवमपि 'न विभक्तौ'विति विभक्तिपदबोद्ध्यसुप्तिङ्बोधो 'हलन्त्य'–मिति वाक्यार्थबोधोत्तरं, तद्बोधश्चापवादवाक्यार्थबोधोत्तरमित्यन्योन्याश्रयस्तदवस्थ एवेति चेन्न, अपवादवाक्यार्थबोधात्पूर्वं पदपदार्थोपस्थितावुत्सर्गवाक्यार्थबोधे प्रतिबन्धकाभावात् । न ह्यभावज्ञाने प्रतियोगिज्ञानस्येव प्रतियोगिज्ञानेऽभावज्ञानस्य कारणता कस्यापि सम्मता ! प्रतियोगिज्ञानं विना निषेधवाक्यार्थाऽसम्भवाच्च । 'पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः' इत्यस्य त्वयं भावः–'लक्षणैकचक्षुष्कस्य उद्देश्यतावच्छेदकावच्छिन्ने सर्वत्रोत्सर्गकृतसंस्कारबुद्धावुत्सर्गापवादयोर्विषयव्यवस्थानापत्त्या, –'भुक्तवन्तम्प्रति मा भुक्था' इति वाक्यस्येव–अपवादशास्त्रवैयर्थ्यापत्त्या चापवादशास्त्रपर्यालोचनेन तद्विषयलक्ष्यसंस्कारं निर्णीय,–तदविषयं तत्तल्लक्ष्यं तत्तद्विषयवाक्योपप्लवद्वारोत्सर्गेण संस्करोति, अन्यथा विकल्पापत्ति'रिति । यद्यपि 'भुक्तवन्तं प्रती'ति न्यायो लुगादिना जातनिवृत्तेर्व्यभिचा[illegible]पि तत्राप्यनुत्पत्तिरेवेति न दोषः । न्यायानङ्गीकारेऽपि विकल्पापत्तेः सत्त्वाच्च । 'अ[illegible]

**आदिरन्त्येन सहेता । १।२।७१ ।** अन्त्येनेता सहित आदिर्मध्यगानां

भाव: । यद्वा षष्ठीतत्पुरुषोऽयं, 'हलिति सूत्रस्यान्त्यमित्स्यात्' इति व्याख्यानसम्भवात् ।

**आदिरन्त्येन सहेता** । अन्त्येनेति किम् ? । 'सु'डिति प्रत्याहारस्तृतीयैकवचनावयवेन मा भूदिति **काशिकाकृत्** । यद्यपि टकारान्तसङ्घस्य टाटकारोऽप्यन्त्यो भवति, तथाप्यन्त्येनेति ग्रहणसामर्थ्यादन्त्यत्वप्रयुक्ता यस्येत्संज्ञा तेनैव प्रत्याहार:, न हि टाटकारे 'हलन्त्यम्' इतीत्संज्ञा प्रवर्तते । नचैवं 'र'प्रत्याहाराऽसिद्धि: । लण्सूत्रस्थावर्णस्यानुनासिकत्वप्रतिज्ञासामर्थ्यादनन्त्येनापि इता प्रत्याहारात्तत्सिध्यतीति **काशिका**काराशय: । निष्कर्षस्त्विह–'स्वौजसमौट्–' इति सूत्रे दर्शयिष्यते । विस्तरस्तु शब्दकौस्तुभेऽनुसन्धेय: । इतेति किम् ? । रप्रत्याहारो यथा स्यात् । स ह्यनुनासिकत्वप्रतिज्ञासामर्थ्यादनन्त्येनापि गृह्यत इत्युक्तम् । न चैतदितेत्यस्य विरहे लभ्यत इति **शब्दकौस्तुभे** स्थितम् ॥ अत्राद्यन्ताभ्यामवयवाभ्यामवयवी समुदाय आक्षिप्यते । तस्य च युगपल्लक्ष्ये प्रयोगाभावात्तदवयवेष्ववतरन्ती संज्ञा मध्यगेषु विश्राम्यति, नत्वाद्यन्तयो:, संज्ञास्वरूपान्तर्भावेण तयो: पारार्थ्यनिर्णयादित्याशयेनाह—**मध्यगाना-**

इत्यस्य–बुद्ध्या रुद्धा भवन्तीत्यर्थ: । **लक्ष्यैकचक्षुष्कस्तु**–तत्तच्छास्त्रपर्यालोचनं विनापि अपवादविषयं परित्यज्योत्सर्गेण लक्ष्यसंस्कारआनीते, तस्यापि शास्त्रप्रक्रियास्मरणपूर्वकप्रयोग एव धर्मोत्पत्ते: । तदुक्तम्–'प्रकल्प्य वापवादविषयं तत उत्सर्ग: प्रवर्तते' इति । **प्रकल्प्य**–परित्यज्य । **यत्तु**–'प्रकल्प्य वे'त्यस्यायमर्थ:,–यथा 'न सम्प्रसारणे' इति वचनात्परस्य यण: पूर्वं सम्प्रसारणं पूर्वस्य तु तन्निमित्त: प्रतिषेध इति–अभ्यस्तसञ्ज्ञासूत्रे कैयट:, तन्न, 'न सम्प्रसारणे' इति सूत्रस्थभाष्यविरोधात् । तत्र हि 'एतदेव ज्ञापयति परस्य न पूर्वस्येति, यद्वा सम्प्रसारणाश्रयस्य प्रतिषेध:–' इत्याद्युक्तम् , न हि न्यायेन सिद्धे एवमुक्तिरुचिता, तस्मान्न्यायस्य मदुक्त एव विषय इति बोद्धव्यम् । **यदपि**–'अपवादवाक्यार्थं विना नोत्सर्गवाक्यार्थ इति तदर्थ' इति, तदपि न, उक्तयुक्ते: । 'न विभक्तौ तुस्मा:' इति शास्त्रस्थतुस्मपदार्थज्ञानमात्रेण टादीनामेतद्विषयत्वाभावबुद्ध्या तेषु हलन्त्यसूत्रप्रवृत्त्या सुप्तिङ्रूपविभक्तिपदार्थज्ञानं सुलभमिति दिक् । अत्राप्युपदेश इति सम्बद्ध्यते, तद्बललभ्यमर्थमाह–**सूत्रे इति** ।

**आदिरन्त्येन** । आदिरिति किम् ?, अन्त्यशब्देन पूर्वेषामाक्षेपादिगादिप्रत्याहारेऽकारादिग्रहणं मा भूदिति । एवमादिशब्देन परेषामाक्षेपादिणादिप्रत्याहारेषु नादीनां ग्रहणं मा भूदिति–'अन्त्येने'ति । 'आदि:'–'अन्त्येने'त्युभयोपादाने तु न दोष: । लोके 'अयमादिरन्त्यो वे'त्युक्तेऽवशिष्टमपि किञ्चिदस्तीति नियमेन प्रतीते: । 'परस्मिन्सति यस्मात्पूर्वो नास्ति स आदि:' 'पूर्वस्मिन्सति यस्मात्परो नास्ति सोऽन्त्य' इति–अकारादिग्रहणे–इकारणकारादीनामाद्यन्तत्वस्यैवानापत्ते: । अत्राद्यन्ताभ्यामवयवत्वेन बोधकाभ्यां स्वघटित: समुदाय आक्षिप्त: सञ्ज्ञी । तस्य चैकत्र लक्ष्ये प्रयोगाभावात्प्रत्येकं [illegible] । अन्त्यस्य तु न तत्कार्यं, तस्येत्सञ्ज्ञालोपाभ्यामपहारात् । एतत्फलितकथनमेव भाष्ये,

स्वस्य च संज्ञा स्यात्। इति हल्संज्ञायाम्॥

**हलन्त्यम्** १।३।३। उपदेशेऽन्त्यं हलित्स्यात्।

मिति। **स्वस्य चेति**। 'स्वं रूपम्' इत्यनुवर्तत इति भावः। स्वं रूपं चादेरेव गृह्यते नान्त्यस्य, 'अन्त्येन' इत्यप्रधानतृतीयानिर्देशात्। सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वात्। ननु 'स्व'मित्यस्यानुवृत्तौ 'कः संज्ञी' इत्याकाङ्क्षायाः शान्तत्वादवयव्याक्षेपो न स्यात्। तथा च 'इको यणचि' इत्यादाविकारस्य स्थाने यकारः स्यादकारे परे इत्येवमर्थः स्यात्। मैवम्। आदेरेव संज्ञित्वे तु 'आदिरन्त्येन' इति संज्ञाकरणस्यैव वैयर्थ्यापत्तेः। किंच अण्अक्अच्अट्अम्अशादीनां पृथङ्निर्देशोऽपि व्यर्थः स्यात्, सर्वत्राऽकारस्यैव संज्ञित्वादिति दिक्। **शब्दकौस्तुभे तु**-आद्यन्तावयवद्वारा समुदायानुकरणेन सिद्धेऽन्त्यव्यावृत्त्यर्थमिदं सूत्रमिति स्थितम्॥

**उपदेशेऽन्त्यं हलिति**। उपदेशे किम्?। अग्निचित् सोमसुदिति **काशिका**। अत्रेत्संज्ञायां लोपः स्यात्। नच तुको वैयर्थ्यम्। आगत्येत्यादौ चरितार्थत्वात्। नच क्विपः पित्त्वस्य वैयर्थ्यम्, अग्निचितावित्यादौ चरितार्थत्वादिति **हरदत्तः**। अन्त्यं किम्?। मनिनो मकारस्य मा भूत्। सत्यां हीत्संज्ञायामन्त्यादचः परः

---

मूले च-**स्वस्य च रूपस्येति**। 'स्व'मित्यनुवृत्तिपरत्वेन व्याख्यानन्तु हेयमेव, अनुवृत्तौ फलाभावात्। इतेति किं?-'ञमङणने'ति णकारादिभिः प्रत्याहारो मा भूदिति। 'सह'ग्रहणाच्च समुदाय एव सञ्ज्ञेति समुदायादेवेक इत्यादौ विभक्त्युत्पत्तिर्नादिमात्रात्। न चान्त्यस्येत्सञ्ज्ञालोपाभ्यामपहारात् 'आदिरन्त्येने'त्यसङ्गतं, सूत्रेष्वित्सञ्ज्ञायामपीगादिशब्देषु तदभावात्, 'अन्त्येने'त्यस्येदन्त्यसदृशेनेत्यर्थात्, व्यक्तिपक्षे एवमेवौचित्यात्, सादृश्यमूलिकैव चात्र तत्त्वप्रत्यभिज्ञेत्याहुः। 'अचि श्नुधात्वि'तिसूत्रे 'इण' इत्येव सिद्धे 'य्वो'रिति निर्देशादिण्परेणैवेति लण्सूत्रे भाष्ये स्पष्टम्॥

**हलन्त्यम्**। अत्र पदद्वयं, समासेऽन्त्यशब्दस्य पूर्वनिपातापत्तेः। कर्मधारययोग्यपदानां समासाऽभावस्य सूत्रकारशैलीसिद्धत्वाच्च। यद्यपि सर्वोऽपि हल् तं तं समुदायं प्रत्यन्त्यो भवति तथाप्यन्त्यपदोपदेशपदाभ्यां प्रत्यासत्त्याऽज्ञातस्वस्वरूपज्ञापकोच्चारणविषयसमुदायं प्रत्यन्त्य इह गृह्यते, अत एव-मकारेत्सञ्ज्ञापरित्राणार्थस्थमोरुकारश्चरितार्थः, समुदायोपदेश एव सर्वत्र ऋषितात्पर्येणाऽवयवानां नान्तरीयकतया तेषामज्ञातस्वस्वरूपज्ञापकत्वाभावात्। **उपदेशेऽन्त्यमिति**। तत्र विद्यमानमन्त्यमित्यर्थः। तेन 'अइउ'णित्यादौ णादीनां हल्प्रत्याहारसिद्ध्युत्तरं तत्सिद्धिः, अन्यत्र त्वन्तरङ्गत्वात्प्राय उच्चारणेनाभिव्यक्तस्य तदव्यवधानेनैवेत्सञ्ज्ञा, पदार्थोपस्थितिरनुबन्धविनिर्मुक्तस्यैव, 'उपदेशोत्तरकाल इत्सञ्ज्ञे'ति 'नाज्झला'विति सूत्रभाष्यात्। 'धु'डित्यादौ सानुबन्धाद्विभक्तिस्तु-तेनैवानुबन्धविनिर्मुक्तोपस्थितेस्तस्यैवार्थवत्त्वात्सुलभा। इत्सञ्ज्ञाकार्यं तु यत्र सञ्ज्ञा तत्रानर्थक्याऽनुपस्थाप्य एव। स्पष्टश्चेदं-'तित्स्वरित'मित्यत्र कैयटे। वैयाकरणे चित्स्वरस्तु न, तस्येचकारस्य

**उपदेश आद्योच्चारणम् । ततोऽणजित्यादिसंज्ञासिद्धौ—॥**

स्यात् । वेश्म, सद्म । 'सर्वधातुभ्यो मनिन्' । हलिति किम् ? । 'भू सत्तायाम्' भविता । नच प्रयोजनाभावान्नेत्त्वमिति वाच्यम्, सत्यामित्संज्ञायाम्, 'उदितो वा' इतीड्विकल्पापत्तेः । अन्ये तु चिरिणोति जिरिणोति । इह धातोरन्त्यस्य मा भूत् । सत्यामित्संज्ञायाम् 'इदित' इति नुम् स्यादित्याहुः । **आद्योच्चारणमिति ।** आद्योच्चारणविषयीभूतो यः शब्दस्तस्याऽन्त्यं हलित्स्यादिति फलितोऽर्थः ।

---

ऽपि तत्त्वाभावात् । विभक्त्यादिसञ्ज्ञापि–सूत्रान्तर्गतानामेवेति,–तत्रैव 'न विभक्ता'वित्यादीनां प्रवृत्तिः, अत एव–'इदम इ'शित्यादौ–'अण्त्वात्सवर्णग्रहणं प्राप्तम'प्रत्यय'इत्यनेन निषिद्ध्यते–' इति भाष्योक्तं सङ्गच्छते । यत्त्वनेकाल्सूत्रे 'इशि शिद्ग्रहणाभावेऽपि शित्करणादेव सर्वादेशत्व'मिति भाष्ये उक्तं,–तस्येत्सञ्ज्ञकशकारकरणाद्भूतपूर्वानेकाल्त्वमादाय सर्वादेशत्वमित्यर्थ इति न तद्विरोधः ।

अत्र **केचित्**–"अनुबन्धा **अनेकान्ताः**–अनवयवाः, यो ह्येकान्तः स कदाचित्तत्रोपलभ्यत एव, अयन्तु न तथा, तदर्थभूते विधेये कदाप्यदर्शनात् । 'हलन्त्य'मित्यत्रान्त्यशब्दः–परसमीपबोधकः, 'चुटू' इत्यादावादिशब्दः पूर्वसमीपबोधकः । 'अनेकाल्शि'दित्यादौ समीपे सामीप्यमूलकावयवत्वारोपेण बहुव्रीहिः । स्पष्टञ्चेदमु'पदेशेऽ'जिति सूत्रे भाष्ये, 'मपर्यन्तस्ये'ति सूत्रे कैयटे च । तेन डा-णलादाविशादौ च न दोषः । अत एव 'उपदेशेऽजि'ति सूत्रे 'उपदेश'ग्रहणं चरितार्थम्, तद्धि 'अभ्र आँ अटित' इत्यादा'वादितश्चे'तीट्प्रतिषेधाभावाय, अनेकान्तत्वे हि तत्प्राप्ति"रित्याहुः । **परेतु**"–एकान्ता एव, शास्त्रे तत्रोपलम्भादन्यत्रानुपलम्भाच्च । अनवयवो हि काकादिरेकजातीयसम्बन्धेन गृहवृक्षादिषूपलभ्यते, नैवमयम् । **किञ्चा**नवयवत्वे ण-श-कप्रत्ययादौ णादेरित्त्वानापत्तिः, प्रत्ययादित्वाभावात् । एवमन्त्यत्वाभावादिशादेः शस्येत्त्वानापत्तिः । उक्तार्थलाक्षणिकत्वे तु–लक्षणैव दोषः । **किञ्च**–दम्भश्चकारवैयर्थ्यापत्त्याऽवयवत्वमेव न्याय्यम् । अत एव 'वुञ्छण्कठ'जितिसूत्रविहितके णित्त्वप्रयुक्तवृद्धिर्न । 'तस्य लोप' इति भाष्ये–'एकान्तत्वमेव न्याय्य'मित्युक्तेश्च । 'उपदेशेऽ'जितिसूत्रे उपदेशग्रहणन्तु स्पष्टार्थमेव–"इत्याहुः । सर्वत्रानुबन्धसहितनिर्देशे विधौ–'गुप्तिज्किद्भ्य'इत्यादौ 'नकारेत्सञ्ज्ञकः सो भवतो'त्यादिक्रमेण बोधः । अनुवादे 'सन्यत' इत्यादौ च 'नकारेत्सञ्ज्ञके सशब्दे परे' इत्यादिक्रमेण बोधः । स्पष्टञ्चेदं **निष्ठासञ्ज्ञासूत्रे** भाष्ये । अत एवाऽऽटश्चेत्यादेर्नासङ्गतिः । अन्यथा यत्राऽऽट् सूत्रे, तत्र नाच्परो, नेष्यते च तत्र वृद्धिः । यत्र प्रयोगे इष्यते वृद्धिस्तत्र नाऽऽडिति तदसङ्गतिः स्पष्टैव । अन्त्यङ्किम् ? वांचालः । हल्किम् ? चिरिणोतीत्यादौ धातोरन्त्यस्य मा भूत् ।

**आद्योच्चारणमिति ।** आद्यमुच्चारणमित्यर्थः । भावे घञिति भावः । तच्च प्रत्यासत्त्यैतच्छास्त्रप्रवर्तकाचार्याणामेव । आद्यत्वञ्च–अज्ञातस्वस्वरूपज्ञापकत्वम् । उपस्याद्यर्थत्वाद्दिशेरुच्चारणक्रियत्वात् । अत एव '[illegible]काच उपदेशे' इति सूत्रे कैयटेनोक्तम्–'इत्सञ्ज्ञाविधावुच्चारणवचन उपदिशिर्गृह्यते'–इति । [illegible]' इति सूत्रेऽपि–'येषां स्वरूपज्ञापनायाऽपूर्वमुच्चारणं तेषामेवोपदेशव्यवहारः'–इति । तत्र सूत्रे

## उपदेशेऽजनुनासिक इत् ।१।३।२।

**उपदेशेऽजनु।** उपदेशनमुपदेशः। भावे घञ्। उपदेशे किम्?। अभ्र आँ अपः। सप्तम्यर्थद्योतकोऽत्राङ्। 'आङोऽनुनासिकश्छन्दसि' इत्याकारोऽनुनासिकः। यद्यपीह

भाष्येपि–'उद्देशश्च प्रातिपदिकानां नोपदेशः' इति। प्रकृतसूत्रे भाष्येपि–'प्रत्यक्षमाख्यानमुपदेश'–इत्युक्तम्। तस्य चोक्त एवार्थः।

**परे तु**–'उपदेश इति किमर्थम्? 'अभ्र आँ अपः'। कः पुनरुद्देशोपदेशयोर्विशेषः?–इति भाष्ये उक्तम्। यदि प्रत्यक्षमाख्यानमुपदेशो गुणैः प्रापणमुद्देशस्तर्हि 'लृटः सद्वा' 'निष्ठे'तिविहितानां शतृशानच्क्तक्तवतूनामवयवस्येत्सञ्ज्ञानापत्तिः। तथा 'राजसूयसूर्य''चित्याग्निचित्ये'त्यादिनिपातनानुमितक्यवादीनां पादेरित्वानापत्तिः। 'वदः सुपी'त्यत्रोच्चारितस्तु नैतत्सम्बन्धी। अत एव 'तस्यापत्यमत इञ्' इति न्यासेऽन्यशब्दसम्बद्धापत्यार्थस्यानुक्तरूपशेषत्वमुक्तमाकरे। तस्मादत्र सूत्रे उपदेशशब्देनोद्देशस्यापि ग्रहणं वक्तव्यम्, एवम् 'अभ्र आँ अप' इत्यादावपि प्राप्नोतीति तेषां सङ्ग्रहोऽस्य व्यावृत्तिर्येन भवति स विशेषः कः? इति प्रश्नः। तत्सङ्ग्रहार्थमेव लोकव्यवहारेणापि तयोः सङ्कीर्णत्वमुपपाद्यैतद्व्यावृत्तये तत्सङ्ग्रहाय च–'उपदेशनेऽजनुनासिक इति वक्तव्यं, किं पुनरुपदेशनं?, शास्त्रम्'–इत्युक्तं वार्तिककृता। तत्र–शास्त्रपदेन प्रयोगशासनकरणभूता धातुप्रातिपदिकप्रत्ययनिपातागमादेशा हलन्त्यसूत्रे व्यवसितपदार्थत्वेन भाष्ये उक्ता गृह्यन्ते। एवञ्च तत्सङ्ग्रहो'ऽभ्र आँ' इत्यंतद्व्यावृत्तिश्च सिद्धा। तस्य च वार्तिकस्य बाहुलकात्करणे घञा प्रत्याख्यानं भगवता कृतम्।

**किञ्च** हलन्त्यसूत्रे भावघञन्तोपदेशपदानुवृत्तौ–'भवतष्ठक्छसा'वित्यादिविहितेष्वित्सञ्ज्ञानापत्तिः, परस्य सत्त्वेन कादेरन्त्यत्वाभावात्। यदि तूपदेशे प्रत्ययत्वादिविशिष्टान्त्य इदित्यर्थ' इत्युच्यते तदोपदेश इति व्यर्थम्, अन्त्यपदसामर्थ्येनैव तल्लाभात्। अत एवात्र सूत्रे उपदेशग्रहणस्यानुबन्धा अनेकान्ता इत्यस्थितपक्षेऽभ्र आँ अटित इति प्रयोजनमुक्तं, न तूत्तरार्थमित्युक्तम्। न च करणसाधनोपदेशशब्दानुवृत्त्या सिद्धे हलन्त्यसूत्रे–'व्यवसितान्त्यमितिं वक्तव्यं, के पुनर्व्यवसिताः?–धातुप्रातिपदिकप्रत्ययनिपातागमादेशाः' इतिवार्तिकाद्यनुत्थानमिति वाच्यं, समुदायद्वाराऽवयवस्याप्युपदेशकरणत्वात्तदन्त्यस्यापि लोपापत्तिरित्याशयात्। भाष्यकृता चान्त्यग्रहणसामर्थ्येन प्रत्याख्यातम्। तत्रानुबन्धविशिष्टानां धातुत्वादि तु धातुत्वादियोग्यघटितत्वाद्बोध्यम्। निपातानां द्योतकत्वेन, 'ब्राह्मणवसिष्ठ'न्यायेन च पृथग्ग्रहणम्। **व्यवसितत्वञ्च**–'धातुत्वादिना परिच्छिन्नत्वा'दिति कैयटः। एवञ्चोदश्विदादिप्रातिपदिकान्त्यस्यापि लोपः प्राप्नोतीति 'प्रातिपदिकानां प्रतिषेधो वाच्योऽकृत्तद्धितान्तानाम्' इति वार्त्तिककृतोक्तम्। कुम्भकार इत्यादावपवादविषयपरिहारेणोत्सर्गप्रवृत्तेः पूर्वं प्रातिपदिकत्वे णादिलोपो न स्यादिति–'अकृ'दित्यादि। तच्च 'फलाभावान्नेत्सञ्ज्ञे'त्यादिना भाष्ये प्रत्याख्यातम्। अत्राद्योच्चारणार्थकोपदेशपदानुवृत्तौ स्वस्य वार्त्तिकस्यानुत्थानमेव स्यात्। 'उद्देशश्च प्रातिपदिकानां नोपदेश' इति 'आदेच' इतिसूत्रभाष्ये उक्तः। एतद्भाष्यैकवाक्यतया **पस्पशाह्निकान्तस्थे** ग्रहण प्रातिपदिकानामुपदेशः कर्त्तव्यो–मधको मजक इति मा भू'दिति भाष्ये उपदेशशब्दो ग्रहणं–व

उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात् ।

'उञ ऊँ' इत्यत्रैवानुनासिकविधानसामर्थ्यान्नेत्त्वमिति सुवचम्, तथाप्युत्तरार्थमवश्यं कर्त्तव्यमुपदेशग्रहणं स्पष्टप्रतिपत्तये इहैव कृतम् । अच् किम् ? । मनिनो मकारस्य मा भूत् । नच 'हलन्त्यम्' इत्यन्त्यग्रहणसामर्थ्यादनन्त्यस्य मकारस्य न भवेदिति वाच्यम्, आलच्-त्राप्रत्ययादावतिप्रसङ्गवारणेन तस्य चरितार्थत्वात् । अनुनासिक इति किम् ? । 'ईक्ष दर्शने' । ईक्षितः । सत्यां हीत्संज्ञायां 'श्वीदितो निष्ठायाम्' इतीण् न स्यात् । यद्यप्यत्रोपजीव्यत्वादनुनासिकसंज्ञा प्रथमं वक्तुमुचिता, तथापि नासिकामनुगत इति योगाश्रयणेनैव गतार्थत्वादनुनासिकसंज्ञासूत्रं मन्दप्रयोजनमिति

त्यर्थकः । तच्चानुवादरूपमेव सन्देहनिवर्त्तकमिति बोद्धव्यम् । नन्वेवं 'तस्मिन्निति निर्दिष्टे' इति सूत्रे-'षष्ठीप्रकल्पकत्वं तस्ये'ति पक्षे 'गुप्तिज्किद्भ्यः' इत्यादावपि षष्ठीप्रकृप्त्यापत्तिः, न च सनः सनेवादेशो भविष्यतीति बाधकाभाव इति वाच्यम्, 'उपदेशे इत्युच्यमाना इत्सञ्ज्ञा न प्रकल्पेत'—इत्युक्तं भाष्ये, तद्विरुद्ध्येतात्रोपदेशपदाननुवृत्ताविति चेन्न, तस्यैकदेश्युक्तित्वेनाऽसाधकत्वात् । तथा हि—तत्र 'ङमो ह्रस्वादची'त्यादौ—यत्र सप्तमी पञ्चमी चेत्युभयं निर्दिश्यते तत्र—किं पूर्वस्य कार्यमथ परस्येति सन्देहे—परत्वानवकाशत्वाभ्यां पञ्चमीनिर्देशो बलवानिति सिद्धान्तिनोक्तम् । तत **एकदेशिना**—'यथार्थं वा षष्ठीनिर्देशः कर्त्तव्यः' इति समाधानान्तरमुक्तम् । 'यथाविषयं प्रागुक्तेषु कार्यिणः षष्ठ्या निर्देष्टव्या' इति तदर्थः । तेषु सप्तमीनिर्देशस्य क्वचित्पूर्वत्र क्वचिदुत्तरत्राऽऽवश्यकत्वेनोभयनिर्देशे गौरवेणैकदेश्युक्तिः । ततः पर**ेणैकदेशिना**—षष्ठीपदानुवृत्त्या तस्मिन्नित्यादेरेव षष्ठीप्रकल्पकत्वमाश्रित्य 'यथार्थं वा षष्ठी'त्येकदेश्युक्तिः प्रत्याख्याता । षष्ठीपदानुवृत्तौ गौरवादुभयोः प्रकल्पकत्ववारणाय परत्वानवकाशत्वयोरेकः पूर्वपरयोरिति पूर्वपरग्रहणस्य युगपत्प्रकल्पकत्वाभावे ज्ञापकस्य चावश्यकत्वाच्चेयमप्येकदेश्युक्तिः । ततः पूर्वे**णैकदेशिना** तत्पक्षे गुप्तिजित्यादौ दोषः शङ्कितः । ततः षष्ठीप्रकृप्तिवादि**नैकदेशिनोक्तम्**—'स्यादेष दोषो यदीत्सञ्ज्ञा आदेशं प्रतीक्षेत !, तत्र खलु कृतायामित्सञ्ज्ञायां लोपे च कृते आदेशो भविष्यति, 'उपदेश' इति हीत्सञ्ज्ञोच्यते'—इति । एवञ्च त्वदुक्तिर्व्याहतेत्याशयः । तदग्रे उपदेशपदाननुवृत्तिमभिप्रेत्य—'अथवा नानुत्पन्ने सनि प्रकृत्या भवितव्यम्, यदा चोत्पन्नः सन् तदा कृतसामर्थ्या पञ्चमीति प्रकृप्तिर्न भविष्यति' इति समाधानान्तरं कृतम् । तत्र परत्वविशिष्टस्य सन उत्पादने पञ्चम्याः उपक्षयात्प्रवृत्त्यन्तराभावान्नास्ति तस्याः प्रकल्पकत्व'मिति तदर्थं कैयट आह । एवञ्च-तत्कृतसूत्रस्थस्य सूत्रार्थप्रतिपिपादयिषया प्रवृत्तस्य भाष्यवार्त्तिकस्यैकदेश्युक्ततद्भाष्यबलेन प्रौढिवादस्वकल्पनं नोचितम्, लक्ष्यासिद्धेश्च । 'अइउ'णित्यादीनामपि क्रमबोधकत्वेनार्थवत्त्वात्प्रातिपदिकत्वम् । चित्रङ्श्वोः कुरित्यादेरपि प्रातिपदिकत्वम् । लोपश्चेत्यत्रापि शकारस्य स्वरूपेणार्थवत्त्वात्प्रातिपदिकत्वम् । अनुबन्धानामेकान्तत्वे तु 'लोपो यी'त्यतो लोपग्रहणेऽनुवर्त्तमाने पुनर्लोपग्रहणात्सर्वादेशत्वं बोद्धव्यम् । 'एकाच उपदेश' इत्यत्रत्यः कैयटोऽपि चिन्त्य एव । अन्योऽपि तज्जातीयश्चिन्त्य एव । 'एकाच उपदेशे' 'ऽनुदात्' उपदेशे इत्यादौ तु भावसाधन एवेति सुधियो विभावयन्तु ... ऽनुनासिको-

प्रतिज्ञानुनासिक्याः पाणिनीयाः। लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा। प्रत्याहारेष्वितां न ग्रहणम्। अनुनासिक इत्यादिनिर्देशात्। नह्यत्र ककारे परेऽच्कार्यं दृश्यते। आदिरन्त्येनेत्येतत्सूत्रेण कृताः संज्ञाः प्रत्याहारशब्देन व्यवह्रियन्ते॥

---

ध्वनयितुं नेहोपन्यस्तम्। नचैवं 'यरोऽनुनासिके-' इत्यत्र यरः पदान्तस्यानुनासिकशब्दे परेऽनुनासिकशब्दः स्यादित्यर्थः प्रसज्येत, 'स्वं रूपम्-' इति परिभाषोपस्थानात्, संज्ञाकरणे तु 'अशब्दसंज्ञा' इति निषेधान्नायं दोष इति वाच्यम्; उक्तपरिभाषाया भाष्ये प्रत्याख्यानात्। 'उपान्मन्त्रकरणे', 'पुच्छभाण्डचीवराण्णिङ्', 'ङमुण्नित्यम्' 'इत्यादिनिर्देशेन-'स्वं रूपम्-' इति परिभाषाया अनुपस्थितिकल्पनात्सूत्रमतेऽपि दोषाऽभावात्। ननूक्तनिर्देशाश्रयणे प्रतिपत्तिगौरवमिति चेत्, अतएव 'निष्प्रयोजन'मित्यनुक्त्वा 'मन्दप्रयोजन'मित्युक्तम्। **प्रतिज्ञेति**। प्रतिज्ञायत इति प्रतिज्ञा। 'आतश्चोपसर्गे' इति कर्मण्यङ्। अनुनासिकस्य भाव आनुनासिक्यम्। 'गुणवचनब्राह्मणादिभ्यः-' इति ष्यञ्। प्रतिज्ञा आनुनासिक्यं येषामिति विग्रहः। केचित्तु-प्रतिज्ञानं प्रतिज्ञा, सा अस्यास्तीति प्रतिज्ञम्। अर्शआद्यच्। प्रतिज्ञमानुनासिक्यमेषामिति विगृह्णन्ति। यद्यपि सूत्रकारकृतोऽनुनासिकपाठ इदानीं परिभ्रष्टः, तथापि वृत्तिकारादिव्यवहारबलेन यथाकार्यं प्राक्स्थित इत्यनुमीयत इति भावः।

**पाणिनीया इति**। पाणिनिना प्रोक्तं पाणिनीयम्। 'वृद्धाच्छः'। तदधीयते विदन्ति वा पाणिनीयाः। 'तदधीते-' इत्यणः 'प्रोक्ताल्लुक्' इति लुक्।

ननु रलयोरिति न्यूनं, टकारस्यापि मध्यगत्वादत आह-**प्रत्याहारेष्विति**। **अनुनासिक इत्यादीति**। आदिशब्देन 'पापाणके कुत्सितैः', 'एङः पदान्तादति' इत्यादि ग्राह्यम्। **प्रत्याहारशब्देनेति**। प्रत्याह्रियन्ते सङ्क्षिप्यन्ते वर्णा

---

च्चारणाभावात्तत्त्वज्ञानं दुर्लभमत आह-**प्रतिज्ञेति**। प्रतिज्ञातविषयानुनासिक्यवन्त इत्यर्थः। 'पाणिनीया' इत्यस्य पाणिनिप्रभृतिप्रोक्ता वर्णा इत्यर्थः। प्रतिज्ञा चायमेवमिति कथनं, वर्णानां तत्त्वज्ञापको व्यवहारश्च, ताभ्यां तज्ज्ञानं सुलभमिति भावः। प्रतिज्ञातारश्च प्रत्यासत्त्यैतच्छास्त्रकर्तार एवेति दिक्। **निर्देशादिति**। तेषां तत्र ग्रहणे हि नासिकादौ यणापत्तिरिति भावः। न चैवं विधानसामर्थ्याद्यणभावः सिद्धः, तस्यापि प्रत्याहारेष्वनुबन्धाग्रहणज्ञापनद्वारैव यणभावकल्पकत्वौचित्यात्। साक्षाच्छास्त्रबाधकल्पनापेक्षयाऽस्यार्थस्यौचित्यात्। 'निर्देशा'दित्यस्य-'तन्मूलभूतेत्वविधानसामर्थ्यादित्यर्थ' इति तात्पर्यम्। आदिना-तृपिमृपिकृपेरेकः पूर्वेत्यादिसङ्ग्रहः। ननु 'प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न' इति वार्त्तिके प्रत्याहारशब्दस्य वर्णसमाम्नाये प्रसिद्धेः 'प्रत्याहारेष्विता'मित्यनुपपन्नमत आह-**आदिरन्त्येनेतीति**। वार्त्तिके तादर्थ्यात्ताच्छब्द्यमिति भावः।

**ऊकालोऽज्झ्रस्वदीर्घप्लुतः** ।१।२।२७। उश्च ऊश्च ऊ३श्च वः । वां काल इव कालो यस्य सोऽच् क्रमाद्ध्रस्वदीर्घप्लुतसंज्ञः स्यात् । स प्रत्येकमुदात्तादिभेदेन त्रिधा ॥ **उच्चैरुदात्तः** ।१।२।२९। ताल्वादिषु सभागेषु स्थानेषूर्ध्वभागे निष्पन्नोऽजुदात्तसंज्ञः स्यात् । आ ये ॥

---

यत्रेति प्रत्याहारः । 'करणाधिकरणयोश्च' इति ल्युटि प्राप्ते 'कृत्यल्युटो बहुल'मिति बहुलग्रहणादधिकरणे घञ् । यद्यपि योगमात्रमकारादिसंज्ञास्वतिप्रसक्तन्तथापि योगरूढिरितिभावः ।

**ऊकालोऽज्झ्रस्वदीर्घप्लुत इति** । समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । 'ऊ' इति त्रयाणां प्रश्लेषेण निर्देश इत्याह–**उश्च ऊश्च ऊ३श्चेति** । **वः** । **वामिति** । त्रयाणां सवर्णदीर्घे कृते जसि परतो यणि वः । आमि तु वाम् । **वां काल इव कालो यस्येति,**–फलितार्थकथनमिदम् । विग्रहस्तु वः कालो यस्येति बोध्यः । 'ऊ'शब्देन स्वोच्चारणकालो लक्ष्यते । अच् किम्? । संयोगस्य माभूत्, प्रतक्ष्य, प्ररक्ष्य । कषयोरेकमात्रत्वेन ह्रस्वसंज्ञायां 'ह्रस्वस्य पिति कृति–' इति तुक् स्यात् । **आ ये इति** । 'निपाता आद्युदात्ताः' इत्याकार उदात्तः । यच्छब्दस्तु 'फिषः' इत्यन्तोदात्तः । ततः परस्य जसः सुप्त्वादनुदात्तत्वम्, त्यदाद्यत्वे पररूपत्वे शीभावे आद्गुणे च सति 'एकादेश उदात्तेन' इत्येकार उदात्तः ।

---

**ऊकालोऽच्** । कुक्कुटरुते उकारे एकद्वित्रिमात्रत्वप्रसिद्धेरकारादयो नोक्ताः । 'ऊ' इति एकद्वित्रिमात्राणां क्रमेण प्रश्लेषनिर्देशो–व्याख्यानात् । तेन स्वोच्चारणकालसदृशो लक्ष्यते । स कालो यस्येति बहुव्रीहिः, तत्फलितमाह–**उश्च ऊश्च ऊ३श्चेति** । ननु 'उकालो ह्रस्व' इति वाक्येऽण्त्वात्सवर्णग्रहणे द्वित्रिमात्रयोरपि ह्रस्वसञ्ज्ञायां प्रदाय प्रलूयेत्यादौ 'ह्रस्वस्ये'ति तुक्स्यादिति चेन्न; 'ऊ अ'जित्येवा-ज्ग्रहणसामर्थ्याद्सदृशोऽजित्यर्थे सादृश्यस्य व्याख्यानात्कालकृतस्यैव ग्रहणमिति सिद्धे अधिकं कालग्रहणम्–'उच्चारितसम्बन्धिकालसदृशकालस्यैव सञ्ज्ञा, न तु तेन गृहीतसम्बन्धिकाल-सदृशकालस्यापीत्यर्थेनादोषात् । तदुक्तं भाष्ये–'यावत्तपरकरणं तावदत्र कालग्रहणम्'–इति । ... वाजिति वर्णग्रहणे जातिग्रहणस्य दुर्वारत्वात्तितउच्छत्रमित्यत्र दीर्घात्पदान्ताद्वेति तुगापत्तिरिति ...यं, ज्ञापकसिद्धत्वेन तस्यासार्वत्रिकत्वात् । अन्तरङ्गत्वेन ह्रस्वत्वनिमित्तनित्यतुक एव प्राप्तेश्च । ...ज्ग्रहणं प्रतक्ष्येत्यादौ–ह्रस्वस्येति तुग्व्यावृत्त्यर्थम् ॥ **उच्चैरु** । नात्र श्रुतिकृतमुच्चैस्त्वमुपांशुप्रयोगेऽव्याप्तेः, श्रुतिप्रकर्षस्याऽव्यवस्थितत्वाच्च, किन्तु स्थानकृतम् । 'उच्चै'रित्यधिकरणशक्तिप्रधानम् । अ...रणत्वधोच्चारणं प्रति । तच्च ताल्वादीनां सभागत्वे एवेत्याशयेनाह–**ताल्वादीति** । इदं प्राचामनुरोधेन । वर्णसमाम्नायेऽकारस्य प्राथम्यात्कण्ठादीति वक्तुमुचितम् । एवमन्यत्रापि बोद्धव्यम् ।

**नीचैरनुदात्तः** ।१।२।३०। स्पष्टम् । अर्वाङ् ॥

**समाहारः स्वरितः** ।१।२।३१। उदात्तानुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन्सोऽच् स्वरितसंज्ञःस्यात् ॥ **तस्यादित उदात्तमर्धह्रस्वम्** ।१।२।३२। ह्रस्वग्रहणमतन्त्रम् । स्वरितस्यादितोऽर्धमुदात्तं बोध्यम् । उत्तरार्धं तु परिशेषादनुदात्तम् । तस्य चोदात्तस्वरितपरत्वे श्रवणं स्पष्टम् । अन्यत्र तूदात्तश्रुतिः प्रातिशाख्ये प्रसिद्धा ।

---

**अर्वाङिति** । अर्वन्तमञ्चतीति अर्वाङ् । 'ऋत्विक्—' आदिना अञ्चतेः सुप्युपपदे क्विन् । 'ऋ गतौ' इत्यस्मात् 'स्नामदिपद्यर्ति' इत्यादिना वनिपि गुणे च निष्पन्नोऽर्वन्छब्दो धातुस्वरेणाद्युदात्तः । वनिपः पित्त्वेनाद्युदात्तत्वात् । अञ्चतेरकारोऽपि धातुस्वरेण नित्स्वरेण वा उदात्तः । 'उपपदमतिङ्' इति समासे कृते 'समासस्य' इति स्वरेण तदपवादभूतेन 'गतिकारकोपपदात्कृत्' इति कृदुत्तरपदप्रकृतिस्वरेण वा अञ्चतेरकार उदात्तः । वनो नलोपे सवर्णदीर्घे च कृते 'एकादेश उदात्तेन' इत्याकार उदात्त इति 'अनुदात्तं पदमेकवर्जम्' इति शेषनिघातादाद्योऽकारोऽत्रानुदात्तः । एतच्च संभवाभिप्रायेणोक्तम् । वेदभाष्ये तु 'अर्वाङ्-अभिमुखः' इति स्थितम् । **अतन्त्रमिति** । अविवक्षितमित्यर्थः । **तस्य चोदात्तस्वरितपरत्व इति** । उदात्तस्वरितौ परौ यस्मात्तदुदात्तस्वरितपरं, तस्य भावस्तत्त्वं, तस्मिन् सति उदात्तो वा स्वरितो वा परश्चेत्पूर्वस्य स्वरितस्य यदुत्तरार्द्धमनुदात्तं तस्य श्रवणं स्पष्टमित्यर्थः । **अन्यत्रेति** । उदात्तस्वरित-

---

प्रयत्नप्रेरितो वायुर्यदोर्ध्वभागे प्रतिहतोऽचं व्यञ्जयति तदा स उदात्त इति भावः । **अजिति** । 'ऊकाल'इत्यस्तदनुवर्त्तते । उदात्तत्वादीनामज्धर्मताया एव लोकप्रसिद्धत्वेन हल्स्वरप्राप्तौ व्यञ्जनस्याऽविद्यमानत्वाच्चेदं स्वरूपकथनपरं बोद्धव्यम् । **आये इति** । यच्छब्दः 'फिषोऽन्त' इत्यन्तोदात्तः । जस्सुप्त्वादनुदात्तः, 'एकादेश उदात्तेने'त्येकार उदात्तः । **अर्वाङिति** । अभिमुखवाच्यव्युत्पन्नं 'फिषोऽन्त' इत्यन्तोदात्तम् । आद्यस्य शेषनिघातेनाऽनुदात्तत्वम् । अर्वन्तमञ्चतीत्यर्थे कृदुत्तरपदप्रकृतिस्वरेण वाऽन्तोदात्तत्वम् । एकस्मिन्नच्युदात्तानुदात्तयोर्धर्मिणोर्मेलनविरोधादाह—**वर्णधर्माविति** । बाहुलकादधिकरणे घञ् । अर्श आद्यजित्यन्ये । इयं त्रिसूत्री स्पष्टार्था, लोकवेदयोरुदात्तादिव्यवहारस्य प्रसिद्धत्वात् । **ह्रस्वग्रहणमिति** । ह्रस्वपदघटितग्रहणमित्यर्थः । **अतन्त्रमिति** । स्वशास्त्रसङ्केत-रूपेणाऽबोधकमित्यर्थः । किन्त्वर्धमात्रारूपार्थबोधकमिति भावः । एवञ्च—दीर्घादिष्वप्यर्धम् प्र... वा दात्त इत आरभ्य नवसूत्र्या 'अ अ' इत्यतः प्रागुत्कर्षेणास्य त्रिपाद्यामपि प्रवृत्तिः । सर्वेद ... स्वदं ... 'अर्धमनुदात्त'मिति **वृत्तिस्तु**—सत्या सत्यभामेतिवद्व्याख्येया । **'उत्तरार्ध'** ... माने ... ऽवशिष्ट उत्तरो भाग इत्यर्थः । वेदे तु यथाप्रयोगं प्रातिशाख्याज्झरां झरी'ति लोपा ... अनुदात्तस्येत्यर्थः । **उदात्तेति** । उदात्तस्वरितयोः परत्वे म...वा...ख्यबाह्यप्रयत्नसाम्येन तत्र

'क्व१चोऽश्वाः'। 'रथा॑नां न ये३ऽराः'। 'शतच॑क्रं यो॒ ३ ऽह्यः' इत्यादिष्वनुदात्तः 'अ॒ग्निमी॑ळे' इत्यादावुदात्तश्रुतिः। स नवविधोऽपि प्रत्येकमनुनासिकाननुनासिकत्वाभ्यां द्विधा ॥ **मुखनासिकावचनोऽनुनासिकः** ।१।१।८। मुखसहित-

परत्वाभावे। **क्वेति**। 'किमोऽत्'। 'तित्स्वरितम्'। **च इति**। 'अनुदात्तं सर्वमपादादौ' इत्यधिकारादनुदात्तः। **अश्वा इति**। अशेः क्वनि नित्स्वरेणाद्युदात्तम्। संहितायां तु 'एकादेश उदात्तेनोदात्तः' इत्योकार उदात्तः। उदात्तपरत्वे ह्रस्वस्वरितस्योदाहरणमुक्त्वा दीर्घस्वरितस्योदाहरणमाह—**रथानां न य इति**। 'ये' 'अरा' इति पदद्वयमपि फिट्स्वरेणान्तोदात्तम्। एकादेशस्तु पक्षे स्वरितः, 'स्वरितो वानुदात्ते पदादौ' इत्युक्तेः। स्वरितपरत्वे उदाहरणमाह—**शतचक्रमिति**। **य इति**—फिट्स्वरेणान्तोदात्तः,। ततः परस्य सकारस्य रुत्वे उत्वे कृते आद्गुणे च उदात्तेनैकादेशादोकार उदात्तः। **अह्य इति**। स्वरितान्तत्वादकारस्य शेषनिघातत्वे, ओकारेण सह एकादेशे च कृते 'स्वरितो वानुदात्ते पदादौ' इत्योकारः स्वरितः। कथमह्यस्य स्वरितान्तत्वमिति चेदत्राहुः—'अह व्याप्तौ' इत्यस्मात्कर्मणि ण्यत्। 'तित्स्वरितम्'। वृद्ध्यभावस्तु संज्ञापूर्वकविधेरनित्यत्वादिति। 'नोदात्तस्वरित' इति निषेधस्तु 'अनन्तरस्य' इतिन्यायादुदात्तादिति प्राप्तस्य। यदाऽहेरित्यर्थेऽह्यः वृत्रस्येत्यर्थः, तदा 'छन्दसि वावचनम्' इति गुणाभावः। 'उदात्तस्वरितयोः' इति स्वरितः। 'उदात्तयण' इति तु न, छान्दसत्वात्। **अग्निमीळ इति**। ईकारः स्वरितः। ळे इति तु प्रचयापरपर्याया एकश्रुतिरिति च स्वरप्रक्रियायां मूल एव स्फुटीभविष्यति।
**मुखनासिका**। मुखं च नासिका चेति विग्रहे प्राण्यङ्गत्वादेकवद्भावे मुखनासिकमिति स्यादत आह—**मुखसहितेति**। **नासिकयोच्चार्येति**। फलितार्थकथनमिदम्।

त्वापेक्षयैव। **अन्यत्र**—उदात्तस्वरितयोः परत्वाभावे। **प्रातिशाख्ये इति**। लोके त्वनुदात्त एवेति भावः। ह्रस्वस्वरितमुदाहरति—**क्वेति**। 'किमो'दित्यत्। 'क्वाती'ति कादेशे 'तित्स्वरितम्' इति स्वरितः। दीर्घं तमुदाहरति—**रथानामिति**। **येऽरा इति**। 'स्वरितो वाऽनुदात्ते पदादा'वित्येकारः स्वरितः। 'नोदात्तस्वरितोदय'मिति निषेधस्तु—'उदात्तादनुदात्तस्य स्वरित' इत्यस्यैवानन्तरस्येति ...णत्। स्वरितपरमुदाहरति—**शतचक्रमिति**। अहेरित्यर्थेऽह्यः। वृत्रस्येत्यर्थः। 'छन्दसि वा ...नं प्राङ् णौ चङ्युपधायाः' इति वचनाद्गुणाभावः। 'उदात्तस्वरितयो'रिति स्वरितः। ...ग्रहणं प्रत्पूर्वा'दिति तु न, छान्दसत्वात्। यच्छब्दः 'फिष' इत्यन्तोदात्तस्तदेकादेशश्च वा ...प्तेः, श्रु... **इति**। उदात्तादिह्रस्वादिसञ्ज्ञक इत्यर्थः।
...रणत्वचोच्चारणं प्रति ...तः, बाहुलकात्कर्मणि ल्युट्। 'मुखसहिता नासिके'ति विग्रहः। ...नुरोधेन। वर्णसमाम्नायेऽकारेति समासस्तदाह—**मुखसहितेत्यादि**। मुखेति किम् ?

नासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात् । तदित्थम्–अ इ उ ऋ एषां वर्णानां प्रत्येकमष्टादश भेदाः । लृवर्णस्य द्वादश । तस्य दीर्घाभावात् । एचामपि द्वादश । तेषां ह्रस्वाभावात् ॥

**तुल्यास्यप्रयत्नं सवर्णम्** ।१।१।९। ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येत-

---

उच्यतेऽनेनेति वचनं, मुखनासिका वचनमस्येति विग्रहः । **तुल्यास्य** । आस्ये भव-मास्यं, 'शरीरावयवाद्यत्' इत्यभिप्रेत्याह–**ताल्वादीति । आभ्यन्तरेति** । एतच्च 'प्र'शब्दबलाल्लभ्यते । ओष्ठात्प्रभृतिप्राक्काकलकादास्यम् । तुल्यास्यं किं ?, तप्तं । अत्र

---

यमानुस्वाराणामेव प्रसज्येत । एवञ्चाङोऽनुनासिक इत्यत्रानुस्वारः स्यात् । नासिकेति किम् ?, 'शक्ते'त्यादौ 'अनुदात्तोपदेशे'त्यादिना कलोपो मा भूत् ।

**अष्टादशेति** । यद्यपीदं न व्यक्तिपक्षे,–व्यक्तीनामानन्त्यात्तथाप्यष्टादशधर्मवत्त्वमकारजातीया-देरित्यर्थः । ह्रस्वत्वादीनां तत्तत्समानाधिकरणोदात्तत्वानुनासिकत्वादीनाञ्च भेदमाश्रित्येदम्बोद्धयम् । एवमग्रेऽपि । **लृवर्णस्येति** । विवृतस्येत्यर्थः । तेन 'लृति लृ वे'ति विधेयस्येषत्स्पृष्टस्य दीर्घत्वेऽपि न क्षतिः । **दीर्घाभावादिति** । अत एव तुल्यास्यसूत्रे भाष्ये 'लृति सवर्णे' इति दीर्घत्वे 'होतॄकार' इति ऋकारघटितप्रयोगः सङ्गच्छते । **ह्रस्वाभावादिति** । इदमेओङित्यादौ भाष्ये स्पष्टम् । गान-रोदनादौ चतुर्मात्रार्धमात्रादीनामुपलम्भेऽपि शास्त्रीयकार्ये उपयोगाभावाल्लोके प्रयोगेष्वप्रयोगाच्च नोक्ताः । अत एवानुदात्ततरस्यानुक्तिः । एकश्रुतेः स्वरान्तरत्वे इदमुपलक्षणं,–तस्या लोकेऽपि सत्त्वात् ।

**तुल्यास्य** । तुल्यावास्यप्रयत्नौ यस्येत्यर्थः । आस्ये भावमास्यं, व्याख्यानात् । तच्च–वर्णोपयोगित्वात्स्थानमेव, प्रयत्नस्य पृथगुपादानात् । प्रकृष्टो यत्नः–आभ्यन्तरः । तस्य वर्णो-त्पत्त्यव्यवहितप्राग्भावित्वरूपप्रकर्षवत्त्वात् । जनकत्वं षष्ठ्यर्थः । तत्तकार्यगतभेदं स्थानेष्वारोप्य भेदघटिततुल्यत्वस्य निर्वाहः । वस्तुतः 'सादृश्यं न भेदघटित'मिति भाष्यसम्मतमिति न कश्चिद्दोषः । स्पष्टञ्चेदं भाष्ये । तदाह–**ताल्वादीति** । शिक्षायाङ्कण्ठादीनाङ्कण्ठत्वादिनैव स्थानतोक्त्या तद्रूपे-णैवाऽऽस्यशब्देन ग्रहणमिति तद्भागभेदमादाय नोदात्तादिषु सावर्ण्यभङ्ग इति बोद्धयम् । यस्यै-तद्द्वयं येन यदीयेनैतद्द्वयेन तुल्यमित्यर्थः । 'यजुष्येकेषा'मिति निर्देशाद्यावदास्यभवतुल्यत्वं ग्राह्यम् । अत एवैचोः सावर्ण्यमाशङ्क्य–'नैतौ तुल्यस्थानौ' इति भाष्ये समाहितम् । अत एव वलयोर्न साव-र्ण्यम् । तेन 'तद्वानासा'मित्यादौ 'तोर्लि'ति न । अत 'एव प्रयत्नशब्देन यत्नमात्रग्रहण'मिति पक्षे यत्किञ्चित्प्रयत्नभेदे यत्किञ्चित्प्रयत्नैक्यमादाय सवर्णसंज्ञेत्यर्थो 'झरो झरि सवर्णे' इति सवर्णग्रहणेन ज्ञापकेन साधितो भाष्ये । तेन स्थानांशे 'यावत्स्थानसाम्ये' इत्येवं स्वारसिकोऽर्थ इति प्रतीयते । न च यावदास्यभवतुल्यत्वविवक्षणे प्रयत्नग्रहणं व्यर्थं, प्रयत्नस्याप्यास्यभवत्वादिति वाच्यं, ह्रस्वदीर्घ... सावर्ण्यानापत्तेः, तयोर्जनकानामास्यभवानां वायुसंयोगानामतुल्यत्वात् । तस्मादास्यभवा... दीनामेव ग्रहणमिति बोधनाय तत्सार्थक्यात् । आस्येति किं ?, तप्तं । 'झरो झरी'ति लोपा... प्रयत्नेति किं ?, वाक्श्चोतति । प्रेति किं ?, ञचयोः श्वासाघोषविवा...व्यवाह्यप्रयत्नसाम्येन तत्र

इयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यात् । अकुहविसर्जनीयानां कण्ठः । इचुयशानां तालु । ऋटुरषाणां मूर्धा । लृतुलसानां दन्ताः । उपूपध्मानीयानामोष्ठौ । ञमङणनानां नासिका च । एदैतोः कण्ठतालु । ओदौतोः कण्ठोष्ठम् । वकारस्य

---

पकारस्य तकारे परे 'झरो झरि' इति लोपो मा भूत् । प्रयत्नग्रहणं किं ?, वाक्श्चोतति । अत्र शस्य लोपो न । **ञमङणनानां नासिका चेति** । चकारेण स्वस्ववर्गानुकूलं

---

दोषात् । कस्य किं स्थानमित्याशङ्कायामाह–**अकुहेति** । यद्यपि सर्ववर्णोच्चारणे कण्ठव्यापार आवश्यकस्तथापि चकाराद्युच्चारणे तात्वादिव्यापारोऽपि तथा, अकारादीनामुच्चारणे तु नेति भावः । कचयोस्तु न सावर्ण्यं, यावत्स्थानसाम्याऽभावात्, भिन्नस्थानकथनवैयर्थ्यापत्तेश्च । अत्र 'कण्ठ'पदं कण्ठस्थानतत्समीपजिह्वामूलस्थानोभयपरं, तेन 'कण्ठ्यावहौ' 'जिह्वामूले तु कुः प्रोक्त' इति शिक्षया न विरोधः । जिह्वामूलीयपदस्य च–वर्णविशेषे रूढिरिति न व्यवहारातिप्रसङ्गः । अत एवाऽयोगवाहेषु जिह्वामूलीयगणनं भाष्ये । तत्तद्वर्णोत्पत्तेः प्राक्तत्तत्स्थानादौ जिह्वास्पर्शाद्यनुभवेन तत्तद्वर्णानां तत्तत्स्थानत्वनिर्णयेऽप्यकुहेत्यादिकथनं साधारणधर्मबोधनायानुवादकं, न त्वेतदेव कण्ठादिस्थानविधायकमिति भ्रमितव्यम् । **विसर्जनीय**पदेनात्र साहचर्यादकाराश्रयस्य ग्रहणम् । अत एव 'अयोगवाहा विज्ञेया आश्रयस्थानभागिनः' इति शिक्षया न विरोधः । **दन्ता इति** । दन्तसंयुक्तदेशा इत्यर्थः । अतो भग्नदन्तस्याप्युच्चारणं भवत्येव । 'उश्च पश्च ध्मायेते अनेन तत्र भव' इति योगेनोपध्मानीयस्यौष्ठ्यत्वमित्याह–**उपूपेति** । रूढत्वाच्च न व्यवहारातिप्रसङ्गः । **नासिका चेति** । चेन स्वस्ववर्गानुकूलं तात्वादि गृह्यते । अत एवैषां प्रातिशाख्ये 'नासिकायां भव' इत्यर्थकनासिक्यशब्देन व्यवहारः । यत्तु–**'अनुस्वारयमानां च नासिका स्थानमिष्यते ।'**

–इति शिक्षोक्तेरेषां नासिका करणम् । **किञ्च**–स्थानत्वे कङयोः सावर्ण्यानापत्तिः, यावत्स्थानैक्याभावात् । यत्किञ्चित्स्थानैक्येन तत्त्वे तु–ञमामपि परस्परं सावर्ण्यापत्तिरिति, तन्न; कण्ठादीनामपि करणत्वस्यैव 'अस्यन्त्यनेन वर्णान्' इति भाष्यात्प्रतीतेः । **स्थानत्व**व्यवहारस्तु–वर्णाभिव्यक्तिजनकतात्वादौ वर्णजनकवायुसंयोगाधारे वर्णाधारत्वाऽऽरोपेण । तत्तत्स्थानजिह्वाग्रादिसम्बन्धेन वर्णोत्पत्त्या जिह्वाग्रादौ, तत्सम्बन्धजनकप्रयत्नविशेषे स्पृष्टतादौ च **करणत्व**व्यवहारः । वर्णाभिव्यक्त्यनन्तरभावी सावर्ण्यानुपयुक्त आन्तरतम्यपरीक्षोपयुक्तश्च कण्ठविवरादिनिष्ठविकासादेरास्यबहिर्देशावच्छिन्नकार्यस्य जनको यत्नो–**गुण**शब्देनोच्यते । अकारादिनिष्ठानुनासिक्यस्य 'भेदकत्वाद्गुणस्ये'त्यादौ गुणत्वेन व्यवहारस्तु कण्ठाद्यवच्छिन्नवायुसंयोगेनोत्पन्नेषु नासाद्यवच्छिन्नवायुसंयोगेन तद्रूपधर्मोत्पत्त्या । एवञ्च नासिकायास्तत्र गुणजनकत्वादनुनासिकाऽकारादीनां नासिकास्थानं नोक्तं मूले । 'एकोऽयमात्मोदकं तस्य गुणभेदादन्यत्वं भवति, अन्यदिदं शीतमन्यदिदमुष्ण'मिति दृष्टान्तपरभाष्येण तथैव प्रतीतेः । **आत्मा**ऽत्र द्रव्यम् । उदात्तत्वादीनां गुणत्वव्यवहारस्तु सावर्ण्यानुपयुक्तत्वान्तरतम्यपरीक्षोपयोगित्वरूपसादृश्येनेति बोद्धव्यम् । ङादीनान्तु तद्गुणरहितस्वरूपानुपलम्भेन उभयावच्छेदेन वायुसंयोगोत्तरमेव स्वरूपोत्पत्त्या विनिगमनाविरहेणोभयोः स्थानत्वम् । 'अनुस्वारयमानां चे'ति शिक्षायां

दन्तोष्ठम्। जिह्वामूलीयस्य जिह्वामूलम्। नासिकानुस्वारस्य। इति स्थानानि॥

यत्नो द्विधा। आभ्यन्तरो बाह्यश्च। आद्यश्चतुर्धा। स्पृष्टेषत्पृष्टविवृतसंवृतभेदात्।

---

तात्वादि समुच्चीयते। **एदैतो**रित्यादौ तपरत्वमसन्देहार्थं न तत्कालग्रहणार्थम्। तेन प्लुतस्यापि सङ्ग्रहः। **चतुर्धेति**। निष्कर्षपक्षे तु पञ्चधा। ऊष्मणामीषद्विवृत-प्रयत्नाभ्युपगमात्। **स्पृष्टेषत्स्पृष्टेति**। एतेषामाभ्यन्तरत्वं वर्णोत्पत्तिप्राग्भावि-

---

त्वेन ङादीनामपि सङ्ग्रह इति युक्तम्। अत एव 'कण्ठ्योऽकार'इत्याद्युक्त्वा 'नासिक्यान्नासिक्य-यमानुस्वारानिति स्थानानां'त्युक्तं प्रातिशाख्ये॥ 'नासिक्या-ङञणनमा' इदि तद्व्याख्यातारः। ङञोः सावर्ण्यन्तु भवत्येव। 'आस्ये तुल्यदेशप्रयत्नम्' इति वार्त्तिके-किमास्योपादाने प्रयोजनमिति प्रश्ने-'प्रयत्नविशेषणमास्योपादान'मित्युक्त्वा-तद्व्यावर्त्यत्वेन बाह्यप्रयत्नान्प्रदर्श्य 'यथा तृतीयास्तथा पञ्चमा आनुनासिक्यमेषामधिको गुण'इति भाष्येण तस्य बाह्यप्रयत्नत्वोक्त्याऽत्रसूत्रे नासिकाया **आस्य**शब्देन, तत्रत्यप्रयत्नस्य च **प्रयत्न**शब्देनाऽग्रहणबोधनात्। 'नासिका आस्यबाह्ये'ति वदतां मते तद्ग्रहणा-भावाच्च। अत एव **बाह्यप्रयत्नानुपक्रम्य**---

**'अमोऽनुनासिका न ह्रौ नादिनो हझषः स्मृताः। ईषन्नादा यणश्चैव श्वासिनस्तु खफादयः॥ ईषच्छ्वासाँश्चरो विद्यात्-'** इत्युक्तं **शिक्षायाम्**।

**नादेति**-संवारघोषयोरुपलक्षणम्। **श्वासेति**-विवाराघोषयोः। **न ह्रा**वित्युपलक्षणम्-ऐचः सर्वस्य, प्लुतलृकारस्य च अनुनासिकस्याऽदर्शनादित्यलम्।

**एदैतो**रित्यादौ लोकानुभवसिद्धार्थानुवादके तपरशास्त्राप्रवृत्त्या प्लुतानामपि तत्स्थानत्वं बोध्यम्। तथा च **पाणिनीयशिक्षा**---

**'कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू।**
**स्युर्मूर्धन्या ऋटुरषा दन्त्या लृतुलसाः स्मृताः॥**
**जिह्वामूले तु कुः प्रोक्तो दन्त्योष्ठ्यो वः स्मृतो बुधैः।**
**ए ऐ तु कण्ठ्यतालव्यावो औ कण्ठ्योष्ठजौ स्मृतौ॥**
**अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा।**
**जिह्वामूलञ्च दन्ताश्च नासिकोष्ठौ च तालु च॥**
**हकारं पञ्चमैर्युक्तमन्तस्थाभिश्च संयुतम्।**
**उरस्यं तं विजानीयात्कण्ठ्यमाहुरसंयुतम्॥'** इति।

यत्तु-'दन्तोष्ठादि समुदितं स्थान'मिति, तन्न; शिक्षायां 'दन्त्योष्ठ्यः', 'कण्ठ्यतालव्या'वित्यादौ तत्र भव इत्यधिकारविहितयतः प्रत्येकमनुत्पत्त्यापत्तेः। 'दन्तोष्ठ'मित्यादि त्वसङ्गतमेव, स्वाङ्गसमुदायस्य स्वाङ्गत्वाभावच्छरीरावयवसमुदायस्य शरीरावयवत्वाभावात्। एतेन-'दन्तोष्ठरूपमतिरिक्तं स्थान'मित्यपास्तम्। 'अष्टौ स्थानानी'तिप्रतिज्ञाविरोधाच्चेति दिक्॥

सूत्रे 'प्र'शब्देन विलक्षणार्थबोधेऽपि लोके यत्नप्रयत्नयोः पर्यायतेति ध्वनयन्नाह-**प्रयत्नो द्विधेति**।

तत्र स्पृष्टं प्रयतनं स्पर्शानाम् । ईषत्स्पृष्टमन्तस्थानाम् । विवृतमूष्मणां स्वराणां च । ह्रस्वस्याऽवर्णस्य प्रयोगे संवृतम् । प्रक्रियादशायां तु विवृतमेव ।

एतच्च सूत्रकारेण ज्ञापितम् । तथाहि—

---

त्वात् । तथाहि—नाभिप्रदेशात्प्रयत्नप्रेरितो वायुः प्राणो नाम ऊर्ध्वमाक्रामन्नुरःप्रभृतीनि स्थानान्याहन्ति, ततो वर्णस्य तदभिव्यञ्जकध्वनेर्वा उत्पत्तिः । तत्रोत्पत्तेः प्राग्यदा जिह्वाग्रोपाग्रमध्यमूलानि तत्तद्वर्णोत्पत्तिस्थानं ताल्वादि सम्यक् स्पृशन्ति तदा स्पृष्टता । ईषद्यदा स्पृशन्ति तदा ईषत्स्पृष्टता । समीपावस्थानमात्रे संवृतता । दूरत्वे विवृतता । अतएव इचुयशानां तालव्यत्वाविशेषेऽपि तालुस्थानेन सह जिह्वाग्रादीनां चवर्गोच्चारणे कर्तव्ये सम्यक् स्पर्शः, यकारे ईषत्स्पर्शः, शकारेकारयोस्तु दूरेऽवस्थितिरित्याद्यनुभवं शिक्षाकारोक्तिं चाऽनुसृत्य विवेचनीयम् । विवारसंवारादयस्तु वर्णोत्पत्तेः पश्चान्मूर्ध्नि प्रतिहते निवृत्ते प्राणाख्ये वायावुत्पद्यन्त इति वाह्या इत्युच्यन्ते । गलबिलस्य संकोचा-

---

क्वचिद्यत्न इत्येव पाठः । चतुर्धेति । यत्तु—

'स्वराणामूष्मणाञ्चैव विवृतं करणं स्मृतम् । तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च'॥

—इति **शिक्षा**वाक्याद्विवृततरविवृततमयोः प्रतीत्या, **नाज्झला**विति सूत्रभाष्यादूष्मणामीषद्विवृतत्वस्य च प्रतीत्या चतुर्धेत्यसङ्गतमिति, तन्न; नाज्झलाविति सूत्रेण विवृतत्वव्याप्यानामेषां सवर्णसञ्ज्ञानुपयुक्तत्वबोधनमित्याशयात् । भाष्यमते तु सन्तु सप्त प्रयत्नाः । एवञ्चैदैतोश्च न सावर्ण्यप्रसक्तिः, प्रयत्नभेदादिति बोद्धव्यम् । नाज्झलाविति सूत्रमपि प्रयत्नभेदप्रासावर्ण्याभावानुवादकं सत्तस्यैव बोधकम् । अत एव भाष्ये 'तन्न वक्तव्य'मिति नोक्तम् । स्पृष्टादीनामाभ्यन्तरत्वन्त्वोष्ठप्रभृतिकाकलकपर्यन्तरूपास्यान्तर्गततत्तत्स्थानेषु जिह्वाग्रादीनां स्पर्शेषत्स्पर्शदूरावस्थानसमीपावस्थानरूपाभ्यन्तरकार्यकारित्वाद्वर्णोत्पत्त्यव्यवहितप्राग्भावित्वाच्च बोद्धव्यम् । तत्र बहूनामेकस्थानत्वेऽपि कस्य चिदुच्चारणे सम्यक्स्पर्शः, कस्य चिदीषदिति शिक्षाकारोक्तिमनुभवञ्चानुसृत्य विवेक्तव्यम् । 'प्रयतन'मिति नपुंसके भावे ल्युट् । 'प्रयत्न'मित्यपपाठः । नङन्तस्य पुंस्त्वात् । तथा च **शिक्षा**—'स्वराणामूष्मणाचे'त्याद्यनन्तरम्—

**'अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टाः शलः स्मृताः । शेषाः स्पृष्टा हलः प्रोक्ताः—'** इति ॥

**अचोऽस्पृष्टाः**—स्पर्शाभावरूपविवृतत्ववन्तः । **'यणस्त्वीष'**दित्यनेन—तेषामीषत्स्पृष्टत्वमीषद्विवृतत्वञ्च बोधितम् । **नेम** इत्यर्धे । तेन शलामीषद्विवृतत्वं, यणपेक्षयाऽधिकविवृतत्वञ्चेति बोद्धव्यम् । अत्र शिक्षोक्तव्याप्यधर्मवतां व्यापकधर्ममादाय न सावर्ण्यमिति यणां चवर्गादिभिर्न सावर्ण्यम् । नाऽञ्चित इत्यादौ न यादिः परसवर्णः ।

**विवृतमेवेति** । प्रक्रियादशायां विवृतत्वम्प्रतिज्ञेयमित्यर्थः । तेन दण्डाढकादौ दीर्घसिद्धिः । अन्यथा संवृतस्य ह्रस्वाकारस्य विवृतेन दीर्घेण सावर्ण्याभावात्स न स्यादिति भावः । दीर्घाकारस्य संवृतत्वन्तु पाणिनिशिक्षायामुक्तत्वान्नैतच्छास्त्रप्रक्रियोपयोगीति दिक् ॥

**अ अ** इति ।८।४।६८। विवृतमनूद्य संवृतोऽनेन विधीयते । अस्य चाष्टाध्यायीं सम्पूर्णां प्रत्यसिद्धत्वाच्छास्त्रदृष्ट्या विवृतत्वमस्त्येव । तथाच सूत्रम्—

**पूर्वत्रासिद्धम्** ।८।२।१। अधिकारोऽयम् । तेन सपादसप्ताध्यायीं प्रति त्रिपाद्य-

---

त्संवारः । तस्यैव विकासाद्विवारः । एतौ च संवृतविवृतरूपाभ्यामाभ्यन्तराभ्यां भिन्नावेव । तयोः समीपदूरावस्थानात्मकत्वादित्यवधेयम् । **अ अ** । 'सुपाम्' इति विभक्त्योर्लुक् । आद्यो विवृतो द्वितीयस्तु संवृतस्तदाह—**विवृतमनूद्येति** । विवृतस्य स्थाने इत्यर्थः । **विवृतत्वमस्त्येवेति** । तेन दण्डायनमित्यादौ सवर्णदीर्घः सिध्यतीति भावः ॥

**पूर्वत्रासिद्धम्** । यद्ययं स्वतन्त्रो विधिः स्यात्तर्हि त्रिपादी पूर्वं प्रत्यसिद्धेत्येव लभ्येत, त्रैपादिकं तु पूर्वं प्रति परं नासिद्धं स्यात्, तथाच प्रशानित्यत्र 'मो नो धातोः' इति नत्वस्य सिद्धत्वान्नलोपः स्यात्, नत्वविधेः संबुद्धौ चरितार्थत्वात् । तथाऽनड्वानित्यत्र संयोगान्तलोपस्य सिद्धत्वान्नलोपः स्यात्, नुम्विधेस्तु संबुद्धौ चरितार्थत्वादत आह—**अधिकारोऽयमिति** । त्रिपाद्यां विहितं कार्यमिति कार्यासिद्धिपक्षे अमू

---

तस्य प्रयोगे संवृतत्वे मानमाह—**अ अ** । प्रयत्नभेदाद्दीर्घाभावः । अत्रोद्देश्ये सवर्णग्रहणं, जातिनिर्देशो वा न, व्याख्यानात् । अधिकारत्वे फलमाह—**त्रिपाद्यामपीति** । अन्यथा 'गोधुग्भ्या'मित्यत्र घत्वजश्त्वानुनासिकेषु भष्भावानापत्तिरिति भावः ।

वस्तुतो घत्वे कृते 'झय' इति वत्वापत्तिर्दोषः । न च ततः परत्वाज्जश्त्वानुनासिकत्वयोस्तदप्राप्तिरिति वाच्यं, 'विप्रतिषेधे पर'मित्यस्य यथोद्देशत्वेन त्रिपाद्यामप्रवृत्तेः । 'पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्ये'त्यनेन तस्या यथोद्देशत्वस्यैव बोधनात् । अन्यथा परस्यासिद्धत्वेऽपि विप्रतिषेधसूत्रस्य सिद्धत्वात्परिभाषान्तराणामिवास्या अपि कार्यकालपक्षे तेनाकर्षणापत्तेः । अत एव भाष्ये वत्वमेवापादितम् । अधिकारत्वादेव—'श्रुत्वं धुटि सिद्धं वाच्य'मित्यादि चरितार्थम् । एवञ्च यत्रानुवृत्तिस्तस्यासिद्धत्वम् । पूर्वत्वञ्च क्वचित्सपादसप्ताध्याय्याः, क्वचित्सूत्रान्तरसहितायाः । तत्रायमर्थः—'हो ढ' इत्यादावस्योपस्थितौ वाक्यभेदेनान्वयः—'हस्य ढो भवति, इदञ्च शास्त्रं पूर्वत्रासिद्ध'मिति । अत एव 'न मु ने' इत्यादिभिस्तन्निषेध उपपद्यते । 'पूर्वत्रे'ति सङ्ग्राहकमेव । सङ्ग्राहिकस्यैव तु तत्तच्छास्त्रं प्रति तस्याऽसिद्धत्वं प्रतिपाद्यते । तेनापवादस्य यं प्रत्यपवादत्वं तत्रासिद्धत्वाभावेऽप्यन्यत्राऽसिद्धत्वं भवत्येव । **असिद्धमिति** । **सिद्धं**—निष्पन्नं, प्रवृत्तम् । 'सिद्धश्च प्रत्ययविधा'वित्यादौ तथा दर्शनात् । तद्भिन्नम्—**असिद्धम्**—अनिष्पन्नमप्रवृत्तम् । यद्यपि लोकेऽनाहार्यज्ञानस्यैव प्रवर्त्तकत्वं निवर्त्तकत्वञ्च दृष्टं, तथापीह शास्त्रप्रामाण्यादाहार्यारोपोऽपि शास्त्रप्रवृत्तावप्रवृत्तौ च नियामक इति बोद्धव्यम् । अत्र कार्यासिद्धत्वेऽमू इत्याद्यसिद्धिः । 'अद अ औ' इति स्थिते परत्वान्मुत्वे तस्य सपादसप्ताध्यायीस्थकार्यदृष्ट्याऽसिद्धत्वेऽपि 'देवदत्तहन्तृहत'न्यायेनाकाराभावेन पररूपाद्यनापत्तिः । अतिदेशस्याऽऽरोपरूपत्वान्निरधिष्ठानारोपासम्भवेन कार्यप्रवृत्तेरत्र पक्षे आवश्यकत्वात् । शास्त्रासिद्धत्वे तु—यत्राप्यन्तरङ्गत्वा-

सिद्धा, त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धं स्यात् ॥ बाह्यप्रयत्नस्त्वेकादशधा—विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति ॥

**खयां यमाः खयः ✕क✕पौ विसर्गः शर एव च ।**
**एते श्वासानुप्रदाना अघोषाश्च विवृण्वते ॥**

---

अमूमित्यादि न सिद्ध्येदिति भावः । यथा चैतन्न सिध्यति तथाऽदःशब्दव्याख्यावसरेऽस्माभिरुपपादयिष्यते । **एकादशधेति** । यद्यपि भाष्येऽष्टावुक्ताः, उदात्तादयस्तु नोक्ताः, तथापि कैयटोक्तिमनुसृत्यैकादशोक्ता इति बोध्यम् । **खयां यमा इति** । बालबोधनाय बाह्यप्रयत्नाः कैश्चित्सुगमोपायेनोपनिबद्धाः । तद्यथा—'खरो विवाराः श्वासा अघोषाश्च, हशः संवारा नादा घोषाश्च, वर्गाणां प्रथमतृतीयपञ्चमा यणश्चाल्पप्राणाः, वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः' इति । **श्वासानुप्रदाना इति** । श्वास-

---

त्रैपादिकं प्रवृत्तं तत्रापि तत्तच्छास्त्रे एवाभावारोपेण तन्निवृत्तिबुद्धेरभाव, आदेशबुद्ध्यभावो, लक्ष्ये जातत्वबुद्ध्यभावश्च । जायमानं कार्यन्त्वादेशे एव स्थानिबुद्ध्या प्रवर्त्तते । 'नहि रजतभ्रमप्रयुक्ता प्रवृत्तिः शुक्तिं न गोचरयती'ति न दोषः । यत्र तु सहप्रसङ्गस्तत्राऽप्रवृत्तिरेव,—अभावारोपात् ॥

न च 'पूर्वत्र ने'त्येव सूत्रमस्त्विति वाच्यम्, पूर्वशास्त्रप्राप्तौ निषेध इत्यर्थे 'नलोपः सु'विति सूत्राऽसङ्गतेः । तद्धि नियमार्थम् । त्वद्रीत्या 'राजन्—अश्व' इत्यस्यां दशायाङ्कस्यापि पूर्वशास्त्रस्याऽप्राप्त्यैतन्निषेधाप्रवृत्तौ नलोपे जाते 'भुक्तवन्त'मिति न्यायेनैतदप्रवृत्तौ राजाश्वे दीर्घसिद्ध्या नियमानुपयोगात् । 'राजभ्या'मित्यादावपि दीर्घापत्तेश्च । 'पूर्वशास्त्रविषयसम्भावनाया'मित्यर्थे राजभ्यामित्यादौ नलोपे सुब्विधि—दीर्घ—विषयसम्भावनया सर्वथा नलोपानापत्तेरिति दिक् ॥

**बाह्यप्रयत्न इति** । काकलकाधस्ताद्गलविवरविकास—सङ्कोच—श्वासोत्पत्ति-ध्वनिविशेषरूपनाद-तद्विशेषरूप-घोषाल्पघोष-प्राणाल्पत्व-महत्त्वरूपकार्यैकरत्वमेषाम् । तथाहि—

**'आत्मा बुद्ध्या समेत्याऽर्थान्मनो युङ्क्ते विवक्षया ।**
**मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥**
**सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ।**
**वर्णान् जनयते——॥'** **इति शिक्षायामुक्तम् ॥**

'**आत्मा**—अन्तःकरणं, संस्काररूपेण स्वगतानर्थान्**बुद्ध्या**—स्ववृत्त्या **समेत्य**—एकबुद्धिविषयान्कृत्वा तद्बोधनेच्छया **मनो** युक्तं करोति । तदिच्छावन्मनः—**कायाग्नि**जाठरमग्निमभिहन्ति । **सः**—कायाग्निः । **सोदीर्णः**—स मारुतः **उदीर्णः**—ऊर्ध्वं प्रेरित—इत्यादिरस्तदर्थः । एवञ्च शब्दप्रयोगेच्छयोत्पन्नयत्नाभिहताग्निना नाभिप्रदेशात्प्रेरितो वायुर्वेगान्मूर्धपर्यन्तङ्गत्वा प्रतिनिवृत्तो वक्त्रं प्राप्य ... न्नयत्नसहायेन तत्तत्स्थानेषु जिह्वाग्रादिस्पर्शपूर्वकं तत्तत्स्थानान्याहत्य वर्णानभिव्यनक्ति । ततो यत्न... गलविवरविकासादीन्करोति । तत्र ये तत्तत्स्थानाभिघातका यत्नास्ते आस्यान्तर्गततत्त-

**कण्ठमन्ये तु घोषाः स्युः संवृता नादभागिनः।**
**अयुग्मा वर्गयमगा यणश्चाल्पासवः स्मृताः॥**

वर्गेष्वाद्यानां चतुर्णां पञ्चमे परे मध्ये यमो नाम पूर्वसदृशो वर्णः प्रातिशाख्ये प्रसिद्धः। पलिक्क्नी। चख्ख्नतुः। अग्ग्निः। घ्नन्तीत्यत्र क्रमेण कखगघेभ्यः परे तत्सदृशा एव यमाः। तत्र वर्गाणां प्रथमद्वितीयाः खयस्तथा तेषामेव यमाः, जिह्वामूलीयोपध्मानीयौ विसर्गः शषसाश्चेत्येतेषां विवारः श्वासोऽघोषश्च। अन्येषां तु संवारो नादो घोषश्च। वर्गाणां प्रथमतृतीयपञ्चमाः प्रथमतृतीययमौ यरलवाश्चा-

---

प्रयत्नका इत्यर्थः। **विवृण्वते कण्ठमिति**। विवार एषां प्रयत्न इति भावः। **अन्ये त्विति**। हशो, हशां यमाः, अनुस्वारश्च। **नादेति**। नादभागिनः। नादप्रयत्नवन्त इत्यर्थः। **अयुग्मा इति**। प्रथमतृतीयपञ्चमा वर्गेष्वयुग्माः। **वर्गयमगा इति**। वर्गगा यमगाश्चेत्यर्थः। **अल्पेति**। अल्पासवोऽल्पप्राणाः। 'पुंसि भून्यसवः प्राणाः'

---

त्कार्यकारित्वादाभ्यन्तरा इत्युच्यन्ते। गलविवरविकासादिकराश्चास्यबहिर्भूतदेशे कार्यकरत्वाद्बाह्या इति। मात्राकालिकत्वादिरूपह्रस्वत्वादिकन्तु वाय्वल्पत्वमहत्त्वकृतमिति—नाभिप्रदेशात्प्रेरकयत्न एव कश्चिद्विलक्षणोऽल्पं वायुं प्रेरयति, कश्चिदधिकमिति—तस्य वायुप्रेरणारूपकार्यमास्यबाह्यदेशमिति तदपि बाह्यमेव। अत एव अइउण्सूत्रे भाष्ये 'ह्रस्वत्वादिजनकयत्नस्यास्यविशेषणेन सवर्णसूत्रेऽग्रहण'मित्युक्तम्। यद्यपि—'एक एव यत्नः सर्वकार्यजनको वर्णनाशकश्चे'ति 'परः सन्निकर्ष' इति सूत्रे भाष्ये उक्तं,—तथापि तत्तत्कार्येणोपाधिना एकस्मिन्नपि भेदमारोप्य तथा व्यवहार इति बोद्धयम्। उदात्तादिजनकयत्नस्याभ्यन्तरकार्यकरत्वेऽपि—उदात्तादिशब्दैर्विना बोधितानां तेषाम्—'अनुदात्त' इत्यनेना-विवक्षाबोधनात्सवर्णसञ्ज्ञाननुपयुक्तत्वान्तरतम्यपरोक्षोपयुक्तत्वरूपसादृश्येन बाह्येषु गणनम्। इदं ह्रस्वत्वादेरानुनासिक्यस्य चोपलक्षणम्। **शर इति**। शषसाः। **अनुप्रदानं**—बाह्यप्रयत्नः

**विवृण्वते इति**। तदभिव्यञ्जकयुत्तरजायमाने कण्ठविवरविकासे तेषां कर्तृत्वविवक्षा बोध्या। विवार एषां प्रयत्न इति भावः। **अन्ये त्विति**। वर्गतृतीयचतुर्थपञ्चमाः, तद्यमा, हकारानुस्वारौ, यरलवा इत्यर्थः। **नादभागिनः**—तत्प्रयत्नकाः। यद्यपि खयादिषु घोषाघोषान्यतरप्रयत्नमात्रेणापि प्रक्रियांशनिर्वाहस्तथापि शिक्षानुरोधेनान्येषामुक्तिः। **अल्पासवः**—अल्पप्राणाः। यत एतदुच्चारणोत्तरं प्राणानामल्पत्वमिव भवति। **वर्गेष्विति**। 'विद्यमानाना'मिति शेषः। **चतुर्णामिति**—निर्धारणे षष्ठी। 'अन्यतमा'दिति शेषः। **पूर्वसदृश इति। सादृश्यं**—यत्नकृतम्। अत एवाऽयोगवाहेषु यमानां गणनं भाष्ये, 'चत्वारश्च यमाः स्मृताः' इति पाणिनिशिक्षा च सङ्गच्छते। अयञ्च वेदे एव, तदाह—**प्रातिशाख्ये इति**। **अन्येषामिति**। अचाम्, उक्तान्यहलाञ्चेत्यर्थः। **यरलवाश्चेति**। चेनाऽचामपि ग्रहणम्। 'सुपां सुलु'गिति सूत्रे 'इकारयान्तर्यतो दकार' इति भाष्यात्—घोषसंवार-नादाल्पप्राणत्वमचाम्। अन्यथा तदौ पर्यायेण स्याताम्, अल्पप्राणत्वानङ्गीकारे दधौ पर्यायेण

ऽल्पप्राणाः । अन्ये महाप्राणा इत्यर्थः ॥

बाह्यप्रयत्नाश्च यद्यपि सवर्णसंज्ञायामनुपयुक्तास्तथाप्यान्तरतम्यपरीक्षायामुपयोक्ष्यन्त इति बोध्यम् । कादयो मावसानाः स्पर्शाः । यरलवा अन्तस्थाः । शषसहा ऊष्माणः । अचः स्वराः । ≍क≍प इति कपाभ्यां प्रागर्धविसर्गसदृशौ जिह्वामूलीयोपध्मानीयौ । अं अः इत्यचः परावनुस्वारविसर्गौ । **इति स्थानप्रयत्नविवेकः ॥**

॥ **ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम्** ॥

---

इत्यमरः । **अनुपयुक्ता इति** । अन्यथा कखगघादीनां परस्परं सावर्ण्यं न स्यादिति भावः । **आन्तरतम्यपरीक्षायामिति** । परीक्षा च-'अघोषस्य महाप्राणस्य सस्य तादृश एव थकारः', 'घोषवतो नादवतो महाप्राणस्य हस्य तादृशो वर्गचतुर्थ' इत्यादिना मूले एव स्फुटीभविष्यति । **कादय इति** । लोकप्रसिद्धपाठापेक्षमिदम् । चतुर्दशसूत्र्यां माऽवसानत्वायोगात् । **कपाभ्यां प्रागिति** । एतच्चोपलक्षणम् । खफाभ्यां प्रागित्यपि बोध्यम् । **अर्धविसर्गेति** । सादृश्यमुच्चारणे लेखने च बोध्यम् । **ऋलृवर्णयोरिति** । 'ऋत्यकः' इति प्रकृतिभावः । विग्रहस्तु आ च लृवर्णश्च ऋलृवर्णौ, तयोरित्येके । मनोरमायां तु—आ च आ च रलौ, तौ च तौ वर्णौ चेत्यादि स्थितम् ।

---

स्याताम् । अचां घोषत्वं 'परः सन्निकर्ष' इति सूत्रे भाष्येऽपि स्पष्टम् । **अन्ये इति** । द्वितीयचतुर्थौ, तद्यमौ, शषसहा, अयोगवाहाश्चेत्यर्थः । जिह्वामूलीययमादीनां स्थानबाह्यप्रयत्नकथनन्तु—स्वरूपनिर्णयाय, न तु सावर्ण्यान्तरतम्यपरीक्षादावुपयोगीति बोद्धव्यम् । **अनुपयुक्ता इति** । तुल्यास्यसूत्रे 'प्र'शब्दग्रहणात् । उपयुक्तत्वे हि शच्छयोरपि सावर्ण्यं स्यादिति भावः । आन्तरतम्यपरीक्षा च-'घोषवत' इत्यादिना तत्र तत्र स्फुटीभविष्यति । **स्पर्शाः**—तत्पदव्यवहार्याः । **अन्तस्था**शब्द आदन्तः । स्पर्शोष्मणोरन्तर्मध्ये तिष्ठन्तीति तदर्थः । **ऊष्माण इति** । ऊष्मा वायुस्तत्प्रधाना इत्यर्थः । एवं **'सोष्माण'** इत्यस्य 'वायुना सह वर्त्तन्त इत्यर्थ' इति प्रातिशाख्यभाष्ये स्पष्टम् । यद्यपि वर्गद्वितीयचतुर्थयोरपि 'स्थानेन्तरतम' सूत्रभाष्यादूष्मत्वं, तथापि 'विवृतमूष्मणा' मित्यत्रैत एव गृह्यन्ते । अन्यथा कण्ठ्यादीनां सावर्ण्यानापत्तौ 'नाज्झला' वित्यादिनिर्देशाऽसङ्गतिरिति भावः । **अचः स्वरा इति** । उदात्तादिभिः स्वयमेव राजन्त इति व्युत्पत्तेः । तद्धर्मत्वादुदात्तादयोऽपि 'स्वरा' इत्युच्यन्ते । **कपाभ्यामिति** । खफयोरप्युपलक्षणम् । **अं अः** इत्युपलक्षणमिकारादेरपि । तदाह—**अचः पराविति** । **ऋलृवर्णयोरिति** । आ च लृवर्णश्चेति विग्रहः । 'ऋत्यकः' इति प्रकृतिभावः । एतदर्थमेव वर्णोपदेशे लृकारपाठः, अन्यथा तस्याऽसत्त्वशङ्कयाऽस्य व [illegible]नस्यैवाऽशक्यत्वं स्यात् । ध्वनितञ्चेदम् 'एओ' ङितिसूत्रशेषे भाष्ये । तत्र हि 'सँय्यन्ते' त्यादौ [illegible]नन्तरा' इति सूत्रे '—प्रत्याहारघटकेष्वपि ग्रहणकशास्त्रप्रवृत्त्या मात्राकालिकस्य यद्वयादेरणुदि[illegible]दिग्रहणेन ग्रहणाद्विव्यञ्जनाश्रयो विधिर्न प्राप्नोती—'त्याशङ्क्य मात्रिकव्यञ्जनानुपदेशा-

अकारहकारयोरिकारशकारयोर्ऋकारषकारयोर्लृकारसकारयोश्च मिथः सावर्ण्ये प्राप्ते—

**नाऽऽज्झलौ** ।१।१।१०। आकारसहितोऽच्-आच्स च हल्चेत्येतौ मिथः सवर्णौ न स्तः । तेन दधीत्यस्य हरति शीतलं षष्ठं सान्द्रमित्येतेषु परेषु यणादिकं न । अन्यथा दीर्घादीनामिव हकारादीनामपि ग्रहणकशास्त्रबलादच्त्वं स्यात् । तथाहि—

**अणुदित्सवर्णस्य चाप्रत्ययः** ।१।१।६९। प्रतीयते विधीयत इति प्रत्ययः।

---

**नाज्झलौ । आकारसहित इति ।** 'कालसमयवेलासु' इत्यादिनिर्देशा आकारप्रश्लेषे लिङ्गम् । **यणादिकमिति ।** शीतलशब्दे सवर्णदीर्घ आदिशब्दार्थः । इह 'असेध'दित्यादौ 'हो ढः' इति ढत्वं नेत्यपि सुवचम् । इण इति सस्य षत्वमपि नेति तु न सुवचम्, ढत्वं प्रति तस्यासिद्धत्वादिति दिक् । **अन्यथेति ।** 'नाज्झलौ' इत्यस्यानारम्भे । **ग्रहणकशास्त्रबलादिति ।** अयं भावः,—दीर्घादीनामिव हकारादीनामप्यकारवाच्यत्वेऽभ्युपगते ह्यच्त्वं स्यात्, प्रत्याहारेषु तद्वाच्यवाच्ये निरूढलक्षणाभ्युपगमादिति । **अविधीयमानोऽणिति ।** तेन 'इदम इश्' इत इत्यत्र त्रिमात्र ईकारो न भवति । **उदिच्चेति ।** इह अविधीयमान इति न संबध्यते, उदित्करणसामर्थ्यात् । तेन विधीयमानोऽप्युदित्सवर्णान्गृह्णात्येव,—'कुहोश्चुः' जगाद जगदे । **परेण णकारेणेति ।** व्याख्यानतो विशेषप्रतिपत्तेः । 'उपसर्गादृति' 'ऋत उत्' इत्यादौ तपरकरणा-

---

दनुपदिष्टस्याऽसत्त्वादसत्प्रतिपत्तेरशक्यत्वान्नाणुदित्सूत्रेण तद्ग्रहणमित्युक्तम् । न च कृष्णर्द्धिखे-
त्यादावनृत इति निषेधात्प्लुतानापत्तिः, ऋलृवर्णयोः पृथगनुबन्धत्वकरणेन क्वचित्परस्पराग्राहकत्व-
कल्पनेनाऽदोषात् । **अकारहकारयोरिति ।** 'एकारस्य तालव्यत्वमाकारस्यौष्ठ्यत्व'मिति मते-
एकारशकारादीनामप्युपलक्षणमिदम् । एतेन **'नाक्शलौ'**इत्येव सूत्रयितुमुचितमित्यपास्तम् ।
'हशि चे'त्येव सिद्धेऽतोरो'रित्याकारे व्यावृत्त्यर्थम् । सूत्रे द्विवचनोपपत्तये मध्यमपदलोपिसमास
दर्शयति—**आकारसहित इति ।** अत एव 'वेला'स्विति निर्देश उपपद्यते । समाहारद्वन्द्वे तु
टच्प्रसङ्गः । अज्झलिति समाहारद्वन्द्वं कृत्वा 'आ'पदेन द्वन्द्वे तु अज्भिरप्याकारस्य सावर्ण्यं न स्यादिति
भावः । अत एव भाष्ये प्रयत्नभेदेनैषां सावर्ण्याऽभावः साधितः । **एतेषु परेष्विति ।** इदमुपल-
क्षणम्,—'एतेषु विद्यमानस्ये'त्यपि बोद्धव्यं, तेन हकारादीनामकारादिषु परतो दीर्घादिसङ्ग्रहः ।
**अच्त्वं स्यादिति ।** अच्पदबोद्ध्यत्वं स्यादित्यर्थः । इदं 'प्रत्याहारघटकेष्वपि ग्राहकशास्त्रप्रवृत्ति'-
रिति मते, व्यक्तिपक्षे च बोद्धव्यम् ॥

**अणुदि ।** अणमुद्दिश्य सवर्णबोधकताऽत्र विधीयते । **'सवर्णस्ये'**त्यस्य-'बोधक' इति
शेषः । आदेशादौ सवर्णग्रहणवारणायाह—**प्रतीयते इति ।** परे तु—'प्रत्ययग्रहणमेकदेशीनुमत्या
'भाव्यमानेन सवर्णानां ग्रहणं ने'ति परिभाषां ज्ञापयतीति युक्तम् । प्रत्ययपद-
तदर्थत्वन्तु न युक्तं,—वार्त्तिककृता टित्किन्मित्सूपसङ्ख्यानोक्तेः । भाष्यकृता चाऽप्रत्यय-

अविधीयमानोऽण्, उदिच्च सवर्णस्य संज्ञा स्यात्। अत्राण् परेण णकारेण। कु चु टु तु पु एते उदितः। तदेवम्। अ इत्यष्टादशानां संज्ञा। तथेकारोकारौ। ऋकारस्त्रिंशतः। एवं लृकारोऽपि। एचो द्वादशानाम्। एदैतोरोदौतोश्च न मिथः सावर्ण्यम्। ऐऔजिति सूत्रारम्भसामर्थ्यात्। तेनैचश्चतुर्विंशतेः संज्ञाः स्युरिति

---

लिङ्गाच्च। यदि पूर्वेण स्यात्तर्हि तपरत्वमिहानर्थकं स्यात्, ऋकारस्यानण्त्वेन सवर्णाऽग्राहकत्वात्। एवं च 'तपरत्वाद्दीर्घे न; उप ऋकारीयति' इत्यादिवक्ष्यमाणग्रन्थोऽपि सङ्गच्छते। **एवं लृकारोऽपीति**। 'त्रिंशतः संज्ञे'त्यनुषज्यते। एतच्च न्यायसाम्यादुक्तम्। वस्तुत लृकारस्य ऋकारग्राहकत्वं न कुत्राप्युपलभ्यते। **सूत्रारम्भसामर्थ्या-**

---

ग्रहणमेतत्परिभाषाज्ञापक'मित्युक्तेः। 'ज्यादादीयसः' इति सूत्रे भाष्ये ध्वनितमिदम्। तत्र हि—'किमर्थमादित्युच्यते ?, 'ज्याद' इत्येवोच्यतां, का रूपसिद्धिः ?। आन्तर्यतो दीर्घस्य दीर्घो भविष्यति, एतत्तर्हीदमेव ज्ञापयति भवत्येषा परिभाषा 'भाव्यमानेन'—इत्यादि। त्वदुक्तव्याख्याने हि पूर्वपक्षसिद्धान्तयोरुभयोरपि निर्दलत्वापत्तिः। जातिपक्षेऽप्यनयैव परिभाषया सवर्णग्रहणं वारणीयं, व्यक्तिपक्षे गुणाऽभेदकत्वप्राप्तश्च वारणीयम्। तेन 'घटव'दित्यादौ नानुनासिको वकारः। एतेन—'ऽजुदिदित्येव सिद्धेऽण्ग्रहणेन यण्सु गुणभेदकत्वं ज्ञाप्यते' इति परास्तम्—'इत्याहुः। ननु-'चो'रित्यादावनुवादे कथमुदित्त्वमिति चेन्न, व्याकरणान्तरे एषामुदित्सञ्ज्ञकत्वेनाऽदोषात्। उपदेशशब्दस्य करणसाधनत्वेन शास्त्रपरत्वे तस्यापि शास्त्रत्वेनेत्त्वप्रवृत्तेः सुलभत्वाच्च।

**चो** भिन्नक्रम इत्याह—**उदिच्चेति**। यद्यपि समुदायसवर्णिनोऽप्रसिद्धास्तथापि तदवयवचादिसवर्णा एवात्र तत्सवर्णा बोद्धयाः। ह्रस्वाकारादेरपि कालपुरुषाद्युपाधिभेदेन स्थानेषु भेदमारोप्य तुल्यस्थानत्वं सूपपादम्। **अत्रेति**। ग्राहकसूत्र एवेत्यर्थः। व्याख्यानादिति भावः। 'उपसर्गादृती'त्यादितपरकरणादिति तु न युक्तम्; लृकारग्रहणेन चारितार्थ्यात्। एवमिणपि—परेणैव, 'अचि श्नुधातु'ति सूत्रे-'इण' इत्येव सिद्धे 'य्वो'रिति गुरुनिर्देशाद्व्याख्यानाच्चेति लण्सूत्रे भाष्ये स्पष्टम्। नन्वेवम्—'अस्य च्वा'वित्यादौ सवर्णग्रहणं न प्राप्नोति, अण्ग्रहणेन वर्णसामाम्नायस्थानामेव ग्रहणेन, णकारादिचिह्नेन प्रत्याहारे तत्प्रत्यभिज्ञानेन तत्रत्याद्यवर्णोपस्थितेषु—उच्चारिताभेदेन गृहीतेषु-सूत्रस्य चारितार्थ्येन,—व्यक्तिपक्षे तत्रत्याऽत्रत्यव्यक्त्योर्भेदेन—प्रकृते प्रत्याहारघटकद्वितीयवर्णादौ चोच्चारितस्यैव ग्राहकत्वादप्रवृत्तेरिति चेन्न; जातिपक्षाश्रयणेनाऽदोषात्। अत एवानेकतकारादीनां झल्त्वादिसिद्धिः। सूत्रेऽण्ग्रहणं च न कार्यम्। 'ऋलृवर्णयोः सावर्ण्य'मित्यनेन समानजातित्वस्यैवातिदेशेनो'पसर्गादृती'त्यादौ न दोषः। एतद्व्यतिरिक्तसवर्णे समानजातित्वसत्त्वात्। पृथगनुबन्धकरणाच्च न ऋदिलृदित्प्रयुक्तकार्यसङ्करः। अत्र पक्षे अइउण्सूत्रशेषोक्तभाष्यरीत्या तपरसूत्रस्य जातिग्रहणप्राप्तसवर्णग्रहणनियामकत्ववदप्रत्यय इत्यस्य योगविभागेन—तत्प्राप्तसवर्णग्रहणनिषेधकत्वात्—'त्यदादीनामः' इत्यादौ विधेये न दोषः। एवं—गुणाभेदकत्वप्राप्तसवर्णग्रहणनिषेधकत्वमप्यस्य बोद्धव्यम्। अत एव 'घटव'दित्यादौ मतोर्मस्य नानुनासिको वकारः। **सामर्थ्यादिति**। 'एचोऽयवायावः' इत्यादौ स्थानेऽन्तरतमपरिभाषयैव निर्वाह इति

नापादनीयम् । 'नाज्झला'विति निषेधो यद्यप्याक्षरसमाम्नायिकानामेव तथापि हकारस्याऽऽकारो न सवर्णः, तत्राऽऽकारस्यापि प्रश्लिष्टत्वात् । तेन विश्वपाभिरित्यत्र 'हो ढ' इति ढत्वं न भवति ॥

---

दिति । सति तु सावर्ण्ये एकारेण ऐकारग्रहणादोकारेण चौकारग्रहणात् 'ऐऔच्' इति सूत्रारम्भो वृथा स्यादिति भावः । **नापादनीयमिति** । तेन ग्लावं ग्लाव इत्यत्र 'औतोम्शसोः' इति न प्रवर्तत इति मूल एव स्फुटीभविष्यति । **यद्यपीति** । ग्रहणकशास्त्रस्याद्याप्यनिष्पत्तेरिति भावः । एतच्च 'अकः सवर्णे दीर्घः' इत्यत्र व्युत्पादयिष्यामः ।

**आक्षरेति** । अक्षराणां समाम्नाय उपदेशसूत्राणि । तत्र भवा आक्षरसमाम्नायिकाः । 'बह्वचोऽन्तोदात्ताट्ठञ्' इति ठञ् । **हो ढ इति ढत्वं न भवतीति** । यद्यप्याकारप्रश्लेषाभावे संयोगान्तलोप एव प्राप्नोति नतु ढत्वं, तस्यासिद्धत्वात्, अतोऽत्र संयोगान्तलोपो न भवतीति वक्तुमुचितम्, तथापि 'कार्यकालं संज्ञापरिभाषम्' इति पक्षे त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषायाः प्रवृत्तेरन्तरङ्गे ढत्वे कर्तव्ये बहिरङ्गः संयोगान्तलोपोऽसिद्ध इति मत्वेदमुक्तमित्येके । अन्ये तु 'संज्ञापूर्वको विधिरनित्यः' इति लोपस्य वारणं कथंचित्कर्तुं शक्यमित्याशयेन ढत्वं नेत्युक्तमित्याहुः । **विश्वपाभिरित्यत्रेत्युपलक्षणम्** । विश्वपाः विश्वपाभ्यामित्यादावपि न भवति । 'हो ढः' इत्युपलक्षणम् । पृथगायुरित्यादौ 'झयो हः' इत्याकारस्य घकारो नेति दिक् । यदि तु 'विवृतमूष्मणाम्' इत्यत्र 'ईषत्स्पृष्टम्' इत्यत 'ईष'दित्यनुवर्त्य 'स्वराणां चे'त्यत्र निवर्त्य 'ईषद्विवृतमूष्मणां, विवृतं स्वराणा'मिति प्रयत्नभेदो व्याख्यायते, तदा 'नाज्झलौ' इति सूत्रं त्यक्तुं

---

वक्ष्यते । 'न य्वाभ्या'मित्यत्र ऐऔ स्वरूपेण पाठ्यौ । 'वृद्धिरादै'जित्यत्राप्येङित्येव पाठ्यं, तत्र गुण... च परस्परसवर्णसञ्ज्ञावादिमते चतुर्णां ग्रहणसत्त्वात् । अत्रैतत्सूत्रवैयर्थ्योपन्यासेन तन्मूलकस्य गुणवृद्धिसञ्ज्ञाविधौ प्रत्याहारद्वयग्रहणवैयर्थ्यस्य, 'प्लुतावैच' 'एचोऽप्रगृह्यस्ये'त्यत्र तद्ग्रहणवैयर्थ्यस्य च सङ्ग्रहो बोध्यः । प्रयत्नभेदेनाप्यसावर्ण्यमेतयोः प्रागुक्तं न विस्मर्तव्यम् ।

**यद्यपीति** । इदं व्यक्तिपक्षे,—'वर्णानामुपदेशस्तावदुपदेशोत्तरकालेत्सञ्ज्ञा, तदुत्तरकालमादिरन्त्येनेति प्रत्याहारस्तदुत्तरकाला सवर्णसञ्ज्ञा, तदुत्तरकालमणुदिदिति, एतेन सर्वेण समुदितेन वाक्येनान्यत्र सवर्णानाङ्ग्रहणं भवति, न चाऽत्रेकारः शकारं गृह्णाती—'ति 'नाज्झला'विति सूत्रभाष्योक्त'वाक्यापरिसमाप्ति'न्यायादित्यर्थः । अयं भावः—'आदिरन्त्येने'ति प्रत्याहारसिद्धौ 'नाज्झला'वित्येतद्वाक्यार्थबोधे सति निर्णीतैतद्विषयपरिहारेण सवर्णसञ्ज्ञाबोध्यनिश्चये अणुदित्सूत्रेण तावतां ग्रहणं बोधनीयम्, अन्यथा ... बाधकसम्भावनया तुल्यास्यसूत्रजशक्तिग्रहेऽप्रामाण्यसन्देहेनाणुदिच्छास्त्रजबोधानापत्तिः । न ... सति यद्यत्प्राप्नोति तस्य सर्वस्याप्युबोधात्प्राक्तन्निश्चय—इति । हो ढ इति । हकारेणाऽऽकारग्रहणे

अनुनासिकाननुनासिकभेदेन यवला द्विधा। तेनाऽननुनासिकास्ते द्वयोर्द्वयोः संज्ञा।

**तपरस्तत्कालस्य** ।१।१।७०। तः परो यस्मात्स च तात्परश्चोच्चार्यमाणसमकालस्यैव संज्ञा स्यात् । तेन अत्-इत्-उत् इत्यादयः षण्णां–षण्णां संज्ञा । ऋदिति द्वादशानाम् । **वृद्धिरादैच्** ।१।१।१। आदैच्च वृद्धिसंज्ञः स्यात् ।

---

शक्यमित्याकरे स्थितम् । **अनुनासिकास्ते इति** । ये त्वाक्षरसमाम्नायिका अणस्त एव सवर्णानां संज्ञा भवन्तीति भावः । एवंच रेफो हकारश्च अण्प्रत्याहारान्तर्गतोऽपि न कस्यचित्संज्ञा, तत्सवर्णस्यान्यस्याभावादित्यवगन्तव्यम् । **स च तात्परश्चेति** । तन्त्रादिना उभयं विवक्षितमिति भावः ॥

**वृद्धिरादैच्** । आच्च ऐच्चेति इतरेतरयोगद्वन्द्वः, 'सुपां सुलु' गिति औङः सुर्लुग्वा । यद्वा समाहारद्वन्द्वः । नचैवं 'द्वन्द्वाच्चुदषहान्तात्समाहारे' इति टच्स्यादिति वाच्यम्,

---

पलक्षणमिदम् । ननु यण्सवर्णिनामप्रसिद्धेरज्ग्रहणेनैव सिद्धेऽण्ग्रहणं व्यर्थमत आह–**यवला इति** । 'अमोऽनुनासिका न ह्रा'विति शिक्षोक्तेर्यण इति नोक्तम् । तेन सँय्यन्तेत्यादौ परसवर्णनिष्पन्नानुनासिकयवलानाम'नचि चे'ति द्वित्वं सिद्ध्यति । 'हलो यमा'मिति लोपस्तु वैकल्पिकः ॥ अत्रेदं बोद्धव्यम्–'व्यक्तिः पदार्थो गुणा भेदका' इत्यभिमानेनात्र सूत्रेऽण्ग्रहणमिति । 'अतो भिस'इत्यादौ तपरकरणा'त्सहिवहो'रितिसूत्रस्थवर्णग्रहणाद्व्याख्यानाच्च तपरपदे बहुव्रीहिपञ्चमीतत्पुरुषावित्याह–**तः पर इत्यादिना** । वर्णग्रहणे तु-तत्सामर्थ्यादत्वावच्छिन्नसर्ववर्णग्रहणबोधनेन तपरसूत्राप्रवृत्तिः । आद्योदाहरणम्–'अतो भिस' इति । अन्त्योदाहरणं–'वृद्धिरादै'जिति । यद्यप्यत्र सञ्ज्ञा तात्परा, न च तत्समकालस्तत्सवर्णो वा प्रसिद्धस्तथापि तपरकरणाद्भाष्यप्रामाण्याच्च 'तात्परशब्दबोद्ध्यो वर्णः स्वसमकालग्राहक'इत्यर्थेनाऽदोषः । इदञ्च विद्ध्यर्थमेव–अण्ग्रहणाननुवृत्तेः । गुणानां भेदकतयाऽनणित्विधित्वेऽपि 'वृद्धिरादै'जित्यादावाकारांशे सावकाशेनानेना'तो भिस'इत्यादौ परत्वेना'णुदि'त्सूत्रबाधः । सङ्ख्याकृतव्यवहारस्य परस्परपरिहारेणैव दृष्टतयेह विरोधस्य सत्त्वात् । गुणानामभेदकत्वे त्वनवकाशत्वाद्बाध इति बोद्धव्यम् । अत्रावध्यवधिमतोः साजात्येन वर्णस्यैव सञ्ज्ञात्वेऽपि विशिष्टाद्विभक्त्युत्पत्तिः सौत्रत्वाद्बोध्या । **'तत्कालस्ये'**त्यस्य–तदुच्चारणकालसमकालस्येत्यर्थस्तदाह–**समकालस्यैवेति** । एवकारो–न्यायसिद्धबाध्यबाधकभावस्यानुवादक इति भावः । जातिपक्षे तु नियमार्थमेव, सवर्णग्रहणानुवृत्तेः । एवं 'गुणानामभेदकत्व'मिति–'वृद्धिरादै'जितिसूत्रभाष्यसम्मतसिद्धान्तपक्षेऽपि नियमार्थमेव । इदम्–'आद्गुणः' इत्यादौ विभक्तितकारे न प्रवर्त्तते, 'उपसर्गादृतो'ति तपरकरणात् । 'ऋदोर'बित्यादौ दकार एवेति न दोषः । स च–पञ्चमीसमासाऽभावे तकार इवोच्चारणार्थो, मुखसुखार्थो वा । तपरसूत्रे दकारप्रश्लेषपक्षे तु–धकारादिस्थानिको दकारो बोध्यः ॥

...रा । वृद्धिः, आत्, ऐजिति पदत्रयमिति न समासान्तादिप्रवृत्तिशङ्का । तपरकरणमसन्देहार्थम् । प्रकृतसूत्रे भाष्येऽत्र शास्त्रे गुणानामभेदकत्वं ... सवर्णग्रहणार्थत्वा-

**अदेङ्गुणः** ।१।१।२। अदेङ् च गुणसंज्ञः स्यात्।

समासान्तविधेरनित्यत्वात्। तत्र च प्रमाणं समासेषु वक्ष्यामः। अथवा 'आ'दित्य-समस्तमेवास्तु, वृद्धिशब्दस्तन्त्रेणावृत्त्या वा योजनीयः। अयस्मयादित्वेन भत्वाचोः कुर्न। 'ऐ'जिह द्विमात्र एव, तात्परत्वात्, तेन 'कृष्णैकत्व'मित्यत्र त्रिमात्रो न। वृद्धि-प्रदेशाः-'वृद्धिरेची'त्यादयः। **अदेङ्गुणः**। तपरकरणमिह सर्वार्थम्। तेन 'गङ्गोदक'-मित्यत्र त्रिमात्रो न। 'तरती'त्यत्र लकार एव, नतु कदाचिदाकारः। नच प्रमाणत आन्तर्येण नियमसिद्धिः, रपरत्वे कृते एकस्याध्यर्धमात्रत्वादपरस्यार्धतृतीयमात्रत्वात्।

भावस्योक्तत्वात्। 'कृष्णौत्कण्ठ्यं' 'गङ्गौघ' इत्यादौ त्रिमात्रव्यावृत्तये-परार्थमपि। 'वृद्धि'शब्दोऽत्र पदपरोऽर्थपरत्वासम्भवात्। 'आदैचो वृद्धिपदाऽभिन्ना' इति वाक्यार्थः, पदपदार्थयोस्तादात्म्यस्याङ्गी-कारात्। **'रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः'** इत्यादौ तयोरभेदप्रतीतेरनुभवसिद्धत्वा-दित्यन्यत्र विस्तरः। वृद्धिशब्दस्य सञ्ज्ञात्वन्तु व्याख्यानात्। विधेयत्वेऽपि तस्य पूर्वपाठो मङ्गलार्थः। 'अपृक्त एका'लित्यादौ तथा करणं विधेयस्य प्रथमं प्रयोगेऽसाधुत्वभ्रमनिवारणायेति भाष्ये स्पष्टम्। सर्वार्थवाचकत्वेऽपि वाचकत्वस्य गृहीतस्यैव बोधजनकतया सञ्ज्ञासूत्राणामज्ञातशक्तिज्ञाप-कतया-**विधित्वम्**। **किञ्च**-'सर्वे सर्वार्था'इत्यभ्युपगमो योगिदृष्ट्या नास्मद्दृष्ट्या, सर्वशब्दानामर्था-नाञ्च विशिष्य ज्ञानाभावात्। सामान्यतस्तथा ज्ञानञ्च न बोधोपयोगि, शास्त्रन्त्वस्मदाद्युद्देशेनैव प्रवृत्तमिति बोद्धव्यम्। तत्रैव सङ्केतग्राहकशास्त्रकरणं स्वेच्छयैवेत्येषां **'यदृच्छा'**शब्दत्वेन व्यवहारः, 'स्वेच्छया सञ्ज्ञाः क्रियन्ते' इति च। एतदुपदेशरूपसङ्केतात्प्राक्तत्र सञ्ज्ञात्वाऽग्रहेण तासामनित्यत्वव्यवहारः। अत एव तत्तत्सञ्ज्ञाकरणज्ञानरूपप्रकरणादन्यार्थाऽग्रहणरूपनियमः 'कृत्रिमाकृत्रिम'न्यायमूलतयोक्तः सङ्ख्यासञ्ज्ञासूत्रे भाष्ये। आर्थिकमेवामुं नियममादाय सञ्ज्ञासूत्रेषु नियमत्वव्यवहारो-'व्यवहाराय नियमः सञ्ज्ञायाः सञ्ज्ञिनि क्वचि'दित्यादिना कृतः। वाचकताबोधकत्वेऽपि तदनुत्पादकत्वान्न शब्दार्थ-सम्बन्धनित्यताहानिः। आसाञ्च शिष्टप्रयुक्तत्वात्साधुत्वमित्यन्यत्र विस्तरः॥ कार्यकालपक्षे '... वृद्धि'रित्यादौ वृद्धिपदार्थजिज्ञासायां 'वृद्धिरादै'जित्युपस्थित्या तदर्थबोधरूपे शक्तिग्रहे वृत्ते विधि-वाक्यार्थबोधः। अतएव 'ष्यङः सम्प्रसारण'मिति सूत्रे भाष्ये 'कार्यकालं सञ्ज्ञापरिभाषं', 'भस्ये'त्युप-स्थितमिदं भवति-'यचि भ'मिति'-'इत्युक्तम्। 'ईदूदे'दिति सूत्रे भाष्येऽपि-'कार्यकालं सञ्ज्ञा-परिभाषं, 'प्रगृह्यः प्रकृत्ये'त्युपस्थितमिदं भवति-'ईदूदेद्द्विवचनं प्रगृह्य'मिति'। 'निष्ठे'ति सूत्रे कैयटो-ऽपि-'निष्ठे'त्युक्ते सञ्ज्ञावाक्यं-'क्तक्तवतू निष्ठे'ति स्मर्यते'इत्याह। अत्र पक्षे एकत्र शक्तिग्रहे वृत्ते-ऽपि 'तत्प्रदेशस्थस्यैव तत्रार्थे शक्ति'रिति सम्भावनया प्रदेशान्तरस्थे बोधो न स्यादिति सर्वप्रदेशेषु तत्तत्पदशक्तिग्रहपूर्वकं विधिवाक्यार्थबोधः। यथोद्देशे तु एकदैव शक्तिग्रहात्सर्वत्र बोध इति विशेषः। एतेन-'कार्यकालपक्षे तपरत्वं स्पष्टार्थमेव, आदैच्पदार्थस्य वृद्धिविशेषणतया विधेयत्वेन सवर्णग्रहणाऽ-प्रसक्तेः। 'यत्र वृद्धिपदं तत्रादैजित्युपतिष्ठते' इति क्रमेण सञ्ज्ञासूत्राणामर्थात्'-इत्यपास्तम्। विस्तरः। अत्र ... आदैचां ग्रहणं तेन शालीयादिसिद्धिः॥

**भूवादयो धातवः** ।१।३।१। क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः ।

**प्राग्रीश्वरान्निपाताः** ।१।४।५६। इत्यधिकृत्य ।

**चादयोऽसत्त्वे** ।१।४।५७। अद्रव्यार्थाश्चादयो निपातसंज्ञाः स्युः ।

**प्रादयः** ।१।४।५८। अद्रव्यार्थाः प्रादयस्तथा । **उपसर्गाः क्रियायोगे** ।१।४।५९। **गतिश्च** ।१।४।६०। प्रादयः क्रियायोगे उपसर्गसंज्ञा गतिसंज्ञाश्च स्युः ।

---

गुणप्रदेशास्तु—'आद्गुणः' 'अतो गुणे' इत्यादयः । **भूवादय इति** । भूश्च वाश्च भूवाविति द्वन्द्वः, आदिशब्दयोर्व्यवस्थाप्रकारवाचिनोरेकशेषः । आदिश्च आदिश्च आदी, भूवौ आदी येषामिति विग्रहः। भूप्रभृतयो वासदृशाः । सादृश्यं च क्रियावाचित्वेनेत्यभिप्रेत्याह—**क्रियावाचिन इति** । क्रियावाचिन इति किम् ?, 'याः पश्यसी'त्यादौ धातुत्वं मा भूत् । सति हि तस्मिन् 'आतो धातो'रित्याकारलोपः स्यादिति स्थितं **मनोरमायाम्** । भ्वादयः किम् ?' 'हिरुक्' 'पृथग्' इत्याद्यव्ययानां 'शिष्ये' इति भावार्थतिङन्तस्य च मा भूत् । स्तम्भ्वादीनामुदित्करणेन सौत्राणां धातुत्वं ज्ञाप्यते । चुलुम्पादीनां 'बहुलमेतन्निदर्शन'मिति गणसूत्रेण सङ्ग्रहः । **प्राग्रीश्वरात्** । रेफविशिष्टग्रहणं किम् ?, 'ईश्वरे तोसुन्कसुनौ' इत्यस्य व्याप्तिन्यायेनावधित्वं मा भूत् । यदि तु प्रत्यासत्त्यैव 'अधिरीश्वरे' इत्यस्यावधित्वसिद्धिरित्युच्यते तर्हि स्पष्टप्रतिपत्त्यर्थमेवास्तु ।

**चादयः** । अद्रव्यार्थाः किम् ?, पशुः । लिङ्गसङ्ख्यान्वितं **द्रव्यम्** । इह तु स्यादेव—'लोधं नयन्ति पशु मन्यमानाः' । 'पशु'इति सम्यगर्थे ॥

**गतिश्च** । उपसर्गसंज्ञया समावेशार्थश्चकारः । अन्यथा 'आ कडारा'दिति

---

**भूवादयो** । क्रियावाचिनः किम् ?, विकल्पार्थक'वा'शब्दस्य निपातस्य धातुत्वेऽप्रातिपदिकत्वात्सुबभावे पदत्वानापत्तेः । तदुक्तौ तु न दोषः, वार्थस्य विकल्पस्य भूतभविष्यत्कालसम्बन्धाभावेन क्रियात्वाभावात् । अस्त्याद्यर्थस्यापि तत्त्वं, भूतभविष्यत्कालसम्बन्धात् । भ्वादयः किम् ?, 'आणवयति' 'वट्टयती'त्यादीनां धातुत्वे शास्त्रविषयतया साधुत्वापत्तेः । सूत्रशेषे भाष्ये स्फुटमेतत् । स्तम्भ्वादीनामुदित्त्वेन धात्वधिकारविहितकार्योद्देश्यत्वादिना स्थितपाठभ्रंशानुमानान्न तेषु दोषः। **प्राग्रीश्च** । 'अधिरीश्वरे' इत्यभिव्याप्य **प्राङ्निपाता** इत्यधिकारः । 'प्राङ्निपाताः सन्तो गत्यादिसञ्ज्ञका'इत्यर्थः । तेन ताभिः समावेशः, 'अधिरीश्वरे' 'विभाषा कृञी'त्यत्र निपातपदसम्बन्धश्च सिद्धः । एषां द्योतकत्वं, वाचकत्वञ्च यथाकार्यं, यथाप्रयोगं [illegible]मित्यन्यत्र विस्तरः । 'असत्त्वे' इति पर्युदासो लाघवादित्याह—**अद्रव्येति** । विशेष्यतया द्रव्यभिन्नार्था इत्यर्थः । तेन क्रियाविशिष्टद्रव्यवाचिनां विप्रादिघटक[illegible]नां न । चादयः किम् ?, स्वरादिपठितानामसत्त्ववृत्तित्वे आद्युदात्तत्वं मा भूदिति । **उपसर्गाः** । [illegible]सिको [illegible]—'यदर्थे प्रादीनामन्वयस्तं प्रत्येवोपसर्गत्वादी'त्यर्थबोधनाय । [illegible] सेचका अस्मा-

प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उद् अभि प्रति परि उप—एते प्रादयः । **न वेति विभाषा** ।१।१।४४।

---

पर्यायः स्यात् । तत्फलं तु 'प्रणेय'मित्यादौ 'उपसर्गादसमासेऽपी'ति णत्वम्, 'गति-कारके'ति कृदुत्तरपदप्रकृतिस्वरसिद्धिश्चेति दिक् । **निस्निर्दुस्दुरिति** । 'उपसर्ग-स्यायतौ' इति निर्दुरोर्लत्वं,—निलयते, दुलयते । निसो दुसश्च रुत्वस्याऽसिद्धत्वाल्लत्वा-ऽभावः,—निरयते, दुरयते ॥

**न वेति विभाषा** । 'ने'ति प्रतिषेधो 'वे'ति विकल्पस्तदाह—**निषेधविकल्प-**

---

द्विसेचको ग्राम'इत्यादौ षत्वं न । **गतिश्चेति** । 'च' उपसर्गसंज्ञासमावेशार्थः । तेन 'प्रतिप्रणीत'-मित्यादौ गतित्वात् 'गतिरनन्तरः' इति स्वरः, उपसर्गत्वाण्णत्वञ्च सिद्ध्यति । **प्रादय** इति योग-विभागस्तु क्रियायोगाभावेऽपि निपातत्वाय । एतत्सिद्धमेवोपसर्गप्रतिरूपकस्य निपातत्वमुक्तं चाद्यन्तर्गण-सूत्रेणेति दिक् । 'प्रपरे'त्यादावनुकार्यानुकरणयोरभेदविवक्षया सुबनुत्पत्तिः । **निस्दुसिति** । अत्रेदं बोद्धव्यं--सान्तग्रहणे रान्तस्याऽग्रहणमेव, यत्र तु रुत्वमसिद्धं तत्र रान्तग्रहणेऽपि न सान्तग्रहणं, तद्दृष्ट्या रुत्वस्यासिद्धत्वात् । यत्र तु रुत्वस्य सिद्धत्वं 'यथा—षत्वणत्वयोः'—तद्विषयोपसर्गत्वप्रतिषेधपरे-'दुरः षत्व-णत्वयो'रिति वार्त्तिके कृतरेफसान्तस्यापि ग्रहणम् । 'षत्वणत्वयो'रित्यस्य 'तद्विधायकशास्त्रयो'रित्य-र्थात् । अत एव सुषामादिषु 'दुष्ठु'शब्दपाठः सार्थकः, स हि 'अपदुःसुषुस्थः कुः' इति दुस्पूर्वक-स्थाधातोः कुप्रत्यये साधुः । अन्यथा दुष्पूर्वकात्कुप्रत्यये 'उपसर्गा'दित्येव षत्वे सिद्धे तद्वैयर्थ्यं स्पष्टमेव । न चाऽस्य रूढत्वेनावयवार्थाभावादुपसर्गत्वाभावः, अत्यन्तरूढेषु प्रतिष्ठा-निष्ठादिषु षत्वानापत्तेः । अर्थवत्त्वारोपेण चेत्—प्रकृतेऽपि । दुसः पाठस्तु 'दुरयते'इत्यादौ रुत्वासिद्धया लत्वाभावार्थ इति दिक् ॥

**न वेति** । **इतिर्लोके**ऽर्थपदार्थकस्य शब्दपदार्थकत्वकृत् । यथा 'गवित्ययमाहे'त्यादावनुकरणे । इह तु 'स्वं रूप'मिति परिभाषणाच्छब्दपदार्थकस्यार्थपदार्थकत्वकृत् । क्वचिदितेर्न पदार्थविपर्यासकत्वं यथाऽनुवादवाक्ये । स च न-वा-शब्दाभ्यां प्रत्येकं सम्बध्यते, व्याख्यानात् । तेन नवाशब्दयोरर्थौ सञ्ज्ञिनौ । 'स्वं रूप'मित्यस्य प्रत्याख्याने त्वितिशब्दो व्यर्थ एव, अर्थे कार्यस्याऽबाधात् । तयोरेव सञ्ज्ञित्वे तु 'विभाषा श्वे'रित्यादौ नवाशब्दावादेशौ स्याताम् । प्राप्तविभाषासु नास्योपयोगः, तासां पक्षे निवृत्तिमात्रफलकत्वात् । अप्राप्तविभाषास्वपि न, तासां पक्षे विधिमात्रार्थत्वात् । अप्राप्तत्वेन निषेधाऽसम्भवाच्च । तस्मादुभयत्र विभाषार्थमिदम् । 'विभाषा श्वे'रित्यादौ एतदभावे यदि विधिमुखेन प्रवृत्तिस्तर्हि पित्स्वेव विकल्पः स्यात्, कित्सु तु नित्यमेव सम्प्रसारणं स्यात् । निषेधमुखेन प्रवृत्तौ कित्स्वेव प्रवर्त्तेत न पित्सु । उभयथा प्रवृत्तिस्तु—वैरूप्याद्वाक्यभेदापत्तेश्चाऽशक्या । सञ्ज्ञाकरणे तु श्रुत-क्रमानुरोधात्पूर्वं कित्सु निषेधस्ततः किदकिद्रूपे सर्वस्मिन् लिटि ऐकरूप्यं प्रापिते सति 'पक्षे भवती'-त्येकरूपेण विधिमुखेनैव विकल्पः । **भाष्यकृतस्तु**—एवं हि 'हृक्रोरन्यतरस्या'मित्यादावनुपपत्ति-र्विभाषापदाभावात् । 'इतिशब्दस्य 'विभाषे'त्यत्रापि सम्बन्धाद्विभाषापदार्थः सञ्ज्ञे'ति तु न युक्तम्—

निषेधविकल्पयोर्विभाषा संज्ञा स्यात् ॥

**योरिति** । 'विभाषा श्वेः' इत्यादिषु प्रतिषेधविकल्पावुपतिष्ठेते, तत्र प्रतिषेधेन समीकृते विषये पश्चाद्विकल्पः प्रवर्तते । शुशाव शिश्वायेत्यत्राऽप्राप्तौ विकल्पः, शुशुवतुः शिश्वियतुरित्यादौ तु 'वचिस्वपी'ति नित्यप्राप्ताविति विवेकः । अत्रेदं बोध्यम्—'इति'-शब्दः काकाक्षिन्यायेनोभाभ्यां सम्बध्यते । स च पदार्थविपर्यासकृत् । तेन निषेधो विकल्पश्च नवाशब्दार्थः संज्ञी । विभाषाशब्दार्थो विकल्पः संज्ञा । उभयत्र विभाषार्थं चेदं सूत्रम् । प्राप्तविभाषायामप्राप्तविभाषायां च नास्योपयोगः । प्राप्तविभाषायां भावांशस्य सिद्धत्वेन विभाषाश्रुत्या 'पक्षे भवती'ति भावांशमनूद्य 'पक्षे न भवती'-त्यभावांशमात्रकरणात् । अप्राप्तविभाषायां तु अभावांशस्य सिद्धत्वेन 'पक्षे न भवती'-त्यभावांशमनूद्य 'पक्षे भवती'ति भावांशमात्रकरणात् । 'विभाषा श्वेः' इत्युभयत्र विभाषायां तु यदि विधिमुखेन प्रवृत्तिस्तर्हि पित्स्वेव सम्प्रसारणविकल्पः स्यात्, कित्सु तु यजादित्वात् 'वचिस्वपि—' इति नित्यमेव स्यात् । अथ प्रतिषेधमुखेन प्रवृत्तिस्तर्हि कित्स्वेव प्रवृत्तिः स्यात्, न तु पित्सु । नच पित्सु विधिमुखेन कित्सु तु निषेधमुखेनेत्युभयथापि प्रवृत्तिरस्त्विति वाच्यम्, वैरूप्यलक्षणवाक्यभेदप्रसङ्गात् । संज्ञाकरणे तु श्रुतक्रमानुरोधेन 'ने'ति प्रतिषेधः प्रथमं कित्सु प्रवर्तते, ततः किदकिद्रूपे सर्वस्मिँल्लिटि एकरूपं प्रापिते सति पक्षे भवतीत्येकरूपेण विधिमुखेनैव प्रवर्तते । इतीति किम्?, घुसंज्ञावत् 'स्वं रूप'मिति वचनाच्छब्दस्य संज्ञा मा भूत् । तथाहि सति 'विभाषा श्वेः' इत्यस्य नवाशब्दः श्वयतेरादेश इत्यर्थः स्यात् । इतिशब्दे तु सति अर्थः संज्ञीति लभ्यते । तथाहि—लोके ह्यर्थप्रधानः शब्दः । 'गौरित्ययमाहे'त्यादौ तु शब्दस्वरूपपरः संपद्यते । व्याकरणे तु 'स्वं रूप'मिति परिभाषणात्स्वरूपपरत्वमौत्सर्गिकम् । इतिशब्दसमभिव्याहारे त्वर्थपरतेति विशेषः । इदमेवेतिशब्दस्य पदार्थविपर्यासकत्वं नाम । संज्ञात्वमर्थस्यैव नतु विभाषाशब्दस्येति व्याख्यानस्य 'ह्रक्रोरन्यतरस्या'मित्यादौ वैरूप्योद्धारः फलम् । उभयत्रविभाषा हि तत्सूत्रम्, अभ्यवपूर्वस्य हरतेर्भक्षणार्थत्वाद्विकारार्थस्य करोतेरकर्मकत्वाच्च 'गतिबुद्धी'त्यादिना अणौ कर्तुर्णौ सञ्ज्ञात्वस्याऽदृष्टत्वात् ।

'अर्थाक्षिप्तशब्दमात्रं सञ्ज्ञे'त्यपि न युक्तम्, एकस्यार्थस्य समानफलकानेकसञ्ज्ञाकरणस्य 'अनाकृतिः सञ्ज्ञे'ति वृद्धिसञ्ज्ञासूत्रस्थभाष्येण तिरस्कारात् । तस्मात्तत्र लक्ष्यानुसारेणैवोभयमुखेन प्रवृत्तिर्वाच्येति विभाषापदघटितेऽपि तथैवास्तु, किं सूत्रेणेति जातिव्यक्तिपक्षयोमिवा...रपि सूत्रं प्रत्याचख्युः ॥

**स्वं रूपं शब्दस्याऽशब्दसंज्ञा ।१।१।६८। शब्दस्य स्वं रूपं संज्ञि, शब्दशास्त्रे या संज्ञा तां विना ॥**

---

कर्मत्वे प्राप्ते अर्थान्तरे चाऽप्राप्ते तदारम्भात् । उदाहृतं च भाष्ये—'प्राप्ते तावत्—अभ्यवहारयति सैन्धवान्, अभ्यवहारयति सैन्धवैः । विकारयति सैन्धवान्, विकारयति सैन्धवैः । अप्राप्ते तु—हरति भारं देवदत्तः, हारयति भारं देवदत्तम्, हारयति भारं देवदत्तेन । करोति कटं देवदत्तः, कारयति कटं देवदत्तम्, कारयति कटं देवदत्तेने'ति दिक् ॥

**स्वं रूपं शब्दस्य ।** 'अग्नेर्ढक्' । आग्नेयम् । 'आङो यमहनः' । आयच्छते, आहते । इह—अग्नि, आङ्, यम्, हन्,—एते एव संज्ञिनः । नन्वग्न्यादिवाच्यादङ्गारादेर्ढगादिप्रत्ययो न संभवतीति स्वरूपादेव स्यात्, 'प्रातिपदिका'दित्याद्यधिकाराच्च किमनेन सूत्रेणेति चेत् ?, सत्यम् । अग्न्यादिशब्दपर्यायेभ्यो वह्न्यादिभ्यो मा भूदिति सूत्रस्याऽस्यारम्भः । नन्वत्र रूपग्रहणं विनापि स्वशब्देन रूपमेव ग्रहीष्यते, प्रतीतावुपदेशानपेक्षत्वादसाधारणत्वादन्तरङ्गत्वान्नियतोपस्थितिकत्वाच्च । अर्थो हि प्रतीतौ संबन्धग्रहणमपेक्षते, पर्यायैरपि प्रत्यायनात्साधारणः, पदज्ञानजन्यबोधविषयत्वाद्बहिरङ्गः, अनुकरणदशायामप्रतीतेरनियतोपस्थितिकश्चेति किमनेन रूपग्रहणेन ? । उच्यते—'इह शास्त्रे अर्थोऽपि विवक्षितो रूपव'दिति ज्ञापनार्थं रूपग्रहणम् । तेन 'अर्थवद्ग्रहणे नानर्थकस्ये'त्युपपन्नं भवति । तत्रोक्तज्ञापकादर्थो ग्राह्यः, 'स्व'मिति वचनात्स्वं रूपं चेति सामर्थ्यादर्थवतो रूपस्य ग्रहणम् । तेन 'काशे' 'कुशे' इत्यत्र 'शे' इत्ययं प्रगृह्यसंज्ञो न भवति ।

---

**स्वं रूपं श ।** 'स्वं रूप'मित्यस्य 'बोध्य'मिति शेषो, व्याख्यानात्तदाह—**सञ्ज्ञीति** । 'राज्ञो य'दित्यादौ लौकिकव्युत्पत्त्योपस्थितार्थस्य प्रत्ययेन पौर्वापर्यासम्भवात्प्रातिपदिकादित्यनेनान्वयासम्भवे तदर्थकशब्दमात्रग्रहणापत्तौ नियमार्थं सूत्रम् । तत्र **'स्व'**शब्द आत्मीयत्वेनाऽर्थमाह । **'रूप'**शब्देन शब्दस्वरूपम्, एतदुभयं सञ्ज्ञीत्यर्थः । तत्रार्थो न विशेष्य, उक्तयुक्तेः, किन्तु शब्दविशेषणम् । एवञ्च—'अर्थविशिष्टः शब्दः सञ्ज्ञी'त्यर्थवद्ग्रहणपरिभाषा सिद्धा । अत्र चार्थः—कल्पितान्वयव्यतिरेककल्पितः, प्रकृतिप्रत्ययादिबोध्यः—शास्त्रीयोऽपि । स च मुख्यः प्रसिद्धश्चेति—'गौणमुख्यन्यायो'ऽभिव्यक्तपदार्था ये' इति न्यायश्च सिद्धः । अत एवेयं विशिष्टरूपोपादान एव, इदं सूत्रञ्च । तत्रैवार्थोपस्थितेस्तत्रैवाऽनियमप्रसक्तेश्च, न तु वर्णग्रहणे इत्याकरे स्पष्टम् । 'दाधा घु' इत्यस्य 'ई हल्यघो'रित्यादौ चारितार्थ्येनो'पसर्गे घो'रित्यादौ 'स्वं रूप'मित्यनेन परत्वाद्बाधशङ्कावारणार्थम्—**अशब्दसञ्ज्ञेति** । नात्र षष्ठीतत्पुरुषः, कर्मसञ्ज्ञादेरर्थसञ्ज्ञात्वेन निषेधाऽप्रवृत्तौ 'कर्मण्य'णित्यादौ स्वरूपग्रहणापत्तेः, किन्तु सप्तमीतत्पुरुषः । शब्दपदेन च—शब्दशास्त्रन्तदाह—**शब्दशास्त्रे इति** । भाष्ये तु—अर्थे कार्यस्य बाधेऽप्युपस्थित[illegible]प्रकरणतया भासमानस्य राजन्शब्दस्यैव ग्रहणं भवि-

## येन विधिस्तदन्तस्य ।१।१।७२।

'प्रादूहोढ' इत्यत्र तु 'ऊढग्रहणेन क्तान्तमेव गृह्यते नतु क्तवत्वन्तस्यैकदेशः' इत्यन्यत्र विस्तरः। अशब्दसंज्ञेति किम् ?' 'उपसर्गे घोः किः'—दाधाभ्यो यथा स्यात्, घुधातोः शब्दार्थकान्मा भूत्। नच 'दाधा घु' इति घुसंज्ञाकरणसामर्थ्यादेव दाधाभ्यः किः स्यादिति वाच्यम्, 'घुमास्थे'त्यादिना आत ईत्त्वविधौ संज्ञाकरणस्यावश्यकतया सामर्थ्योपक्षयात्। इह (अ)शब्दस्य संज्ञा (ऽ)शब्दसंज्ञेति न षष्ठीसमासः, 'कर्म' 'करण'-मित्यादिष्वर्थसंज्ञासु स्वरूपग्रहणापत्तेः, किंतु शब्दः—शब्दशास्त्रं, तत्र संज्ञा शब्दसंज्ञेति सप्तमीसमासस्तदाह—**शब्दशास्त्रे या संज्ञेति** ॥

**येन विधिः।** 'विधि'रित्यत्र 'उपसर्गे घोः किः' इति कर्मणि किः प्रत्ययः। 'येने'ति करणे तृतीया, न तु कर्तरि। तस्याः कृद्योगषष्ठ्या बाधात्। नच 'उभयप्राप्तौ कर्मणी'ति नियमेन निर्वाहः, कर्मण उक्तत्वेनोभयप्राप्त्यभावात्। तथा चात्र करणे तृतीयैव। करणं च परतन्त्रं, कर्त्रधिष्ठितस्यैव करणत्वात्। एवं चेह तृतीयया पारतन्त्र्यं लक्ष्यते। नच 'एर'जित्यादाविकारादीनां पारतन्त्र्यं धात्वादीनां च स्वातन्त्र्यं वास्यादीनामिव तक्षादीनामिव संभवति, किंतु वैवक्षिकम्। तेन विशेषणमप्रधानम्। तच्चात्मा-

---

व्यर्थं सूत्रम्। उपस्थितार्थत्यागे मानाभावेन तस्य विशेषणतयाऽन्वयसम्भवेन चार्थवत्परिभाषापि सिद्धा। लक्ष्यानुसारात्तत्तत्सञ्ज्ञाकरणज्ञानरूपप्रकरणाच्च पान्तसङ्ख्यावाचकषष्शब्दस्य षट्सञ्ज्ञाकरणेन शब्दशास्त्रीयसञ्ज्ञायां स्वरूपाऽग्रहणज्ञापनाच्च—'उपसर्गे घो'रित्यादावदोषेणा'ऽशब्दसञ्ज्ञे'त्यपि व्यर्थमित्युक्तम्। अत एव जनपदा-ऽपत्य-पशु-देवतादिशब्देषु न दोषः। अत एव च वृक्षादिषु विशेषाणां ग्रहणं, 'स्वे पुष' इत्यत्र—पर्यायाणां, विशेषाणां, स्वरूपस्य च ग्रहणं, 'सभा राजे'त्यत्र पर्यायाणेव ग्रहणं, 'पक्षिमत्स्यमृगान्हन्ती'त्यादौ मृगपक्षिणोः पर्यायाणां, विशेषाणां, स्वरूपस्य च ग्रहणं, मत्स्यपदेन—स्वरूपस्य, विशेषाणां, मीनरूपपर्यायस्य च ग्रहणं सिध्यति। अन्यथा तदर्थं यत्नः कर्त्तव्यः। 'परेश्च घाङ्कयो'रित्यत्र 'घ'शब्देन स्वरूपग्रहणं, 'नदीपौर्णमासी'त्यत्र 'नदी'पदेन च स्वरूपग्रहणं सिद्ध्यति। लक्ष्यानुसारिव्याख्यानेन च मम सर्वेष्टसिद्धिः। ज्ञापकपक्षेऽपि ज्ञापकसिद्धस्याऽसार्वत्रिकत्वान्न दोषः। अत एव भगवता ज्ञापकेन सिद्धं वचनं प्रत्याख्यातमिति दिक् ॥

**येन वि।** 'येने'ति करणे तृतीया, 'विधि'रिति भावे किः। कर्माऽत्र विधेयं। कर्त्ता चाचार्यः प्रसिद्धत्वाल्लभ्यत एव। यत्तु 'करणं कर्तृपरतन्त्रमिति तृतीयया पारतन्त्र्यं लक्ष्यते, तच्च शब्दानां विशेषणत्वेनेति विशेषणमिति लब्ध'मिति, तन्न; 'सुब्विभक्तौ न लक्षणे'त्यस्य सर्वसम्मतत्वात्। किं बहुना—येषां प्रत्ययानामन्येषां वा शब्दानामर्थे विधानं कृतं शास्त्रेण—तेषामन्यत्रार्थे, तदर्थे चान्येषां—लक्षण-[illegible]ऽपि साधुत्वाऽभावस्य 'प्रत्ययः' 'पुंयोगा'दित्यादिभाष्यतो लाभात्। करणस्य व्यापारवत्त्वनियमा-[illegible]पाध व्यापाराऽभावाद्विशेषणमेवाऽत्र करणतृतीया[illegible] व्यावृत्तिकरणमेव—व्यापारः।

विशेषणं तदन्तस्य संज्ञा स्यात्, स्वस्य च रूपस्य ।

॥ समासप्रत्ययविधौ प्रतिषेधः । ॥ उगिद्वर्णग्रहणवर्जम् ॥

न्तस्य संज्ञेति फलितं, तदेतदाह—**विशेषणं तदन्तस्येति । स्वस्य चेति ।** 'स्वं रूप'-मित्यनुवृत्तेरेतल्लभ्यते । 'एरच्' । इकारान्तादिकाररूपाच्च धातोरच् । चयः, जयः, अयः ।

**समासप्रत्ययविधाविति ।** कृष्णं श्रितः कृष्णश्रितः । 'द्वितीया श्रितातीत-पतितगतात्यस्तप्राप्तापन्नैः' । [ द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह समस्यते वा तत्पुरुषः ।] नेह—कृष्णमुपश्रितः । 'नडादिभ्यः फक्' । नडस्य गोत्रापत्यं नाडायनः । नेह—सूत्रनडस्यापत्यं सौत्रनाडिः । अनुशतिकादित्वादुभयपदवृद्धिः । **उगिद्वर्णेति ।** उगिद्वर्णग्रहणं वर्जयित्वा,—उगिद्वर्णग्रहणवर्जं । 'द्वितीयायां चे'ति णमुल् । महान्तमति-क्रान्ता अतिमहती । महच्छब्दस्य गौरादित्वेऽप्युपसर्जने 'षिद्गौरे'ति ङीषोऽप्रवृत्तेः 'उगितश्चे'त्युगिदन्तान्ङीप् । 'अत इञ्' । दाक्षिः । न चेह सामर्थ्यात्तदन्तविधिः, अस्यापत्यमिः काम इत्यत्र चरितार्थत्वात् । न चैवमिञो ञित्वं व्यर्थमिति वाच्यम्, 'बाह्वादिभ्यश्चे'त्यत्र यथायथं वृद्ध्याद्युदात्ताभ्यां चरितार्थत्वात् । नन्वेवमपि औपगवि-रित्यादावेव अत इञ्स्यान्नतु दाक्षिरित्यादौ, अकारस्येहानर्थकत्वादिति चेन्न; वर्णग्रहणे अर्थवद्ग्रहणपरिभाषाया अप्रवृत्तेः ॥

तदुक्तं **भाष्ये**—'येनेति करणे एषा तृतीयाऽन्येन चान्यस्य विधिर्भवति, यथा चैत्रस्य सङ्ग्रामं हस्त्य-श्वादिभिर्विधत्ते, एवम्—'अचो य'दिति अचा धातोर्यतं विधत्ते'—इति । **'अन्येन चान्यस्ये'**त्यनेन यस्य कार्यं यस्मिन्परतश्च तयोरकरणत्वं दर्शितम् । **'अन्यस्ये'**त्य'न्यस्मि'न्नित्यस्याप्युपलक्षणम् । तत्र शब्दो-पस्थितविशेष्यस्य तादृशं विशेषणमेव तदन्तग्राहकम् । क्वचित्सति गमके तादृशं शब्दरूपं विशेष्यमा-दायापि तदन्तविधिः । तच्चाऽन्तरङ्गत्वात्समानाधिकरणमेव । तत्र तदन्तविधौ सति तथा विशेषणत्व-योग्यताऽप्येतत्प्रवृत्तौ निमित्तम् । अत एव 'इनह'न्नित्यादौ इनंशे तदन्तविधिः । न हि 'इन्—अह्न'-मित्यन्वयो भवति । **'तदन्तस्ये'**त्यस्य—तदन्तशब्दस्येत्यर्थः । नन्वेवम् 'एर'जिति,—'अय' इत्यत्र न स्यादत आह—**स्वस्य चेति ।** 'स्व'मित्यनुवृत्तं षष्ठ्या विपरिणम्यते इति भावः । 'स्वं रूप'मित्यस्य प्रत्याख्याने तु—'तस्य-तदन्तस्य चे'ति पाठ्यमिति बोध्यम् । **समासप्रेति ।** विशेषणविशेष्यभाव-व्यत्यासे तात्पर्यग्राहकमिदम् । एवञ्च 'द्वितीयाश्रित' इत्यादौ श्रितादयोऽधिकारप्राप्त'समर्थै'रित्यस्य विशेष्यभूता इति न तदन्तविधिः । तस्य तत्प्रकृतिके लक्षणया 'सुपे'त्यनेनान्वयः । तेन 'कृष्णं परम-श्रित' इत्यत्र न समासः । 'नडादिभ्यः फ'गित्यादावपि नडादि विशेष्यं, प्रातिपदिकं विशेषणमिति 'सौत्रनाडि'रित्यत्र न फक् । **उगिदिति ।** तेना'ऽतिभवती'त्यत्र 'उगितश्चे'ति ङीप्, 'दाक्षि'रित्यत्र अत इञ् सिद्धः । एवञ्चोक्तनिषेधः प्रत्ययांशे गृह्यमाणप्रातिपदिकविषये, प्रत्ययविधिविषयेण 'गृह्यमाण-प्रातिपदिकेन तदन्तविधिर्नास्ती'त्यर्थकमाम्नायमाधत्ते । 'उगिद्वर्णे'ति तदेकदेशानुवाद इति बोध्यम् ।

**विरामोऽवसानम्** ।१।४।११०। वर्णानामभावोऽवसानसंज्ञः स्यात् ॥ **परः संनिकर्षः संहिता** ।१।४।१०९। वर्णानामतिशयितः संनिधिः संहितासंज्ञः स्यात् । **सुप्तिङन्तं पदम्** ।१।४।१४। सुबन्तं तिङन्तं च पदसंज्ञं स्यात् ॥

---

**विरामोऽवसानम्** । विरमणं विरामः । भावे घञ् । शब्दानुशासनप्रस्तावादाह–**वर्णानामिति** । संज्ञाप्रदेशाः–'वावसाने' इत्यादयः । अभावस्यापि बुद्धिकृतं पौर्वापर्यमस्त्येव । यथोच्चरितप्रध्वंसिनां नित्यविभूनां वा वर्णानाम् । यद्वा विरम्यतेऽनेनेति विरामः, बाहुलकात्करणे घञ् । यदुच्चारणोत्तरं वर्णान्तरं नोच्चार्यते सोऽन्त्यवर्णोऽवसानसंज्ञ इत्यर्थः । अस्मिंस्तु पक्षे 'खरवसानयोः' इत्येकापि सप्तमी विषयभेदाद्भिद्यते–खरि परे रेफस्य विसर्गः, अवसाने च रेफे स्थानिनीति ॥

**सुप्तिङन्तं पदम्** । अत्रान्तग्रहणं 'अन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ती'ति ज्ञापनार्थम् । तेन 'ईदूदेद्द्विवचनं प्रगृह्य'मिति न द्विवचनान्तस्य प्रगृह्यत्वम् । अन्यथा कुमार्योरगारं कुमार्यगारमित्यत्र प्रकृतिभावः स्यात् । कथं तर्हि प्रातिपदिकसंज्ञायां कृत्तद्धिताभ्यां तदन्तग्रहणमिति चेत् ?; अत्राहुः–'कृत्तद्धिते'ति सूत्रेऽर्थवद्ग्रहणमनुवर्तते तत्सामर्थ्यात्तदन्तग्रहणमिति ॥

---

अत एव 'वनो र चे'त्यादौ 'प्रत्ययग्रहणे तदन्तग्रहण'मित्यस्य नायं निषेध इति दिक् ॥

**विरामः** । भावे घञ् । शब्दानुशासनप्रस्तावादाह–**वर्णानामिति** । उच्चारणाऽभाव इत्यर्थः । स च व्याख्यानात्किञ्चिद्वर्णोच्चारणानन्तरकालिक एव गृह्यते । **प्रदेशाः**–'वाऽवसाने" इत्यादयः । अभावस्याऽपि बुद्धिकृतं पौर्वापर्यं–वर्णवत् । **पर**शब्दो नान्यार्थोऽन्यत्वस्याव्यभिचरितत्वादत आह–**अतिशयित इति** । स्वभावसिद्धार्धमात्रातिरिक्तकालव्यवायेन रहितः । तेन **तद्व्यवायेन** वाक्योच्चारणे सञ्ज्ञा न । सन्निकर्षश्च प्रायः परेण । क्वचित्पूर्वेणापि । अत एवावसानकार्याणां संहिताधिकारे पाठः । न चावसानसञ्ज्ञया परसत्त्वे सावकाशायाः संहितासञ्ज्ञायाः 'सत्यपि सम्भवे बाधनं भवती'ति न्यायेन विषयभेदेऽपि बाधः स्यादिति तदसङ्गतिरेवेति वाच्यं; तदधिकारे तेषां पाठेनाकडारसूत्रस्य स्वशास्त्रीयसञ्ज्ञामात्रविषयत्वकल्पनात् । एते तु न तथा, लोकेऽपि सत्त्वात् । तदुक्तं **वार्त्तिककृता**–'संहितावसानयोर्लोकविदितत्वा'दिति । न चावसानकार्येषु संहिताधिकाराऽसम्बन्ध एवास्तु, अग्रे च मण्डूकप्लुतिरस्त्विति वाच्यं, सत्यामुपपत्तौ मण्डूकानुवृत्तेरयुक्तत्वात् । ध्वनितञ्चेदं–'विसर्जनीयस्य सः' इति सूत्रे भाष्ये । **सन्निकर्षः**–सामीप्यम् ॥

**सुप्तिङ्** । 'सु'बिति–सुपः पकारेण प्रत्याहारो, व्याख्यानात् । **यद्यपि** 'प्रत्ययग्रहणे तदन्तग्रहण'मित्युक्तेः शब्दरूपं विशेष्यमादाय तदन्तग्रहणं सिद्धम्, प्रत्ययेन स्वप्रकृत्यवयवकसमुदायस्याक्षेपात्तद्विशेषणत्वेन तदन्तविधिर्इति न युक्तम् । 'इया'न्नित्यादौ तस्य तादृशसमुदायेन व्यभिचारेणा-

**हलोऽनन्तराः संयोगः** ।१।१।७। अज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः ।

---

**हलोऽनन्तराः संयोगः** । लघ्वर्थमेकाक्षरायां संज्ञायां कर्तव्यायां 'संयोग' इति महासंज्ञाकरणमन्वर्थसंज्ञाज्ञापनार्थ—संयुज्यन्तेऽस्मिन्समुदाये वर्णा इति । तेनात्र समुदाये वाक्यपरिसमाप्तिर्न तु गुणवृद्ध्यादिसंज्ञावत्प्रत्येकम् । तथाहि सति 'दध्वद्भिभर्ता'-त्यत्र वकारसंनिधौ दकारस्य संयोगत्वात्संयोगान्तलोपः स्यात् । 'निर्यायाः'दित्यत्र यकारः संयोग इति 'वान्यस्य संयोगादे'रित्येत्त्वं स्यात् । सिद्धान्ते तु 'अचो रहाभ्या'मिति द्वित्वे सत्यपि तस्याऽसिद्धत्वादेत्त्वमत्र न भवति । 'हल' इति जातौ बहुवचनम्, 'जात्या-

---

क्षेपासम्भवात् । आक्षिप्तस्य शाब्देऽनन्वयाच्च । **तथापि** संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणाभावः ज्ञापनार्थ**मन्त**ग्रहणम् । तेन घसञ्ज्ञा तरप्तमपोरेव न तदन्तस्य । तेन 'गौरीब्राह्मणितरे'त्यत्र न ह्रस्वः । एतन्निषेधसामर्थ्यादेव प्रदेशेष्वपि न तदन्तविधिः । न च ज्ञापितेऽपि व्यर्थं, पदप्रदेशे प्रत्ययग्रहणे तदन्तग्रहणेनैव सिद्धेरिति वाच्यं, पदत्वस्य प्रकृतिसाधारणतया पदग्रहणे प्रत्यय-ग्रहणस्यैवाऽभावात् । 'यस्मात्प्रत्ययविधि'रित्याद्यनुवृत्तेः पदसमुदायस्य न पदत्वम् । 'इया'नित्यादौ यस्मात्प्रत्ययविधिस्तदादितद्धितान्तत्वं व्यपदेशिवद्भावेन बोद्ध्यम् । तेनाऽशास्त्रीयस्याप्येकाच्त्वा-देरतिदेशात् । 'विशिष्टनिष्ठव्यवहारनिमित्तकार्याणि असहायेऽपि कर्तव्यानी'ति तदर्थात् । अत एवेयन्मात्रमित्यादौ 'वत्वन्तात्स्वार्थे' इति मात्रच्सिद्धिः । 'हरिपु' इत्यादौ सोऽस्तु नैवं पदत्वं, 'हलि सर्वेषा'मिति निर्देशेन ससहाये तदप्रवृत्तेः । 'निजौ चत्वार एकाच' इति भाष्यन्त्वभ्युपेत्यवादेन । ध्वनितञ्चेदम्—'आदेच उपदेशे' 'तास्यनुदात्ते'दित्यादौ भाष्ये । तत्र हि—ढौकते' इत्यौकारस्य 'हत' इत्यादावकारस्यैजन्तोपदेशत्वमकारान्तोपदेशत्वं व्यपदेशिवद्भावेनाशङ्क्य 'अर्थवता व्यपदेशिद्भाव' इत्युक्तम् । 'यो वर्णोऽर्थवांस्तेन व्यपदेशिवद्भावः, वर्णस्यार्थवत्त्वञ्चेयायेत्यादावसहाये एव, न तु प्रकृते—इति तदर्थः । एवञ्चै**कस्मिन्नि**त्यस्यार्थवतेत्यनेनोक्त इति दिक् ॥

**हलोऽनन्तरा** । 'गर्गाः शतं दण्ड्यन्ता'मित्यत्र समुदाये शतदण्डनवदत्र समुदायस्यैव सञ्ज्ञा, न प्रत्येकम् । 'अनन्तरा' इत्युक्तेश्च । तस्य विशेषणताया एवौचित्यात् । यत्तु 'संयुज्यन्ते वर्णा यत्रे'-त्यन्वर्थसंज्ञाबलान्न प्रत्येकं सञ्ज्ञेति, तन्न, 'घटपटौ संयुज्येते यत्रे' त्यादौ संयुज्यमानपदार्थातिरिक्त-स्यैवान्यपदार्थतया प्रतीतेर्व्युत्पन्नत्वेन तदतिरिक्ततद्घटितपदवाक्यरूपसमुदायस्य सञ्ज्ञापत्तावनिष्टापत्तेः । महासञ्ज्ञा तु प्राचामनुरोधादेव । तेन 'सुदृषद्ब्राती'त्यत्र संयोगान्तलोपो नेत्यत्र विस्तरः । '**हल**'इति बहुवचनं सौत्रम् । यद्वा—हलौ च हलश्चेत्येकशेषः—'स्वरितात्संहितायां'मिति सूत्रे 'ऽनुदात्ताना'मिति पदे तथैकशेषस्य भाष्ये करणात् । तेन द्वयोरपीति,—'शिक्षे'त्यादौ 'गुरोश्च हलः' इति अप्रत्ययः सिद्ध्यति । यत्रापि बहवः श्लिष्टास्तत्रापि द्वयोर्द्वयोरेव न बहूनां, झलिपरे संयोगादिलोपविधानात् । 'बहूनामपी'ति चिन्त्यमेव, फलाभावात् । तत्र तत्राङ्गपदधात्ववयवसंयोगस्यैवाश्रयणेन तादृशस्य च त्रयाणां संयोगस्याभावादिति भाष्ये स्पष्टम् । **आनन्तर्य**—व्यवधानाभावः । व्यवधानञ्च द्वि-तीयेनैवेत्याशयेनाह—**अज्भिरिति** । अत्र कुत्वं न्याय्यम् । अत एव हयवरट्सूत्रे—'अचोऽक्षिवि'ति-

**ह्रस्वं लघु** ।१।४।१०। [ ह्रस्वमक्षरं लघुसंज्ञं स्यात् ]॥

**संयोगे गुरु** ।१।४।११। संयोगे परे ह्रस्वं गुरुसंज्ञं स्यात् ॥

**दीर्घं च** ।१।४।१२। दीर्घं च गुरुसंज्ञं स्यात् । इति **संज्ञाप्रकरणम्** ॥

## अथ परिभाषाप्रकरणम् ।

**इको गुणवृद्धी** ।१।१।३। गुणवृद्धिशब्दाभ्यां यत्र गुणवृद्धी विधीयेते तत्रेक

---

ख्यायामेकस्मिन्बहुवचन'मिति वचनात् । तेन द्वयोरपि संयोगसंज्ञा भवतीति 'शिक्षे'-त्यादौ 'गुरोश्च हलः' इत्यप्रत्ययः सिध्यति । यत्र बहवो हलः संश्लिष्टास्तत्र द्वयो-र्बहूनां चाविशेषेण संज्ञेति स्थितमाकरे । यदि तु बहूनामेव स्यात्तर्हि 'गोमान्करोती'-त्यत्र मतुपस्तकारस्य संयोगान्तलोपो न स्यादिति दिक् । हलः किम् ?, तितउभ्याम् । अत्र 'तनोतेर्डउः सन्वच्चे'ति 'डउ'प्रत्ययः । सन्वद्भावाद्वित्वं, 'सन्यतः' इति इत्वं च । व्यस्तोच्चारणसामर्थ्याद्गुणाऽभावः । यदि ह्यचोरप्यनन्तरयोः संयोगसंज्ञा स्यात्तर्हि इह 'संयोगान्तस्ये'त्युकारलोपः स्यात् । अनन्तरा इति किम् ?; पनसम् । यदीह सकारमकारयोः संयोगसंज्ञा स्यात्तर्हि 'स्को'रिति सलोपः स्यात् ॥

❀ इति **तत्त्वबोधिन्यां संज्ञाप्रकरणम्** ❀

**अथ परिभाषाप्रकरणम्** । **इको गुणवृद्धी** । यत्र साक्षात्स्थानी न निर्दिष्टः 'सार्वधातुकार्धधातुकयोः' 'सिचि वृद्धि' रित्यादौ, तत्रैवेयं परिभाषा प्रवर्तते नतु 'अचो ञ्णिती'त्यादौ, स्थानिनिर्देशात् । **गुणवृद्धिशब्दाभ्यामिति** । एतच्च पूर्वसूत्राभ्यां गुणवृद्धिपदे अनुवर्त्य 'गुणो वृद्धिरिति ये गुणवृद्धी' इति योजनया लभ्यते । तेनेह न 'त्यदादीनामः'—इमम् । 'दिव औत्'—द्यौः । **विधीयेते इति** । यत्र त्वनुवादो

---

भाष्यप्रयोगे कुत्वं दृश्यते । 'स्वरैरव्यवहिता' इति तूचिता वृत्तिः। हलः किम् ? तितउ देव। अत्र 'गुरो'-रिति प्लुतः स्यात् । अनन्तराः किम् ? द्रप्सम् । अत्र सकारमकारयोः संयोगत्वे 'स्को'रिति लोपः स्यात् ॥ **संयोगे गुरु** । 'भेत्ते'त्यादौ गुणस्तु क्नोः कित्त्वसामर्थ्येन भूतपूर्वलघूपधग्रहणाद्वोध्यः । **इति सञ्ज्ञेति** । प्रथमाध्यायस्थानां सन्धिकार्योपयोगिनीनां सञ्ज्ञानां प्रकरण**मिति**—समाप्तमित्यर्थः । तेनाम्रेडितप्रगृह्यसञ्ज्ञालोपसञ्ज्ञाद्यनुपन्यासेऽपि न क्षतिः । 'अ अ' इत्याद्युपन्यासस्तु प्रासङ्गिकः । ॥ इति श्री**नागेशभट्टविरचिते लघुशब्देन्दुशेखरे सञ्ज्ञाप्रकरणम्** ॥

❀ **अथ परिभाषाप्रकरणम्** ❀

**इको गुण** । परिभाषेयं-व्याख्यानात् । **गुणवृद्धिशब्दाभ्यामिति** । गुणवृद्धिग्रहणानु-वृत्त्यैव सिद्धे पुनर्गुणवृद्धिग्रहणसामर्थ्यादिति भावः । अनुवर्त्तमानं सञ्ज्ञिपरमेव स्यात्; सञ्ज्ञा-करणेनाऽन्यत्र सञ्ज्ञिपरत्वात् । यद्वा—तदनुवर्त्य गुणो वृद्धिरिति योजनीयत्याशयः । स्वादिष्विति

इति षष्ठ्यन्तं पदमुपतिष्ठते ॥

अचश्च ।१।२।२८। ह्रस्वदीर्घप्लुतशब्दैर्यत्राऽज्विधीयते तत्राऽच इति षष्ठ्यन्तं

'वृद्धिर्यस्याचामादि'रित्यादौ तत्रेक इति षष्ठ्यन्तं नोपतिष्ठते। अनुवादे परिभाषाणामनुपस्थितेरिति भावः। 'अनुवादे परिभाषाणा'मित्यस्यानूद्यमानविशेषणेष्वित्यर्थः। अनुपस्थितौ लिङ्गं फलं च—'उदीचामातः स्थाने' इत्यत्र स्फुटीकरिष्यते। **षष्ठ्यन्तमिति**। सूत्रे षष्ठ्यन्तस्यानुकरणाच्छब्दस्वरूपपरतया नपुंसकत्वात्सोर्लुकि 'अत्वसन्तस्ये'ति दीर्घो नेति भावः। **पदमिति**। तच्च संभवति सामानाधिकरण्ये 'इगन्तस्याङ्गस्ये'त्यादिक्रमेण संबध्यते। 'मिदेर्गुणः' 'मृजेर्वृद्धिः' इत्यादौ तु सामानाधिकरण्याऽसंभवान्मिदिमृज्योरवयवस्येक इति संबध्यते ॥

**अचश्च। ह्रस्वदीर्घेत्यादि।** एतच्च 'ऊकालोऽज्झ्रस्वदीर्घप्लुतः' इति सूत्रादज्ह्रस्वदीर्घप्लुत इत्यनुवर्त्य 'ह्रस्वो दीर्घः प्लुत इति योऽ'जिति योजनया लभ्यते। ह्रस्वेत्यादि किम्?, 'दिव उत्' द्युभ्याम्। 'अष्टन आ विभक्तौ' अष्टौ। 'अष्टाभ्य औ'शित्यत्र कृतात्त्वनिर्देशाज्ज्ञापकाज्जश्शसोर्विषये प्रवर्त्तमानस्य'अष्टन' इत्यात्त्वस्याच्स्थानिकत्वे सति नैतत्सिध्येदिति दिक्। **षष्ठ्यन्तं पदमिति।** तच्च सति संभवे सामानाधिकरण्येनैव संबध्यते न वैयधिकरण्येन। तेन 'ह्रस्वो नपुंसके' इत्यजन्तप्रातिपदिकस्यैव ह्रस्वः। श्रीपम्। नेह सुवाग्ब्राह्मणकुलम्। 'शमामष्टानां दीर्घः—' इत्यत्र तु सामा-

सूत्रेऽनुवृत्त'पद'पदस्य सञ्ज्ञापरताया एव दृष्टत्वात्। 'ष्णान्ते'ति सूत्रे सङ्ख्यापदस्य तदन्तत्वाऽसम्भवादर्थपरतेति बोद्धव्यम्। लक्षणप्रतिपदोक्तपरिभाषया तु नाऽत्र निर्वाहः। तत्र **'प्रतिपदोक्तस्ये'**त्यस्य—साक्षादुच्चारितस्येति, साक्षात्तत्तच्छब्दानुवादेन विहितस्येति वाऽर्थात्। ध्वनितञ्चेदमत्रैव भाष्ये। अस्याश्च विधेयसमर्पकगुणवृद्धिपदश्रुतिर्लिङ्गं, तदाह—**विधीयेते इति।** अत एव 'अतो गुणे' 'वृद्धिर्यस्ये'त्यादौ न दोषः। एतेन—'शब्दपरयोः पूर्वयोर्गुणवृद्धिपदयोरनुवृत्त्या 'यत्र ते पदे तत्रेदमुपतिष्ठते' इत्यर्थेन 'त्यदादीनामः' इत्यादिव्यावृत्तौ सिद्धायामिह 'गुणवृद्धी'इति व्यर्थ'मित्यपास्तम्। एतन्मूलक एव 'विधौ परिभाषोपतिष्ठते नानुवादे' इत्युद्घोषः। एवञ्च पदोपस्थापकपरिभाषाविषये 'विधीयते' इत्यस्यैवाध्याहारो बोध्यः। एवञ्च 'तस्मिन्निति निर्दिष्टे' 'षष्ठीस्थाने' इत्यादेरनुवादेऽपि प्रवृत्तिः। तेन 'प्रत्ययस्थात्कात्पूर्वस्य' 'उदात्तस्वरितयोर्यण' इत्यादौ न दोषः। 'उदीचामातः स्थाने' इति 'स्थाने'ग्रहणन्तु स्पष्टार्थमेव। तत्र विधिवाक्ये प्रथमाया विधेयविभक्तित्वेन तदन्तस्य विधेयसमर्पकत्वनिर्णयः। अत एव गुणादिपदानामिक्पदोपस्थापनेन चरितार्थानामपि वाक्यार्थान्वयिता। तदर्थस्य तदनन्वयित्वे विधेयत्वाभावेन उपस्थापकत्वस्यैव भङ्गापत्तेः। इयञ्चैधितेत्यादौ कयं [illegible] गुणव्यावृत्त्यर्थं, 'भिन्न'मित्यादौ निषेधप्रवृत्तये इग्लक्षणत्वसम्पत्त्यर्थञ्चेति दिक् ॥

**प्लुतशब्दैरिति।** 'ऊकाल' इति सूत्राद्ध्रस्वदीर्घप्लुत इति, 'अ'जिति चानुवर्त्तते। 'ह्रस्वे'त्यादिपदञ्च

पदमुपतिष्ठते । **आद्यन्तौ टकितौ** ।१।१।४६। टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः । **मिदचोऽन्त्यात्परः** ।१।१।४७। 'अच' इति निर्धारणे षष्ठी । अचां मध्ये योऽन्त्यस्तस्मात्परस्तस्यैवाऽन्तावयवो मित्स्यात् ॥

---

नाधिकरण्यासंभवात्–'शमादीनामच' इति संबध्यते, तेन 'शाम्यती'त्यादि सिद्धम् । 'वाक्यस्य टेः प्लुतः–' इत्यत्र सामानाधिकरण्यसंभवेऽपि टेर्ग्रहणसामर्थ्याट्टेरवयवस्याचः प्लुत इति व्याख्यायते । अन्यथा 'अलोऽन्त्यस्य' 'अचश्चे' ति परिभाषाभ्यामेहि कृष्णेत्यादिवाक्यान्त्यस्याऽचः प्लुतसिद्धौ किमनेन टेर्ग्रहणेन ? । तेन 'आयुष्मानेधीन्द्रवर्म३न्' इत्यादि सिध्यतीति दिक् ॥

**आद्यन्तौ टकितौ** । भविता,–'आर्धधातुकस्येट्' । पाययति–'शाच्छासाह्वे'त्यादिना युक् । पुरस्तादपवादन्यायेन स्थानेयोगत्वस्यायमपवादः । 'प्रत्ययः', 'परश्चे'त्यनेन तु परत्वादयं बाध्यते । तेन 'चरेष्टः' 'गापोष्ट'गित्यादयः परा एव भवन्ति ॥

**मिदचोऽन्त्यात्परः** । स्थानेयोगत्वस्य 'प्रत्ययः',–'परश्चे'ति परत्वस्य चायमपवादः । यशांसि वनानि । 'नपुंसकस्य झलचः' इति नुम् । रुणद्धि ।–'रुधादिभ्यः श्नम्' । ननु पूर्वयोगवदयमपि पुरस्तादपवादन्यायेन स्थानेयोगमात्रस्यापवादोऽस्त्विति चेन्न; बाध्यसामान्यचिन्तामाश्रित्य स्वविषये प्राप्तं सर्वं बाध्यते इतीहाभ्युपगमात्, अन्यथा श्नमो मित्करणं व्यर्थं स्यात् । नच श्रवणार्थ एव मकारः स्यादिति वाच्यम्, 'तृणह इ'मिति निर्देशात् । **अचां मध्य इति** । सूत्रे जात्यभिप्रायेण

---

तृतीयया विपरिणतमिति भावः। तेन 'द्विव उत्' 'अष्टन आ विभक्ता'वित्यादावेतदनुपस्थितिः। शेषं प्राग्वत्॥

**आद्यन्तौ** । यद्यप्यत्र मिलितस्य नैकत्रान्वय इति द्वन्द्वो न प्राप्नोति तथापि समूहयोरन्वयबोधोत्तरं 'यथासङ्ख्य'मितिसूत्रारम्भसामर्थ्यात्पुनः प्रत्येकान्वयः । लोके त्वेवंरीत्या प्रयोगोऽसाधुरेवेति भाष्ये स्पष्टम् । अत्रैव यथासङ्ख्यसूत्रोपन्यासो युक्तः । द्वन्द्वान्ते श्रूयमाणस्येच्छब्दस्य प्रत्येकं सम्बन्धः । 'पुरस्तादपवाद'न्यायेन स्थानेयोगत्वस्याऽयमपवादः । प्रत्ययपरत्वन्तु परत्वादमुं बाधते । तेन चरेष्टादयः परा एव भवन्ति । अत एव यत्रैतदभावे स्थानषष्ठीसम्भावना तत्रैवेदं प्रवर्त्तते; तदाह–**यस्योक्ताविति** । आद्यन्ताक्षिप्तोऽवयवी यच्छब्दार्थः । यथासङ्ख्यसिद्धमर्थमाह–**क्रमादिति** । इताविति किम् ?, टुक् पर्यायेणाद्यन्तयोर्मा भूत् ॥

**मिदचो** । अयं बाध्यसामान्यचिन्तया स्थानेयोगत्व-प्रत्ययपरत्वयोरपवादः । 'तृणह' इति निर्देशात् । **निर्धारणे इति** । 'यस्य समुदायस्य मिद्विहितस्तस्याचां मध्ये' इत्यर्थः । सौत्रमेकवचनमिति भावः । **तस्यैवेति** । यस्य विहितस्तस्यैवेत्यर्थः । अत एव 'समुदायभक्तोऽसौ नोत्सहतेऽवयवस्येगन्ततां विहन्तु'मिति भाष्यं सङ्गच्छते । **अन्तावयव इति** । पूर्वसूत्रात्समस्तमप्यन्तपदमेकदेशो

**षष्ठी स्थानेयोगा** ।१।१।४९। अनिर्धारितसंबन्धविशेषा षष्ठी स्थानेयोगा बोध्या। स्थानं च प्रसङ्गः ॥

---

'अचः' इत्येकवचनमिति भावः। अचां मध्य इति किम् ?, मुञ्चति लुम्पति। 'अन्त्यादचः परो मित्स्या'दिति प्राचो व्याख्यायां नैतत्सिध्येत्। 'शे मुचादीना'मित्यत्रान्त्यस्याचोऽसंभवेन मित्परिभाषाया अप्रवृत्तिप्रसङ्गात्। अन्ये त्वचोऽन्त्यात्परो मित्स्यादिति व्यत्यासेन योजयित्वा प्राचो व्याख्यानमपि कथंचित्समर्थयन्ते। पूर्वसूत्रादन्त इत्यनुवर्त्तते, एकदेशे स्वरितत्वप्रतिज्ञानादतो व्याचष्टे–**अन्तावयव इति**। तेन 'वारीणी'त्यादावङ्गस्य नान्तत्वेन दीर्घः सिद्धः। परादित्वे स न सिध्येत्। अभक्तत्वे तु 'वहंलिह' इत्यत्र 'वहाभ्रे लिहः' इति खशि 'अरुर्द्विष'दिति मुमि मोऽनुस्वारो न स्यात्, अपदान्तत्वादिति भावः। यत्तु कैश्चिदुक्तमभक्तत्वे 'वारीणी'ति दीर्घो न स्यादिति, तत् 'तदादिग्रहणं स्यादिनुमर्थ'मित्यङ्गसंज्ञासूत्रस्थवार्तिकेनैव दूषितप्रायम् ॥

**षष्ठी स्थानेयोगा**। स्थानेन योगोऽस्या इति विग्रहः। निपातनादेत्वम्। षष्ठ्याः संबन्धमात्रवाचित्वेऽपीह शास्त्रे या षष्ठी सा स्थानेयोगा बोध्या। किमविशेषेण ?, नेत्याह–**अनिर्धारितसंबन्धविशेषेति**। अनिर्धारितेति किम् ?, 'ऊदुपधाया गोहः', 'शास इदङ्हलो'रित्यादावुपधासंनिधानेनावयवषष्ठीत्वे निर्णीते 'गोहः' 'शास' इत्यादौ मा भूत्। सति हि तत्रापि स्थानेयोगत्वे गोहिशासिस्थाने धातुमात्रस्योपधायाश्च स्थाने ऊदितौ स्यातामिति दिक्। **स्थानं च प्रसङ्ग इति**। न चास्य प्रसङ्गार्थकत्वे विवदितव्यम्। 'दर्भाणां स्थाने शरैः प्रस्तरितव्य'मित्युक्ते दर्भाणां प्रसङ्ग इति प्रतीतेः। एवं च 'इको यणची'त्यादाविगुच्चारणप्रसक्तौ यगुच्चारणीय इत्याद्यर्थः संपद्यते ॥

---

स्वरितत्वप्रतिज्ञाबलादनुवर्त्तते इति भावः। 'मुञ्चती'त्यादिविषये तु फलाभावादयोग्यत्वाच्चान्तावयव इत्यंशाप्रवृत्तिः। परिभाषाणामनियमे नियमकारिणीत्वादाह–**अनिर्धारितेति**। तेन'ऊदुपधाया गोहः' इत्यत्र स्थानेयोगत्वं न, 'उपधा'पदसन्निधानेनावयवषष्ठीत्वनिर्णयात्। '**स्थानेयोगे**'यस्य स्थानपदार्थनिरूपितसंबन्धार्थिकेत्यर्थः। 'स्थानेन योगो यस्याः' इति विग्रहे निपातनात्साधुत्वस्य भाष्ये उक्तत्वात्। 'अस्तेरनन्तरे'इत्यादेरपि अनन्तरादिनिरूपितसम्बन्धे इत्येवार्थः। षष्ठीमात्रोच्चारणे स्थानपदाद्यध्याहार इत्यन्यत्र विस्तरः॥ **प्रसङ्ग इति**। 'दर्भाणां स्थाने शरैः प्रस्तरितव्य'मित्यादौ तथा दर्शनात्। भावे ल्युट्–स्थानशब्दे। **प्रसङ्गश्च** सति सम्भवेऽर्थवत एव। अर्थप्रत्यायनार्थं शब्दप्रयोगात्। 'इकोयणि'त्यादेरच्परेकारघटितशब्दस्यार्थबोधनाय प्रसङ्गे तत्परयकारघटितः प्रयोक्तव्य इत्यर्थः। 'एरु'रित्यादेश्च 'तेस्तु'रिति, अतो न शब्दनित्यत्वहानिः। किंचेकारबुद्धिप्रसङ्गे यकारबुद्धिरित्यर्थः। अतएवा'चः

**स्थानेऽन्तरतमः** ।१।१।५०। प्रसङ्गे सति सदृशतम आदेशः स्यात् ॥

**यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं वलीयः ॥**

**तस्मिन्निति निर्दिष्टे पूर्वस्य** ।१।१।६६।

---

**स्थाने । सदृशतम इति ।** अर्थात्प्राप्यमाणानां मध्यें एव । अतएव 'गङ्गोदक'-मित्यत्र त्रिमात्र ओकारो न । इह 'स्थाने' इत्यनुवर्तमाने पुनः स्थानेग्रहणादन्योऽपि वाक्यार्थः संमतः,—ताल्वादिरूपें स्थाने योऽन्तरतमः—तत्प्रयुक्तान्तर्यवानिति यावत् । स तु प्राप्यमाणानां मध्यें स्यादिति । तदेतदाह—**यत्रानेकविधमिति ।** स्थानार्थगुण-प्रमाणतश्चतुर्विधमित्यर्थः । स्थानतो यथा—दध्यत्र । तालुस्थानस्येकारस्य तालुस्थानो यकारः । अर्थतो यथा—वातण्ड्ययुवतिः । वतण्डशब्दात् 'वतण्डाच्चे'ति गोत्रापत्ये यञ् । तस्य 'लुक् स्त्रिया'मिति लुक् । शार्ङ्गरवादित्वान्ङीन् । वतण्डी चासौ युवतिश्चेति विग्रहे 'पोटायुवती'त्यादिना समासः । 'पुंवत्कर्मधारये'त्यतिदिश्यमानः पुंशब्दो वतण्डापत्य-वाचिनो वतण्डीशब्दस्य तदपत्यवाची वातण्ड्यशब्दो भवति, न तु वतण्डादिः । गुणतो यथा—वाग्घरिः । घोषवतो नादवतो महाप्राणस्य तादृश एव घकारः । प्रमाणतो यथा—अमुम् अमू अमून् । 'अदसोऽसे'रित्यनेन ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घ उकारः । तमब्ग्र-हणं किम् ?, 'वाग्घरि'रित्यत्र 'झयो होऽन्यतरस्या'मिति पूर्वसवर्णे क्रियमाणे महा-प्राणत्वसाम्येन द्वितीयो, नादवत्त्वसाम्येन तृतीयश्च मा भूत् । किंतु नादवान् महाप्राण-श्चतुर्थो घ एव यथा स्यादिति । **वलीय इति ।** तेन 'चेता' 'स्तोते'त्यत्र प्रमाणत आन्तर्य-वानकारो नेति भावः । **तस्मिन्निति ।** सप्तम्यन्तानुकरणमिदम् । निःशब्दो नैरन्तर्य-

---

परस्मि'न्नित्यादि सङ्गच्छते । स्पष्टश्चेदं 'दाधा घ्वि'तिसूत्र-स्थानिवत्सूत्रयोर्भाष्ये ॥

**स्थानेऽन्त ।** 'पष्ठी'त्यनुवृत्त्या 'यत्र स्थानपष्ठी तत्रेदमुपतिष्ठते' इति विध्येकवाक्यतयैवास्य नियाम-कत्वं, न तु विहितानां नियमः, 'भुक्तवन्त'मितिन्यायविरोधात् । फलितमाह—**प्रसङ्गे इति । सदृशतम इति ।** अर्थात्प्राप्यमाणानां मध्ये एव । अत एव 'गङ्गोदक'मित्यादौ त्रिमात्रो न । तमप्किम् ? 'वाग्घरि'रि-त्यादौ महाप्राणत्वसाम्येन जायमानः पूर्वसवर्णो—वर्गद्वितीयो मा भूत्, किन्तु नादवान्महाप्राणश्चतुर्थो 'घ' एव यथा स्यादिति । 'स्थानेऽन्तरतमे' इति सप्तम्यन्तपाठस्तु—दीर्घेषु यणसिद्ध्या दुष्ट इति भाष्ये स्पष्टम् ।

**यत्रानेकेति ।** स्थानेग्रहणे एकदेशानुवृत्त्याऽनुवर्त्तमाने पुनः स्थानेग्रहणं तृतीयया विपरिणामेन वाक्यभेदमाश्रित्य प्रसङ्गे—सति सम्भवे—स्थानत एवान्तरतम इत्यर्थमिति भावः । **स्थानत इति ।** स्थानेनेत्यर्थः । तत्र **स्थानतः**—'इको यणची'ति । **अर्थतः**—'तृज्वत्क्रोष्टु'रिति । इह 'क्रोष्टु'शब्द-स्थाने 'पक्तृ'शब्दो नादेशः । **गुणतस्तु**—'वाग्घरि'रित्यादौ । **प्रमाणतः**—'अदसोऽसे'रित्यादौ ॥

**तस्मिन्निति ।** अत्र 'तस्मिन्नि'ति, उत्तरत्र 'तस्मा'दिति च सप्तम्यन्तं पञ्चम्यन्तपदार्थकः,

सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाऽव्यवहितस्य पूर्वस्य बोध्यम् ॥

---

परः। दिशिरुच्चारणक्रियः। 'अचि य'णित्युक्ते व्यवहितेऽव्यवहिते च सति प्राप्तम-
व्यवहिते एवेति, पूर्वस्य परस्य च प्राप्तं पूर्वस्यैवेति च नियम्यते। अव्यवहितस्येति तु
फलितार्थकथनम्। पूर्वस्यैवेति किं ?, दध्युदकम्।' अत्रोकारस्य मा भूत। अव्यवहि-
तस्यैवेति किम् ?, अग्निचिदत्र सोमसुदत्र। व्यवधानं चात्र वर्णकृतमेव निषिध्यते, नतु
कालकृतम्। संहिताधिकाराज्ज्ञापकात्। अन्यथा निर्दिष्टग्रहणादेवाऽसंहितायां यणा-
द्यप्रसङ्गात्किं तेन संहिताधिकारेणातो व्याचष्टे–**वर्णान्तरेणेति**। एवं च संहिताधिकार-

---

स्वतन्त्रस्य सर्वनाम्नो–निर्देशो व्याख्यानात्, बहुलक्ष्यसंस्कारानुरोधाच्च, न तु तत्तत्पदपरम्,–अन्यथा
'तस्मिन्नणि च' 'तस्मान्नुडचि' 'तस्माच्छसो न' इत्यत्रैव प्रवर्त्तेयाताम्। सप्तमी तु 'सप्तम्यन्तानामेव
तच्छब्दार्थत्व'मिति बोधनाय, तद्बोध्यार्थस्य 'निर्दिष्टे' इत्यनेन सामानाधिकरण्याय च। **'इति'**शब्दः
पुनस्तस्य तदर्थपरत्वं बोधयति। **निः**शब्दो नैरन्तर्ये, दिशिरुच्चारणे। एवञ्च 'सप्तम्यन्तार्थेऽव्यवहितो-
च्चारिते उपश्लिष्टस्य पूर्वस्य कार्य'मिति वाच्योऽर्थः। एवञ्चैतत्परिभाषाद्वयोपस्थितौ सप्तम्यन्तपदस्य पञ्च-
म्यन्तपदस्य चार्थो लिङ्गम्। अत्र सूत्रे उपश्लिष्टपदाध्याहारेण 'निर्दिष्टे' इति औपश्लेषिकेऽधिकरणे
सप्तम्येवोचिता,–'उपपदविभक्ते'रिति न्यायात्, न तु सतिसप्तमीति 'तत्र च दीयते' इति सूत्रे
**कैयटे** स्पष्टम्। 'स्नुक्रमो'रिति सूत्रे **कैयट** आह–'तस्मिन्निति परिभाषायां सत्यां सत्सप्तम्या-
श्रयणमशक्य'मिति। **उपश्लेषः**–समीपवृत्तित्वं, तत्र वर्णयोर्बोद्धं द्रष्टव्यम्। एवम्–'इको यणचा'-
त्यादावपीयमेवेति 'संहिताया'मिति सूत्रे भाष्ये। तत्रोपश्लेषः पूर्वस्येव परस्याप्यव्यवहितस्येव व्यवहितस्य
चेति–'पूर्वस्यैवे'ति नियमार्थमिदम्, 'अव्यवहितस्यैवे'ति च। अत एव लक्ष्यानुसारात्क्वचित्सतीत्यध्या-
हारात्सत्सप्तम्याश्रयणे नास्याः प्रवृत्तिरिति–'श्नान्नलोप' इत्यत्र भाष्ये उक्तम्। अत एव 'कर्तृकर्मणोः
कृतौ' त्यत्र नास्याः प्रवृत्तिः, 'कृति सति प्रत्यासत्त्या तत्प्रकृत्यर्थकर्तृकर्मणोः षष्ठी'ति तदर्थात्।
'तस्मा'दिति सूत्रे–'निर्दिष्टे' इति निर्दिष्टादित्यर्थकं, विभक्तिविपरिणामात्। सा चोत्तरस्येति दिग्योग-
लक्षणेति–दिग्योगलक्षणपञ्चम्यामेव तत्प्रवृत्तिः। 'उदः स्थे'त्यादौ च 'उद' इति दिग्योगलक्षणा
पञ्चमी। तत्राऽनियतदिक्शब्दाध्याहारे प्रसक्ते परशब्दस्यैवाध्याहार इति–'तस्मा'दित्यनेन नियम्यते।
'अव्यवहितोच्चारितात्पञ्चम्यन्तात्परस्ये'ति तदर्थः। तत्फलितमाह–**सप्तमीनिर्देशेनेत्यादि**। यदि
तु अर्धमात्राधिककालेन वर्णान्तरेण वा व्यवधाने उपश्लेष एव नेत्युच्यते तदा निर्दिष्टपदं संहिताधि-
कारश्च विफल इति 'संहिताया'मिति सूत्रे भाष्ये स्पष्टम्। 'अवग्रहे च सम्प्रदाय एव शरण'मिति
आनडादिविषये आदेशोत्तरमेवावग्रहोऽन्यत्र ततः प्राक्। अकृतव्यूहपरिभाषा त्वनित्या, नास्त्येव वा।
'न लक्षणेन पदकारा अनुवर्त्याः, पदकारैर्नाम लक्षणमनुवर्त्य'मिति भाष्येण–तदनुरोधेन शास्त्रासङ्को-
चस्य, शास्त्रकरणाभावस्य च स्पष्टमुक्तत्वाच्च। **एतेन** 'संहिताधिकारस्तद्बहिर्भूतानामर्धमात्राधिककाल-
व्यवाये प्रवृत्तिज्ञापनार्थः, तेनाग्नाविष्णू इत्यादाववग्रहे आनडादिसिद्धि'रित्यपास्तम्। 'प्रत्ययः' 'परश्च'-

**तस्मादित्युत्तरस्य** ।१।१।६७। पञ्चमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेणाऽव्यवहितस्य परस्य ज्ञेयम् ॥

**अलोऽन्त्यस्य** ।१।१।५२। षष्ठीनिर्दिष्टान्त्यस्याऽल आदेशः स्यात् ॥

**ङिच्च** ।१।१।५३। अयमप्यन्त्यस्यैव स्यात् । 'सर्वस्ये'त्यस्यापवादः ॥

---

बहिर्भूतविधयः कालव्यवायेऽपि संभवन्ति । तेनाग्नाविष्णू इत्यादाववग्रहेऽपि 'आनङृतो द्वन्द्वे' 'देवताद्वन्द्वे चे'त्यादिना उत्तरपदे परतो विहिता आनङादयो भवन्तीति दिक् ।

**तस्मादिति** । उत्तरस्येति किम् ?, 'तिङ्ङतिङः' इति निघात उत्तरस्यैव यथा स्यात् । अग्निमीळे । नेह–ईळे अग्निम् । **अव्यवहितस्येति** । एतच्च निर्दिष्टग्रहणानुवृत्त्या लभ्यते । तेन उत्संस्थानं उत्संस्तम्भनमित्यादौ 'उदस्थे'ति पूर्वसवर्णो न प्रवर्तते ॥

**अलोऽन्त्यस्य** । स्थानषष्ठीनिर्दिष्टस्य य उच्यते सोऽन्त्यस्यालः स्थाने स्यादित्यर्थः । 'त्यदादीनामः' । सः, यः । स्थानषष्ठीति किम् ?, आर्धधातुकस्येट् तृच ऋकारात्पूर्वो मा भूत् । इदं च 'षष्ठी स्थाने' इत्यनुवृत्त्या लभ्यते । अल इति किम् ?, 'पदस्ये'त्यधिकृत्य विधीयमानं 'वसुस्रंसु' इति दत्वं परमनडुद्भ्यामित्यादावन्त्यस्य पदस्य मा भूत् ॥

**ङिच्च** । **अयमपीति** । 'अवङ् स्फोटायनस्य'–गवाग्रम् । 'अनङ् सौ'–सखा ॥

---

त्यादौ तूत्तरांशविकला तस्मादिति परिभाषा प्रवर्त्तते । तेन न प्रत्यया व्यवहिताः । अत एव 'छन्दसि परेऽपि' 'व्यवहिताश्चे'ति सूत्रं सार्थकम् । आगमविधावपि 'आने मु'गित्यादौ **तस्मि**न्निति परिभाषया पूर्वसम्बन्धित्वनिर्णयः । अत एवात्र 'पूर्वस्ये'त्यादि न स्थानषष्ठी । तत्तद्विधिभिरेव सम्बन्धस्य निर्णीतत्वेन 'षष्ठी स्थाने' इत्यस्याऽप्रवृत्तेः । 'गाङ्कुटादिभ्य' इत्यादावपि षष्ठ्यंशविकलैतत्परिभाषाप्रवृत्तिर्बोद्धव्या । परिभाषाणां नियमत्वन्तु–यदि परिभाषासूत्रं न स्यात्तदा व्यवहितादावपि प्रवृत्तिः स्यादित्येतावतेति दिक् ॥

**अलोऽन्त्यस्य** । 'षष्ठी स्थाने' इत्यनुवर्त्तते, तदाह–**षष्ठीत्यादि** । स्थाने विधीयमानः स्थानषष्ठी निर्दिष्टान्त्यस्येत्यर्थः । स्थान इत्यादि किम् ?, इट् तृच ऋकारात्पूर्वो मा भूदिति । अन्त्यस्येति साहचर्यादल इति षष्ठ्यन्तम् । अन्त्यस्याल इत्यर्थः । अल इति किम् ?, 'पदस्ये'ति विधीयमानं 'वसुस्रंसु' इति दत्वं–स्त्रनडुद्भ्यामित्यादावन्त्यस्य पदस्य मा भूत् । **'स्थाने विधीयमान'** इति प्रत्यासत्तिलब्धेस्, एवञ्चाल एवेति, अन्त्यस्यैवेति नियमद्वयमत्र । अल्समुदायबोधकपदोत्तरं स्थानषष्ठी अस्या लिङ्गम् । अत एव 'इतोऽ'दित्यादौ नास्याः प्रवृत्तिः । 'पथ्यादीना'मित्यस्यावयवषष्ठीत्वादित इत्यस्याल्समुदायोत्तरत्वाभावाच्च ॥ ङिच्च । आदेशत्वं ... ॥

**आदेः परस्य** ।१।१।५४। परस्य यद्विहितं तत्तस्यादेर्बोध्यम्। 'अलोऽन्त्यस्ये'-त्यस्यापवादः ॥

**अनेकाल्शित्सर्वस्य** ।१।१।५५। स्पष्टम्। अलोऽन्त्यसूत्रापवादः। 'अष्टाभ्य औ'शित्यादावादेः परस्येत्येतदपि परत्वादनेन बाध्यते ॥

---

**परस्य यदिति**। 'तस्मादित्युत्तरस्यादे'रिति न सूत्रितम्, 'आदे'रित्यंशस्य सर्वादेशबाधकत्वापत्तेः। सिद्धान्ते तु परत्वात्सर्वादेशत्वं बाधकमित्यनुपदमेव वक्ष्यति। **आदेर्बोध्यमिति**। आदेरलो बोध्यमित्यर्थः। 'अल'इति ह्यनुवर्तते ॥

**अनेकाल्**। 'अस्तेर्भूः' बभूव। ननु 'निर्दिश्यमानस्यादेशा भवन्ती'त्यनेकालादेशस्य सर्वादेशत्वं सिध्यति, तत्किमनेनाऽनेकाल्ग्रहणेन? । न च 'अलोऽन्त्यस्ये'-त्यन्त्यस्य स्यादिति शङ्क्यम्, 'ङिच्चे'त्यस्य नियमार्थत्वाभ्युपगमात्। उच्यते—अनेकाल्ग्रहणाभावे 'रामै'रित्यादावैसादेशः 'आदेः परस्ये'ति भकारस्यैव स्थाने स्यान्नतु सर्वस्य स्थाने इति दिक्। शित उदाहरणम्—'इदम इश्'—इतः। **इत्यादाविति**। आदिशब्देन 'अतो भिस ऐ'सित्यादि गृह्यते। **परत्वादिति**। अत एव 'आदेः परस्ये'ति पृथक्क्रियत इत्युक्तम्। ननु 'अनेकाल्शित्सर्वस्ये' त्यतः प्रागेव 'तस्मादित्युत्तरस्यादे' रिति पठ्यतां किमनेन पृथक्सूत्रकरणेन?। न चैवं 'तस्मिन्निति निर्दिष्टे-' इत्यतो निर्दिष्टग्रहणं नात्रानुवर्तेतेति वाच्यम्, तस्यापि सूत्रस्य प्राक् पठने बाधकाभावेन निर्दिष्टग्रहणानुवृत्तिसिद्धेः। मैवम्। 'ब्राह्मणाअष्टौ'इत्यत्र अष्टाभ्यः पूर्व-

---

**आदेरिति**। आदेरल इत्यर्थः। तेन 'द्वीप'मित्यादौ पान्तसमुदायस्य नेत्त्वम्। अत्र 'परस्ये'-त्यावर्त्तते, तेन परबोधकशब्देन यत्र परस्य स्थाने विधानं तत्रैवेदम्। तेन 'नित्यं ङित' इत्यादौ न दोषः। तत्र विकरणव्यवधाने प्रवृत्तये—'धातो'रित्यस्य विहितविशेषणत्वात् ॥

**अनेकाल्शित्**। **शित** उदाहरणम्—'इदम इश्'। ननु शकारोच्चारणसामर्थ्याद्भूतपूर्वानेकाल्त्वमादाय सर्वादेशत्वे सिद्धे 'शि'दिति व्यर्थं, किञ्च सानुबन्धकनिर्देशे यथा नाऽलः स्थानित्वं 'भोभगो' इति सूत्रे भाष्ये उक्तं, तथाऽऽदेशत्वमपि सूत्रोपात्तस्यैवेति तद्व्यर्थम्। 'विधौ निर्दिष्टो योऽनेकाल्स सर्वस्ये'ति सूत्रार्थः।उद्देश्यत्वविधेयत्वाख्यविषयतया बोधविषयता तु अनुबन्धविनिर्मुक्तस्येति नाणुदित्सूत्रभाष्यविरोधः। 'घ्वसो'रिति लोपस्य—'लोपो यी'ति प्रकृते पुनर्लोपग्रहणसामर्थ्यात्सर्वादेशत्वसिद्धिः। 'अनुबन्धानामेकान्तत्वमेव न्याय्यमित्युक्त'मिति चेन्न, 'नानुबन्धकृतमनेकाल्त्व'मिति ज्ञापनेन चारितार्थ्यात्। तेन 'दिव औ'दित्यादीनां न सर्वादेशत्वम्। अस्य च यथेत्सञ्ज्ञा तथा वक्ष्यते। 'नानेकाल्शि'दिति तु नोक्तम्, 'अनन्तरस्ये'ति न्यायेन 'आदेः परस्ये'त्यस्यैव निषेधापत्तेः। **परत्वादिति**। आदेः परस्येत्यस्यावकाशः—'द्व्यन्तरुपसर्गेभ्यः'—द्वीपम्। **शित्सर्वस्य**—'इदम इश्'। एवम्—'अतो भिस'

योरपि जश्शसोरौश्प्रसङ्गात्। यथाश्रुतसूत्राभ्युपगमे तु 'उत्तरस्ये'त्यंशः प्रवर्तत एवेति नायं दोषः प्रसज्यत इति। अत्र केचिन्निष्कर्षमाहुः—अनेकाल्शित्सूत्रात्प्रागेव वर्णलाघवाय 'तस्मादित्युत्तरस्यादे'रिति सूत्रिते परत्वात्सर्वादेशेन आदेरित्यंशवदविशेषादुत्तरस्येत्यंशस्यापि बाधितत्वाद्वाक्यसंस्कारपक्षे ब्राह्मण अस् अष्टन् अस् इति स्थिते 'अष्टाभ्य' इत्यस्य दिग्योगे पञ्चमीत्वाद्व्याप्तिन्यायेनाऽष्टनोऽङ्गात्पूर्वयोरपि जश्शसोरौश्स्यात्। व्याप्तिन्यायस्तु 'प्राग्रीश्वरान्निपाता' इति पठितेऽपि प्रत्यासत्तिन्यायेन 'अधिरीश्वरे' इति सूत्रावधिकत्वसिद्धौ 'ईश्वरे तोसुन्कसुनौ' इति सूत्रावधिकत्वनिराकरणाय रेफविशिष्टग्रहणं कुर्वता सूत्रकृतैव ज्ञापितः। ततश्च सर्वादेशेन 'उत्तरस्ये'त्यंशस्याऽबाधनार्थं, निर्दिष्टग्रहणानुवृत्त्यर्थं च 'तस्मिन्निति–' इति सूत्रात्परत्र कृते तु 'आदेः' इत्यस्य सर्वादेशबाधकत्वं स्यात्। तथा च 'अतो भिस ऐस्' इत्याद्यादेश आदेरेव स्यात्, अनेकाल्सूत्रस्य 'अस्तेर्भू'रित्यादौ चरितार्थत्वात्। यथान्यासे तु 'उत्तरस्ये'त्यंशः प्रवर्तत एवेत्यष्टाभ्यः परयोरेव जश्शसोरौश्स्यात्, न तु पूर्वयोः। तथा 'तस्मादित्युत्तरस्यादे'रिति न सूत्रितमित्यादिमनोरमाग्रन्थस्याप्ययमेवाशय इति। अन्ये तु यथाश्रुतसूत्रनिराकरणपरतयैव मनोरमां योजयन्ति। तद्यथा—'न सूत्रित'मित्यस्य 'अनेकाल्शि'त्सूत्रात्प्राङ्न सूत्रितमिति नार्थः। 'आदे'रित्यंशस्य सर्वादेशबाधकत्वापत्तेरित्याद्यग्रिमग्रन्थविरोधात्, किंतु तद्ग्रन्थानुकूल्याय 'स्वं रूप'मिति सूत्रात्प्राङ्न सूत्रितमित्यर्थोऽभ्युपेयः। एवं च अनेकाल्सूत्रात्प्राक्सूत्रिते तु नास्त्येव दोष इति मनोरमाग्रन्थाशयः। एवं स्थिते निर्दिष्टग्रहणानुवृत्तिलाभाय 'तस्मिन्निति निर्दिष्टे' इति सूत्रं 'तस्मादित्युत्तरस्यादेः परस्ये'त्यस्मात्प्रागेव पठनीयम्। 'अष्टनोऽङ्गात्पूर्वयोरप्यौश् स्या'दित्युक्तदोषस्तु इत्थं परिहरणीयः, 'तस्मादित्युत्तरस्यादेः परस्ये'त्यत्र 'आदे'रिति पृथग्वाक्यम्। तत्र 'उत्तरस्ये'त्यनुवर्तते। सा च स्थानषष्ठी, 'षष्ठी स्थाने' इत्यस्य प्राप्तेः। तत्र चाग्रमर्थः—'पञ्चमीनिर्देशेन यत्कार्यं तदुत्तरसंबन्धि' 'उत्तरस्य स्थाने यद्विधीयते तदादेर्भवती'ति। इत्थं वाक्यभेदेन व्याख्यानाश्रयणादनन्तरस्येति न्यायेन 'आदे'रित्यंश एव सर्वादेशेन बाध्यते, न तूत्तरस्येत्यंशोऽपीति नास्त्येव पूर्वोक्तदोषः। वाक्यभेदेन व्याख्यानं तु 'उत्तरस्यादे'रित्यसमस्तन्यासकरणेन ज्ञाप्यते। अन्यथा 'उत्तरादेरिति न सूत्रित'मिति

इत्यादिविषये 'अनेका'लित्यनेनादेः परस्येति परत्वाद्बाध्यते। एतेन 'ङिच्चे'त्यत्र 'ङिदेवानेकालन्त्यस्ये'ति नियमेन सिद्धेऽनेकाल्ग्रहणं व्यर्थमित्यपास्तम्॥

**स्वरितेनाधिकारः** ।१।३।११। स्वरितत्वयुक्तं शब्दस्वरूपमधिकृतं बोध्यम् ॥

❀ परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः ❀ ॥

वदेत्। किंच 'अष्टाभ्य औ'शित्यस्य दिग्योगे पञ्चमीत्वेन पूर्वपरसाधारणतया अष्टनोऽङ्गाज्जश्शसोरित्युक्तेऽप्यष्टनोऽङ्गसंज्ञानिमित्तभूतौ यौ जश्शसौ तावेव शीघ्रोपस्थितिकावित्यष्टन्शब्दादुत्तरयोरेव औश् स्यात्, न तु पूर्वयोरिति दिक् ॥

**स्वरितेनाधिकारः**। अत्रेत्थंभूतलक्षणे तृतीया। अधिकारो विनियोगः। कियद्दूरमधिकार इत्यत्र तु व्याख्यानमेव शरणम्। यथा—आ सप्तमाध्यायपरिसमाप्तेरङ्गाधिकारः, न तु प्रागभ्यासविकारेभ्य एवेत्यादि। यद्वा स्वरित इति सप्तम्यन्तम्, स्वरिते दृष्टे अधिकारो निवर्तत इत्यर्थः। कः स्वरितोऽधिकारार्थः, कश्च तन्निवृत्त्यर्थ इत्यत्र तु व्याख्यानमेव शरणम्। नन्वेवं व्याख्यानादेवानुवृत्त्यननुवृत्ती स्तः किमनेन सूत्रेणेति चेत्, अत्राहुः-अर्थान्तरसङ्ग्रहायेदं सूत्रं कृतम्। तथाहि—**अधि**—अधिकः **कारो**ऽधिकारः। अधिकं कार्यं। गौणेपि शास्त्रप्रवृत्तिरित्यर्थः। तथा च गौणमुख्यन्यायो यत्र नेष्यते अपादानाधिकरणादौ, तत्र स्वरितः पाठ्यः। किंच अधिकः **कारः** कृतिरियं-यत्पूर्वः सन् परं बाधते। तथा च 'नुमचिरतृज्वद्भावेभ्यो नु'डित्यादिवक्ष्यमाणपूर्वविप्रतिषेधाः सर्वे संगृहीता भवन्ति, तत्र स्वरितपाठेनैव गतार्थत्वादिति ॥

**परनित्येति**। परान्नित्यं यथा—'तुदादिभ्यः शः'। तुदति। 'रुधादिभ्यः श्नम्'। रुणद्धि। परमपि लघूपधगुणं बाधित्वा नित्यत्वत् शश्नमौ। तथा धिनवाव, धिनवाम। परमपि 'लोपश्चास्यान्यतरस्यां म्वो'रित्युकारलोपं बाधित्वा नित्यत्वादाडुत्तमस्येत्याट्। परादन्तरङ्गं यथा—'उभये देवमनुष्याः'। इह 'प्रथमचरमे'ति परमपि विकल्पं बाधित्वा

**स्वरितेन**। इत्थम्भूतलक्षणे तृतीया। स्वरितत्वज्ञाप्योऽधिकारो विनियोग इत्यर्थः। **स्वरितत्व**-भेदं दोषविशेषरूपमज्झलसाधारणं स्वररूपमधिक्रियमाणपदघटकाऽज्निष्ठं वा। तच्चानुनासिक्यवत्प्रतिज्ञागम्यम्। विनियोगश्च प्रायेणोत्तरत्रोपस्थितिः, क्वचित्पूर्वत्रापि। 'कियद्दूरमधिकार' इत्यत्राऽसति गमके व्याख्यानमेव शरणम्। **किञ्च** स्वरितेनाधिकारगतिः,—तेन 'गोस्त्रियो'रित्यादौ स्त्र्यधिकारस्थप्रत्ययग्रहणमित्याद्याकारादवसेयम्। **एतेन**'व्याख्यानादेव निवृत्तिवदनुवृत्तिरपि भविष्यति, आकाङ्क्षायान्तु सत्यामश्रुतकल्पनाया अन्याय्यत्वाच्छ्रुतापेक्षणस्य न्याय्यत्वाच्च किं सूत्रेणे'त्यपास्तम्। स्पष्टश्चेदं भाष्ये। **परनित्येति**। **परं**—विप्रतिषेधसूत्राद्बलवत्। **नित्यं**—कृताकृतप्रसङ्गि, तद्विपरीतमनित्यम्। तत्राऽक्लृप्ताभावकस्याभावकल्पनापेक्षया क्लृप्ताभावकस्यैव तत्कल्पनं युक्तमिति तस्य बलवत्त्वे बीजम्। **अन्तर्**मध्ये—बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्येऽन्तर्भूतान्यङ्गानि—निमित्तानि यस्य **तदन्तरङ्गम्**।

॥असिद्धं बहिरङ्गमन्तरङ्गे॥ अकृतव्यूहाः पाणिनीयाः॥ निमित्तं विनाशोन्मुखं

'सर्वादीनी'ति सर्वनामसंज्ञा, विभक्तिनिरपेक्षत्वेनान्तरङ्गत्वात्। तथा—स्रवतेः 'णिश्री'ति चङि द्वित्वे उपधागुणादन्तरङ्गत्वादुवङ्, असुस्रुवत्। परादपवादो यथा—परमपि 'अनेका'लिति सर्वादेशं बाधित्वा 'ङिच्चे'त्यन्तादेशः। दध्ना, दध्नि। 'अस्थिदधी'त्यनङ्। नित्यादन्तरङ्गं यथा—'ग्रामणिनी कुले'। नित्यमपीकोऽचीति नुमं बाधित्वा 'ह्रस्वो नपुंसके' इति ह्रस्वः। कृते तु नुमि अनजन्तत्वाद्ध्रस्वो न स्यात्। अन्तरङ्गादपवादो यथा—'दैत्यारि','श्रीशः'। परमपि सवर्णदीर्घं बाधित्वाऽन्तरङ्गत्वादाद्गुणे यणि च प्राप्तेऽपवादत्वात्सवर्णदीर्घः। तथा 'उन्न्यौ' 'उन्न्यः' 'सुल्वः' इत्यत्रान्तरङ्गत्वादियङि उवङि च प्राप्तेऽपवादत्वादेरनेकाच इति, 'ओः सुपी'ति च यण्। यद्यपवादोऽन्यत्र चरितार्थस्तर्हि परान्तरङ्गाभ्यां बाध्यत एव। तथाहि—'ङिच्चे'त्येतदनन्यार्थङकारयुक्तेष्वनङादिषु चरितार्थत्वात्तातङि न प्रवर्तते, किंतु परेण 'अनेकाल्शि'दित्यनेन बाध्यते,—जीवतात्। भवतात्। अयजे इन्द्रम्, ग्रामे इह, सर्वे इत्थम्।—अत्र अयज इ इन्द्रम्, ग्राम इ इह, सर्व ई इत्थमिति स्थितेऽन्तरङ्गेण गुणेन सवर्णदीर्घो बाध्यते। तस्य असमानाश्रये 'दैत्यारिः' 'श्रीश' इत्यादौ चरितार्थत्वात्॥

**असिद्धमिति**। तेन 'पचावेद'मित्यादौ 'एत ऐ' इत्यैत्वं न। **अकृतव्यूहा इति**। अकृतकार्या इत्यर्थः। एवं तर्हि सर्वस्य शास्त्रस्य वैयर्थ्यं स्यादत आह—**निमित्तं विनाशोन्मुखं दृष्ट्वेति**। लोकसिद्धार्थकथनमेतत्। यद्वा अक्षरार्थेनाप्येतत्कथनम्। ऊह्यते तर्क्यत इत्यूहः—कार्यम्, विशिष्टो य ऊहो व्यूहो विनाशोन्मुखनिमित्तकं कार्यम्। अकृतो व्यूहो यैस्ते अकृतव्यूहा इति। यद्यपि 'कृतमपि शास्त्रं निवर्तयन्ती'ति परिभाषान्तरं पठ्यते, फलं च तुल्यं, तथापि 'अकृतव्यूहा' इत्येव लघु,

तदीयनिमित्तसमुदायाद्बहिर्भूताङ्गकं—**बहिरङ्गम्**। तस्य बलवत्त्वे बीजमाह—**असिद्धमिति**। इयञ्च—'वाह ऊ'ठिति सूत्रेण ज्ञापिता। **यद्यपि** 'प्रत्यङ्गवर्ती लोको दृश्यते, मनुष्योऽयं प्रातरुत्थाय प्रथमं शरीरकार्याणि करोति, ततः सुहृदां, ततः सम्बन्धिना'मितिन्यायमूलकत्वमस्या 'अचः परस्मि'न्निति भाष्ये उक्तं, **तथापि** तेन न्यायेन युगपत्प्राप्तिविषयतैव स्यात्, ज्ञापकेन तु सर्वविषयता बोद्ध्यते इति 'वाह ऊठ्' इति सूत्रे कैयटे स्पष्टम्। अन्यथा वाहः सम्प्रसारणे पूर्वरूपे च कृते ण्याश्रये गुणे 'वृद्धिरेची'ति वृद्धौ प्रष्ठौह इत्यादिसिद्धावृद्धिविधानं व्यर्थं स्यात्। नाजानन्तर्यपरिभाषा तु नास्त्येवेति—सं 'अयंते इन्द्र'मित्यादौ दोष इति **परिभाषेन्दुशेखरे** विस्तरः। अपवादस्तु वचनप्रामाण्याद्बलवान्॥ **अकृतेति**। **न कृतो विशिष्ट ऊहस्तर्को**—निमित्तविनाशेऽपि कार्यस्थितिरूपः,—यथा दण्डविनाशेऽपि घटस्थितिः,—स यैस्ते इत्यर्थस्तदाह—**निमित्तमित्यादि**। तत्प्रयुक्तं कार्यं जातमपि न

दृष्ट्वा तत्प्रयुक्तं कार्यं न कुर्वन्तीत्यर्थः ॥ इति **परिभाषाप्रकरणम्** ॥

## अथ अच्सन्धिप्रकरणम्।

**इको यणचि** ।६।१।७७। इकः स्थाने यण् स्यादचि संहितायां विषये । सुधी उपास्य इति स्थिते । स्थानत आन्तर्यादीकारस्य यकारः । सुध् य् उपास्य इति जाते ।

---

'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वर'मिति न्यायादिति भावः । **न कुर्वन्तीति।** यथा 'निषेदुषी'मित्यादौ क्वसोरिटमन्तरङ्गत्वात्प्राप्तमपि 'भाविना संप्रसारणेन वलादित्वं नङ्क्ष्यती'त्यालोच्य न कुर्वन्तीत्यर्थः ॥ ॥ इति तत्त्वबोधिन्यां **परिभाषाप्रकरणम्** ॥

**अथाच्सन्धिप्रकरणम्। इको यणचि ।** प्रत्याहारग्रहणेषु तद्वाच्यवाच्ये निरूढा लक्षणा, 'यू स्त्र्याख्यौ' 'ल्वादिभ्यः' इति च निर्देशात् । तेन इक्शब्देन षट्षष्टिर्गृह्यन्ते, यण्शब्देन चत्वारः, भाव्यमानस्याऽणः सवर्णाग्राहकत्वात् । एवं चेह यणि तद्वाच्यवाच्ये लक्षणा तु न शङ्क्यैव, भाव्यमानस्याऽणः सवर्णग्राहकत्वाभावेन यण्वाच्ययकारादिवाच्यानामभावात् । अतो नास्ति यथासङ्ख्यम् । न च लक्ष्यार्थ-बोधात्पूर्वभाविनं शक्यार्थज्ञानमादाय यथासङ्ख्यमस्त्विति वाच्यम्; एवमपि तृतीय-चतुर्थाभ्यामृकारऌकाराभ्यां प्रत्येकं त्रिंशदुपस्थितौ ऌवर्णानां रेफादेशस्य ऋवर्णानां लादेशस्य च प्रसङ्गात् । तस्मादिह 'स्थानेऽन्तरतमः' इति सूत्रेणैवेष्टसिद्धिरित्यनुपदं वक्ष्यति-'स्थानत आन्तर्या'दिति । **अचीति ।** 'कस्मादचि परे' इत्याकाङ्क्षायामर्थादिक इति संबध्यते । **संहितायां विषय इति ।** 'दध्यत्रे'त्यादौ कार्यिनिमित्तयोर्यदाऽतिशयितसंनिधिर्विवक्ष्यते तदैव यणभवतीति भावः ॥

---

**कुर्वन्ति**-नोच्चारयन्तीत्यर्थ इति **कैयटादयः** । **अन्ये तु व्यूहो**ऽन्तरङ्गशास्त्रं, बहिरङ्गापोहनरूपत्वात्, तत्-निमित्तविनाशं दृष्ट्वा-पूर्वमपि न कुर्वन्तीत्यर्थ इत्याहुः । इयं परिभाषा निष्फला निर्मूलेति **परिभाषेन्दुशेखरे** निरूपितम् ॥ इति **लघुशब्देन्दुशेखरे परिभाषाप्रकरणम्** ॥

## ॥ अथ अच्सन्धिप्रकरणम् ॥

**स्यादिति ।** कार्यशब्दवादे इदम् । **संहितायां विषये इति ।** कार्यिनिमित्तयोः संहितायां विषयभूतायामित्यर्थः । **स्थानत इति ।** इदं यथासङ्ख्यसूत्रे भाष्ये स्पष्टम् । 'जातिपक्षे यथासङ्ख्येनापि निर्वाह' इति स्थानेऽन्तरतमसूत्रे भाष्ये स्पष्टम् । अनुनासिकस्थानेऽपि निरनुनासिक एव, विधीय-मानत्वेन सवर्णाऽग्राहकत्वात् । गुणाभेदकत्वपक्षोऽपि न विधेयाऽण्विषये । दीर्घादीनामिगादिपदैरुप-स्थितये प्रत्याहारेषु जातिपक्ष एवेत्यणुदित्सूत्रे भाष्ये स्पष्टम् । अत एव सर्वतकारादीनां झल्त्वादिसिद्धिः । 'ल्वादय' इत्यादिनिर्देशादयश्च जात्याश्रयणे मानमिति दिक् । व्याकरणस्य साध्वनुशासनत्वन्तु शब्द-

**अनचि च** ।८।४।४७। अचः परस्य यरो द्वे वा स्तो न त्वचि । इति धकारस्य द्वित्वम् ॥ **स्थानिवदादेशोऽनल्विधौ** ।१।१।५६।

**अनचि च । यरो द्वे वेति ।** यरोऽनुनासिके' इति सूत्राद्यरो **वेति** चानुवर्तते । 'अचो रहाभ्या'मिति सूत्रादचो **द्वे** इति च, तदाह–**अचः परस्येत्यादि** । एवं चात्र 'वा'ग्रहणानुवृत्त्यैवेष्टसिद्धेः 'त्रिप्रभृतिषु शाकटायनस्य' 'सर्वत्र शाकल्यस्य' 'दीर्घादाचार्याणा'मिति च सूत्रत्रयं नारम्भणीयमिति भावः । अच इति किम् ?, 'तादात्म्य'मित्यादौ मस्य द्वित्वं मा भूत् । 'अनची'ति यदि पर्युदासः स्यात्ततो 'नञिवयुक्तमन्यसदृशे तथा ह्यर्थगति'रिति न्यायादज्भिन्नेऽच्सदृशे वर्णे हलीत्यर्थः स्यात्, ततो लाघवाद्धलीत्येव वदेत्, तस्मात्प्रसज्यप्रतिषेध इत्याह–**न त्वचीति** । एवं चावसानेऽपि द्वित्वं भवति–वाक्क् वाक् ॥

**स्थानिवदादेशो** । आदेशे कृते स्वरूपभेदात्स्थानिप्रयुक्तकार्याणामप्रवृत्तावतिदेश आरभ्यते । 'अस्तेर्भूः' । आर्धधातुके विवक्षिते धात्वादेशो धातुवत् । तेन 'अचो य'-दित्यादिधातुप्रत्ययः–भव्यं बभूव । 'किमः कः' । अङ्गादेशोऽङ्गवत् । तेन इनादेशदीर्घस्मावाः । केन काभ्यां कैः । आदेशग्रहणं किमर्थम् ?, 'स्थानिव'दित्येतावतैव संबन्धिशब्दमहिम्ना तल्लाभात्, यथा 'पितृवदधीते' इत्युक्ते 'पुत्रः' इति गम्यते इति चेदत्राहुः,–द्विविध आदेशः,–प्रत्यक्ष आनुमानिकश्चेति । 'अस्तेर्भूः' इत्यादिः प्रत्यक्षः । 'तेस्तुः'

नित्यतापक्षे शब्दानां सिद्धत्वेन शास्त्रवैयर्थ्यापत्त्या 'मृजिप्रसङ्गे मार्जिः साधुर्भवती'त्यादिवृद्धिसञ्ज्ञासूत्रस्थभाष्यप्रामाण्येन 'यदिह परिनिष्ठितत्वेन शाप्यं तत्साध्वि'त्यर्थापत्तिकल्प्यवाक्येन बोद्धव्यम् । **कार्यशब्दवादे** तु पूर्वभाष्योन्नीतानादितातपर्यवशात्तत्कल्पनं बोद्धव्यम् । **एतेन**–'स्थानत आन्तर्यादितिकथनेन स्थानप्रमाणोभयान्तरतमे ह्रस्वेकारे चरितार्थो यण् दीर्घे कथं स्या'दित्यपास्तम् । स्थानत आन्तर्यस्य सर्वतो बलवत्त्वात्, 'स्थानेऽन्तरतमे' इति सप्तम्यन्तपाठस्य चैतद्दूषणेनैव भाष्ये दूषितत्वादिति भावः ॥ **चो** विध्यर्थः । ध्वनितश्चेदमेओङ्सूत्रे भाष्ये, तदाह–**द्वे वा स्त इति** । सूत्रकृता शाकल्यमते सर्वत्र द्वित्वाभावोक्तेरिति भावः । अवसाने द्वित्वसिद्धयेऽनचीति प्रसज्यप्रतिषेधस्तदाह–**न त्वचीति** । इदं द्वित्वं पाठद्वित्ववद्भिःप्रयोग एव, 'यंर' इत्यादेरध्याहृतोच्चारणक्रियानिरूपितकर्मषष्ठीत्वस्यौचित्यात् । **इति धस्येति** । न तु द्वित्वे पूर्वधस्थाने जश्त्वनिष्पन्नदस्यापि, 'लक्ष्ये लक्षण'मिति न्यायात् । विकाराऽन्यत्वेन न लक्ष्यभेद इत्यन्यत्र प्रपञ्चितम् ॥

स्थान्यादेशयोर्भेदात्स्वं रूपमित्युक्तेश्च, 'तत्स्थानापन्नस्तद्धर्मं लभते, यथा गुरोः स्थाने शिष्यो याज्यकुलानि गत्वाऽग्र्यासनादीनि लभते' इति लोकन्यायेन स्थानिकार्यमादेशे न स्यादतः स्थानिवत्सूत्रम् ।

आदेशः स्थानिवत्स्यान्न तु स्थान्यलाश्रयविधौ।

इत्यादिस्त्वानुमानिकः। 'एरुः' इत्यत्र हि इकारेणेकारान्तः स्थानी अनुमीयते, उकारेण चोकारान्त आदेशः। तथाच 'तेस्तु'रिति फलितोर्थः, तत्रासत्यादेशग्रहणे प्रत्यक्षस्यैव ग्रहणं स्यान्न त्वानुमानिकस्य। आदेशग्रहणसामर्थ्यात्तूभयपरिग्रहः, तेन पचत्वित्यादेस्तिङन्तत्वात्पदसंज्ञा सिध्यतीति। ननु 'एरु'रित्यादि यथाश्रुतमेवास्तु, एकदेशविकृतस्याऽनन्यत्वात्पदत्वं भविष्यतीति चेन्न; अर्थवत्येव स्थानादेशभावविश्रान्तेर्वाच्यत्वात्तस्यैवात्र प्रसङ्गासंभवात्। तथाहि–'षष्ठी स्थानेयोगे'त्युक्तम्। स्थानं च प्रसङ्गः। स चार्थवतः, अर्थप्रत्ययार्थं शब्दप्रयोगात्। यद्यपि च्लेः सिजादावसंभवीदं, तथापि सति संभवे अर्थप्रयुक्त एव प्रसङ्गो ग्राह्य इत्यनेनैवादेशग्रहणेन ज्ञाप्यते। उक्तं च–

'सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः।
एकदेशविकारे हि नित्यत्वं नोपपद्यते'॥ इति।

पदमिहार्थवत्, पद्यतेऽनेनेति व्युत्पत्तेः। यद्यपि सर्वविकारे सुतरां नित्यत्वानुपपत्तिस्तथापीह विकार एव नास्तीति तात्पर्यम्। एतच्च शब्दकौस्तुभे स्पष्टम्॥

अनल्विधाविति किम्?। यत्राला विधिः, यत्रालः परस्य विधिः, यत्रालो विधिः, यत्रालि विधिस्तत्र मा भूत्। तत्राला विधौ यथा–व्यूढोरस्केन। अत्र सकारस्य स्थानिवत्त्वेन विसर्गवदट्त्वमाश्रित्य 'अड्व्यवाये' इति णत्वं प्राप्तम्। अलः परस्य यथा–द्यौः, पन्थाः। इह 'हल्ङ्यादिलोपो न। अलो विधौ यथा–द्युकामः। 'लोपो व्योर्वली'ति लोपो न। न चोत्त्वविधिसामर्थ्याल्लोपो न भवेदिति शङ्क्यम्; 'द्युयान'मित्यादौ तस्य सावकाशत्वात्। अलि विधौ–यजेः क्तः–क इष्टः। 'हशि चे'त्युत्वं न। न चेह स्थानिवद्भावेन जातेप्युत्वे आद्गुणेऽत्रादेशे च कृते 'हलि सर्वेषा'मिति नित्यं लोपेन 'क इष्ट' इति रूपं सिध्यत्येवेति वाच्यम्; 'कयिष्ट'इति रूपान्तराऽसिद्धिप्रसङ्गात्। सिद्धान्ते तु 'भोभगोअघोअपूर्वस्ये'ति यस्य लोपविकल्पे 'क इष्टः' 'कयिष्ट' इति रूपद्वयमभ्युपगम्यते। अल् चेह स्थान्यवयव एव गृह्यते, तेन 'रामाये'त्यादौ 'सुपि चे'ति दीर्घः सिद्ध्यति, तद्विधौ हि यञादित्वमाश्रितम्। यञ् त्वादेशावयवो न तु स्थान्यवयवः। तथा 'अरुदिता'मित्यादौ 'रुदादिभ्यः–' इति वलादिलक्षण इट् च सिध्यति। तदेतदाह–**न तु स्थान्यलाश्रय इति**। आश्रयणं चेह यथाकथंचिन्न तु

**न तु स्थान्यलेति**। प्रत्यासत्तिन्यायलब्धमिदम्। आदेशस्य स्थानि भूतो योऽल्,–तत्स्थानिसंबन्धी च योऽल्,–तद्वृत्तिधर्माश्रये नेत्यर्थः। अत एव रेफस्थानिकविसर्गस्य रुत्वद्ट्वं न

अनेनेह यकारस्य स्थानिवद्भावेनाऽच्त्वमाश्रित्य 'अनचि चे'ति प्राधान्येनैवेत्याग्रहः। तेन 'प्रपठये'त्यत्र वलादिलक्षण इण्न ॥

स्थानिवत्त्वेनेति 'भोभगो' इत्यत्र भाष्ये स्पष्टम्। ऋधातोर्द्वित्वेऽभ्यासस्योरदत्त्वेऽरित्यस्य हलादिः शेषस्तु–'अ'रित्यस्य पुनः 'पूर्वोऽभ्यासः' इत्यनेनाऽभ्यासत्वात्। तस्यापि द्विरुक्तधातुपूर्वभागत्वात्। प्रक्रियाज्ञानवतां तथा ज्ञानस्य सुलभत्वात्। अत एव 'धिन्वन्ती'त्यादाविण्न, उकारवृत्त्यार्धधातुकत्वस्य वकारेऽनतिदेशात्। यत्त्वत्रेण्निवृत्तये स्वविधावपि स्थानिवत्त्वमपरविधाविति न्यासेन साधितं भाष्ये, सा त्वेकदेश्युक्तिः। असिद्धवत्सूत्रेण सिद्धस्याऽऽयन्नासन्नित्यादेस्तत्फलत्वेनोपन्यासात्। अस्यापि 'अचः पूर्वत्वविज्ञाना'दिति वार्त्तिके पञ्चमीसमासेन सिद्धेः कैयटेनोक्तत्वाच्च। 'प्रदीव्ये'त्यादौ च वलादिलक्षण इण्न। 'स्थान्य'लित्युक्तेर्वं भूविवेत्यादौ वलादिलक्षणेट्सिद्धिः। न हि तत्र वलादित्वं स्थानितो लभ्यं, किन्तु स्वाश्रयमेव। यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तावतिदेशो मृग्यते तस्य निमित्तस्य स्थान्यलसाधारणधर्मत्व एव निषेधप्रवृत्तेः। प्रकृते चाऽऽर्द्धधातुकत्ववैकल्यप्रयुक्ताऽप्राप्तिर्नं तत्स्थान्यलसाधारणं, यच्च तादृशवल्त्वघटितं वलादित्वं–न तद्वैकल्यप्रयुक्ताऽप्राप्तिरिति बोद्धव्यम्। प्रत्यासत्त्या च शास्त्रीयकार्यं एव स्थानिवत्त्वं, तेन–'नायक'सिद्धिः।

प्राधान्यात्कार्यातिदेशोऽयम्। 'शास्त्रातिदेशस्तु कार्यातिदेशादभिन्नरूपः, तस्यापि कार्यफलकत्वा'दिति तृज्वत्सूत्रे कैयटः। भाष्येऽपि–'तत्राऽऽङ्गशास्त्रातिदेशात्सिद्धम्, आङ्गं यत्कार्यं तदतिदिश्यते' इत्युक्त्या तयोरभिन्नरूपत्वं सूचितम्। तत्रानपेक्षितार्थसन्निधानस्तत्तन्निमित्तरूपकार्यव्यवहार एवानेन, कार्यं तु स्वशास्त्रेणैवेति। अत एव 'रामाये'त्यादौ 'स्थानिवत्त्वेन सुप्त्वात्सुपि चेति दीर्घ' इति सङ्गच्छते। 'परिवी'रित्यादौ 'परत्वाद्दीर्घ' इति च सङ्गच्छते।

यद्वा–किञ्चिन्निमित्तवैकल्येऽपि दीर्घादिकार्यमनेन क्रियते। तच्च कार्यं किमित्याकाङ्क्षायां तत्स्वरूपनिर्णयस्य विधिशास्त्रमूलकत्वेन तद्देशेनैव परशास्त्रविहितत्वरूपं परत्वं तेषां बोद्धव्यम्। एतदेवाभिप्रेत्या'ऽतिदिश्यमानकार्याणामुपदेशदेश एव देश' इत्यभियुक्ताः। अत्राऽऽद्यपक्ष एव भाष्यसम्मतः। अत्रैव 'स्थान्यल्विधिप्रतिषेधे कुरुवधपिबां प्रतिषेधो वक्तव्य' इत्येतदुपपादनावसरे–'स्थानिवद्भावादङ्गसञ्ज्ञा, स्वाश्रयं च लघूपधत्वादि, तत्र लघूपधगुणादिः प्राप्नोती'त्यादिभाष्योक्तेरिति बोद्धव्यम्। एवं यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तन्निमित्तातिरिक्तसर्वनिमित्तकत्वमतिदेशस्यापि। अत एवेष्ठवद्भावेनातिदिष्टभत्वस्य 'वर्णाश्रयत्व'मित्यादिव्यवहारः। सर्वातिदेशेष्विदं तुल्यम्। यन्निमित्तवैकल्यप्रयुक्तोपदेशाऽप्रवृत्तिस्तन्निमित्तं–शास्त्रीयमेव, प्रत्यासत्तेः। 'स्थानिव'दित्युक्तेः सम्बन्धिशब्दमहिम्नैवाऽऽदेशलाभे आदेशग्रहणं–श्रौतस्थान्यादेशभावस्यैव ग्रहणमितिशङ्कावारणद्वारा 'एरु'रित्यादौ शब्दाऽनित्यत्ववारणाय 'सर्वे सर्वपदादेशा' इति न्यायेन कल्प्यमानस्य 'तेस्तु'रित्यानुमानिकादेशस्यापि सङ्ग्रहार्थम्। तेन पचन्त्वित्यादेः पदत्वसिद्धिरिति भाष्ये स्पष्टम्। ननु तोस्त्वित्त्वमपि छिन्नपुच्छे शुनि श्वत्वव्यवहारवल्लोकन्यायेनैव सिद्धम्। तदुक्तं 'प्राग्दीव्यतोऽ'णिति सूत्रे भाष्ये–'दीव्यतिशब्दैकदेशदीव्यच्छब्दानुकरणमिद'मित्युक्त्वा–'किमर्थं विकृतनिर्देशः ?, एतदेव ज्ञापयत्याचार्यो भवत्येषा परिभाषा एकदेश-

—द्वित्वनिषेधो न शङ्क्योऽनल्विधाविति तन्निषेधात् ॥

विकृतमनन्यव'दिति। अत एवात्र विकारोऽशास्त्रीयोऽपि। अत एव श्रायसशब्दादण्णन्ताद्द्विवचने श्रायसावित्यत्र वृद्धौ कृतायां सान्तस्योगित्त्वेनानेन न्यायेनाऽङ्गतया प्राप्तो नुम्-पूर्वसम्बन्धिविधित्वेनाऽचः परस्मिन्निति स्थानिवत्त्वेन वारितो'ऽचः परस्मि'न्निति सूत्रे भाष्ये। एतन्न्यायानाश्रयणे त्वङ्गत्वमेव दुर्लभम्। अन्तादिवत्सूत्रे भाष्यकैयटयोरपि-'गुडोदक'मित्यादावेकादेशे कृते 'दक'शब्दस्यानेन न्यायेनोदकशब्दत्वमाश्रित्य 'उदके केवले' इति पूर्वपदान्तोदात्तत्वमुक्तम्। शब्दाऽनित्यत्वन्तु 'रेखागवय'न्यायेन समाधेयम्। 'अनन्यव'दित्यस्य-अन्यवन्नेत्यर्थः। तत्रान्यसादृश्यनिषेधेऽन्यत्वाभावः सुतरामिति चेन्न; अर्द्धस्यान्यत्वे जातिव्यञ्जकभूयोऽवयवदर्शनाभावेन तो तित्त्वप्रतीतेर्न्यायेनानुपपादनात्। किञ्च तिङ्सञ्ज्ञायास्तिबादिसूत्रोपात्तपरिच्छिन्नपरिमाणनिष्ठतया परिच्छिन्नपरिमाणार्थवाचकशब्दानां न्यूनेऽधिके वा शास्त्रव्यापारं विनाऽप्रवृत्तेर्येन विधिरिति सूत्रेऽङ्गसञ्ज्ञासूत्रे च भाष्ये उक्ततया तदभावात्। न्यूनाधिकत्वञ्च-वैरूप्यस्योपलक्षणम्। न च 'तण्डुला'नित्यादौ स्थानिवद्भावेन प्रत्ययान्तत्वेऽपि स्वतः प्रत्ययान्तभिन्नत्वात्प्रातिपदिकत्वापत्तिरिति वाच्यम्; अतिदेशस्वभावेनातिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभावात्। अत एव 'जही'त्यादौ जादेशस्यासिद्धत्वे स्वाश्रयो हेर्लुङ्। सिद्धत्वासिद्धत्वयोर्विरोधात्। असिद्धवत्सूत्रं तु 'शाधी'त्यादौ स्थानिप्रयुक्तधिभावसम्पादनेन चरितार्थम्। न चाप्रत्यय इत्यस्य पर्युदासत्वे-शास्त्रीयकार्याभावात्स्थानिवत्त्वं दुर्लभमिति वाच्यं, 'वेः स्कन्देरनिष्ठाया' मिति षत्वविधायके तिङन्तेषु षत्वाभावायाऽऽवश्यकेन न्यायेन चानिष्ठायामिति पर्युदासेन वृत्त्यादिसम्मतेन-पर्युदासलभ्याशास्त्रीयेऽपि शास्त्रतात्पर्यविषये शास्त्रीयवदतिदेशबोधनात्। 'विस्कन्न' इत्यादौ हि निष्ठान्तत्वस्य नित्यतया स्थानित्त्वेनैव निष्ठात्वस्य वक्तव्यत्वात्। तस्य प्रसज्यप्रतिषेधत्वे तु लक्ष्यानुसारिव्याख्यानादेवोक्तार्थसिद्धिरिति बोद्धव्यम्।

केचित्तु भाष्ये 'तत्स्थानापन्ने तद्धर्मलाभस्य तत्कार्यस्य च लोकन्यायेनैव सिद्धेरयमतिदेशः 'स्वं रूप'मित्येतच्छास्त्रसत्त्वाद्धन्तेः कार्यं वधौ न स्यादिति'त्युक्तम्। एवञ्च 'स्वं रूप'मितिशास्त्राऽविषये तेन सिद्धिरिति सूचितम्। एवञ्चाऽशास्त्रीयस्यापि धर्मस्यातिदेशो भवत्येव। अतिप्रसङ्गस्तु लक्ष्यानुसारेण क्वचिल्लोकन्यायानाश्रयणेन परिहरणीयो यदि प्राप्नोति। एवञ्च न कश्चिद्दोषः। 'न पदान्ते'ति सूत्रे 'ब्राह्मणकण्डूति'रित्युदाहरणाच्च क्वचित्तदनाश्रयणम्। तत्र हि कण्डूयतेः क्तिचि तस्य स्थानिवत्त्वादुवङि यणि वाऽनादिष्टादचः पूर्वत्वे स्थानिद्वारके गृह्यमाणे ऊठ् न स्यादित्याहुः। अत एवार्थवत्सूत्रशेषेऽप्रत्यय इत्यस्य पर्युदासत्वमेवोक्तं भाष्ये। तत्र पक्षे च 'काण्डे' इत्यत्र पूर्वान्तवद्भावेन प्रत्यान्तभिन्नत्वाद्दोषः शङ्कितो, न तु स्वाश्रयाप्रत्ययान्तत्वेन। 'क्षियो दीर्घा'दिति सूत्रे भाष्येऽपि अतिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभाव इति स्फुटम्। तत्र हि 'क्षियं' इत्यत्रेयङर्थं प्रकृतिवदतिदेशे स्वाद्यनुत्पत्तिमाशङ्क्य-'एवं तर्हि आतिदेशिकानां स्वाश्रयाणि न निवर्त्तन्ते' इति समाधायातिदिश्यमानधर्मविरुद्धस्वाश्रयनिवृत्तेरावश्यकत्वाभिप्रायेण-'अथाप्येतन्ने'त्याशङ्क्य 'निर्देशसामर्थ्याद्विभक्ति'रित्युक्तम्। असिद्धवत्सूत्रे च कैयटे स्फुटमेतत्। यत्तु गाङ्कुटादिसूत्रे भाष्ये-'सृजिदृशो'रित्यत्रकितीति पर्युदासात्सिसृक्षतीत्यत्र 'हलन्ताच्चे'ति कित्त्वातिदेशेऽपि अमागममाशङ्क्य-प्रसज्यप्रतिषेधाश्रयणेन समाहितं, तत्तु वार्त्तिककृदुक्तमुपायान्तरं बोद्धव्यम्। 'अनल्विधा'विति विधिग्रहणादलाश्रये विधावि-

**अचः परस्मिन्पूर्वविधौ ।१।१।५७। अल्विध्यर्थमिदम् ।**

**अचः परस्मिन्पूर्वविधौ ।** अचः किम् ? । आगत्य । 'वा ल्यपी'त्यनुनासिकलोपस्तुकि कर्तव्ये न स्थानिवत् । परस्मिन् किम् ? । आदीध्ये । नित्यत्वादिट्, एत्वम्, तच्च न परनिमित्तम्, तेन 'यीवर्णयो'रिति लोपे कर्त्तव्ये तन्न स्थानिवत् । पूर्वविधौ इति किम् ?, नैधेयः । निपूर्वाद्धाञः 'उपसर्गे घोः किः' 'आतो लोपः', 'द्व्यचः' । 'इतश्चानिञः' इति ढक् । आकारस्य स्थानिवत्त्वे तु त्र्यच्त्वव्यपदेशेन द्व्यच्त्वं विरुद्धत्वाद्बाध्येत । नहि त्रिपुत्रो द्विपुत्रव्यपदेशं लभते । नन्वेवमपि विधिग्रहणं व्यर्थम्, पूर्वस्येति षष्ठ्या कार्ये कर्तव्ये इत्यर्थस्याक्षेप्तुं शक्यत्वादिति चेन्न; पूर्वस्य विधिः, पूर्वस्माद्विधिरिति समासद्वयलाभार्थं विधिग्रहणात् । यद्यप्यत्र पञ्चमीसमासपक्षो मूले नोक्तः, तथापि 'पूर्वस्मादपि विधौ स्थानिवद्भाव' इति पक्षे तु 'अड्व्यवाये' इत्येवात्र णत्वमिति 'पद्'न्नादिप्रघट्टके स्वीकृतः सः ।

**अल्विध्यर्थमिदमिति ।** तेन 'वव्रश्चे'त्यत्र वस्य सम्प्रसारणं न, उरदत्त्वस्य स्थानिवत्त्वेन सम्प्रसारणतया 'न सम्प्रसारणे'इति निषेधात् । न चोरदत्त्वं परनिमित्तं नेति वाच्यम्, अङ्गाक्षिप्ते प्रत्यये परे तद्विधानात् । पूर्वस्माद्विधिः पूर्वविधिरिति पञ्चमीसमास-

त्यर्थाद्यत्र विधौ शब्दतः स्थानि-स्थान्यवयवान्यतराल्वृत्तिधर्मवतस्तेन तस्मात्तस्य तस्मिंस्तदादेरित्यादिप्रकारेण विशेष्यतया विशेषणतया वाऽलाश्रयणं तत्र निषेधः । व्यूढोरस्केन, द्यौः, द्युभ्यां, क इष्टः, प्रपठ्येत्युदाहरणानि । 'शब्दत' इत्युक्तेरग्रहीदित्यादौ 'इट ईटी'ति सिद्ध्यति । दीर्घविधावत्र च 'इट' इति समुदायाश्रयणात् । अन्यथा टस्यानुबन्धत्वादिकारस्यैवोभयत्राश्रयणमित्यल्विधित्वं स्यात् । अत्र सूत्रे विशेषातिदेशोऽपि । अन्यथा इडादेरपि त्त्वः सत्त्वाद्धलादित्वस्य तद्विशेषधर्मत्वादुपस्थितधर्मैस्तद्व्यापकधर्मैश्च विध्याकाङ्क्षापूरणे सति तदतिरिक्तविशेषग्रहणे मानाभाव इत्येतन्न्यायमूलकेन सामान्यातिदेशे विशेषानतिदेशेन सिद्धौ-विशेषणतयाऽलाश्रयणे निषेध-इत्येतत्प्रतिपादकस्यानल्वित्येव सिद्धे कृतस्य 'विधि'ग्रहणस्य वैयर्थ्यं स्यात् । हलादिक्ङिन्निमित्तकेत्त्वप्रतिषेधका'न्न ल्यपी'ति लिङ्गाच्च अनुबन्धकार्ये त्वनल्विधाविति निषेधो न, अनुबन्धानामनेकान्तत्वात् । एकान्तत्वेऽपि शिद्ग्रहणेन तेषामल्व्यवहाराभावज्ञापनात् । 'नानुबन्धकृतमनेकाल्त्वमिति ज्ञापयती'ति भाष्ये'ऽल्वव्यवहाराभावबोधनद्वारे'ति शेषः । ध्वनितश्चेदं-'क्ङिति च' गाङ् लिटि' 'हलः श्न' इति सूत्रेषु भाष्ये । तत्राऽऽद्ये-'यासुटो ङिद्वचनान्ङिदादेशा ङितो नेति ज्ञाप्यते'इत्युक्तम् । द्वितीये-गाङो ङित्त्वस्य सानुबन्धकादेशे इत्कार्याभावज्ञापकतोक्ता, तिबाद्यादेशेषु पित्त्वासिद्ध्या दूषितश्च ज्ञापकम् । अन्त्ये-शानचः शित्त्वस्य सार्वधातुकादेशेऽनुबन्धास्थानिवत्त्वज्ञापकत्वमुक्तम्, उक्तदूषणैरेव दूषितश्च । अन्यथाऽनल्विधाविति निषेधेन तत्त्वाप्राप्त्यां ज्ञापकत्वासङ्गतिः, तिबाद्यादेशेषु पित्त्वाद्यसिद्धिश्चेति बोद्धयम् ॥

**अचः पर ।** आदेशग्रहणमनुवर्तते, तदनुरोधादच इति स्थानषष्ठी, 'परस्मि'न्नित्यादेशविशेषणन्तदाह—

परनिमित्तोऽजादेशः स्थानिवत्स्यात्स्थानिभूतादचः—

पक्षस्य तु प्रयोजनम्–तन्वन्ति, तन्वते। इह यणादेशस्य स्थानिवद्भावान्नेट्। अत्र हि 'त'न्निलङ्गं निमित्तम्, तच्च स्थानिभूतादुकारात्पूर्वमिति। नन्विदं न प्रयोजनम्, बहिरङ्गस्य यणोऽसिद्धत्वादिडागमस्यात्राऽप्रसक्तेः। न च 'नाजानन्तर्ये'इति निषेधः। 'यत्रान्तरङ्गे बहिरङ्गे वाचोरानन्तर्य'मिति हरदत्तादिमते निषेधप्रवृत्तावपि 'उत्तरकार्ये यत्राच आनन्तर्यमाश्रितं तत्र बहिष्ट्वप्रक्लृप्तिर्ने'ति कैयटमते तदभावात्। न चैवमपीपचन्निति प्रयोजनं भवत्येव, इह हि अन्तेरकारस्य चङकारस्य च 'अतो गुणे'इति पररूपे तस्य च परादिवद्भावाज्झिग्रहणेन ग्रहणे सति 'सिजभ्यस्ते'ति जुस् प्राप्नोति, णिलोपस्य एकादेशस्य वा स्थानिवद्भावान्न भवतीति वाच्यम्; वेत्तेर्हि लङ्येवानन्तरो झिः सम्भवतीति तत्साहचर्यादभ्यस्तादपि लङ एव झेर्जुस्विधानात्। न च सिचां साहचर्याल्लुङ एव ग्रहणमस्त्विति शङ्क्यम्, 'विप्रतिषेधे पर'मिति परसाहचर्यस्य बलीयस्त्वात्। न चैवमपि 'अदभ्यस्ता'दित्यादेशस्य निवारणाय पञ्चमीसमासपक्ष आवश्यक इति वाच्यम्, चङकारस्य अन्तेरकारेण च। 'अतो गुणे' इति पररूपे कृते झस्याभावादादेशाप्रसक्तेः। अत्र त्वेकादेशस्य परादिवद्भावाज्झग्रहणेन ग्रहणं न भवति; अल्विधौ अन्तादिवद्भावाऽप्रवृत्तेः। अन्यथा 'अयजे इन्द्र'मित्यादौ सवर्णदीर्घो दुर्वार एव स्यात्। अस्तु वा परादिवद्भावस्तथापि झकारस्य अत्स्यादित्यदादेशे कर्तव्येऽन्तादेशो न स्थानिवत्, अल्विधित्वात्। तस्मात् पञ्चमीसमासपक्षो निरर्थक एवेति चेदत्राहुः-पञ्चमीसमासप्रयोजनतया अपीपचन्नित्युदाहरतो भगवतस्तु नेह साहचर्यं नियामकतया संमतम्। 'द्विस्त्रिश्चतुर्–'इति सूत्रे कृत्वोर्थग्रहणाज्ज्ञापकात्साहचर्यं न सर्वत्राश्रीयते। एवं च भवतेर्यङ्लुकि अभ्यस्ताश्रयस्य जुसः प्रवृत्त्या 'अबोभूवु'रिति रूपं सिध्यति, 'आत'इति नियमस्य सिचः परत्वमाश्रित्य यो जुस्प्राप्तस्तन्मात्रपरतया माधवादिभिर्व्याख्यातत्वात्। अत एव 'अभ्यस्ताश्रयो जुस्, नित्यत्वाद्बुक्, अबोभूवुः', इति मूले यङ्लुङन्तेषूक्तम्। तथा चापीपचन्नित्येतत्सिद्धये पञ्चमीसमासपक्ष आश्रयणीय इति। अन्ये त्वाहुः-पञ्चमीसमासपक्षप्रयोजनतया भाष्ये 'बेभिदिता' 'माथितिकः' इत्यस्याप्युदाहृतत्वान्न तस्य वैयर्थ्यशङ्का कार्या। यद्यपि यङोऽकारलोपस्य स्थानिवद्भावं विनापि 'एकाच उपदेशेऽनुदात्ता'दित्यत्र विहितविशेषणाश्रयणादेव इण्निषेधाप्रवृत्तौ भिदेर्यङन्तात्तृचि 'बेभिदिते'ति रूपं सुसाधम्, तथापि 'माथितिक'इत्यादिसिद्ध्यर्थं स पक्षोऽभ्युपगन्तव्यः। न च मथितं पण्यमस्य

**परनिमित्त इत्यादि**। अच एवादेश इत्यर्थः। तेन मरुतमाच्न्टे मारयतीत्यादौ वृद्धिः। अत्र सूत्रे

—पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये । इति स्थानिवद्भावे प्राप्ते ॥

माथितिक इत्यत्रापि 'तदस्य पण्यम्' मिति ठकि इकादेशे च कृते 'यस्येति चे' इति लोपात् 'इसुसुक्तान्तात्–' इति इकः स्थाने प्रसज्यमानो यः कादेशः सोऽप्यल्लोपस्य स्थानिवद्भावं विनैव सुपरिहरः, 'ठस्येकः' इत्यत्र 'स्थान्यादेशयोरकार उच्चारणार्थः' इत्यभ्युपगमे अल्विधित्वेन स्थानिवद्भावाऽप्रवृत्त्या ठस्थानिक इकादेशष्ठो न भवतीति कादेशाऽप्रसक्तेर्माथितिक इति रूपसिद्धौ किमनेन पञ्चमीसमासपक्षाश्रयणेनेति वाच्यम्, मथितयतेः क्विपि टिलोपणिलोपयोर्वेरपृक्तलोपे च–मथित्, तेन चरति माथितिक इत्यत्र 'चरति' इति ठकि तस्येकादेशसिद्धये तत्पक्षस्यावश्यकत्वात् । न ह्यत्र स्थानिवद्भावं विनापि इकादेशापवादः कादेशः सुपरिहरः, नाप्येतादृशकल्पनायां मानाभावः शङ्क्यः, 'माथितिक' इति भाष्योदाहरणस्यैव मानत्वादिति ॥

स्यादेतत्,–पूर्वत्वस्य सावधित्वेन संनिहितस्यैवावधित्वमुचितं, संनिहितं चेह त्रयं,—स्थानी आदेशो निमित्तं च, तत्र तावत्स्थानी नाऽवधिः । तस्यादेशेनापहारात् । नाप्यादेशनिमित्ते । 'वैयाकरण' इत्यत्रैकारस्यायादेशापत्तेरित्याशङ्क्याह–**अचः पूर्वत्वेन दृष्टस्येति** । पूर्वत्वमुपलक्षणं न तु विशेषणमिति भावः ॥

प्रयोगे योऽच्स्थानिक इत्यर्थः । न तु सूत्रे स्थानित्वेनोपात्ताच्स्थानिक इत्यर्थः। तेन णिलोपादेरनेन स्थानिवत्त्वं सिद्ध्यति । अत एव चङ्परनिर्ह्रासे ण्यन्ताण्णिचि–'अवीवद'दित्यादिसिद्ध्यर्थो निषेधः सार्थकः। अच इति किम् ? आगत्य । मलोपस्य स्थानिवत्त्वात् 'ह्रस्वस्ये'ति तुक् स्यात् । परस्मिन्निति किम् ?; युवजानिः । निङः स्थानिवत्त्वेन यलोपो न स्यादिति । पूर्वविधाविति किम् ?, नैधेयः । निपूर्वाद्धाञः कि प्रत्यये आतो लोपे तस्य स्थानिवद्भावाद्यच्त्वम्भपदेऽनिरोधात्स्वाश्रयद्व्यच्त्वनिवृत्तौ ढगनापत्तेरिति दिक् ।

अत्र स्थानिनि सति यद्भवति तदादेशेऽपि भवति, स्थानिनि यन्न भवति तदादेशेऽपि नेति भावाऽभावयोरुभयोरप्यतिदेशः । तत्र भावोदाहरणं–निगाल्यते । अन्त्योदाहरणं–पटयतीत्यादि । स्थानिनिमित्तकं भवत्यादेशनिमित्तकं नेति च तदर्थः । लघूपधत्वसम्पादनद्वारा लोपनिमित्तिका वृद्धिरित्याहुः।

**स्थानिभूतादच इति** । सूत्रे श्रवणाद्व्याख्यानाच्च तस्यैव पूर्वत्वेऽवधित्वमिति भावः । **'पूर्वविधा'**वित्यस्य–पूर्वसम्बन्धिन्येव शास्त्रविधेये कर्तव्ये इत्यर्थः, तेन पूर्वपरयोर्विधौ न । तेनाऽऽरतुरित्यादौ 'ऋच्छत्यृता'मिति गुणस्य सवर्णदीर्घे न स्थानिवत्त्वम् । वस्तुतोऽत्र पूर्वविधिशब्दे तन्त्रम् । एकस्योक्तोऽर्थः । द्वितीये भावे किः । सम्बन्धसामान्यषष्ठ्यन्तपूर्वशब्देन समासः । विधिर्भावः, पूर्वसम्बन्धिभावे–तत्स्थितौ स्थानिवदित्यर्थः । अत एवैनेय इत्यादौ 'यस्येति चे'ति लोपे तस्य स्थानिवत्त्वासन्नियोगशिष्टन्यायप्राप्तनिवृत्तिप्रतिबन्धेन नकारस्थितिः । अत एव **नपदान्त**सूत्रे पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्र इति 'लुकि न स्थानिव'दित्यस्योदाहरणं दत्तं भाष्ये । अन्यथा तत्र पूर्वत्वेन दृष्टस्य सम्बन्धिनः कस्य चिद्विधेयस्याभावात्स्, निवत्त्वाऽप्राप्तिरेवेति तदसङ्गतिः स्पष्टैव । ...सूत्रेऽपि भाष्ये

**न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णाऽनुस्वारदीर्घजश्चर्विधिषु।१।१।५८।**

**न पदान्त।** अत्र पदान्तादीनां चरन्तानां द्वन्द्वः, ततो 'विधि'शब्देन कर्मषष्ठ्यन्तस्य समासः। विधिशब्दश्च भावसाधनो–विधानं विधिरिति। स च द्वन्द्वान्ते श्रूयमाणत्वात्प्रत्येकं संबध्यते। **पदस्य चरमावयव इति।** वृक्षं वेतीति वृक्षवीः, वृक्षं वातीति वृक्षवाः। तमाचष्टे वृक्षवयति। ततो विच्। वृक्षव्। इह 'लोपो व्योर्वली'ति वलोपो न, टिलोपस्य णिलोपस्य वा स्थानिवत्त्वात्। न च 'सुबन्ताण्णि'जिति हरदत्तादिमते अन्तर्वर्तिसुपा पदत्वात् 'न पदान्ते'ति निषेधः शङ्क्यः, विधेयस्य लोपस्य पदानवयवत्वात्। 'पदान्तस्य स्थाने विधौ ने'ति व्याख्याने तु 'न पदान्ते'ति स्थानिवत्त्वनिषेधाद्वलोपः स्यादेवेत्यादि मनोरमायां स्थितम्।

**द्विर्वचनादौ चेति।** यलोपादय आदिशब्दार्थः। 'वरे'इति तु वरे योऽजादेशः स न स्थानिवदिति व्याख्येयम्। सहविवक्षाभावेऽपि निपातनाद्द्वन्द्वः सप्तम्यलुक्च।

अथोदाहरणानि–**पदान्ते**–कानि सन्ति, कौ स्तः। इह यणावादेशयोः कर्तव्ययोः श्नसोरल्लोपो न स्थानिवत्। न चेकारौकारयोः स्थानिभूतादचः पूर्वत्वविरहादेवाल्लोपो न स्थानिवदिति वाच्यम्, 'वाक्यादपोद्धृत्य पदानि संस्क्रियन्ते' इति पक्षे स्थानिभूतादचः पूर्वत्वस्य सत्त्वात्। यद्वा गोऽचः गोचेत्यादावोकारस्याऽवङि कर्तव्ये 'अचः' इत्यल्लोपो न स्थानिवदिति उदाहार्यम्। अत्र हि लोपस्थान्यकारात्पूर्वत्वेन दृष्टत्वादोकारस्य। **द्विर्वचने**–सुद्ध्युपास्यः। 'नाजानन्तर्ये' इति निषेधाद्बहिरङ्गपरिभाषात्र न प्रवर्तते, स्थानिवद्भावनिषेधसामर्थ्याच्च। एवं क्वचिदन्यत्राप्यूह्यम्। **वरे**–यायावरः। यातेर्यङन्ताद्यश्च यङ इति वरच्। 'अतो लोपः'। स च 'आतो लोप इटि चे'त्यालोपे कर्तव्ये न स्थानिवत्॥ **यलोपे**–यातिः। यातेर्यङन्तात् क्तिच्। अतो लोपः। यलोपः। अल्लोपस्य स्थानिवत्त्वादातो लोपः। यलोपः। न पुनराल्लोपः शङ्क्यः। चिणो लुङ्न्यायेन आलोपस्यासिद्धत्वात्स्थानिवद्भावाच्च। ननु यदि यलोपविधिं प्रति स्थानिवत्त्वनिषेध-

---

'कर्मसाधनस्य विधिशब्दस्योपादाने न सर्वमिष्टं सङ्गृहीतमिति भावसाधनो विज्ञास्यते, पूर्वस्थ–**विधानं प्रति**–पूर्वस्य भावं प्रति–**स्थानिव**'दित्युक्तम्। तत्र **'भावसाधन'** इत्यस्य–सोऽपीत्यर्थः। पूर्वत्वञ्च–व्यवहिताऽव्यवहितसाधारणम्, अव्यवहितग्रहणे मानाभावात्, स्वरे निषेधाच्च। तेन 'पटयती'ति सिद्धम्। प्रकृते च द्वित्वनिषेधे स्थानिवत्त्वप्राप्तिः॥

**न पदान्त।** अत्र द्विर्वचनसवर्णादिग्रहणं–'वतिघटितान्यातिदेशानां त्रिपाद्यामपि प्रवृत्तिबोधनार्थम्। तेन 'राम' इत्यादौ विसर्गादिसिद्धिः। अत्र–'विधि'शब्दो भावसाधनः। पदान्तेत्यत्रान्तशब्दश्चरमावयववाची। कर्मषष्ठ्या समासः। तेन 'एषो यन्हसे'त्यादा'वेतत्तदो'रिति सुलोपो न।

पदस्य चरमावयवे द्विर्वचनादौ च कर्तव्ये परनिमित्तोऽजादेशो न स्थानिवत्। इति स्थानिवद्भावनिषेधः ॥

---

स्तर्हि कथं–वाय्वोरिति ?। उच्यते–'असिद्धं बहिरङ्ग' मिति यणोऽसिद्धत्वान्न यलोपः। न च 'नाजानन्तर्ये' इति निषेधः, अन्तरङ्गकार्ये अच आनन्तर्यं यत्र तत्रैव तदभ्युपगमात्। किं चात्र 'स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिव'दिति वार्तिकमस्ति। तेनाऽन्यः स्थानिवदेव भवतीति न दोषः। **स्वरे**–चिकीर्षकः। ईकारस्य 'लिती'त्युदात्तत्वे कर्तव्ये सनोऽतो लोपो न स्थानिवत्। न च 'लितीत्यारम्भसामर्थ्यं, 'कारक' इत्यादौ सावकाशत्वात्। **सवर्णानुस्वारयोः**–शिण्ढि। श्नसोरल्लोपो न स्थानिवत्। यद्यप्यनुस्वारो न स्थानिभूतादचः पूर्व इति तस्य परसवर्णे कर्तव्येऽल्लोपस्य स्थानिवत्त्वप्रसङ्ग एव नास्ति, तथापि स्थानिद्वारानुस्वारोऽपि दृष्ट इत्यस्त्येव तत्प्रसङ्ग इत्याहुः। ननु सवर्णग्रहणमात्रेणानुस्वारोऽप्याक्षेप्तुं शक्यत इति किमनेन पृथगनुस्वारग्रहणेन ?। सत्यम्। पृथग्ग्रहणाभावे यत्र परसवर्णस्तत्रैवेति संभाव्येत। तथा च यत्र परसवर्णप्रसङ्गः 'शिंषन्ती'त्यादौ तत्र स्थानिवद्भावं निषेद्धुमनुस्वारग्रहणम्। एवं यत्र वरे अजादेशस्य प्रसङ्गो नास्ति यातिरित्यादौ तत्र यलोपे स्थानिवद्भावं निषेद्धुं वरेग्रहणात्पृथग्यलोपग्रहणं कृतमिति ज्ञेयम्। **दीर्घे**–प्रतिदीव्ना, प्रतिदीव्ने। 'हलि चे'ति दीर्घे कर्तव्येऽल्लोपो न स्थानिवत्। यणादेशस्तु स्थानिवद्भवत्येव। 'लोपाजादेश एव न

---

इणः शतरि 'य'न्निति रूपम्। तत्र यणः स्थानिवत्त्वात्। उत्वे च न स्थानिवत्, अनेन निषेधात्। स्पष्टश्चेदं भाष्ये इति–भाष्यप्रदीपोद्द्योते निरूपितम्। अत्र 'पदेऽन्त' इति सप्तमीसमासो भाष्ये उक्तस्तेन प्रत्यासत्त्या पदे परतः चरमावयवे कार्ये कर्तव्ये परपदस्थाजादेशस्यैवानेन स्थानिवत्त्वनिषेध इति 'वेतस्वा'-नित्यादौ न दोषः। न चैवमपि 'पूर्वत्रासिद्धीये न स्थानिव'दिति निषेधोऽत्र दुर्वारः। 'पदेऽन्त' इत्यर्थेन तत्र स्थानिवत्त्वनिषेधव्यावृत्तिपरभाष्यप्रामाण्येन पूर्वत्रासिद्धे इत्यत्र पदचरमावयवविधायकातिरिक्तस्यैव त्रैपादिकस्य ग्रहणात्। अत एव 'महिष्मा'-नित्यत्र जश्त्वं न। सूत्रे जश्पदेन 'झलां जश् झशी'त्यस्यैव ग्रहणं, चर्संन्निहितस्यैव ग्रहणौचित्यात्। 'कार्यकालपक्षेऽपि त्रिपाद्यामन्तरङ्गपरिभाषा न प्रवर्तते' इति वक्ष्यते इति–न तयाऽस्य सिद्धिः। 'गोऽचे'त्यादौ 'गतिकारकोपपदाना'मित्यस्यानित्यत्वेन सुबुत्पत्त्यनन्तरमेव समासः। 'उत्तरपदत्वे चे' ति प्रत्ययलक्षणप्रतिषेधश्च प्रत्यासत्त्योत्तरपदस्य कार्यित्वे एवेति न दोषः। 'पदे' इति पदत्वयोग्योपलक्षणं वा। अत्रेदं भाष्यमपि मानम्। अत्र पदचरमावयवादि-साधकः प्रतिबन्धकश्च स्थानिवद्भावो निषिद्ध्यते, विनिगमनाविरहात्। एतत्सूत्रभाष्य–कर्मणिङि-त्यादिसूत्रभाष्यैः 'पूर्वत्रासिद्धे न स्थानिव'दित्यवष्टभ्य वरे-यलोप-स्वर-दीर्घग्रहणवर्जं द्विर्वचनादि प्रत्याख्यातमिति लभ्यते। **निदेशं इति**। द्विर्वचनग्रहणात्पूर्वत्रासिद्धे इति निषेधो भावः ॥

**झलां जश्झशि** ।८।४।५३। स्पष्टम् । [ झलां स्थाने जशादेशः स्याज्झशि परतः ]। इति धकारस्य दकारः ॥

**अदर्शनं लोपः** ।१।१।६०। प्रसक्तस्याऽदर्शनं लोपसंज्ञं स्यात् ॥

स्थानिव' दित्युक्तत्वात् । तेन 'हलि च' 'उपधायां चे'ति दीर्घप्रवृत्त्या किर्योः गिर्योः विव्यतुरित्यादि सिद्धम् । **जशि**-सग्धिश्च मे । अदनं ग्धिः । तत्र अदेः क्तिनि 'वहुलं छन्दसि' इति घस्लादेशः, 'घसिभसोर्हलि चे'त्युपधालोपः । 'झलो झलि' इति सलोपः । 'झषस्तथोः' इति धत्वम्, धस्य 'झलां जश्झशी'ति जश्त्वे कर्तव्ये उपधालोपो न स्थानिवत् । 'समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु' इति सः । समाना ग्धिः-सग्धिः । न चात्र सलोपे धत्वे च कर्तव्ये पूर्वस्मादपीति स्थानिवद्भावात्सग्धिरिति रूपं न स्यादिति शङ्क्यम्; पञ्चमीसमासपंक्षस्याऽनित्यत्वात् । तत्र 'निष्ठायां सेटी'ति लिङ्गात् । तथाहि-तत्र 'सेटी'ति पदं न तावदनिड्व्यावृत्त्यर्थम्, णिजन्तात्तदसंभवात् । ननु 'संज्ञपितः पशु'रित्यत्र 'यस्य विभाषे'ति इण्निषेधे संभवत्येवानिट्त्वं, 'सनीवन्ते'ति विकल्पितेट्त्वादिति चेन्न; 'यस्य विभाषे' त्यत्र 'एकाचः' इत्यनुवृत्तेः । अन्यथा 'दरिद्रित' इति इण्न स्यात्, तत्र 'तनिपतिदरिद्रातिभ्यः' इति वार्तिकेन सनो विकल्पितेट्त्वात् । तस्मात्कालावधारणार्थं सेड्ग्रहणम् । इटि कृते णिलोपो न तु ततः प्रागिति । अन्यथा 'कारित'मित्यादौ णिलोपे कृते 'एकाच उपदेशे'इति इण्निषेधः स्यादिति । यदि तु पूर्वस्माद्विधौ स्थानिवत्त्वं तर्हि णिचा व्यवधानान्निषेधप्राप्तिरेव नास्तीति 'सेटी'त्यनर्थकं सत्तस्याऽनित्यतां ज्ञापयतीति स्थितम् । ननु जश्त्वविधौ यदि स्थानिवत्त्वनिषेधस्तर्हि 'पटयती'त्यत्रान्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वाज्जश्त्वं स्यात् । मैवम् । 'इष्ठव'दित्यतिदिष्टया भसंज्ञया पदसंज्ञाया बाधाज्जश्त्वाऽप्रवृत्तेः । **चरि**-जक्षतुः, जक्षुः । घसेर्लिटि अतुस् उस् च । 'गमहने'त्युपधालोपः । 'खरि चे'ति चर्त्वं प्रति न स्थानिवत् । भाष्ये तु 'पूर्वत्रासिद्धे न स्थानिव'दित्यवष्टभ्य द्विर्वचनसवर्णानुस्वारदीर्घजश्चरः प्रत्याख्याताः । तद्रीत्या तु सलोपे धत्वे च कर्तव्ये स्थानिवद्भावशङ्कैव नास्तीति बोध्यम् ॥

**अदर्शनं लोपः** । अत्र दृशिर्ज्ञानसामान्यवचनः । दर्शनं ज्ञानम् । तदिह शब्दानुशासनप्रस्तावाच्छब्दविषयकं सच्छ्रवणं संपद्यते । तच्च श्रोतृव्यापारः, तन्निषेधो-

**दकार इति**। स्थानत आन्तर्यादिति भावः ॥

**अदर्शनम्**। 'स्थाने' इति वर्त्तते, प्रसङ्गे सतीति तदर्थस्तदाह-**प्रसक्तस्येति**। शास्त्रतोऽर्थतो

**संयोगान्तस्य लोपः** ।८।२।२३। संयोगान्तं यत्पदं तदन्तस्य लोपः स्यात् । इति यलोपे प्राप्ते–॥ ❀ **यणः प्रतिषेधो वाच्यः** ॥ ❀ **यणो मयो द्वे वाच्ये** ॥ 'मय' इति पञ्चमी 'यण' इति षष्ठीति पक्षे यकारस्यापि द्वित्वम् । तदिह धकार-

---

ऽश्रवणम् । नन्वेवं 'लोपो व्योर्वली'त्यादौ वकारयकारौ न श्रोतव्याविति श्रोतृव्यापार एव निरुध्येत । प्रयोक्तृव्यापार उच्चारणमनिषिद्धं स्यात् । अत्राहुः–असति च श्रवणे उच्चारणमनर्थकमेवेति सामर्थ्याच्छ्रवणनिषेधे तद्धेतुभूतमुच्चारणमपि निषिद्धं भवतीति ।

**प्रसक्तस्येति**। इह 'स्थाने' इत्यनुवर्तनादेतल्लभ्यते । प्रसक्तस्येति किम् ? दधि मध्वित्यादौ तुगागमो मा भूत् । अस्ति हि तत्र क्विपोऽदर्शनम्, तच्च लोप इति प्रसक्तविशेषणाभावे प्रत्ययलक्षणेन तुक् स्यादेवेति दिक् ॥

**संयोगान्तस्य । तदन्तस्येति** । अलोऽन्त्यस्ये'ति परिभाषयेति भावः । यद्यपि विशेषणेन तदन्तविधिलाभात्संयोगस्येत्येव सूत्रयितुमुचितं तथापि 'प्रत्येकं संयोगसंज्ञे'ति पक्षे 'दृषत्करोती'त्यादौ लोपं वारयितुं संयोगावन्तौ यस्येति द्विवचनान्तेन समासलाभार्थमन्तग्रहणमिति मनोरमायां स्थितम् । 'संयोग' इति महासंज्ञाकरणसामर्थ्यादेकस्य संयोगसंज्ञा न भविष्यतीति अन्तग्रहणमिह त्यक्तुं शक्यम् ॥

**यणः प्रतिषेध इति** । वाचनिकमिदम् । यद्वा वाच्यो व्याख्येयः । व्याख्या च द्वेधा; 'झलो झली'त्यतो झल्ग्रहणमपकृष्य झल एव लोपो विधीयत इति, अन्तरङ्गे लोपे कर्तव्ये बहिरङ्गस्य यणोऽसिद्धत्वमिति वा । न च षाष्ठी परिभाषा त्रैपादिकमन्तरङ्गलोपं न पश्यतीति वाच्यम्, कार्यकालपक्षाभ्युपगमात् । न च 'नाजानन्तर्ये' इति निषेधः । उत्तरकालप्रवृत्ते लोपेऽजानन्तर्याभावात् । तदुक्तम्–'संयोगान्तलोपे यणः

---

चेति भावः । अत्र दृशिर्ज्ञानसामान्ये । तत्र ज्ञानस्यावर्जनीयत्वेन तत्सामग्र्यन्तर्गता उच्चारणकृता सत्ता निषिद्ध्यते । तत्र प्रत्ययलोपे शास्त्रतोऽर्थतश्च प्रसक्तोच्चारणस्य लोपविधानेन तस्य तस्मिन्विषयेऽनुत्पत्तेरेवान्वाख्यानं प्रत्ययलक्षणार्थमिति बोद्धव्यम्, अर्थस्यैषा सञ्ज्ञा–व्याख्यानात् । यत्तु–"प्रसक्तस्येति किं?, ग्रामे तिष्ठतीत्यादौ 'ल्यब्लोपे' इति पञ्चम्यापत्तेः । अस्ति चात्र ल्यपोऽदर्शनम् । शास्त्रतोऽर्थतश्च न तत्प्रसक्तिरिति न दोष" इति, तन्न; तेन प्रत्यासत्त्या ल्यबन्तार्थकर्माधिकरणयोरेव पञ्चमीविधानेन तस्यात्राऽप्राप्तेः । तत्त्वे तु अस्त्येवार्थतो ल्यबन्तस्य प्रसक्तिः । तस्मात्रपु इत्यत्र क्विपोऽदर्शनसत्त्वेन प्रत्ययलक्षणेन तुगापत्तिर्दोषः । कृत्प्रत्ययेन प्रकृत्याक्षेपस्तु न, तत्रैव प्रकृतिं विनाऽतिदेशतः प्रत्ययज्ञानसत्त्वेन व्यभिचारात्तदाक्षेपाऽसम्भवात् । **इति पक्षे इति** । विनिगमनविरहादिति भावः । द्वित्वस्य त्रैपादिकत्वात्तत्र न यणो बहिरङ्गासिद्धत्वम् । अत एव दद्ध्यत्रेति भाष्ये प्रयुक्तम् । धकार-

यकारयोर्द्वित्वविकल्पाच्चत्वारि रूपाणि ॥ एकधमेकयम् । द्विधं द्वियम् । द्विधमेक-

प्रतिषेधः' । 'न वा झलो लोपात्' 'बहिरङ्गलक्षणत्वाद्वे'ति । चत्वारि रूपाणीति । इह धकारस्य द्वित्वे जश्त्वे च कृते 'पूर्वत्रासिद्धीयमद्वित्वे' इति जशोऽसिद्धत्वाभावेन लक्ष्यभेदात्पुनर्दकारे द्वित्वप्रवृत्तौ रूपाधिक्यमस्ति । अत्र केचिदाहुः-'उकारात्परस्य यरो द्वित्वे कृते पुनरुकारात्परस्य यरो द्वित्वं न भवति' निमित्तभेदाभावादित्याशयेनेद-मुक्तमिति । तेषां मते तु तुदादिगणे 'वव्रश्चेत्यत्र उरदत्त्वस्य, अचः परस्मिन्निति स्थानिवद्भावान्न संप्रसारणे इति वस्योत्वं ने'ति समाधानग्रन्थो मूलस्थो विरुध्येत, तन्निमित्तस्य लिटो भेदाभावादिति दिक्। अन्ये तु धकारस्य जश्त्वे कृते 'पूर्वत्रासिद्धीय-मद्वित्वे' इति जशोऽसिद्धत्वाभावाद्दकारे पुनर्द्वित्वं भवत्येव, व्यक्तिभेदात्। अत एव सय्यँन्तेत्यादौ परसवर्णद्वित्वं भाष्यकृता उदाहृतम् । 'षट्सन्त' इत्यत्र सकारद्वित्व-सिद्धये 'पूर्वत्रासिद्धीयमद्वित्वे' इति मनोरमायामप्युक्तम्। एवं यकारेऽपि द्वित्वस्य पुनः प्रवृत्तौ क्षत्यभावः । आष्टमिकद्विर्वचनस्य स्थाने द्विर्वचनरूपत्वात्स्थान्यादेशव्यक्त्योश्च भेदात् । यत्तूक्तं मनोरमायाम्-'एकस्यां व्यक्तौ एकं लक्षणं सकृदेव प्रवर्तते' इति 'एकः पूर्वपरयोः' इति सूत्रेभाष्ये सिद्धान्तितत्वात्कथं पुनर्द्वित्वप्रवृत्तिः, अन्यथा द्वित्वानन्त्यापत्ते'रित्यादि । तदनवधाननिबन्धनम् , तत्राधानादिशास्त्रदृष्टान्तेन क्वचिदेवैकस्मिन्प्रयोगे गुणादिशास्त्रस्यानुष्ठापकत्वं स्यान्न प्रयोगान्तर इत्याशङ्क्य ज्योतिष्टोमादिशास्त्रदृष्टान्तेन प्रयोगान्तरेऽपि गुणादिशास्त्रप्रवृत्तेरेव सिद्धान्तितत्वात् , न तु सकृच्छास्त्रप्रवृत्तेः । आनन्त्यापत्तिरपि प्रकृते न दोषः । सा हि अनन्तकार्य-सहितप्रयोगस्याशक्यत्वात्तच्छास्त्रकर्तव्यस्य परिनिष्ठितप्रयोगस्याऽभावात्तच्छास्त्रस्यान-नुष्ठापकत्वापत्त्या दोषः । प्रकृते तु नास्ति, द्वित्वस्य वैकल्पिकत्वेन यावच्छक्ति द्वित्वप्रयोगसहितस्य परिनिष्ठितत्वेन तेनैव शास्त्रस्य कृतार्थत्वात् । 'लिटि धातो'रिति द्वित्वस्य तु नित्यत्वादानन्त्यापत्तेः क्वचिद्विश्रान्तौ कल्पनीयायां लाघवा-त्प्रथमप्रवृत्तावेव विश्रान्तिकल्पनादनभ्यासग्रहणं प्रत्याख्यातम् । अत एव 'सर्वस्य द्वे' इत्यस्यापि न पुनः पुनः प्रवृत्तिरित्याहुः । नन्वत्र 'इकोऽसवर्णे' इति शाकल्यमतेन रूपा-न्तरमस्त्विति चेन्मैवम्; समासे तन्निषेधात। न च नित्यसमास एव तन्निषेध इति

यकारयोरिति । तेन विसर्गादिद्वित्वेनाधिक्येऽपि न क्षतिः । द्विधमिति । द्विधत्वं प्रक्रियायां बोद्धव्यम् । 'एकस्या आकृतेश्चरितः प्रयोगो न द्वितीयस्यास्तृतीयस्याश्च भविष्यती'ति 'कृञ्चानुप्रयुज्यते' इति सूत्रभाष्योक्तन्यायेनैकस्य द्वित्वे परस्य तदभावोऽनुचित इति न वाच्यम्; सार्थकानेकविषये

यम् । एकधं द्धियम् । सुध्युपास्यः । [सुद्ध्युपास्यः । सुद्ध्यय्युपास्यः । सुध्य्युपास्यः ।] मध्वरिः । धात्रंशः । लाकृतिः ॥

**नादिन्याक्रोशे पुत्रस्य** ।८।४।४८। पुत्रशब्दस्य न द्वे स्त आदिनीशब्दे परे आक्रोशे गम्यमाने । पुत्रादिनी त्वमसि पापे । आक्रोशे किम् ? । तत्त्वकथने द्विर्वचनं भवत्येव । पुत्त्रादिनी सर्पिणी ॥ ❀ **तत्परे च** ॥ पुत्रपुत्रादिनी त्वमसि पापे ! ॥ ❀ **वा हतजग्धयोः** ॥ पुत्रहती । पुत्त्रहती । पुत्रजग्धी । पुत्त्रजग्धी ॥

---

वाच्यम् ; 'सिन्नित्यसमासयोः शाकलप्रतिषेधः' इति वार्तिकस्थनित्यग्रहणस्य भाष्ये प्रत्याख्यातत्वात् । मनोरमायां तु जश्त्वेन दकारे कृते तस्य द्वित्वं नेत्याद्याशयेन सकार-द्वित्वेनाष्टौ, विसर्गाद्वित्वेन षोडशेत्युक्तम् । **द्धिधमिति** । यद्यपि धस्य जश्त्वेन दकारे धद्वयं नास्ति, तथापि भूतपूर्वगतिमाश्रित्यैवमुक्तम् ॥

**सुध्युपास्य इति** । 'कर्तृकरणे कृता बहुल'मिति तृतीयासमासः । नन्विह यणेव दुर्लभः, 'सुधी'शब्दस्य ध्यायतेः संप्रसारणेन निष्पन्नत्वेन 'संप्रसारणाच्चे'ति पूर्वरूपापत्तेरिति चेन्मैवम् ; 'संप्रसारणपूर्वत्वे समानाङ्गग्रहण'मिति वार्तिकोक्तेः । न चैवमपि 'न भूसुधियो'रिति यण्निषेधः शङ्क्यः; आङ्गत्वेन प्रत्यये परत एव तन्निषेध-प्रवृत्तेः । 'सुपी'त्यनुवर्त्य सुपि परत एव यण्निषेधाच्च । **धात्रंश इति** । अत्र रेफस्य द्वित्वं न, द्वित्वप्रकरणे 'रहाभ्या'मिति साक्षाच्छ्रुतेन निमित्तभावेन रेफस्य कार्यित्व-बाधनात् । 'सुध्युपास्य' इत्यादौ तु स्थानित्वेन निमित्तत्वमिको न बाध्यते, 'तस्मादि-त्युत्तरस्य' 'वाग्घृतुपित्त्रुषसः' इत्यादिनिर्देशाज्ज्ञापकात् । तकारस्य तु द्वित्वं भवत्येव । तच्च 'वे'त्यतो रूपद्वयम् ॥

**नादिन्या** । स्त्रीष्वाक्रोशः प्रायेण प्रवर्तत इति स्त्रीलिङ्गमुदाहरति—**पुत्रादिनीति** । इह 'सुप्यजातौ—' इति णिनिः । **तत्परे चेति** । आदिनि यः पुत्रशब्दस्तस्मिन्

---

तन्न्यायाङ्गीकारात् । यत्रान्याकृतिकरणे भिन्नार्थत्वसम्भावना तद्विषयत्वाच्च । 'हलो यमा'मिति लोपे द्वित्वाभावे चैकधमेव रूपम् ॥

**नादिन्या** । 'यरोऽनुनासिके' इत्यतो 'यर' इति वर्त्तते । 'पुत्रशब्दस्ये'त्यवयवषष्ठी । 'आदिनी-शब्दे परे' इति च प्राधान्याद्यर एव विशेषणम् । सूत्रे 'आदिनी'ति ङ्यन्तानुकरणं लुप्तसप्तमीकम् । अत एव 'तत्परे चे'त्यस्या'ऽऽदिनीशब्दो यस्मात्परस्तत्र परे' इत्यर्थं **हरदत्तो** व्याख्यत् । अद्यातो **ग्रन्थो**ऽप्येवमेव । ईदृशाक्रोशस्य स्त्रीष्वेव दर्शनाच्च । आक्रोशो निन्दा, तदाह— **पुत्रादिनीति** । तादृशाक्रोशस्य स्त्रीष्वेव दर्शनादाह— **पुत्रहतीति** । 'अनचि चे'ति सिद्धे—'पुत्रस्य क्तान्ते चेद्धत-

**त्रिप्रभृतिषु शाकटायनस्य** ।८।४।५०। त्र्यादिषु वर्णेषु संयुक्तेषु वा द्वित्वम् । इन्न्द्रः । इन्द्रः । राष्ट्रम् । राष्ट्रम् ॥

**सर्वत्र शाकल्यस्य** ।८।४।५१। द्वित्वं न । अर्कः । ब्रह्मा ॥

**दीर्घादाचार्याणाम्** ।८।४।५२। द्वित्वं न । दात्रम् । पात्रम् ॥

**अचो रहाभ्यां द्वे** ।८।४।४६। अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः । हर्य्यनुभवः । हर्यनुभवः । नह्य्यस्ति । नह्यस्ति ।

**हलो यमां यमि लोपः** ।८।४।६४। हलः परस्य यमो लोपः स्याद्वा यमि ।

---

परेऽपि पुत्रशब्दस्य न द्वे स्त इत्यर्थः। **वा हतेति** । द्वित्वस्य वैकल्पिकत्वे वार्तिकमिदं नारम्भणीयमित्येके । अन्ये तु—हतजग्धयोः परतः पुत्रशब्दस्यैव 'अनचि चे'ति द्वित्वं नान्येषामित्यादि नियमसंभवात्तदर्थमारम्भणीयमेवेदमित्याहुः । **पुत्रहतीति** । पुत्रो हतो यया सा । 'अस्वाङ्गपूर्वपदाद्वे'ति ङीष् । एवं पुत्रो जग्धो यया सा पुत्रजग्धी ॥

**अचो रहाभ्याम्** । अचः किम् ? । 'ह्नुते'इत्यादौ नकारस्य माभूत् ॥

**हलो यमां यमि** । हलः किम् ? । न्याय्यम् । इह यकारादीनां यकारादौ परे यथासम्भवमुदाहरणान्युच्यन्ते । सुध्युपास्यः, मध्वरिः । अत्र 'यणो मय'इति मयः परस्य यस्य वस्य च द्वित्वे कृते अनेन लोपः । दुर्लभः । दुर्न्नुड्वे । कुर्मः । अत्र तु 'अचो रहाभ्या'मिति लस्य नस्य मस्य च द्वित्वे कृते लोपः । प्रत्यङ्ङात्मा । सुगण्णीशः । सन्नच्युतः । अत्र 'अनचि चे'ति ङमो द्वित्वे सत्यनेन ङकारणकारनकाराणां लोपः ॥

**लोपः स्याद्वेति** । 'झयो हः' इति सूत्रादन्यतरस्यामित्यनुवर्तत इति भावः । **लोपारम्भफलं त्विति** । **आदित्यो देवतेति** । आदित्यशब्दात् 'दित्यदित्ये'ति

---

जग्धयोरेव, आक्रोशे एवे'ति नियमार्थमिदम् ॥ **संयुक्तेष्विति** । 'त्रिप्रभृति'ष्विति सूत्रे वर्णानां सजातीयानामेव ग्रहणं, परस्परसाहचर्यात् । न च तथाऽचः सम्भवन्ति । अत एव'अचो रहाभ्या'मिति सार्थकम् । निर्धारणे सप्तमी, 'अच' इत्यनुवर्त्तते, 'त्रिप्रभृतिसंयुक्तवर्णमध्येऽचः परस्य यरो द्वे न स्त' इत्यर्थः । तेनेन्द्रः राष्ट्रमित्यत्र नकारपकारयोः प्राप्तद्वित्वस्यैव निषेधविकल्पः । 'अनचिच' 'सर्वत्र शाकल्यस्ये'त्येव सिद्धे इदं सूत्रद्वयं विकल्पस्य मतभेदप्राप्तव्यवस्थाबोधनार्थमिति बोद्धव्यम् । 'यरोऽनुनासिके' इत्यतो 'वे'त्यनुवृत्त्या'ऽनची'त्येव सिद्धे तु सूत्रत्रयमपि तथेति बोद्धव्यम् ॥

**अचो र** । 'अच'इति श्रुतत्वाद्व्याख्यानाच रहाभ्यां सम्बध्यते । 'तस्मादित्युत्तरस्ये'त्येतदभ्युपेत्याह—**अचः पराभ्यामिति** । **वा यमीति** । 'झयो ह' इत्यतो'ऽन्यतरस्या'मित्यनुवृत्तेरिति भावः । 'दीर्घादाचार्याणा'मित्युत्तरम्—'अनुस्वारस्य ययि' 'वा पदान्तस्य' 'तोर्लि' 'उदःस्था' 'झयो हो'

इति लोपपक्षे द्वित्वाभावपक्षे चैकयं रूपं तुल्यम् । लोपारम्भफलं तु आदित्यो देवताऽस्येत्यादित्यं हविरित्यादौ ॥ 'यमां यमी'ति यथासङ्ख्यविज्ञानान्नेह । माहात्म्यम् ॥

**एचोऽयवायावः** ।६।१।७८। एचः क्रमादय् अव् आय् आव् एते स्युरचि ॥

**तस्य लोपः** ।१।३।९। तस्येतो लोपः स्यात् । इति यवयोर्लोपो न, उच्चारणसामर्थ्यात् । एवं चेत्संज्ञापीह न भवति । हरये । विष्णवे । नायकः । पावकः ॥

---

ण्यप्रत्यये 'यस्येति च'त्यकारलोपेऽनेन च यलोपे आदित्यमित्येकयकारकं रूपं सिध्यति नान्यथेति भावः। नच 'आपत्यस्य च तद्धितेऽनाती'त्यनेन यलोपे कृते एक यकारकं रूपं सिध्यतीति वाच्यम्; अदितौ जात आदित्य इत्यादिविवक्षायां तस्याऽप्रवृत्तेः ।

**यथासङ्ख्यविज्ञानादिति** । उक्तोदाहरणेषु लोपारम्भफलाभावाद्रेफस्य रेफे परत उदाहरणाभावाच्च यथासङ्ख्यसूत्रमिह नोपन्यस्तम् । **माहात्म्यमिति** । अत्र मलोपो नेत्यर्थः । 'हलो यरां यरि सवर्णे लोपः' इति तु न सूत्रितम् । 'मूर्ध्नः' 'शार्ङ्ग' मित्यादौ रेफात्परस्य लोपापत्तेः । **एचः क्रमादिति** । नन्वत्रैव यथासङ्ख्यसूत्रं वक्तुमुचितम् । प्रत्याहारग्रहणेषु तद्वाच्यवाच्ये निरूढलक्षणाभ्युपगमेऽपि लक्ष्यार्थबोधात्पूर्वभाविशक्यार्थज्ञानमादाय यथासङ्ख्यत्वस्यावश्यं वक्तव्यत्वात् । अन्यथा एचां क्रमेणायवायावो न सिध्येरन् । मैवम् । अन्तरतमत्वेनापि तत्सिद्धेः । तथाहि एचः सन्ध्यक्षराणि । ततश्च संवृताकारतालव्यस्य संवृताकारतालव्योऽय्, संवृताकारोष्ठ्यस्य ओकारस्य तादृश एव अव्,

---

'शश्छोऽटी'ति पट्सूत्रीपाठोत्तरं—'झलां जश्झशि' 'अभ्यासे चर्च' 'खरि च' 'वावसाने' 'अणो प्रगृह्यस्ये'ति पञ्चसूत्र्याः पाठ इति—भाष्यसम्मताष्टाध्यायीपाठे तु—'वावसाने' इत्यतोऽनुवृत्तिर्बोध्या । स्पष्टञ्चाऽस्य वैकल्पिकत्वं लण्सूत्रे भाष्ये । **आदित्य इति** । आदित्यशब्दाच्छेपार्थण्यान्ताद्देवतार्थे ण्यः । 'यस्येति चे'त्यल्लोपेऽनेन यलोपः । 'आपत्यस्ये'ति तु न, आपत्यत्वाभावात् । हल इति किं ?, शय्या । यमामिति किं ?, आध्नोत् । यमीति किं ?, रामाभ्याम् ॥

**अचोऽय** । 'इचोऽचि यणयवायावः' 'अवावौ यि प्रत्यये' इति सूत्रयितुमुचितमित्याहुः । यथासङ्ख्यसूत्रलब्धमर्थमाह—**क्रमादिति** । उदात्तादिगुणयुक्तानामन्यगुणकव्यावृत्तिस्तु स्थानेऽन्तरतमपरिभाषया बोद्धया। एतदेवाभिप्रेत्य यथासङ्ख्यसूत्रे भाष्ये प्रकृतसूत्रे स्थानेऽन्तरतमसूत्रेण व्यवस्थोक्ता-'संवृतावर्णस्य संवृतावर्णो विवृतावर्णस्य विवृतावर्ण' इति । एतद्भाष्यप्रामाण्येन ए–ओ इत्यनयोरकारांशे संवृतत्वम्, इतरांशे विवृततरत्वं, तदुपरागाच्च न संवृतत्वस्य पृथग्ग्रहणम् । ऐ–औ इत्यनयोरप्यकारांशोऽपि विवृतत्वमेवेति बोद्धयम् ॥

**तस्य लो** । 'उपदेशेऽ'जित्यत 'इ'दित्यनुवृत्त्या विभक्तिविपरिणामेन च सिद्धौ 'तस्य'ग्रहणं सर्वलोपार्थम् । तेन ञिटुडूनामन्त्यस्य लोपो न । 'नाऽनर्थके' इति परिभाषा तु भाष्ये प्रत्याख्यातेवेति दिक् । **भवतीति** । फलाभावादिति भावः ॥

**वान्तो यि प्रत्यये** ।६।१।७९। यकारादौ प्रत्यये परे ओदौतोरव् आव् एतौ स्तः । गोर्विकारो गव्यम् । 'गोपयसोर्य'दिति यत् । नावा तार्यं नाव्यम् । 'नौवयोधर्मे'त्यादिना यत् ॥ ✽ **गोर्यूतौ छन्दस्युपसङ्ख्यानम्** ॥ ✽ **अध्वपरिमाणे च** ॥ गव्यूतिः । 'ऊतियूती'त्यादिना 'यूति'शब्दो निपातितः । 'वान्त' इत्यत्र

एचश्चोत्तरभूयस्त्वादैकारे इकारोऽध्यर्धमात्रः, अकारस्त्वर्धमात्र एव । एवमौकारेऽप्युकारोऽध्यर्द्धमात्रः, अकारस्त्वर्धमात्रः । एवंच विवृताकारतालव्यस्य ऐकारस्य विवृताकारतालव्य आय् । विवृताकारौष्ठ्यस्य औकारस्य विवृताकारौष्ठ्य आव् ॥

**वान्तो यि प्रत्यये** । यीति किम् ? । गोभ्याम् नौभ्याम् । प्रत्यये किम् ? । गोयानम् । **यकारादाविति** । 'येन विधि'रिति सूत्रस्यापवादभूतेन 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति वार्तिकेनाऽयमर्थो लभ्यते । **ओदौतोरिति** । 'उपस्थितानुपस्थितयोरुपस्थितं बलीयः' । पूर्वसूत्रे तयोरेव वान्तौ प्रति स्थानित्वेन निर्णीतत्वादिति भावः । **अध्वेति** । भाषार्थमिदम् । गोर्यूतौ लोकेऽपि वान्तादेशः स्यात्समुदायेनाऽध्वनः परिमाणं गम्यते चेदित्यर्थः । 'गव्यूतिः स्त्री क्रोशयुग'मित्यमरः । **निपातित इति** । क्तिन्नन्तत्वेनेत्यर्थः । ननु 'गव्यं' 'नाव्य'मित्यत्र भत्वेनाऽपदत्वाद्वलोपाभावेऽपि 'गव्यूति'रित्यत्र 'हलि सर्वेषा'मिति, 'लोपः शाकल्यस्ये'ति वा लोपः स्यादत आह-

**वान्तो** । 'येन विधि'रित्यस्याऽपवादभूतया 'तस्मान्नुडची'त्याद्यर्थमावश्यिकया वाचनिक्या 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति वार्त्तिककृदुक्तपरिभाषया लब्धमर्थमाह-**यकारादाविति** । **ओदौतोरिति** । 'ओदौतोरिति वक्तव्य'मितिवार्त्तिकमूलाद्व्याख्यानादिति भावः । 'पूर्वसूत्रे वान्तौ प्रति तयोरेव स्थानित्वनिर्णया'दिति 'स्थानेऽन्तरतम'सूत्रस्थकैयटोक्तन्तु न युक्तम्, वान्तज्ञानाय सूत्रपर्यालोचनस्याऽऽवश्यकत्वेऽपि तद्वाक्यार्थपर्यालोचने मानाभावात् । यथासङ्ख्यसूत्रसहकारेण बोधोत्तरं तयोस्तत्त्वनिर्णयात् । अन्तरतमपरिभाषया निर्वाहे तु-लक्ष्यपर्यालोचनकाले तन्निर्णयः । अत एव 'पूर्वसूत्रे स्थानिविशेषलाभो यथासङ्ख्यसम्बन्धात्, इह तु निमित्ताभावात्तल्लाभाऽभावः' इति षष्ठे प्रकृतसूत्रे कैयटः । **गव्यमिति** । भत्वाद्वलोपो न । यीति किं ? गोभ्याम् । प्रत्यये किं ? गोयानम् ? ।

ननु 'गव्यूति'रित्यत्र वस्य 'हलि सर्वेषा'मिति 'लोपः शाकल्यस्ये'ति वा लोपः स्यादत आह-**वान्त इत्यत्रेति** । न च विशेषविहितेन कार्यित्वेन लोपे वस्य निमित्तत्वबाध इति वाच्यं, निमित्तत्वानाक्रान्ते विषये कार्यित्वस्य चारितार्थ्यात् । तक्रकौण्डिन्यन्यायश्चानवकाशविषयो, निषयावयवयश्चेति स्पष्टं 'तद्धितेष्वचा'मिति सूत्रे, यड्विधायके च भाष्ये । अन्त्ये 'उत्तरयोर्विग्रहेण विशेषाऽसम्प्रत्ययाद्विग्रहणमनर्थक्यं, क्रियासमभिहारे च नैतेभ्यो यङा भवितव्य'मिति भाष्ये चेन 'विशेषासम्प्रत्यया'दित्यनुकृष्यते । अन्यथा-तक्रकौण्डिन्यन्यायेन सिद्धे विशेषासम्प्रत्ययादित्यनुकर्षकचकारवैयर्थ्यापत्तिः । निरूपयिष्यते चेदं यङन्ते । तस्य च वार्त्तिकेऽनुवृत्त्या यूतौ श्रूयमाणवकारान्त आदेश इत्यर्थः । सूत्रे

वकाराद्गोर्यूतावित्यत्र च्छकाराद्वा पूर्वभागे 'लोपो व्योर्वली'ति लोपेन वकारः प्रश्लिष्यते। तेन श्रूयमाणवकारान्त आदेशः स्यात्। वकारो न लुप्यत इति यावत्॥

**धातोस्तन्निमित्तस्यैव** ।६।१।८०। यादौ प्रत्यये परे धातोरेचश्चेद्वान्तादेश-

---

**वान्त इत्यत्रेति। वकारो न लुप्यत इति।** एवं च 'हलि सर्वेषा'मिति सूत्रे 'व्यो'रित्यनुवृत्तावपि वकारं परित्यज्य 'यस्य लोपः स्या'दिति व्याख्यास्यमानं सङ्गच्छते। एतच्च तत्रैव स्फुटीकरिष्यते॥

**धातोस्तन्निमित्तस्यैव।** पूर्वेण सिद्धे नियमार्थमिदम्। अत्र पूर्वसूत्रमनुवर्तते, 'एचः' इति च। तच्छब्देन यादिप्रत्ययः परामृश्यते योग्यत्वान्नतु संनिहितोऽपि धातुः। नहि स्वावयवस्यैचः स्वयं निमित्तं भवति। एवकारस्त्विष्टतोऽवधारणार्थः। अन्यथा हि 'तन्निमित्तस्यैचो यदि भवति तर्हि धातोरेवे'ति विपरीतनियमः संभाव्येत। ततश्च 'बाभ्रव्य' इत्यत्र न स्यात्। धातोस्त्वतन्निमित्तस्यापि स्यात्–**ओयते इत्यादौ।** तदेतत्सकलमभिप्रेत्याह–**यादौ प्रत्यये परे धातोरेचश्चेद्वान्तादेश इत्यादि। लव्यमिति।** लुनातेरचो यदिति यत्। 'सार्वधातुकार्धधातुकयोः' इति गुणः। **अवश्यलाव्यमिति।** 'ओरावश्यके' इति ण्यत्। 'मयूरव्यंसकादयश्चे'ति समासः। 'लुम्पेदवश्यमः कृत्ये' इति मकारलोपः। 'लव्य'मित्यादौ पूर्वसूत्रेणैव सिद्धे नियमसूत्रमिदं व्यर्थमित्याक्षिपति–

---

तु न फलं, गव्यादौ भत्वेन वान्तस्य पदत्वाभावात्, लव्ये स्वत एव तदभावाल्लोपाऽप्राप्तेः। गोशब्दादिभ्यः क्यजादावपि–'नः क्ये' इति नियमेन पूर्वस्य पदत्वाभावात्। एवन्तर्हि वार्तिके एव प्रक्षेप उचित इत्याशयेनाह–**छकाराद्वेति।** 'लोपो व्यो'रिति सूत्रे वकारप्रत्याख्यानन्तु लौकिकोदाहरणाऽभावेन तदर्थतया बोद्धव्यम्। अत एव 'इको गुणे'ति सूत्रे 'अतो ऌन्तस्येत्यत्र लुप्तनिर्दिष्टो वकार–' इत्युक्तं भाष्ये। शास्त्रीयसौत्रप्रयोगार्थन्तदिति तदाशयः। न चैवं 'विष्णवे' इत्यादौ 'तस्य लोप' इति दुर्वारं, गव्यूतावुच्चारणस्य चारितार्थ्यादिति वाच्यं; 'गवि च युक्ते' इत्यादिनिर्देशैर्वारणात्। **परे तु–** सा पूर्वपक्ष्युक्तिरिति न वकारप्रक्षेपो लोपेनोचितः। **किञ्च** च्छन्दसि सर्वविधीनां व्यवस्थितत्वान्न वलोपप्रसक्तिस्तत्रत्ये गव्यूतौ। अध्वपरिमाणेऽपि सञ्ज्ञाशब्दोऽयम्, तत्र सञ्ज्ञात्वभङ्गापत्तेर्न वलोपः। यथा रघुनाथेति सञ्ज्ञाशब्दे नित्यस्यापि णत्वस्याऽभावः। सर्वनामशब्दे णत्वाऽऽशङ्का तु–तस्य सञ्ज्ञिविशेषे [illegible]विनियोगाच्छास्त्रानुसारिशब्दस्यैव विनियोग उचित–इत्यभिप्रायेण। निरूपितञ्चैतत्सर्वादीनीतिसूत्रे भाष्यप्रदीपोद्द्योते इत्याहुः। निरूपयिष्यते चेदं 'पूर्वपदात्सञ्ज्ञाया'मिति सूत्रे॥

**धातोस्त।** 'धातो'रित्यस्याभावे प्रातिपदिकमात्रविषयो नियमः स्यात्तथा च 'गव्य'मित्यत्र न स्यात्; 'ओयते' इत्यत्र च स्यात्। तदभावे सामान्यतो नियमापादनन्तु योगविभागैवकारवैयर्थ्यापत्तेरयुक्तम्। 'तन्निमित्तस्य चेद्धातोरेवे'ति नियमे बाभ्रव्याऽसिद्धेस्तद्वारणायैवकारः। **लाव्यमित्यादि।**

स्तर्हि तन्निमित्तस्यैव नान्यस्य । लव्यम् । अवश्यलाव्यम् । तन्निमित्तस्यैवेति किम् ? । ओयते । औयत ॥

क्षय्यजय्यौ शक्यार्थे ।६।१।८१। यान्तादेशनिपातनार्थमिदम् । क्षेतुं शक्यं क्षय्यम् । जेतुं शक्यं जय्यम् । शक्यार्थे किम् ? । क्षेतुं जेतुं योग्यं क्षेयं पापं जेयं मनः ॥

क्रय्यस्तदर्थे ।६।१।८२। तस्मै प्रकृत्यर्थायेदं तदर्थम् । 'क्रेतारः क्रीणीयु'रिति बुद्ध्याऽऽपणे प्रसारितं क्रय्यम् । क्रेयमन्यत् । क्रयणार्हमित्यर्थः ॥

लोपः शाकल्यस्य ।८।३।१९। अवर्णपूर्वयोः पदान्तयोर्यवयोर्वा लोपोऽशि

---

**तन्निमित्तस्यैवेति किमिति ।** एकदेशाक्षेपेऽपि सूत्रस्यैवायमाक्षेपः पर्यवसन्नः । **ओयत इति ।** आङ्पूर्वाद्वेञः कर्मणि लट्; यगात्मनेपदे, यजादित्वात्संप्रसारणम् । पूर्वरूपम् । 'अकः'दिति दीर्घः । आद्गुणस्य परादिवद्भावेन धातोरेच्त्वेऽपि यादिप्रत्यय-निमित्तकत्वं नास्तीति भावः । **औयत इति ।** वेञः लङ् । यगादि प्राग्वत् । 'आड-जादीनाम्' । 'आटश्चे'ति वृद्धिः । **क्षय्यमिति ।** 'शकि लिङ् चे'ति यत् । चात्कृत्याः । **क्षेयमिति ।** 'अर्हे कृत्यतृचश्चे'ति यत् । **प्रकृत्यर्थायेति ।** प्रकृत्यर्थो द्रव्यविनिमयः ॥

**लोपः शाकल्यस्य ।** अवर्णपूर्वयोः किम् ?, दध्यत्र । मध्वत्र । **अशि पर**

---

अत्र गुणवृद्ध्योर्यण्णन्निमित्तकत्वेनैचो यादिप्रत्ययनिमित्तकता । **तन्निमित्तस्येति किमिति ।** सूत्रमेव किमर्थमिति प्रश्नः। **ओयत इति ।** वेञः कर्मणि लटि यकि यजादित्वात्संप्रसारणेऽकृत्सार्वेति दीर्घे आङा सहाऽऽद्गुणः । नधातुलोपसूत्रभाष्यरीत्या बहिर्भूतधातूपसर्गकार्यस्य बहिरङ्गत्वाद्वान्तादेशे गुणोऽसिद्ध इत्यरुचेराह-**औयतेति ।** तस्मादेव कर्मणि लङि आडागमे वृद्धिः । शेषं पूर्ववत् ॥

**क्षय्यज ।** 'क्षि क्षये' 'जि जये' इत्यनयोरेव ग्रहणं, न तु 'क्षीष् हिंसायाम्' 'क्षै जै क्षये' इत्यनयो-र्व्याख्यानात् । अत एव 'क्षिज्योरेवैच' इति भाष्ये उक्तम् । **तस्मै प्रेति ।** क्रयार्थे वस्तुनि क्रय्य इति निपात्यते इत्यर्थः । व्याख्यानाद्गुणभूतस्यापि तदा परामर्शः । क्रयार्थत्वञ्च-फलोपधानरूपं, 'तदर्थ' इति विशेषणात्तदाह-**क्रेतार इति ।** योग्यतामात्रग्रहणे त्वव्यावर्त्तकं तत्स्यादिति भावः ।

**केचित्तु**-स्वीयं धान्यादि दत्वा यत्र तन्मूल्यग्रहणं तत्र धान्यं क्रय्यम् । यत्र तु स्वयं दत्वा परकीयधान्यादिग्रहणं तत्र धान्यं क्रेयम् । द्रव्ये तु न क्रय्यत्वं नापि क्रेयत्वं, किन्तु धान्यादेरेव, शक्तिस्वभावात् । भाष्यस्वरसोऽप्येवमेवेत्याहुः ॥

**लोपः शा ।** भोभगोअघोअपूर्वस्येत्यशीति चानुवर्त्तते, तत्रौकारान्ते चातो गार्ग्यस्येति बाधक-मित्याशयेनाह-**अवर्णपूर्वयोरिति ।** 'व्यो'रित्यनुवृत्तावपि वर्णसमाम्नाये यकारस्य प्राक्पाठा-

---

१ 'क्षि' 'जि' एतयोर्द्धात्वोर्यतिप्रत्यये परतः शक्यार्थे गम्यमाने एकारस्याऽयादेशो निपात्यते इति वृत्तिः ।
२ 'क्रीणातेर्द्धातोस्तदर्थे-क्रयार्थे-यत्तस्मिन्-अभिधेये यति प्रत्यये परतोऽयादेशो निपात्यते इति वृत्तिः ।

परे । 'पूर्वत्रासिद्ध'मिति लोपशास्त्रस्याऽसिद्धत्वान्न स्वरसन्धिः । हर एहि । हरयेहि । विष्ण इह । विष्णविह । श्रिया उद्यतः । श्रियायुद्यतः । गुरा उत्कः । गुरावुत्कः ॥

'कानि सन्ति' 'कौ स्त' इत्यत्राऽस्तेरल्लोपस्य स्थानिवत्त्वेन यणाऽवादेशौ प्राप्तौ 'न पदान्ते'ति सूत्रेण पदान्तविधौ तन्निषेधान्न स्तः ॥ **एकः पूर्वपरयोः** ।६।१।८४।

---

**इति** । एतच्च 'भोभगो–' इति सूत्रादनुवर्तते । अशि किम् ? । वृक्षव्करोति । अत्र लोपो मा भूत् । न चात्र टिलोपस्य स्थानिवद्भावेन निर्वाहः, 'पूर्वत्रासिद्धे न स्थानिव'दित्यभ्युपगमात् । न चैवमपि 'हलि सर्वेषा'मिति नित्यं लोपः स्यादिति शङ्क्यम् ; तत्र 'अशि' इत्यनुवर्त्य अशा हलो विशेषणात् । 'लोपो व्योर्वली'ति लोपस्तु न शङ्कनीय एव । टिलोपस्य णिलोपस्य वा स्थानिवत्त्वान्नेति 'न पदान्ते'ति सूत्र एवोक्तत्वात् । **हर एहीति** । 'ओमाङोश्चे'ति पररूपं प्राप्तम् । **तन्निषेधादिति** । नच स्थानिवत्त्वनिषेधेऽपि

---

तत्क्रमेणाह–**यवयोरिति** । 'स तस्मा आचष्टे' इत्यादिभाष्यप्रयोगादत्र 'रो'रित्यस्याऽसम्बन्धः । इदं सूत्रं लघुप्रयत्ने न । शाकटायनमते तयोर्विधानेन शाकल्यमते तदभावात् । अवर्णेति किं ?, गौर्यत्र । पदान्तयोः किं ?, हरये । अशि किं ?, वृक्षं वेतीति वृक्षवीः, क्विप् । तमाचष्टे इति–ण्यन्ताद्विच् । वृक्षव्करोति । क्विपि तूठ् स्यात् । विज्निमित्तको 'लोपो व्यो'रिति लोपस्तु न; णिलोपटिलोपयोः स्थानिवत्त्वात् । प्रातिपदिकाण्णिजुत्पत्त्या पदत्वाभावेन, परपदस्थाजादेशाभावेन च लोपस्य पदचरमावयवत्वाभावेन च 'न पदान्ते'तिनिषेधाऽप्रवृत्तेः । एतेन 'क'निमित्तको वलोपोऽत्र दुर्वार इत्यपास्तम् । किञ्च स्थानिवत्त्वनिषेधं विनाऽस्य पदान्तत्वाऽसिद्ध्याऽत्र निषेधाऽप्रवृत्तिः । 'स्थानिवत्त्वनिषेधज्ञाने पदान्तत्वज्ञानं, तन्निर्णये च स्थानिवत्त्वाभावज्ञान'मित्यन्योन्याश्रयस्तत्राप्रवृत्तौ मानम् । इदञ्च न पदान्तसूत्रे भाष्ये स्पष्टम् । न च पदसञ्ज्ञायां टिलोपस्य स्थानिवत्त्वादस्य पदान्तत्वमेव नास्तीत्यशीति व्यर्थमिति वाच्यम् ; 'पूर्वत्रासिद्धीय'इति निषेधात् । साक्षात् ,पदत्वादिद्वारकपरम्परया वा पूर्वत्रासिद्धीयप्रापकस्य तत्प्रतिबन्धकस्य वाऽतिदेशस्य तेन निषेधादिति **केचित्** ।

**परे तु**–'न पदान्ता हलोऽणः सन्तो'ति लण्सूत्रस्थभाष्याद्वृक्षवादेरनभिधानमेव । 'भोभगो' इति सूत्रेऽश्ग्रहणमनर्थकमन्यत्राऽभावा'दिति वार्तिकाच्च । अशोऽन्यत्र तन्निमित्तकार्यकार्यिणोऽभावादिति तदर्थः । 'न ह्यन्यत्र रुररती'ति तद्व्याख्यानभाष्येऽश्ग्रहणमुपलक्षणम् । एतदाशयमजानानेनैकदेशिना–'उत्तरार्थं हलि सर्वेषामिति,–वृक्षव्करोतीत्यत्र मा भू'दित्युक्तम् । अस्य चैकदेश्युक्तित्वं लण्सूत्रस्थोक्तभाष्यविरोधेन स्पष्टमेव कैयटेनोक्तम् । अत एव भाष्ये 'उत्तरार्थ'मित्युक्त्वा 'हलि सर्वेषा'मित्यत्रैव प्रयोजनमुक्तम् । 'हलि सर्वेषा'मित्यत्र वकारनिवृत्त्यैवाऽत्र तद्वारणसम्भवान्न तत्राप्यश्ग्रहणस्य प्रयोजनमिति तद्भाष्यमेकदेश्युक्तिरेवेत्याहुः । **कानि सन्तीति** । वाक्यसंस्कारपक्षेऽपि पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वमादायान्तरङ्गाणां पूर्वं प्रवृत्तिरितीकारादेः स्थानिसूत्रादचः पूर्वत्वं बोद्धव्यम् ॥

**एकः पूर्व** । 'गुण' इत्यादेर्विधेयसमर्पकत्वेन तत्रैकत्वस्य ... भयोः पूर्व-

इत्यधिकृत्य ॥ **आद्गुणः** ।६।१।८७। अवर्णादचि परे पूर्वपरयोरेको गुणादेशः स्यात्संहितायाम् । उपेन्द्रः । रमेशः । गङ्गोदकम् ॥

**उरण् रपरः** ।१।१।५१। 'ऋ' इति त्रिंशतः संज्ञेत्युक्तम् । तत्स्थाने योऽण् स रपरः सन्नेव प्रवर्तते । तत्रान्तरतम्यात्कृष्णर्द्धिरित्यत्राऽर् । तवल्कार इत्यत्राऽल् । 'अचो रहाभ्या'मिति पक्षे द्वित्वम् ॥

---

'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यल्लोपस्यासिद्धत्वाद्यणावादेशौ स्त एवेति वाच्यम्, पदद्वयाश्रयत्वेन तयोरेव बहिरङ्गत्वात् । 'नाजानन्तर्ये' इति निषेधाच्च ॥

**उरण् रपरः** । अनुवादे 'षष्ठी स्थानेयोगे'ति परिभाषाया अनुपस्थितावपि स्थानेग्रहणं ततोऽनुवर्तत इत्याशयेनाह–**तत्स्थाने योऽणिति** । 'स्थानेऽन्तरतमः' इत्यतोऽपि 'स्थाने'ग्रहणमिहानुवर्तते । तेन प्रसङ्गावस्थायामेवाऽण् रपरो भवति । तदेतद्व्याचष्टे–**रपरः सन्नेव प्रवर्तत इति** । उः किम् ?, 'इयति'–गेयम्, देयम् । अण् किम् ? ; रीङादीनां रपरत्वं मा भूत् । 'रीङृतः'–मात्रीयति । रिङ्–'क्रियते' । **आन्तरतम्यादिति** । रेफशिरस्कस्य 'अ'रित्यस्य रेफद्वारा ऋकारेण स्थानसाम्यादित्यर्थः । **पक्षे द्वित्वमिति** । ऋधेर्धस्येति भावः ॥

---

परयोरेकवाक्यतयैव विधेयान्वयेन चानयोः पूल्योः कटं कुर्वित्यादित इवोभयसम्बन्ध्येकविधेयस्यैव प्रतीतेरेकग्रहणं स्पष्टार्थम् ॥ **उरण्** । 'उः स्थाने' इति 'षष्ठी स्थाने' इतिपरिभाषया लब्धम्, 'उदात्तस्वरितयोर्यण' इतिवत् । 'स्थानेऽन्तरतम' इत्यतः–'स्थाने'ग्रहणमनुवर्त्तते, तस्य लक्षणया प्रसङ्गावस्थायामित्यर्थस्तदाह–**रपरः सन्नेवेति** । 'रपर' इत्यवयववाचिना 'पर'शब्देन षष्ठ्यर्थे बहुव्रीहिरतेनास्यावयवत्वात् 'यदागमा' इति न्यायेन विशिष्टस्य गुणवृद्धित्वेन 'ऋकारस्य गुणवृद्धी अरारावेवे'ति नियमोपपत्तिः । अत एव 'रदाभ्या'मिति सूत्रे, 'थलि च सेटी'ति सूत्रे च भाष्ये–'गुणो भवति वृद्धिर्भवतीति–रेफशिरा गुणवृद्धिसञ्ज्ञकोऽभिनिर्वर्त्तते'–इत्युक्तम् । 'उः स्थानेऽणप्रसज्यमान एव रपरो भवति, पूर्वभक्तश्च रेफ इत्ययं गुण इत्यर्थ' इति **कैयटः** । अवयवत्वं वाचनिकमेव तत्साहित्यबोधनपर्यवसायि । अन्यथा वर्णस्य वर्णान्तरावयवत्वं 'हलन्त्याच्चे'तिसूत्रभाष्योक्तरीत्याऽसङ्गतं स्यात् । पञ्चम्यर्थे बहुव्रीहिणाऽनवयवत्वे तु–गुणवृद्धिशब्देनाऽकारादेरेव रेफपरस्यैतदेकवाक्यतया विधानं स्यात् । गुणत्वादिकन्त्वकारादिनिष्ठमेव स्यादित्युक्तनियमानुपपत्तिः । अत एव 'वृद्धे'इत्यादौ हलादिःशेषसिद्धिः । अभ्यासावयवस्यैवानादेस्तेन निवृत्तेः । एतेनाऽणमनूद्य रपरत्वं विधीयते इति परास्तम् । उक्तनियमाऽनुपपत्तेः । अत्र पक्षे क्व रपरत्वं ?, 'क्व लपरत्व'मिति व्यवस्थाऽनुपपत्तिरतुल्ये, रेफवत्स्थानिकस्य रेफपरत्वं, लकारवत्स्थानिकस्य लपरत्वमिति व्यवस्थासम्भवात् । **तत्रान्तरतम्यादिति** । स्थानत इति भावः । रेफादिद्वाराऽऽदेशस्यापि ऋधादिस्थानत्वात् । 'तत्र–तत्रोऽऽदेशानेव रलपरानुच्चार्येदं सूत्रं न कार्य'मिति तु न वाच्यम्; 'आपृच्छ्यधामीत्' 'भृनामि'दित्यादौ

**झरो झरि सवर्णे** ।८।४।६५। हलः परस्य झरो लोपो वा स्यात्सवर्णे झरि । द्वित्वाऽभावे लोपे सत्येकधम् । असति लोपे द्वित्वलोपयोर्वा द्विधम् । सति द्वित्वे लोपे चाऽसति त्रिधम् । कृष्णर्धिः । कृष्णर्द्धिः । कृष्णर्द्ध्द्धिः । 'यण' इति पञ्चमी 'मय' इति षष्ठीति पक्षे ककारस्य द्वित्वम् । लस्य 'त्वनचि चे'ति । तेन 'तवल्कार' इत्यत्र रूपचतुष्टयम् ।

द्वित्वं लस्यैव कस्यैव नोभयोरुभयोरपि ।
तवल्कारादिषु बुधैर्बोध्यं रूपचतुष्टयम् ॥

**वृद्धिरेचि** ।६।१।८८। आदेचि परे वृद्धिरेकादेशः स्यात् । गुणापवादः । कृष्णैकत्वम् । गङ्गौघः । देवैश्वर्यम् । कृष्णौत्कण्ठ्यम् ॥

---

**झरो झरि** । 'हलो यमा'मित्यतो 'हल' इत्यनुवर्तते, तदाह–**हलः परस्येति** । हलः किम् ? । प्रत्तम् । झर इति किम् ? । शार्ङ्गम् । झरीति किम् ? । प्रियपञ्चाम् । अत्रोपोऽत्र पूर्वत्रासिद्धे स्थानिवन्न भवतीति चकारस्य ञकारे परे लोपः स्यात् ॥ सवर्ण इति किम् ? । तर्प्ता । सवर्णग्रहणसामर्थ्याद्यथासङ्ख्यमत्र न भवति । तेन 'शिण्ढी'-त्यत्र डस्य विकल्पेन लोपः सिध्यतीति दिक् । **लोपो वेति** । 'झयो हः' इति सूत्रा-दन्यतरस्यामित्यनुवृत्तेः । **असति लोप इति** । 'द्वित्वाभावे'इत्यनुषज्यते । द्वित्व-लोपयोरसतोरित्यर्थः । **त्रिधमिति** । 'यणो मयः' इति लक्षणान्तरेण पुनर्द्वित्वे 'चतुर्थ'मिति बोध्यम् ॥ **वृद्धिरेचि** । पूर्वसूत्रादादित्यनुवर्तते । तदाह–**आदेचीति** । **कृष्णैकत्वमिति** । 'कृष्णे'ति संबोधने पृथक् पदम् । एवं 'देवे'त्यपि । इत्थं चात्र षष्ठीसमासत्वमभ्युपेत्य 'पूरणगुणे'ति निषेधमाशङ्क्य 'संज्ञाप्रमाणत्वा'दित्यादिनिर्देशेन 'गुणेन निषेधोऽनित्यः' इति केषांचिद्व्याख्यानं नात्यन्तावश्यकमिति बोध्यम् ॥

---

दोषापत्तेः । अत्राऽण्पूर्वेणैव, 'प्रशास्तृणा'मिति निर्देशात् । वस्तुतो रऽत्याहाराभावेन 'रपर' इत्यस्य स्थाने 'लपर' इति पठनीयमिति–'लपरत्वं वक्ष्यामी'ति तुल्यास्यसूत्रभाष्याल्लभ्यते ॥

**झरो झ** । 'झयो ह'इत्यतो 'वाऽवसाने' इत्यतो वा विकल्पोऽनुवर्त्तते । हयवरट्सूत्रशेषे भाष्ये स्पष्टमिदम् । **लोपे इति** । 'ऋध'धातोर्झर इति भावः । **असतीति** । 'द्वित्वाभाव'इत्यनुकृष्यते । **त्रिधमिति** । त्रिधकारत्वं–प्रक्रियाभिप्रायेण । न च 'द्वित्वभिन्ने पूर्वत्र कर्त्तव्ये परमसिद्ध'मित्यर्थके 'पूर्वत्रासिद्धीयमद्वित्वे' इत्यनेन धातुधकारस्य जश्त्वे दस्य द्वित्वमितीदमयुक्तमिति वाच्यं, फले विशेषाभावेन तदनादरणात् । न ह्यत्र जश्त्वात्पूर्वमनन्तरं वा द्वित्वे रूपे विशेषोऽस्ति, तदनन्तर-जश्त्वप्रवृत्तेः । तस्य परिभाषात्वेन, फलविशेषे एव प्रवृत्तेरित्यन्यत्र विस्तरः । **पञ्चमीति** । विनि-गमकाभावादिति भावः । अत एवास्य वैकल्पिकत्वम् । **कृष्णैकेति** । 'कृष्णे'ति सम्बुद्ध्यन्तं पृथ-

**एत्येधत्यूठ्सु** ।६।१।८९। अवर्णादेजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेशः स्यात् । पररूपगुणापवादः । उपैति । उपैधते । प्रष्ठौहः । एजाद्योः किम् ? । उपेतः । मा भवान्प्रेदिधत् । पुरस्तादपवादन्यायेनेयं वृद्धि'रेङि पररूप'मित्यस्यैव बाधिका न 'त्वोमाङोश्चे'त्यस्यापि । तेनाऽवैहीति वृद्धिरसाधुरेव ॥ ❀ **अक्षादूहिन्यामुपस-**

---

**एत्येधत्यूठ्सु** । अत्र 'एची'त्यनुवर्तते । तच्च एत्येधत्योर्विशेषणं न तूठः, असंभवात् । 'आद्गुणः' इत्यत आदित्यनुवर्तत एवाऽतो व्याचष्टे-**अवर्णादेजाद्योरिति** । **प्रष्ठौह इति** । प्रष्ठं वहतीति प्रष्ठवाट् । 'वहश्चे'ति ण्विः । ततः शसि 'वाह ऊठ्' । गुणापवादतयाऽनेन वृद्धिः । **प्रेदिधदिति** । प्रपूर्वस्यैधतेर्ण्यन्तस्य लुङि रूपम् । 'न माङ्योगे' इत्याडागमाऽभावः । **पुरस्तादिति** । 'पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरा'निति न्यायेनेत्यर्थः । **अक्षादिति** । 'आ'दित्यनुवर्तते, 'अची'ति च । तेन पूर्वपरयोर्वर्णयोरेव भवति । एवमन्यत्राप्यूह्यम् ॥ **अक्षौहिणीति** । ऊहः समूहः, सोऽस्त्यस्याः सा ऊहिनी । अक्षाणामूहिनीति विग्रहः । परिमाणविशेषविशिष्टा सेना अक्षौहिणी । 'पूर्वपदात्संज्ञायाम्-' इति णत्वम् । 'अक्षाणा'मित्यस्य 'ऊह' शब्देन समासे तत इनौ तु 'अक्षोहिणी'त्येव भवति, न तु तत्र वृद्धिः, अन्तरङ्गेण गुणेन बाधात् । अपवादभूताया अपि वृद्धेरूहिनीशब्देन समासे चरितार्थत्वात् । यथोक्तं प्राक् 'यद्यपवादोऽन्यत्र चरितार्थस्तर्हि परान्तरङ्गाभ्यां बाध्यते' इति ।

---

त्पदमिति कश्चित् ॥ **एत्येध** । ऊडत्राऽऽदेश एव, व्याख्यानात् । 'एची'ति नोठो विशेषणमूठस्तत्त्वाऽसम्भवात् । 'एत्येधत्यो'रिति योगं विभज्य तयोरेवैचीति विशेषणस्य भाष्ये कृतत्वाच्च, तदाह-**एजाद्योरिति** । एतिरत्र इणेव, प्रसिद्धत्वात् । 'उपैती'त्यादौ 'वृद्धिरेची'त्यनेन गतार्थत्वमाशङ्क्याह-**पररूपगुणेति** । एत्येधत्योरेङि पररूपस्योठि चाऽऽद्गुणस्येति विवेकः । **उपैधते इति** । अत्र न सर्वादेशः । 'एत्येधत्याद्यवयवेऽची'त्येवं क्रमेण सूत्राणामर्थात् । अयमेवार्थ इति प्रत्ययलक्षणसूत्रस्थभाष्यस्वरसः । 'वृक्षे शाखे'तिवदेत्येधत्यूठ्स्विति सप्तमी बोध्या । **प्रष्ठौह इति** । प्रष्ठं वहतीत्यर्थे वहेर्ण्वौ ततः शस्यूठि सम्प्रसारणे पूर्वरूपेऽनेन वृद्धिः । **प्रेदिधदिति** । **परे तु**-'इणीकारादौ प्रतिषेध' इति वार्तिके एधत्यनुपादानात् 'न त्वेधतेरव्यभिचारा'दितिवृत्तेश्चास्थानभिधानमेव, 'एत्येधत्योरेचीति विशेषण'मिति भाष्यस्यैधत्यंशे 'सम्भवमात्रेणोपरञ्जकतया विशेषण'मित्याशय इत्याहुः । 'उपैधयते' इत्यादावपि वृद्धिर्भवत्येव, प्रकृतिभागस्यैधूपत्वात् । **किञ्च**-एत्येधत्यवयवेऽचीत्यर्थः-प्रत्ययलक्षणसूत्रभाष्यसम्मत इति-अत्र न दोषः । **पुरस्तादिति** । 'पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरा'निति न्यायः । अवश्यं स्वपरस्मि(न्)बाधनीये भेदेनापेक्षायां प्रथमोपस्थितबाधेनाकाङ्क्षानिवृत्तिर्हि तद्बीजम् । **असाधुरेवेति** । आङिणोरेकादेशस्य पूर्वान्ततयाऽऽङि

ह्यानम् ॥ अक्षौहिणी सेना ॥ ❀ **स्वादीरेरिणोः ॥** स्वैरः । स्वेनेरितुं शीलमस्येति स्वैरी । (लिङ्गविशिष्टपरिभाषया) स्वैरिणी ॥ ❀ **प्रादूहोढोढ्येषैष्येषु ॥** प्रौहः । प्रौढः ॥ **अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्** ॥ 'भ्रस्ज'तिसूत्रे राजेः पृथग्भ्राजिग्रहणाज्ज्ञापकात् । तेन 'ऊढ'ग्रहणेन क्तान्तमेव गृह्यते न तु क्तवत्वन्तस्यैकदेशः । प्रोढवान् ॥ प्रौढिः । 'इष इच्छायां'तुदादिः । 'इष गतौ' दिवादिः । 'इष आभीक्ष्ण्ये' क्र्यादिः । एषां घञि ण्यति च 'एषः''एष्यः' इति रूपे । तत्र पररूपे प्राप्तेऽनेन वृद्धिः । प्रैषः प्रैष्यः ॥ यस्तु–'ईष उञ्छे', यश्च–'ईष गतिहिंसादर्शनेषु', तयोर्दीर्घोपधत्वात्,–ईषः । ईष्यः । तत्राद्गुणे–प्रेषः प्रेष्यः ॥ ❀ **ऋते च तृतीयासमासे ॥** सुखेन ऋतः सुखार्तः । तृतीयेति किम् ? । परमर्तः ॥

❀ **प्रवत्सतरकम्बलवसनार्णदशानामृणे** ॥ प्रार्णम् । वत्सतरार्णमित्यादि ॥

---

**स्वादीरेरिणोः** । 'ईरेरिण्योः' इति क्वाचित्कोऽपपाठः । 'स्वैरी'ति णिन्यन्तस्य अस्त्रियां वृद्ध्यभावप्रसङ्गात् । 'ईरि'न्ग्रहणस्य फलमाह–**स्वेनेरितुमिति** । यदा त्वीरणमीर इति घञन्तेन स्वशब्दस्य समासे 'स्वादीरे' इति वृद्धौ कृतायां मत्वर्थीय इनिः, यदा वा मत्वर्थीयेनिप्रत्ययान्तेन ईरिन्शब्देन स्वशब्दस्य समासस्तदापि तदेकदेश ईरशब्दोऽस्त्येवेति पृथगीरिन्ग्रहणं व्यर्थं स्यादिति भावः । **स्वैरीति** । 'सुप्यजातौ'इति णिनिः । उपपदसमासः । **स्वैरिणीति** । ङीपः प्राग्भागमीरिन्शब्दमादाय वृद्धिः । केचित्तु लिङ्गविशिष्टपरिभाषयाऽत्र वृद्धिरित्याहुस्तन्निष्फलमिति भावः । **नानर्थकस्येति** । उपस्थितस्याऽर्थस्य शब्दं प्रति विशेषणत्वसंभवे त्यागाऽयोगादिति भावः ॥ **प्रैष्य इति** । एषसाहचर्यादेष्योऽप्यनन्व्ययं गृह्यते; तेन ण्यन्तादिषेः क्तो ल्यपि पररूपमेव, न तु वृद्धिः । प्रेष्य गतः । लघूपधगुणमाशङ्क्याह–**तयोर्दीर्घोपधत्वादिति** । **प्रवत्सतरेति** । इह केचिद्वत्सशब्दं वत्सरशब्दं च प्रक्षिपन्ति तद्भाष्यादावदृष्टत्वादुपेक्ष्यम् । **वत्सतरार्णमिति** । तकारमकारयोर्द्वित्वविकल्पाच्चत्वारि रूपाणि । रेफात्परस्य तु 'अचो रहाभ्या'मिति द्वित्वे 'यणो मयः' इति वचनान्तरेण पुनर्द्वित्वे एकर्णं द्विर्णं त्रिर्णमिति द्वादश । 'खयः शरः' इति सकारद्वित्वे चतुर्विंशतिः । न चेह 'शरोऽची'ति द्वित्वनिषेधः शङ्क्यः, तस्य सौत्रद्वित्वमात्रविषयत्वात् । अतएव 'खयः शरः'

---

पररूपेण बाधादिति भावः । **अर्थवद्ग्रहणे इति** । अस्या बीजं–'स्वं रूप'मिति सूत्रे उक्तम् । **पररूपे प्राप्ते इति** । 'पूर्वन्धात्तुः साधनेन युज्यते'इति सिद्धान्तादिति भावः ॥ **उपसर्गादृति** । तत्प्रकरणादुपसर्गकारीयतीत्यादौ 'वा सुपी'ति न वृद्धिः । सौत्र—[illegible] व्याख्यानात् ।

ऋणस्यापनयनाय यदन्यदृणं क्रियते तदृणार्णम्। दशार्णो देशः। नदी च दशार्णा। ऋणशब्दो दुर्गभूमौ जले च॥ **उपसर्गादृति धातौ**।६।१।९१। अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः स्यात्। उपार्च्छति। प्रार्च्छति॥

**अन्तादिवच्च**।६।१।८५। योऽयमेकादेशः स पूर्वस्याऽन्तवत्परस्यादिवत्स्यात्।

---

इति वार्तिकस्य 'वत्सरः' 'अप्सराः' इत्युदाहरणं भाष्ये दत्तम्। न च वदेः सरप्रत्यये परतश्चर्त्वे कृते तस्याऽसिद्धत्वात्सस्य खयः परत्वं नेति शङ्क्यम्; 'पूर्वत्रासिद्धीयमद्वित्वे' इत्युक्तेः। अतएव मनोरमायां 'षट् सन्तः' इत्यत्र टकारात्परस्य सस्य द्वित्वं स्वीकृतमिति दिक्। **उपसर्गादृति**। उपसर्गात्किम्?, खट्वर्च्छति। ऋति किम्?, उपेतः। तपरकरणमुत्तरार्थम्। इह दीर्घकारादेर्धातोरसंभवेन व्यावर्त्याऽलाभात्। धातौ किम्?, उपर्कारः। नन्वत्र 'उपे'त्युपसर्ग एव न भवति, क्रियायोग एवोपसर्गत्वात्। उपगत ऋकार इति विगृह्य क्रियायोगत्वसंपादनेऽपि 'यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाः' इति ऋकारं प्रति अनुपसर्ग एव। तथा चाऽकृतेऽपि धातुग्रहणे ऋकारादिधातावेव वृद्धिर्भविष्यत्युपसर्गेण धातोराक्षेपान्न त्वत्रेति चेत्सत्यम्; अतएव 'योगविभागेन पुनर्विधानार्थ'मित्यनुपदं वक्ष्यतीति न काप्यनुपपत्तिः॥

**अन्तादिवच्च**। इह 'एकः पूर्वपरयोः' इत्यनुवर्तते, यथासङ्ख्यं चाश्रीयत इत्यभिप्रेत्याह—**पूर्वस्यान्तवदिति**। स्थानिवत्सूत्रेणैव गतार्थमिदम्। न चाल्विध्यर्थ-

---

'आ'दित्यनुवृत्तेन तदन्तविधिरित्याह—**अवर्णान्तादिति**। 'यस्मिन्विधि'रिति परिभाषयाह—**ऋकारादाविति**। पूर्वपरयोस्तयोः समुदाययोरन्त्याद्योर्वर्णयोरेकादेश इत्यर्थः। 'उपसर्गावयवाकाराद्धात्ववयवे ऋकारे तयोः पूर्वपरयोर्वृद्धि'रित्युचितम्। 'गते'रिति तु नोक्तम्। 'अर्च्छर्च्छती'त्यादौ दोषात्॥

**अन्ता**। इह 'पूर्वपरयो'रिति वर्तते, यथासङ्ख्यञ्च। अन्तादिशब्दावुपस्थितैकादेशस्थानिपरौ। पूर्वपरशब्दौ च तद्घटितसमुदायपरौ। एवञ्च—'पूर्वस्य परस्य समुदायस्यान्तादिभ्यां वर्णाभ्यां पृथगवस्थिताभ्यां ये व्यवहाराः—प्रातिपदिकत्व-सुबन्तत्व-प्रत्ययत्वादयस्ते कृतैकादेशस्य भवन्ति, न तु तद्वर्णमात्रवृत्तयोऽत्व-ह्रस्वत्वादय' इत्यर्थस्तत्फलितमाह—**योऽयमित्यादि**। तेन 'रामा'वित्यादौ परादिवत्त्वेन 'औ' इत्यस्य सुप्त्वे, पूर्वमान्तस्यैकदेशविकृतन्यायेन प्रकृतित्वे, यस्माद्विहितस्तदादितदन्तत्वमार्थसमाजग्रस्तमिति पदत्वसिद्धिः। तद्वर्णमात्रवृत्तिधर्मानतिदेशात्खट्वाभिरित्यत्राऽत्वनिबन्धनऐस्न। 'अयते इन्द्र'मित्यादौ सवर्णदीर्घश्च न। अत एव तुक्यसिद्धवचनं चरितार्थम्। अन्यथाऽधीत्येत्यादावादिवत्त्वेन ह्रस्वत्वप्रयुक्ततुक्सिद्धौ तद्वैयर्थ्यं स्पष्टमेव। तदुक्तं 'वर्णाश्रयेऽन्तादिवत्त्वप्रतिषेधो वक्तव्यो नह्यन्यास्ताद्रूप्यातिदेशा'दिति। अन्तादिवर्णमात्रवृत्तिधर्मानतिदेशादिति तदर्थः। 'क्षीरपेणे'त्यादावेकारविशिष्टे एकाजुत्तरपदत्वं भवत्येव। स्थानिवद्भावेन तु नैतल्लभ्यम्, अप्राधान्येनालाश्रयणात्। किञ्च एकादेशे वर्णयोरेव स्थानित्वं न समुदायस्येति—'भी ई भिय' इत्यादावेकादेशविशिष्टे धातुत्वानापत्तिः। धातुत्व-

इति रेफस्य पदान्तत्वे– ॥ **खरवसानयोर्विसर्जनीयः** ।८।३।१५। खरि अवसाने च परे रेफस्य विसर्जनीयः स्यात्पदान्ते । इति विसर्गे प्राप्ते । अन्तवद्भावेन पदान्तरेफस्य न विसर्गः । 'उभयथर्क्षु' 'कर्तरि चर्षिदेवतयो'रित्यादिनिर्देशात् । उपसर्गेणैव धातोराक्षेपे सिद्धे 'धाता'विति योगविभागेन पुनर्वृद्धिविधानार्थम् । तेन 'ऋत्यक' इति पाक्षिकोऽपि प्रकृतिभावोऽत्र न भवति ॥

**वा सुप्यापिशलेः** ।६।१।९२। अवर्णान्तादुपसर्गादृकारादौ सुब्धातौ परे

---

मिदमस्त्विति शङ्क्यम् ; अस्याऽप्यल्विधावनिष्टत्वात् । अन्यथा 'अयजे इन्द्र'मित्यत्र सवर्णदीर्घापत्तेः । **न विसर्ग इति** । एतच्च 'सुखार्त'इत्यादावपि बोध्यम् ॥

**सुब्धाताविति** । सुबन्तावयवके इत्यर्थः । सुबन्तस्य धातोरसंभवात् । यद्यपि

---

स्यैकादेशस्थानिधर्मत्वाऽभावात् । आनुमानिकादेशकल्पकवाक्यमन्तादिघटितसमुदायस्यैकादेशघटित आदेश इत्येव, न तु प्रत्येकं तयोः स्थानित्वबोधकं, तथा सति 'स्वाश्व'शब्दस्य स्थानिवत्त्वेन स्वशब्दतया तत इञ्शब्दे वृद्ध्यापत्तेः । किञ्च भवत्सम्मतस्य 'उभयत आश्रयणे नान्तादिव'दित्यस्याऽसङ्गतौ भवत्सम्मता'ऽभोया'दित्याद्यसिद्धिः । स्थानिवत्त्वं तूभयत आश्रयणे इष्यत एव । अन्यथाऽचः परस्मिन्नित्यस्याप्युभयत आश्रयणेऽप्रवृत्त्यापत्तौ प्लायत इत्याद्यसिद्धिरिति दिक् । **निर्देशादिति** । न च 'कर्त्तरि चर्षि'त्यादौ गुणस्य पदद्वयसम्बन्धिवर्णद्वयाश्रितत्वेन बहिरङ्गत्वाद्रेफाभावेन न विसर्ग इति वाच्यं; गुणस्येव पदद्वयसम्बन्धिरेफखरात्मकवर्णद्वयाश्रितत्वेन विसर्गस्यापि तत्त्वात् । परनिमित्तकत्वमप्युभयोः समम् । कार्यकालपक्षे त्रिपाद्यां तदुपस्थितावपि पूर्वं प्रति परस्याऽसिद्धत्वादन्तरङ्गाभावेन पूर्वस्यान्तरङ्गनिरूपितबहिरङ्गत्वाभावात्कथं तस्याऽसिद्धत्वप्रतिपादनम् ? । न चानया पूर्वस्यासिद्धत्वादभावेन तं प्रति परासिद्धत्वं 'पूर्वत्रे'त्यनेन वक्तुमशक्यमिति वाच्यम्, एवं हि विनिगमनाविरहादुभयोरप्यप्रवृत्तौ विसर्गो दुर्वारः । एवञ्च विरोधात्कार्यकालपक्षेऽपि तदनुपस्थितिरेव त्रिपादीस्थेऽन्तरङ्गे उचिता । अत एव, विसर्जनीयसूत्रे भाष्ये इमामेव युक्तिमुक्त्वा–'अयुक्तोऽयं परिहारो न वा बहिरङ्गलक्षणत्वा'दित्युक्तम् । एवञ्च तत्रतत्र वचनान्येव कार्याणि, ज्ञापकानुसरणं वा कर्त्तव्यम् । अत एव 'निगाल्यते' इत्यादौ लत्वाद्यर्थं 'तस्य दोष' इति वचनमेवारब्धम्, अन्यथाऽन्तरङ्गत्वाण्णिलोपात्पूर्वं वैकल्पिकलत्वे–चक्यत्र मापवपनीत्यादौ बहिरङ्गासिद्धत्वेन च सिद्धे तद्वैयर्थ्यं स्पष्टमेव । यत्तु लक्ष्यानुरोधात्कार्यकालपक्षे उपस्थितयाऽन्तरङ्गपरिभाषयाऽऽनुमानिकया प्रत्यक्षसिद्धस्यापि 'पूर्वत्रे'त्यस्य बाध इति, तन्न लक्षणैकचक्षुषामादरणीयम् । अत एव 'उर'ण्णिति सूत्रे–'रेफस्य पूर्वान्तवत्त्वे विसर्जनीयप्रतिषेधो वक्तव्यो–नार्कुटाद्यर्थ'मित्युक्तं भाष्ये इति दिक् ।

**उपसर्गेणैवेति** । तत्सञ्ज्ञायाः क्रियायोगनिमित्तत्वादित्यर्थः । यदर्थे क्रियारूपे प्रादीनामन्वयस्तं प्रत्येवोपसर्गत्वमिति भावः । प्रकृते च प्रत्यासत्त्या ऋकारादिनिमित्तोपसर्गग्रहणात्प्रगतः ऋद्धः–प्रर्द्ध इत्यत्र न । **पुनरिति** । प्रकृतसूत्रे भाष्ये स्फुटमेतत् ॥ **सुब्धाताविति** । सुबन्तप्रकृतिके

वृद्धिर्वा स्यात् । 'आपिशलि'ग्रहणं पूजार्थम् । प्रार्षभीयति । प्रर्षभीयति । सावर्ण्याल्लृवर्णस्य ग्रहणम् । प्राल्कारीयति । प्रल्कारीयति । तपरत्वाद्दीर्घे न,—उपऋकारीयति । उपर्कारीयति ॥

**एङि पररूपम्** ।६।१।९४। आदुपसर्गादेङादौ धातौ परे पररूपमेकादेशः स्यात् । प्रेजते । उपोषति । इह 'वा सुपी'त्यनुवर्त्य वाक्यभेदेन व्याख्येयम् । तेन एङादौ सुब्धातौ वा । उपेडकीयति । उपैडकीयति । प्रोर्घायति । प्रौर्घायति ॥

❀ **एवे चाऽनियोगे** ॥ नियोगोऽवधारणम् । क्वेव भोक्ष्यसे ? । अनवक्लृप्तावेवशब्दः । अनियोगे किम् ? । तवैव ॥

---

'ऋज गतौ' इत्यादीनां क्विपि धातुत्वं सुबन्तत्वं च संभवति, तथापि न तादृशेषु तपरत्वव्यावर्त्यत्वं प्रसिद्धं, नामधातुष्वेव तत्संभवतीति त एवेह गृह्यन्ते इति भावः । **प्रार्षभीयतीति** । 'शरोऽची'ति वक्ष्यमाणेन द्वित्वनिषेधः ॥

**एङि पररूपम्** । 'एङो'ङित्येव सिद्धे 'पर'ग्रहणमुत्तरार्थम् । 'रूप'ग्रहणं तु स्पष्टार्थम्, अमि पूर्ववदेङि पर इत्येव सिद्धेः । **प्रेजत इति** । 'एजृ दीप्तौ' । कम्पनार्थस्तु परस्मैपदी,—प्रेजति । **नियोगोऽवधारणमिति** । निर्धारणमित्यर्थः । तदुक्तम्—'अनवक्लृप्तौ यदा दृष्टः पररूपस्य गोचरः । एवस्तु विषयो वृद्धेर्नियमेऽयं यदा भवेत् ।' इति । अस्यार्थः—अनवक्लृप्तौ अनिश्चये यदा एवकारो दृष्टः सः पररूपस्य विषयः । यस्तु नियमे निर्धारणे यदा दृष्टः स वृद्धिविषय इति । ये तु नियोगे त्वद्यैव गच्छेति प्राचो ग्रन्थे स्थितस्य प्रत्युदाहरणस्यानुगुणतया 'नियोजनं नियोगो व्यापार' इति व्याचक्षते, तेषां 'यदैव पूर्वं ज्वलने शरीरं' 'ममैव जन्मान्तरपातकाना'मिति लौकिकप्रयोगाः, 'तपस्तपःकर्मकस्यैव' 'लङः शाकटायनस्यैवे'त्यादिसौत्रप्रयोगाश्च न सिध्येयुः ।

---

धातावित्यर्थः । तुल्यास्यसूत्रे उपार्कारीयतीत्यादेरेतदुदाहरणत्वस्य भाष्ये उक्तत्वात् । शास्त्रे सुबन्तस्य धातुप्रकृतित्वेनोक्ततया—'तत्प्रकृतिके' इति व्याख्यानमेवोचितम् । ऋषभस्य समीपमुपर्षभं, तदिच्छति—उपर्षभीयतीत्यत्र तु न वृद्धिः,'उपे'त्यस्यानुपसर्गत्वात् । अत्रापि धातावित्यनुवर्त्य वाक्यभेदेन व्याख्येयं, तेन सुब्धातावपि न प्रकृतिभावः । **प्रार्षभीयतीति** । अत्र 'शरोऽची'त्यस्यानुपन्यासेन व्यञ्जनात्परस्यैकस्यानेकस्य वोच्चारणे विशेषाभावेन 'अचो रहाभ्या'मित्यस्य तन्निषेधस्य चानावश्यकता सूचिता ।

**वाक्यभेदेनेति** । इदं वृत्तौ स्पष्टं, भाष्ये तु न दृश्यते । 'एवे चे'तिवार्त्तिकं सूत्रे धातोरननुवृत्तेरारब्धम् । **अवधारणं**—नियमः । एवशब्दस्य द्योत्यमर्थद्वयं अवधारणमसम्भवरूपानवक्लृप्त्यादि च, तयोरन्त्योऽत्र एवशब्दार्थ इत्यभिप्रेत्याह—**अनक्लृप्तावेवेति** । 'क्वेव भोक्ष्यसे' ? इत्युक्तेः—'स्थलसङ्कीर्णत्वात्क्वचिदपि नास्ति सम्भवस्तव भोजनस्ये'ति गम्यते ॥

**अचोऽन्त्यादि टि ।१।१।६४।** अचां मध्ये योऽन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यात् ॥ ❀ **शकन्ध्वादिषु पररूपं वाच्यम्** ॥ तच्च टेः ॥ शकन्धुः । कर्कन्धुः । कुलटा । **सीमन्तः केशवेशे** ॥ सीमान्तोऽन्यः । मनीषा । हलीषा । लाङ्गलीषा । पतञ्जलिः। ❀ **सारङ्गः पशुपक्षिणोः** ❀। साराङ्गोऽन्यः। आकृतिगणोऽयम्॥ मार्तण्डः॥ ❀ **ओत्वोष्ठयोः समासे वा** ॥ स्थूलोतुः । स्थूलौतुः । बिम्बोष्ठः । बिम्बौष्ठः । समासे किम् ?। तवौष्ठः ।

---

उदाहृतवृत्तिश्लोकविरोधश्च स्यात् । 'अवधारण'मिति व्याकुर्वतां तु सर्वेष्टसिद्धिः ॥

**अचोऽन्त्यादि टि ।** 'अच' इति निर्धारणे षष्ठी । जातावेकवचनं, तदाह— **अचां मध्य इति । शकन्ध्वादिष्विति ।** शकन्ध्वादिविषये तत्सिद्ध्यनुगुणं पररूपं वाच्यमित्यर्थः । अतएवाह—**तच्च टेरिति ।** यदि तु 'आ'दित्यधिकारादकारस्यैवेष्येत तर्हि मनीषा पतञ्जलिरिति न सिध्येत्। केचित्तु मनःपतच्छब्दयोः पृषोदरादित्वादन्त्य-लोपे आकारस्यैव पररूपमाहुः। शकानां देशविशेषाणामन्धुः कूपः। कर्काणां राजविशेषाणामन्धुः कर्कन्धुः । अटतीत्यटा । पचाद्यचि टाप् । कुलस्य अटा कुलटा । यदि तु कुलमटतीति विगृह्यते तदा कर्मण्यणि ङीपि 'कुलाटी'ति स्यात् । 'ईष उञ्छे' । 'ईष गत्यादिषु' । आभ्यां 'गुरोश्च हलः' इत्यप्रत्यये ईषा । मनस ईषा मनीषा । हलस्य ईषा हलीषा । ईषा—लाङ्गलदण्डः । पतन्तः अञ्जलयोऽस्मिन्नमस्कार्यत्वादिति पतञ्जलिः । **मार्तण्ड इति ।** पररूपेणानेन 'मृतण्ड' इति सिद्धे तत अण्यादिवृद्धिः। 'परा मार्ताण्ड-मास्थत्' 'पुनर्मार्ताण्डमाभरत्' इत्यादिषु तु दीर्घश्छान्दस इति भावः। केचिदत्र सवर्णदीर्घमेवाहुः । पूर्वोक्तवैदिकप्रयोगास्तेषामनुकूलाः । **ओत्वोष्ठयोरिति ।**

---

**अचोऽन्त्या ।** 'अच' इति निर्धारणे षष्ठी । अन्ते भवोऽन्त्यः। 'अन्त्यादी'ति गमकत्वाद्बहुव्रीहिः। **मार्तण्ड इति ।** मृतण्डादागतो—मार्तण्डः। अण्विषये एव पररूपम् । ननु मार्त्तशब्दान्त्याच्तकाराकारः, स आदिर्यस्येत्यन्यपदार्थो दुर्लभ इति चेन्न; एकस्मिन्नेव समुदायरूपत्वारोपेण तदवयवत्वारोपेण च तदुपपत्तेः। एतन्मूलकमेव 'व्यपदेशिवदेकस्मि'न्निति पठ्यते इत्यलम्। वस्तुत आरोपस्य नात्रोपयोगः, 'शब्द-ज्ञानानुपाती वस्तुशून्यो विकल्प' इति पतञ्जल्युक्तेरर्थाभावेऽपि विकल्पात्मकं ज्ञानमत्र, तदपि लक्ष्या-नुरोधाच्च स्वप्रवृत्त्युपयोगीति बोद्धव्यम् । 'पतञ्जलि'रिति तु—अञ्जलेः पतित इति विग्रहे मयूरव्यंस-कादित्वात्समासे तत्रैव निपातनादिकशब्दस्य लोपे पृषोदरादित्वाद्वा तल्लोपे साधु । गोनर्ददेशे कस्य चिदृषेरञ्जलेः सन्ध्याकरणसमये पतित इत्यैतिह्यात् ॥

**ओत्वोष्ठयोः ।** अत्र समर्थपरिभाषा नोपतिष्ठते, 'समासेऽङ्गुलेः सङ्ग' इत्यादौ समासग्रहणेन 'पदविधि'रिति सूत्रस्वरसेन, भाष्यादिस्वारस्येन च पदत्वेन सुबन्तत्वेन वा यत्र कार्यमुद्देश्यता तत्रै-

**ओमाङोश्च** ।६।१।९५। ओमि आङि चाऽत्परे पररूपमेकादेशः स्यात् । शिवायोंनमः । शिव एहि । शिवेहि ॥

**अव्यक्तानुकरणस्यात इतौ** ।६।१।९८। ध्वनेरनुकरणस्य योऽच्छब्दस्तस्मादितौ परे पररूपमेकादेशः स्यात् । पटत् इति । पटिति ॥ ※ **एकाचो न**। श्रदिति ॥

**नाऽऽम्रेडितस्यान्त्यस्य तु वा** ।६।१।९९। आम्रेडितस्य प्रागुक्तं न स्यादन्त्यस्य तु

---

अकारस्य ओत्वोष्ठयोश्च एकत्र समासे स्थितौ सत्यामिदं प्रवर्तते । तेनेह न,—'वृषलसुतौष्ठव्रणस्ते' इति । **शिवेहीति** । ननु 'शिव आ इही'त्यत्र सवर्णदीर्घे कृते पश्चादाद्गुणे च सिद्धमिष्टं तत्किमाङ्ग्रहणेन ?। सत्यम् । 'पूर्वं धातुरुपसर्गेण युज्यते' इति दर्शनेन 'धातूपसर्गयोः कार्यमन्तरङ्ग'मिति पूर्वं गुणे कृते वृद्धिः स्यात्, तन्मा भूदित्याङ्ग्रहणम् ।

**अव्यक्तानुकरणस्यात इतौ**। यद्यपि 'अतो गुणे' इति पूर्वसूत्रादत इत्यनुवर्त्याऽतो ग्रहणमिह त्यक्तुं शक्यं, तथापि पूर्वसूत्रे 'अत' इति तपरकरणाद्ध्रस्वाकारस्य ग्रहणमिह तु शब्दाधिकारपक्षाश्रयणादच्छब्दस्य ग्रहणमिति व्याख्याने क्लेशः स्यादिति पुनरत्राऽतो ग्रहणं कृतम् । 'अव्यक्त'शब्दं व्याचष्टे—**ध्वनेरिति** । **अनुकरणस्येति** । परिस्फुटाकारादिवर्णस्येति भावः । तस्य चानुकरणत्वं किंचित्साम्येन बोध्यम् । पररूपस्याऽस्य नित्यत्वेऽपि संहितायामविवक्षितायां तदभावादाह—**पटदिति** ।

---

वैतत्परिभाषाप्रवृत्तिस्वीकारात् । ओत्वोष्ठादिमात्रस्य पदत्वाभावात् । अवर्णादोत्वोष्ठयोरचि तद्घटितसमासे इत्यर्थाद्'दन्त्योष्ठ्यो वः स्मृत' इतिप्रयोगसिद्धिः । अन्यथा प्रत्यासत्त्योत्वाद्युत्तरपदकसमास एव प्रवृत्त्यापत्तौ तदसङ्गतिः स्पष्टैव । **ओतु**र्बिडालः ॥

**ओमाङो** । अत्र 'एङी'ति नानुवर्त्तते, तेनेपदर्थकाऽऽङा सह ऋषभशब्दस्य समासेऽर्थ—अर्षभ इत्यत्र पररूपेऽर्षभसिद्धिः । न चात्र परत्वाद्दीर्घप्रसङ्गः, प्रतिपदविधित्वञ्च निरवकाशत्वे सत्येव बाधकत्वे प्रयोजकमिदञ्च मध्येऽपवादन्यायेनावेहीत्यादौ वृद्धेरेव बाधकं स्यादिति वाच्यम्; लक्ष्यानुरोधेनात्र बाध्यसामान्यचिन्ताश्रयणात् । अन्यत्र प्रतिपदविधित्वस्य बलवत्त्वे प्रयोजकतादर्शनेन परदीर्घात्पूर्वं पररूपप्रवृत्तेश्च । अव्यक्तशब्दार्थो—**ध्वनेरिति** । अविद्यमानकत्वादिशब्दस्येत्यर्थः । तस्य चाऽच्छब्दोऽनुकरणे एव सम्भवतीत्याह—**अनुकरणस्येति** । अत्राऽलोन्त्यस्येति न प्रवर्त्तते, 'नानर्थके' इति निषेधात्, 'आम्रेडितस्य वे'ति वक्तव्ये 'नाम्रेडितस्ये'त्यारम्भाद्वा । अत् इति किं ? वदृगिति ॥

**नाम्रेडित** । 'अव्यक्तानुकरणस्ये'ति, 'अत' इति च वर्त्तते । अव्यक्तानुकरणावयवभूताम्रेडितावयवाऽच्छब्दस्येत्यर्थः । 'नाम्रेडितस्य तस्तु वे'ति न सूत्रितं वैचित्र्यार्थम् । फलकल्पितभिन्नविशस्तु न युक्तो, भाष्याऽनुक्तेः । अत एव 'तदधीते तद्वेदे'ति सूत्रे द्विस्तद्ग्रहणं प्रमादकृतमाचार्यस्ये'ति भाष्ये उक्तम् । 'लाघवानवधानलक्षणोऽत्र प्रमाद' इति **कैयटः** । 'क्व तदवधानं ? क्व तदनवधान'मिति तु—भाष्यकृदप्रयोजने तदवधानमन्यत्राऽन्यदिति निर्णयम् ।

तकारमात्रस्य वा स्यात् ॥ 'डाचि बहुलं द्वे भवत'इति बहुलवचनाद्द्वित्वम् ॥

**तस्य परमाम्रेडितम्** ।८।१।२। द्विरुक्तस्य परं रूपमाम्रेडितसंज्ञं स्यात् । पटत्पटेति ॥

**झलां जशोऽन्ते** ।८।२।३९। पदान्ते झलां जशः स्युः । पटत्पटदिति ॥

**अकः सवर्णे दीर्घः** ।६।१।१०१। अकः सवर्णेऽचि परे दीर्घ एकादेशः स्यात् । दैत्यारिः । श्रीशः । विष्णूदयः । अचि किम् ? । कुमारी शेते । 'नाज्झला'विति

---

**नाज्झलावित्यादि** । अयं भावः—विधेयभेदे वाक्यभेदात्संभवन्त्यामेकवाक्यतायां तदयोगात् 'तुल्यास्यप्रयत्न'मित्यस्य 'नाज्झलौ' इत्यस्य च एकवाक्यत्वलाभाय 'अज्झल्भिन्नं तुल्यास्यप्रयत्नं सवर्ण'मित्यर्थोऽभ्युपेयते । 'अज्झल्भिन्न'मित्यत्र परस्परनिरूपिततुल्यत्वविशिष्टास्यप्रयत्नकौ यावज्झलौ तदुभयभिन्नत्वं विवक्षितम् । तथाच 'यो ह्रस्वदीर्घाद्यात्मको वर्णो येन वर्णेन तादृशेन तुल्यास्यप्रयत्नस्तदुभयं मिथः सवर्णं भवति' । तथा 'येन हला तुल्यास्यप्रयत्नकं यद्धल् तदुभयं मिथः सवर्णं स्यात्', 'यश्च दीर्घप्लुतात्मको वर्णो येन हला तुल्यास्यप्रयत्नस्तदुभयमपि मिथः सवर्ण'मित्यर्थः फलितः । ततश्चानेन सूत्रद्वयेन सवर्णसंज्ञायां सिद्धायाम् 'अणुदित्सवर्णस्ये'ति ग्राहकशास्त्रं प्रवर्तते, नतु ततः प्राक् । अतो 'नाज्झलौ' इत्यनेन आक्षरसमाम्नायिकानामेव सावर्ण्यं व्युदस्यते, नतु सर्वेषाम् । तेनात्र दीर्घशकारयोः सावर्ण्यमस्त्येवेति तद्वारणाय 'अकः सवर्णे' इत्यत्राऽचीत्यनुवर्तनं युक्तमिति । यदा तूष्मणामीषद्विवृतत्वं परिकल्प्य 'नाज्झलौ' इति सूत्रं प्रत्याख्यायते, तदेह सवर्णसूत्रे 'अची'ति नानुवर्तनीयम् । 'हे पिपा३सो' इत्यादौ 'गुरोरनृतः—' इत्याकारस्य प्लुते कृते ततः परस्य सस्य इणः परत्वेन षत्वं स्यात्, 'नाज्झलौ' इत्यत्राकारप्रश्लेषेण दीर्घहकारयोः सावर्ण्याभावेऽपि प्लुताकारस्य हकारसवर्णत्वेनेण्त्वादित्याशङ्क्य तत्समाधानार्थमाश्च आश्चेति द्वन्द्वं कृत्वा सवर्णदीर्घेण दीर्घात्परत्र प्लुतोऽपि प्रश्लिष्यत इति क्लिष्टव्याख्यानमपि नाश्रयणीयम् । विश्वपाभिरित्यादौ ढत्वादेरप्यप्रसक्तिः । स्वराणामूष्मणां च प्रयत्नभेदेन सावर्ण्याभावादिति सुगमोऽयं पन्थाः ।

---

ननु डाच्यसत्यपि द्वित्वं तदप्राप्तिरत आह—बहुलवचनादिति ॥

**तस्य परम्** । अवयववाचिपरशब्दयोगेऽत एव ज्ञापकात्षष्ठी । 'तस्य'ग्रहणं स्पष्टार्थं, 'द्वे' इत्यनुवर्त्य षष्ठ्या विपरिणामेन सिद्धेः । अन्यद्विरुक्तपरस्य तु न सञ्ज्ञा, अष्टमे 'सर्वस्ये'त्येतत्प्रकरणे सञ्ज्ञाकरणात् ॥

**झलाञ्ज** । 'अन्त'ग्रहणं 'झलां'ति निवृत्त्यर्थम् । सर्वोपकारकतया त्र प्रकरणान्तेऽस्य लेखः । एतेन 'श्र'दित्यत्रैव लेख उचित इत्यपास्तम् ॥ अज्झलोः सावर्ण्यनिषेधादाह—अचि किमिति ।

सावर्ण्यनिषेधस्तु न दीर्घशकारयोः, ग्रहणकशास्त्रस्य सावर्ण्यविधिनिषेधाभ्यां प्रागनिष्पत्तेः। अकः किम्? हरये॥ 'अकोऽकि दीर्घं' इत्येव सुवचम्॥ ॐ **ऋति सवर्णे ऋ वा।** होतृकारः। होतृकारः॥ ॐ **लृति सवर्णे लृ वा॥** होत्लृकारः। पक्षे ऋकारः सावर्ण्यात्। होतृकारः। 'ऋति ऋ वा' 'लृति लृ वे'त्युभयत्रापि विधेयं वर्णद्वयं द्विमात्रम्। आद्यस्य मध्ये द्वौ रेफौ तयोरेका मात्रा। अभितो-

---

**अकोऽकीत्येवेति।** 'अकोऽकि दीर्घः' इत्येवेत्यर्थः। **सुवचमिति।** यथासङ्ख्यसंबन्धेन 'दध्यत्रे'त्यादावतिप्रसङ्गाऽभावात्। 'ऋ'इति त्रिंशतः संज्ञेत्युक्तत्वात् 'होतृ-लृकार' इत्यत्र ऋकारस्य ऋकारपरत्वमस्त्येवेत्यप्रसंज्ञाभावादीकारशकारयोः सावर्ण्ये सत्यप्यचीत्यनुवर्तनं विनैव समीहितरूपसिद्धेश्चेति भावः। 'ऋति ऋ वा' 'लृति लृ वे'ति वार्तिकं सूत्रस्थेन सवर्णपदेन योजयित्वा पठति—**ऋति सवर्ण इत्यादि।** नन्वेवम् 'अकः सवर्णे—' इति सवर्णपदाऽकरणे वार्तिकयोः सवर्णग्रहणं कर्तव्यम्। सूत्रे तु 'अकोऽकी'ति कर्तव्यमिति विपरीतगौरवात्कथम् 'अकोऽकीत्येव सुवच'मित्युक्तमिति चेदत्राहुः—भाष्यकारैरेतद्वार्तिकद्वयस्य प्रत्याख्यानान्नास्त्येव गौरवमिति। प्रत्याख्याने तूपपत्तिः लृकारान्तेषु विचारयिष्यते। **वर्णद्वयं द्विमात्रमिति।** एतेन 'दीर्घे प्राप्ते ह्रस्वऋकारो ह्रस्वलृकारश्च विधीयते' इति प्राचो व्याख्यानमाकरविरुद्धमिति ध्वनितम्॥

---

**अनिष्पत्तेरिति।** 'नाज्झला'विति सूत्रविषयनिर्णयेऽपवादविषयपरिहारेण तत्तद्वर्णीयसवर्णपदवाच्यनिर्णयोत्तरं तावतां ग्रहणस्य ग्रहणकशास्त्रबोद्ध्यतया एतद्बोधकाले ग्रहणकशास्त्रस्य तावद्ग्रहणबोधकत्वाऽनिष्पत्तेरित्यर्थः। सूत्रस्थ'सवर्ण'पदानुवृत्तिमभिप्रेत्याह—**ऋति सवर्ण इति।** तत्फलं दध्यृकारादावेतदप्रवृत्तिः। एतद्विधेययोरइउण्सूत्रानन्तरं पाठादच्त्वं, तेन तयोः स्थाने प्लुतसिद्धिः। तयोश्च न रपरत्वम्। **द्विमात्रमिति।** अत एव 'अकः सवर्णे' इत्यनेनैव ऋकारद्वयस्य स्थाने रेफद्वयवत्तारूपगुणकृतान्तर्येण कदाचिद्रेफद्वयगर्भस्य, विवृतत्वान्तर्येण कदाचिद्विवृतस्य, लृकारे लकारवत्तान्तर्येण कदाचिद्विलकारस्य, कदाचिद्विवृतत्वसाम्येन रेफवत्तासाम्येन च तादृशस्य ऋकारस्य सिद्ध्या विकल्पफलसिद्धिमाश्रित्यैतद्वचनद्वयं 'तुल्यास्ये'ति सूत्रे भाष्ये प्रत्याख्यातम्। **द्वौ रेफाविति।** अत्रापि तदेव भाष्यं मानम्। द्विरेफत्वे हि रेफद्वयवति स्थानिन्ययं, लकारवत्यपर इति व्यवस्था सिद्ध्यति।

**अभित इति।** 'द्वौ रेफा'वित्यनुपज्यते, तच्च द्वितीयान्तम्, अभितः सद्योगात्। एङ्सूत्रे भाष्ये 'मातृणा'मित्यादौ णत्वादिसिद्ध्यर्थमवश्यमङ्गीकर्त्तव्ये 'वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते' इति पक्षे—'प्रलृय' 'खट्वाभिर्वाचा तरंते'त्यादौ तुगैस्थ्यज्लक्षणठानां शङ्कायां, 'दीर्घा'दिति तुग्विधानसामर्थ्य—तपरकरणसामर्थ्य—'नौद्व्यच'इति सूत्रस्थ'नौ'ग्रहणसामर्थ्य भेदेनाऽप्रतिभासमानेषु वर्णावयवेषु अवयवसदृशस्वतन्त्रवर्णाश्रयकार्याभावज्ञापनरूपसमाधानस्य च करणवत्—'प्रातरत्र'मित्यत्र 'रोरी'त्यस्य 'तद्कार' इत्यादौ 'तोर्ली'त्यस्य च शङ्कासमाधानाकरणेन 'यत्तद्रेफात्परं भक्ते'रिति हयवरट्सूत्रस्थ-

ऽज्भक्तेरपरा। द्वितीयस्य तु मध्ये द्वौ लकारौ। शेषं प्राग्वत्। इहोभयत्रापि 'ऋत्यकः' इति पाक्षिकः प्रकृतिभावो वक्ष्यते॥

**एङः पदान्तादति** ।६।१।१०९। पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात्। हरेऽत्र। विष्णोऽत्र॥ **सर्वत्र विभाषा गोः** ।६।१।१२२। लोके वेदे चैङन्तस्य गोरति वा प्रकृतिभावः स्यात्पदान्ते। गोअग्रम्। गोऽग्रम्। एङन्तस्य किम्?। चित्रग्वग्रम्। पदान्ते किम्?। गोः॥

---

**एङः पदान्तादति**। अयमोरपवादः। 'ङसिङसोश्चे'त्यस्यारम्भादस्य पदान्तविषयत्वे लब्धे उत्तरार्थं पदान्तादिति स्पष्टप्रतिपत्तये इहैव कृतमिति मनोरमायां स्थितम्। केचित्तु 'पदान्ता'दित्येतदिहाप्यावश्यकमेव, अन्यथाऽपदान्तादपि स्यात्। 'ङसिङसोश्चे'ति सूत्रं तु 'सुप्सम्बन्धिन्यपि परतः पूर्वरूपं चेन्ङसिङसोरेवाति परे' इति नियमार्थं स्यात्। तत्फलं तु हरयः गुरवः, इः स्मृतो यैस्ते स्मृतय इत्यादौ पूर्वरूपाऽप्रवृत्तिरित्याहुः। एङः किम्?। दध्यत्र। पदान्तात्किम्?, चयनम्। लवनम्। अचिनवम्। अति किम्?, हरेयिह। विष्णविह। तपरः किम्?, वायवायाहि॥

**सर्वत्र विभाषा**। यद्यपीह 'छन्दसि' इति न प्रकृतम्, तथापि 'यजुष्युरः' इत्यादिप्रक्रमाच्छन्दस्येव संभाव्येत। अतः 'सर्वत्रे'त्युक्तम्। तद्याचष्टे—**लोके वेदे चेति**। इह 'एङ' इत्यनुवर्त्य 'एङन्तस्य गो'रिति व्याख्येयम्। तेनेह न—चित्रग्वग्रम्। **प्रकृतिभाव इति**। एतच्च 'प्रकृत्यान्तःपाद'मिति सूत्रात्प्रकृत्येत्यनुवृत्त्या लभ्यते। 'नान्तःपाद'मिति पाठे तु 'सर्वत्र विभाषे'ति सूत्रेण पूर्वरूपमेव विभाषा निषिध्यत

---

भाष्येण च ऋलक्सूत्रस्थयोरर्धमात्राऽभ्भागस्याभितः क्लृप्तत्वेन तथैवोचितत्वादिति भावः। **द्वौ लकाराविति**। हल्द्वयवत्पूर्वसाहचर्यादिति भावः। अत्र ह्रस्वऋकारद्वयस्थानिकैकादेशे एव पूर्वस्य साधुत्वं, ह्रस्वऋकारलृकारस्थानिकैकादेशे एवोत्तरस्य साधुत्वम्। अत एव लृति न ऋकारो नाप्यृति लृकारः। अत एव वार्तिके 'ॠती'ति तपरकरणमुत्तरवार्तिके 'लृती'ति च चरितार्थम्। तुल्यास्यसूत्रे भाष्ये 'यदि नदृतीति एतद्वृत्त इति वक्ष्यामीत्येतत्, वचनाश्रयणेन ऋलृवर्णयोः सावर्ण्यं न कार्य'मिति च सङ्गच्छते। उप। श्रितद्वितीयप्रयत्नत्यागे मानाभावादीषत्स्पृष्टाविमौ। विवृतत्वे हि विवृतऋकारलृकाराभ्यामन्योरपि ग्रहणे 'ऽकः सवर्णे' इत्यनेनैव सिद्धे वार्त्तिकस्यैव वैयर्थ्यापत्तेः॥

**एङः प**। पदान्तात्किम्?, भवति॥

**सर्वत्र वि**। 'प्रकृत्याऽन्तः' इति सूत्रात्प्रकृत्येत्यनुवर्त्तते। 'प्रकृति'शब्दोऽत्र स्वभाववाची, 'दुस्त्यजा प्रकृति'रित्यादौ तथा दर्शनात्। प्रकृत्या स्वभावेनावस्थानमित्यर्थः। अत एव प्रकृतिभावे न पूर्वरूपं, नाप्ययादय इति भावः। 'नान्तः पाद'मिति पाठे तत्तेन सूत्रेण 'एङन्तस्य यत्प्राप्तं तन्ने'ति

**अवङ् स्फोटायनस्य** ।६।१।१२३। 'अती'ति निवृत्तम् । अचि परे पदान्ते गोरवङ् वा स्यात् । गवाग्रम् । पदान्ते किम् ? गवि । व्यवस्थितविभाषया गवाक्षः ॥

**इन्द्रे च** ।६।१।१२४। गोरवङ् स्यादिन्द्रे । गवेन्द्रः ॥

---

इत्यवधेयम् । निषेधविकल्पे विधिविकल्पः फलित इत्याशयेन पूर्वरूपमेव विकल्प्यत इति मनोरमायां स्थितम् ॥

**अवङ् स्फोटायनस्य** । स्फोटोऽयनं परायणं यस्य सः स्फोटप्रतिपादनपरो वैयाकरणः । तस्य स्फोटायनस्य । अत्रापि 'एङन्तस्य गो'रिति व्याख्येयम् । 'अ'गित्येव सूत्रयितुमुचितम् । विभाषानुवृत्तेः स्फोटायनग्रहणं पूजार्थम् । **अतीति निवृत्तमिति** । अन्यथा 'गवेशः' 'गवोद्धः' इत्यादि न सिध्येदिति भावः । **अचि पर इति** । अत्रा'चीत्यनुवर्तते, अतीति तु निवृत्त'मित्यत्र व्याख्यानमेव शरणम् ।

**गवाक्ष इति** । गवां किरणानाम् अक्षीवेति विग्रहः । 'अक्ष्णोऽदर्शना'दित्यच्समासान्तः । वातायने रूढोऽयम् । पुंस्त्वं लोकात् ॥

**इन्द्रे च** । आरम्भसामर्थ्यान्नित्यमिदम् । इदं च सूत्रं त्यक्तुं शक्यम् । अन्यार्थं स्वीकृतेन व्यवस्थितविभाषाश्रयणेनैवेष्टसिद्धेरित्याहुः ॥

---

व्याख्यानेन-'नान्तः पाद' मित्यनेनैव पूर्वरूपत्वादिकं विकल्पेन निषिद्ध्यत इति बोद्धयम् ॥

**अवङ्** । स्फोटोऽयनं यस्य सः । स्फोटप्रतिपादक इत्यर्थः । 'स्फौटायनस्ये'ति पाठे नडादित्वं कल्प्यम् । स्फोटायनोऽवङः स्मर्त्ता, अन्यस्तु तदभावस्येति स्मृत्यन्तरानुसन्धानद्वारेणाऽत्र विकल्पो बोद्धयः । **निवृत्तमिति** । अतएव'इन्द्रे इति सामर्थ्यान्नित्य'मिति भाष्यादावुक्तम् । **गवाग्रमिति** । सन्निपातपरिभाषाया अनित्यत्वाद्दीर्घ इति बोद्धयम् । **व्यवस्थितेति** । **'देवत्रातो गलो ग्राह इतियोगे च सद्विधिः। मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः'** ॥

तेन 'प्राण्यवयवे ने'ति 'शाच्छो'रिति सूत्रे भाष्ये स्पष्टम् । 'अग्नीत्प्रेषणे' इति सूत्रे 'अग्नीदग्नीन्विहरे'त्यत्र एतद्व्यावृत्त्यर्थं वार्तिककृद्बहुलग्रहणघटितं न्यासं कृतवान् । तत्प्रत्याख्यानाय भाष्ये कृतेन विभाषेति योगविभागेन विभाषेत्यस्य व्यवस्थितविभाषात्वं ध्वनितम् । तथा 'अजेर्व्यघञपोरिति च व्यवस्थितविभाषे'ति 'अजेर्वी'तिसूत्रे भाष्ये स्पष्टम् । न च व्यवस्थितविभाषयेन्द्रे नित्याऽवङ् सिद्धे 'इन्द्रे चे'ति व्यर्थमिति वाच्यं, भाष्योक्तातिरिक्तव्यवस्थितविभाषाणामप्रामाणिकत्वज्ञापनार्थं तत्सत्त्वादित्याहुः ॥ **इन्द्रे च** । क चिद्भाष्यपुस्तके 'च'शब्दरहितः पाठः। इन्द्रावयवेऽचीत्यर्थः। तेन षष्ठीतत्पुरुषोत्तरपदषष्ठीतत्पुरुषे 'गवेन्द्रयज्ञ' इत्यादाववङ्सिद्धिः । अन्यथा वाक्ये गोशब्दस्येन्द्रपरत्वाऽसम्भवेन समासाक्षेपादिन्द्रशब्दस्योत्तरपदत्व एव प्रवृत्तिः स्यात्॥ 'प्लुतप्रगृह्या' इत्यस्य 'प्रकृत्ये'ति पाठे एव साम-

# अथ प्रकृतिभावः ।

**प्लुतप्रगृह्या अचि नित्यम्** ।६।१।१२५। प्लुताः प्रगृह्याश्च वक्ष्यन्ते तेऽचि परे नित्यं प्रकृत्या स्युः । एहि कृष्ण ३ अत्र गौश्चरति । हरी एतौ । नित्यमिति किम् ?। हरी एताविल्यादावयमेव प्रकृतिभावो यथा स्या'दिकोऽसवर्णे'इति ह्रस्वसमुच्चितो माभूत् ॥

'प्लुतप्रगृह्याः–' इति सूत्रादव्यवहितपूर्वः '**अथ प्रकृतिभावः**' इति पाठो मूलपुस्तकेषु प्रायेण दृश्यते स चाऽपपाठ एव । 'सर्वत्र विभाषा गोः' इति प्रकृतिभावस्य प्रागेवारब्धत्वादित्येके । अन्ये तु 'अवङ् स्फोटायनस्य' 'इन्द्रे च'ेति सूत्रद्वयं प्रकृतिभावप्रकरणे पठितमपि तद्बहिर्भूतमित्यवश्यं वक्तव्यं, ताभ्यां तदविधानात् । न च 'अवङ्'सूत्रस्य प्रकृतिभावापवादत्वेनोत्सर्गापवादरूपत्वात्तत्प्रकरणस्थत्वं सूपपादमित्यवङादेशानुवृत्त्यर्थं तदनन्तरं पठितस्य 'इन्द्रे च'ेति सूत्रस्यापीति वाच्यम् ; पूर्वरूपापवादत्वस्यापि 'अवङ्'सूत्रस्य सुवचत्वात् । एतत्प्रकरणपाठस्य गोशब्दानुवृत्त्यर्थतया चरितार्थत्वात् । एवं च स्वाख्यप्रकृतिभावप्रकरणाद्बहिस्तत्सूत्रद्वयं लिखितं, तदनुकूलत्वेन 'सर्वत्र विभाषे'ति सूत्रमपि तत्रैवेति स्थितस्य गतिर्बोध्येत्याहुः ॥

**प्लुतप्रगृह्याः** । प्रकृतिभावं प्रति प्लुतो नाऽसिद्धः, प्लुतमनूद्य प्रकृतिभावविधानसामर्थ्यात् । अचि किम् ? , 'जानु उ जानू' । उञः प्रगृह्यत्वेऽपीह सवर्णदीर्घः । 'अची'त्यनुवर्तमाने पुनरचिग्रहणमादेशनिमित्ते एवाऽचि प्रकृतिभावः । तेन इहाप्येकादेशः स्यादेव–'जानु उ अस्य रुजति', 'जानू अस्य रुजति' । इह 'मय उञः'इति पाक्षिके वकारे तु 'जान्वस्य रुजति' । **एहि कृष्णेति** । 'दूराद्धूते च'ेति प्लुतः । प्राचा तु–'कृष्ण ३ एही'ति उदाहृतम् । तदसत् । 'वाक्यस्य टेः–' इत्यधिकारात् ।

**ह्रस्वसमुच्चितो मा भूदिति** । अयं भावः–'हरी ईशा'वित्यादौ 'प्लुतप्रगृह्याः–'

अस्यम्मतवाऽऽह–**अथ प्रकृतीति** । न चैतद्घटकपदार्थज्ञानाय प्रगृह्यत्वादिकथनं पूर्वं युक्तमिति वाच्यम्, 'इन्द्रे च'ेत्यत्र प्राचीनपठितनित्यग्रहणस्य प्रामादिकत्वं बोधयितुं तदव्यवहितमेतत्सूत्रलेखनात् । तत्र नित्यग्रहणे तदव्यवहितोत्तरैतत्सूत्रे तद्वैयर्थ्यं स्पष्टमेवेत्याशयेनाह–**प्लुताः प्रगृह्याश्च वक्ष्यन्ते इति** । 'अची'त्यनुवर्त्तमाने पुनरज्ग्रहणं प्रत्यासत्त्या यत्राच्यनयोः प्रकृतिभावस्तदज्निमित्तककार्यस्यैव तेनाऽभाव इत्यर्थलाभार्थं, तेन 'जानु उ अस्य रुजति'–'जानू अस्ये'त्यादौ सवर्णदीर्घरूपसन्धिर्भवत्येव । **एहि कृष्णेति** । 'दूराद्धूते च'ेति प्लुतः । अत्र प्लुतस्याऽऽश्रयात्सिद्धत्वं बोद्धयम् ।

**नित्यमिति किमिति** । नित्यग्रहणनिवृत्त्यैव तल्लाभ इति प्रश्नः । **मा भूदिति** । नित्यग्रहणसामर्थ्येन पुनर्विधानाद्बाधकविपर्ययेऽप्ययमेवेति भावः ॥

1 'स्याऽप्रामाणिकत्वं' पा० ।

**इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च** ।६।१।१२७। पदान्ता इकोऽसवर्णेऽचि परे प्रकृत्या स्युर्ह्रस्वश्च वा । अत्र ह्रस्वविधिसामर्थ्यादेव प्रकृतिभावे सिद्धे तदनुकर्षणार्थश्चकारो न कर्तव्य इति भाष्ये स्थितम् । चक्रि अत्र । चक्र्यत्र । पदान्ता इति किम् ? । गौर्यौ ॥ ❀ **न समासे** ॥ वाप्यश्वः ॥ ❀ **सिति च** ॥ पार्श्वम् ॥

**ऋत्यकः** ।६।१।१२८। ऋति परेऽकः प्राग्वत् । ब्रह्म ऋषिः । ब्रह्मर्षिः । पदान्ता इत्येव । आर्च्छत् । समासेऽप्ययं प्रकृतिभावः । सप्तऋषीणाम् । सप्तर्षीणाम् ॥

---

इत्येतत्सावकाशम्, 'चक्री अत्रे'त्यत्र तु 'इकोऽसवर्णे-' इति । ततश्च 'हरी एता'वित्यत्र परत्वाद्ध्रस्वसमुचित एव स्यात् । नित्यग्रहणे तु कृते तत्सामर्थ्यात्परमपि बाधत इति ।

**चक्र्यत्रेति** । इह 'स्कोः' इति कलोपो न, यगः कार्यकालपक्षे बहिरङ्गपरिभाषया असिद्धत्वात्, स्थानिवद्भावाच्च । 'पूर्वत्रासिद्धे न स्थानिव'दिति तु नास्ति । 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इति वक्ष्यमाणत्वात् । **पार्श्वमिति** । पर्शूनां समूहः । 'पर्श्वा णस् वक्तव्यः' इति णस् । 'ओर्गुण'स्तु न, 'सिति चे'ति पदत्वस्य भत्वापवादत्वात् ॥

**ऋत्यकः** । **ब्रह्म ऋषिरिति** । ननु 'ऋत्यस्ये'त्येव सूत्रमस्तु । 'दधि ऋच्छती'-त्यादौ 'इकोऽसवर्णे' इत्यनेनैव प्रकृतिभावसिद्धेः । मैवम् । 'होतृ-ऋकार' इत्यत्र प्रकृतिभावार्थमग्ग्रहणस्यावश्यकत्वात् । एतेन 'अकोऽसवर्णे' इत्येवमेव सूत्रमस्त्विति शङ्काया निरवकाश एव, उक्तदोषानिवृत्तेः । सप्तऋषीणामित्यत्र 'न समासे' इति निषेधापत्तेश्च । 'न समासे' इति निषेधवार्तिकं हि 'इकोऽसवर्णे' इति सूत्र एव, न तु 'ऋत्यकः' इत्यत्रेति सिद्धान्तः । अत एवाह-**समासेऽप्ययमिति** । एवं च 'ऋल-

---

**इकोऽसवर्णे** । 'एङ' इत्यतः 'पदान्ता'दित्यनुवृत्तं प्रथमया विपरिणम्यत इत्याह-**पदान्ता इति** । **वेति** । ह्रस्वयणोर्विधानसामर्थ्यात्तु न विकल्पसिद्धिः, अपदान्तादौ यणश्चरितार्थत्वात् । **सामर्थ्यादेवेति** । चेन प्रकृतिभावाकर्षणेऽपि 'ऋत्यक' इत्यत्र चानुकृष्टत्वेन तदसम्बन्ध इति तदर्थं ह्रस्वविधानसामर्थ्यस्याऽऽवश्यकत्वेन चकारो व्यर्थ इति भावः । **भाष्ये स्थितमिति** । 'प्रकृतसूत्रे' इति शेषः । एतेन 'ह्रस्वाभावे प्रकृतिभावार्थं चकार' इति न्यासाद्युक्तमपास्तम् । 'चक्री-अत्रे'ति तु संहिताया अविवक्षायां बोद्धव्यम् । **'न समासे सिति चे'**ति वार्तिकम् । **पार्श्वमिति** । 'पर्श्वा णस् वक्तव्य' इति णस् । 'सिति चे'ति पदत्वम् ॥

**ऋत्यकः** । सवर्णार्थमनिगर्थं चेदम् । होतृ-ऋकारः । ब्रह्म-ऋषिः । **आर्च्छदिति** । आटो धात्ववयवत्वेनाऽपदान्तत्वादिति भावः । ईषदसमाप्तऋच्छको बहृच्छकः इत्यपि व्यावर्त्यं बोध्यम् । एतेन 'आटश्चे'ति पुनर्वृद्धिविधानार्थेन चेन उस्योमाङ्क्षु पररूपबाधवत्प्रकृतिभावस्याऽपि बाधेनेष्टसिद्धिरित्यपास्तम् । **समासेऽपीति** । व्याख्यानादिति भावः । **सप्त ऋषीणामिति** । 'दिक्सङ्ख्ये' इति समासः । प्रकरणशुद्धये प्रकृतिभावविधायकसूत्रमनुपन्दस्य सुरूपगृहीतं इति सूत्रानन्तरमुक्तप्रगृह्ययोर्मध्ये

**वाक्यस्य टेः प्लुत उदात्तः ।८।२।८२। इत्यधिकृत्य ॥**

**प्रत्यभिवादेऽशूद्रे ।८।२।८३।** अशूद्रविषये प्रत्यभिवादे यद्वाक्यं तस्य टेः प्लुतः स्यात्स चोदात्तः । अभिवादये देवदत्तोऽहम्भोः । आयुष्मानेधि देवदत्त ३ । ॥ ❀ **स्त्रियां न** ॥ अभिवादये गार्ग्यहम्भोः । आयुष्मती भव गार्गि ॥ **नामगोत्रं वा यत्र प्रत्यभिवादवाक्यान्ते प्रयुज्यते तत्रैव प्लुत इष्यते** । नेह—आयुष्मानेधि ॥ ❀ **भोराजन्यविशां वेति वाच्यम्** ॥ आयुष्मानेधि भोः ३ । आयुष्मानेधीन्द्रवर्म३न् । आयुष्मानेधीन्द्रपालित ३ ॥

---

वर्णयोः' इति पूर्वोक्तो निर्देशः सङ्गच्छते ॥

**प्रत्यभिवादे** । इह 'प्रत्यभिवाद'शब्देन आशीर्वचनमुच्यते । अशूद्रे किम् ?, अभिवादये तुषजकोऽहम्भोः । आयुष्मानेधि तुषजक । **आयुष्मानेधीति** । अस्तेः सेर्हिः । 'घ्वसो'रिति एत्वम् । 'हुझल्भ्यो हेर्धिः' । 'श्नसोरल्लोपः' । **नाम गोत्रं वेति** । गोत्रस्योदाहरणम्—'अभिवादये गार्ग्योऽहम्भोः, आयुष्मानेधि गार्ग्य ३' इत्यूह्यम् ।

---

प्रथमोपात्तत्वात्प्लुतप्रकरणमारभते—**वाक्यस्य टेः** । 'वाक्यस्ये'त्यस्याभावे पदस्य टेरित्यर्थेऽनन्त्यस्यापि पदस्य टेः प्लुतः स्यात् । तत्सत्त्वे तु वाक्यस्य टिरन्त्यपदस्यैव सम्भवतीति न दोषः । टिग्रहणाऽभावे प्लुतश्रुत्योपस्थिताऽच्परिभाषयाऽजन्तस्यैव स्यात् । टिग्रहणे तु [ तत् ] सामर्थ्याट्टिनाऽचो विशेषणाद्व्यञ्जनान्तस्यापि भवति ॥

**प्रत्यभिवादे** । प्रणामादिभिराशिषं वाच्यमानो गुर्वादिर्यत्प्रतिसम्भाषते तत्प्रत्यभिवादः, न त्वाशीर्वचनं, शूद्रे आशीर्वादरूपप्रत्यभिवादाभावेनाऽशूद्रे इत्यस्य वैयर्थ्यापत्तेः । अत एव भाष्ये 'अशूद्रे इति किं ?, कुशल्यसि तुषजके'त्युक्तम् । **अभिवादये इति** । नमस्कारपूर्वमाशीरादि वाचयामीत्यर्थः । 'आयुष्मा'नित्यायुष्मत्त्वस्य विधेयत्वात्सम्बोधनविभक्त्यभावः । **एधीति** । 'भवे'त्यस्याप्युपलक्षणम् । प्रत्यभिवादे शर्मादिप्रयोगो न नियतः । 'एचोऽप्रगृह्यस्ये'ति सूत्रे प्रत्यभिवादेऽन्तस्यैचः प्लुतविधानात् । 'आयुष्मानेधि अग्निभूता ३ इ' इति भाष्ये तदुदाहरणाच्च । शर्मादिप्रयोगे तु तट्टेरेव प्लुतः । 'शर्मान्तं नाम ब्राह्मणस्ये'त्यादिस्मृत्या तस्य नामावयवत्वबोधनात् । **स्त्रियां नेति** । स्त्रिया अपि नाम्नाऽभिवादे—प्रत्यभिवादे इत्यर्थस्य भाष्यसम्मतत्वादिति भावः । **नाम गोत्रं वेति** । अभिवाद-प्रत्यभिवादे नामगोत्राभ्यामेव स्मृतिषु प्रसिद्धे । तत्राऽधिकृतस्य 'पदस्ये'त्यस्य 'प्रत्यभिवादे' इत्यनेन विशेषणात्प्रत्यासत्त्या प्रत्यभ्युदधिनामार्थवाचकस्यैव प्लुत इति भावः । तत्र 'नाम'शब्देन द्वादशेऽह्नि पित्रादिदिष्टं गृह्यते । अत एवा'ऽऽयुष्मान्भव दण्डि'न्नित्यादौ प्लुतो नेति स्पष्टं भाष्ये ।

**भोराजन्येति** । भोःशब्दस्य, राजन्य-वैश्यवाचकनाम्नश्च टेः प्लुतइत्यर्थः । भोःशब्दस्याऽप्राप्ते, इतरयोस्तु नामत्वात्प्राप्ते विभाषेयम् ॥

**दूराद्धूते च** ।८।२।८४। दूरात्संबोधने यद्वाक्यं तस्य टेः प्लुतः स्यात् । सक्तून्पिब देवदत्त ३ ॥

**हैहेप्रयोगे हैहयोः** ।८।२।८५। एतयोः प्रयोगे दूराद्धूते यद्वाक्यं तत्र हैहयोरेव प्लुतः स्यात् । हे ३ राम । राम है ३ ॥

**गुरोरनृतोऽनन्त्यस्याऽप्येकैकस्य प्राचाम्** ।८।२।८६। दूराद्धूते यद्वाक्यं

---

**दूराद्धूते च** । हूतमाह्वानं, तच्च संबोधनमात्रोपलक्षणमित्याह-**दूरात्संबोधन इति** । उपलक्षणतया व्याख्यानस्य फलमुदाहरति-**सक्तून्पिबेत्यादि** ॥

**गुरोरनृतः । अनन्त्यस्यापीति** । अत्र वदन्ति-यद्यप्यन्त्यस्य गुरोः प्लुतार्थोऽपिशब्द इति व्याख्यायेत तर्हि गुरुस्थानिकप्लुतानामेव पर्यायता स्यात्तथाच 'दूराद्धूते' इति लक्षणान्तरेण लघोष्टेः स्थाने विहितेन प्लुतेन सह युगपत्प्रयोगः प्रसज्येत । तस्मादपिशब्दो गुरोरगुरोश्च टेः प्लुतार्थ इत्येव व्याख्यातव्यं, 'टे'रिति प्रकृतत्वादिति ।

---

**दूराद्धूते** । यावति देशे प्राकृतप्रयत्नोच्चारितं सम्बोध्यमानो न शृणोति किन्त्वधिकं प्रयत्नमपेक्षते-तावद्दूरम् । दूरादाह्वानञ्च दूराद्बोधनस्योपलक्षणं, न तु सम्बोधनविभक्तिनियामकस्याभिमुखीकृत्य बोधनरूपस्य सम्बोधनस्योपलक्षणम् । 'आगच्छतु भवान्देवदत्त' इत्येवमाह्वानस्यापि सम्भवात् । अत एवाऽऽकडारसूत्रे नदी-गुरुसञ्ज्ञयोः समावेशे 'वात्सीबन्धु'रित्यत्र 'गुरो'रिति प्लुतो, 'नदी बन्धुनि'-ति पूर्वपदान्तोदात्तत्वञ्च फलमुक्तं भाष्ये । अन्यथाऽत्र सम्बोधनाऽभावेन 'गुरो'रित्यस्याऽप्राप्त्या तदसङ्गतिः स्पष्टैव । उपलक्षणत्वादसत्यप्याह्वाने भवति, तदाह-**सक्तूनित्यादि** । अत्रापि 'दूराद्धूते' इत्येतदनुवृत्तस्य 'पदस्ये'त्यस्य विशेषणं, तेन हूयमानार्थवाचिनः पदस्यैव टेः प्लुतः । तच्च रूढं यौगिकं वेत्यन्यदेतत् ॥

**हैहेप्र** । हैहयोः सम्बोधनद्योतकत्वेन, केवलाभ्यामपि ताभ्यां सम्बोधनदर्शनेन च तयोरपि हूयमानार्थपदत्वाद्गुरोरनृत इत्येव सिद्धे नियमार्थमिदमित्याह-**हैहयोरेवेति** । 'हैहेऽन्ते' इत्येव सिद्धे 'प्रयोग'ग्रहणादनन्त्ययोरपि । तदाह-**हे ३ रामेति** । केचित्तु एकं हैहेग्रहणमनन्त्यार्थम्, अन्यथा 'वाक्यस्य टे'रित्यधिकारादन्त्ययोरेव तयोः स्यात्, तदाह-**हे ३ रामेति** । 'प्रयोग' इति तु-यत्र सम्बोधनोत्तरं तयोः प्रयोगस्तत्र तेनैवाभिमुख्यस्य द्योतितत्वेन द्योत्याऽभावादनर्थकयोरपि तयोः प्लुतार्थं, तदाह-**राम है ३ इति** । अन्यथाऽप्रयुक्तयोः प्लुताऽसम्भवात्तद्वैयर्थ्यं स्पष्टमेव । 'हैहयो'रिति तु-तयोर्हूयमानार्थपदत्वाभावादप्राप्ते विध्यर्थम् । नियमे तु न मानम् । तेनाऽ प्लुतसमावेशः, एतत्सर्वं भाष्यकैयटयोः स्पष्टमित्याहुः । यत्तु-अयं हूयमानार्थपदस्य टेः प्लुतस्य बाधकस्तक्रकौण्डिन्यन्यायादिति, तन्न; 'शिव हे' इत्यादौ तस्याऽप्राप्तेस्तन्न्यायविषयाऽभावात् ॥

**गुरोर** । 'दूराद्धूते' इत्यनुवर्त्तते, तेन दूराद्बोधन एव प्रवृत्तिः,-तदाह-**दूराद्धूत इति** । दूरत्वञ्चात्राऽविवक्षितं, तेन प्रत्यभिवादे नाऽऽशीर्वचनस्य विषयेऽस्य प्रवृत्तिः । तद्विषयेऽप्युपलक्ष्यबोधनसत्त्वात्

तस्य ऋद्भिन्नस्यानन्त्यस्यापि गुरोर्वा प्लुतः स्यात्। दे३वदत्त। देवद३त्त। देवदत्त ३। गुरोः किम्?। वकारात्परस्याऽकारस्य माभूत्। अनृतः किम्?। कृष्ण ३। 'एकैक'ग्रहणं पर्यायार्थम्।

इह 'प्राचा'मिति योगो विभज्यते। तेन सर्वः प्लुतो विकल्प्यते॥

**अप्लुतवदुपस्थिते** ।६।१।१२९। उपस्थितोऽनार्ष इतिशब्दस्तस्मिन्परे प्लुतोऽप्लुतवद्भवति। अप्लुतकार्यं यणादिकं करोतीत्यर्थः। सुश्लोक३इति। सुश्लोकेति।

---

**दे३वदत्तेति**। वाक्यलक्षसंपत्तये अस्यादिरेहीति शब्दो बोध्यः। एवमग्रेऽपि। **सर्वः प्लुतो विकल्प्यत इति**। एतेन 'द्वैपायनो विरहकातर आजुहाव, पुत्रेति' इति भागवतं व्याख्यातम्। 'प्लुतस्य वैकल्पिकत्वादार्षः प्रयोगः' इति श्रीधराचार्योक्तिस्तु नादर्त्तव्या। विस्तरस्त्वत्र मनोरमायामनुसन्धेयः। **यणादिकं करोतीति**। अत्र-नव्याः-'यद्येवम् 'अग्नी इति' 'विष्णू इति' इत्यत्र प्रगृह्याश्रयं प्रकृतिभावं बाधित्वा परत्वादनेन यणादिकार्यं स्यात्, ततश्च वत्करणप्रयोजनं यणादिकमेव स्यात्, तस्मात् 'प्लुतकार्यं प्रकृतिभावं न करोतीत्यर्थः', इति प्राचां व्याख्यैव ज्यायसी। एवं च 'इको यणची'त्यत्रेग्ग्रहणस्य वैयर्थ्यशङ्कापि नास्ति। तथाहि-तत्रेग्ग्रहणाभावेऽपि 'ह्रस्वस्य पिति कृति तुक्' 'दीर्घा'दित्यतो ह्रस्वदीर्घपदानुवृत्त्या तयोर्यण्विधानान्न व्यञ्जनस्य भविष्यति। प्लुतस्य तु प्रकृतिभावेनैव न भवितव्यमेव। अयादयोऽपवादा 'हरय' इत्यादौ, 'उपेन्द्रः' 'कृष्णैकत्व'मित्यादौ तु 'आद्गुणः' 'वृद्धिरेचि' इति बाधके भविष्यतः। यथा

---

सर्वप्लुतप्रकरणस्य तु न शेषः। तथा हि सति 'वाक्यस्य टे'रित्यनेन सहैवास्याप्यधिकारत्वमेव कुर्यात्। एतत्त्रयविषयमेवेदमिति प्रकृतसूत्रे 'ऽनुदात्तं प्रश्नान्ते'ति सूत्रे च वृत्तौ स्पष्टम्। 'अपि'शब्दो यथाप्राप्तटिसमुच्चयार्थः। यदि तु गुरोः सन्निधानादन्त्यो गुरुरेव समुच्चीयेत, तदाऽन्त्यलघुमति-अनन्त्यगुरावेतस्य, अन्त्यलघौ 'दूराद्धूते चे'त्यादीनां दुर्वारत्वेन प्लुतसमावेशापत्तिः। 'एकैक'ग्रहणं त्वेतद्विहितानामेव पर्यायार्थं स्यात्। तेन यत्राऽन्त्योऽपि गुरुरनन्त्यगुरुद्वयं वा-तत्रैव पर्यायः स्यात्। व्याख्यानाच्चैतदर्थलाभः।

**अनन्त्यस्यापीति**। अपिनाऽन्त्यस्य गुरोरगुरोश्चेत्यर्थः। **पर्यायार्थमिति**। अन्यथा समावेशः स्यादिति भावः। 'अनुदात्तं पद'मिति तु त्रिपाद्यां न प्रवर्त्तत इति तत्रैव वक्ष्यते। प्राचा'मिति तु पक्षे सर्वेषां प्लुताभावार्थम्। **विकल्प्यत इति**। सा च व्यवस्थितविभाषा। तेनाग्नीदग्नीन्विहरेत्यादौ 'अग्नीत्प्रेषणे'इति न। भाष्ये तु 'विभाषा पृष्टे'ति सूत्रे 'विभाषे'ति योगविभागो दर्शितः। सा च व्यवस्थितविभाषेति कैयटः। अत एव-'ओश्रावये परस्येति वक्तव्य'मिति वचनस्य-'अग्नीदग्नी'-नित्यादौ प्लुतनिवृत्तये कृतस्य विभाषेति योगविभागेन प्रत्याख्यानं भाष्योक्तं सङ्गच्छते। एवञ्च भाष्यसम्मतैषा व्यवस्थितविभाषेत्याहुः। अप्लुतव'दित्युक्त्या 'प्लुत' इत्यध्याहारस्तदाह-प्लुतोऽप्लुत

वत्किम् ? । अप्लुत इत्युक्तेऽप्लुत एव विधीयेत प्लुतश्च निषिध्येत । तथा च प्रगृह्याश्रये प्रकृतिभावे प्लुतस्य श्रवणं न स्यात् । अग्नी ३ इति ॥

**ई३ चाक्रवर्मणस्य** ।६।१।१३०। ई३ प्लुतोऽचि परेऽप्लुतवद्वा स्यात् । चिनुही ३ इति । चिनु हीति । चिनु ही ३ इदम् । चिनु हीदम् । उभयत्रविभाषेयम् ॥

---

सत्यपीग्ग्रहणे 'श्रीश' इत्यादौ सवर्णदीर्घत्वं बाधकम् । अतो नार्थ इग्ग्रहणेन । तथापि 'एहि करभोरु ३ इति' 'सुतनु ३ इति' 'चिनुहि ३ अत्रे'त्यादौ 'अप्लुतवदुपस्थिते' 'ई ३ चाक्रवर्मणस्ये'ति प्रकृतिभावनिषेधेऽपि आभ्यां यणादिकार्याऽविधानात् प्लुतस्याऽस्य यण्न स्यात् । ह्रस्वदीर्घपदाननुवृत्तौ तु व्यञ्जनस्य स्यात् । तस्मादिग्ग्रहणं व्यर्थमिति न शक्यते शङ्कितु'मित्याहुः । अन्ये त्विग्ग्रहणस्य प्रयोजनान्तरमप्याहुः,–इको यणत्र क्वचिद्यथा स्याद्यदन्यत्प्राप्नोति तन्मा भूत् । किंचाऽन्यत् प्राप्नोति ?, 'इकोऽसवर्णे' इति शाकलम् । एवं च यदुक्तं 'न समासे' 'सिति चे'ति तदनेन सङ्गृहीतं भवती'ति ।

**चिनु हीति।** 'चि'न्विति लोडन्तम् । 'ही'त्यव्ययम् । 'अनन्त्यस्यापि प्रश्नाख्यानयोः' इत्यनेन प्लुतः । **उभयत्रविभाषेयमिति** । 'इति'शब्दे परतः पूर्वेण प्राप्ते अन्यत्राऽप्राप्ते चारम्भादिति भावः ॥

---

**वदिति । प्लुत एव निषिध्येतेति** । तत्स्थाने अप्लुतस्य विधानेन स एव निवर्त्तेतेत्यर्थः । प्रसज्यप्रतिषेधेन व्याख्यानन्तु न युक्तं, गौरवात् । किञ्च तथा सति प्लुतप्रकरणे एव 'नोपस्थिते' इति वदेत् । न च पर्युदासेऽग्नी ३ इतीत्यादौ प्रगृह्याश्रयप्रकृतिभावं बाधित्वा परत्वादप्लुतवद्भावे दीर्घादिकं स्यादिति वाच्यम् ; शब्दत 'इति'शब्दसापेक्षाऽप्लुतवद्भावापेक्षया वर्णमात्रापेक्षप्रकृतिभावस्याऽन्तरङ्गत्वात् । 'अप्लुतव'दित्यस्य प्लुतकार्यं नेत्यर्थस्तु न शब्दमर्यादालभ्यः। प्लुतेऽप्लुतसादृश्यविधानस्यैव शब्दतो लाभात् । भाष्ये 'प्लुतकार्यप्रतिषेधार्थ'मित्युक्तिस्तु–फलितार्थाभिप्रायेणैवेति बोद्धव्यम् । **प्रगृह्याश्रये इति** । प्लुते कृतेऽपि तस्यासिद्धत्वाद्दीर्घत्वबुद्धिवत्तद्गतं प्रगृह्यत्वमनुकार्ये सुलभम् । अनुकरणे तु 'प्रकृतिवदनुकरण'मित्यतिदेशात्तत्त्वमिति भावः । 'किम्मया कर्त्तव्य'मिति पृष्ट आह–**चिनु ही ३ इदमिति** । 'विभाषा पृष्टप्रतिवचने हे'रिति प्लुतः । 'इदं'शब्दोऽत्र वाक्यान्तरस्थं इति 'हे'रिकारस्य वाक्यटित्वम् । **उभयत्र विभाषेयमिति** । उपस्थिते प्राप्तेऽनुपस्थिते चाऽप्राप्ते इत्यर्थः । विभाष्यते विकल्प्यते इति–विभाषा । 'गुरोश्च हल' इत्यप्रत्यये टाप् । 'न वेति विभाषाया'मिति भाष्यप्रयोगात् । भाष्ये तु 'किमर्थमिदमुच्यते ?, अनुपस्थितार्थं, तत्र ईग्रहणेन नार्थः, अविशेषेण चाक्रवर्मणस्याऽप्लुतवदित्येव, इदमपि सिद्धं–वद्या इयं–वशेय'मित्युक्तम् । तद्बलेनोपस्थिते पूर्वविप्रतिषेधेन ईग्रहणेऽपि नित्याप्लुतवद्भाव एवेष्टः । प्रत्याख्याने नित्याऽप्लुतवद्भावस्य 'येन नाप्राप्ति'न्यायेन वैकल्पिकतद्बोधिताऽभावांशबाधकत्वात् । 'उपस्थिते' [illegible] मूलन्तु इतिशब्दभिन्ने

**ईदूदेद्द्विवचनं प्रगृह्यम्** ।१।१।११। ईदूदेदन्तं द्विवचनं प्रगृह्यसंज्ञं स्यात् । हरी एतौ । विष्णू इमौ । गङ्गे अमू । पचेते इमौ । 'मणीवोष्ट्रस्ये'ति तु इवार्थे 'व'शब्दो 'वा'शब्दो वा बोध्यः ॥

**अदसो मात्** ।१।१।१२। अस्मात्परावीदूतौ प्रगृह्यौ स्तः । अमी ईशाः । रामकृष्णावमू आसाते । मात्किम्? अमुकेऽत्र । असति माद्ग्रहणे एकारोऽप्यनुवर्तेत ॥

---

**ईदूदेदन्तमिति** । अत्र विशेषणेन तदन्तविध्याश्रयणं किम्?। 'पचेते इमा'विति यथा स्यात् । 'हरी' 'विष्णू' इत्यादिष्वेकादेशस्य परादिवद्भावाश्रयेण ईकारादीनां द्विवचनत्वादीदूदेद्रूपं द्विवचनमित्युक्तेऽपि प्रगृह्यत्वं सिध्यतीति बोध्यम् । **द्विवचनमिति** । 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' 'सुप्तिङन्त'मित्यन्तग्रहणाज्ज्ञापकात् । तेन कुमार्योर्वध्वोश्चागारं कुमार्यगारं वध्वगारमिति सिद्धम् । 'द्विवचनान्तं प्रगृह्यं स्या'दिति व्याकुर्वतः प्राचस्तु नेदं सिध्येत् । **हरी एताविति** । इह ह्रस्वसमुच्चितप्रकृतिभावो न, प्लुतप्रगृह्याः' इत्यत्र नित्यग्रहणादित्युक्तम् । अत्र वृत्तिकारेण–'मणीवादीनां प्रतिषेधो वक्तव्यः' इति पठित्वा 'मणीव' 'रोदसीव' 'जंपतीवे'त्युदाहृतम् । तच्च मुनित्रयानुक्तत्वादप्रमाणमिति कैयटादयः । एवं स्थिते 'मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ ममे'ति भारतप्रयोगं समर्थयते–**इवार्थे इति** । **वशब्द इत्यादि** । 'वं प्रचेतसि जानीयादिवार्थे च तदव्यय'मिति मेदिनी । 'व वा यथा तथैवैवं साम्ये' इत्यमरः । 'कादम्बखण्डितदलानि व पङ्कजानी'त्यादिप्रयोगदर्शनाच्चेति भावः ॥

**अदसो मात्** । इह एकारो नानुवर्तते, असंभवादित्यभिप्रेत्याह–**ईदूताविति** । अदसः किम्? । शम्यत्र, वाम्यत्र । ननूकारानुवृत्तिर्व्यर्था, 'स्त्रियौ फले वा अमू आसाते' इत्यत्र पूर्वेणैव सिद्धेः । मुत्वस्यासिद्धत्वेऽप्येकारान्तत्वादत आह–**रामकृष्णाविति** । पुंसि पूर्वेण न सिध्यत्यौकारान्तत्वादिति भावः । 'अदसो मा'दिति सूत्रं प्रति मूत्वमीत्वं च नाऽसिद्धम् । आरम्भसामर्थ्यात् । **अमुकेऽत्रेति** । स्त्रीलिङ्गद्विवचनस्य तु पूर्वसूत्रेण प्रगृह्यत्वे प्रकृतिभाव एव । अमुकेऽत्र । **एकारोऽप्यनुवर्तेतेति** । तथाच एकारानुवृत्तितात्पर्यग्रहफलकं माद्ग्रहणमिति भावः ॥

---

वैदिकेतिशब्दे चेत्येवम्परतया कथंचिद्व्याख्येयमित्यन्ये । उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयत् सर्वनाम पर्यायेण तत्तल्लिङ्गभागितीयमिति निर्देशः ॥

विशेषणेन तदन्तविधिमाश्रित्याह–**ईदूदेदन्तमिति** । **द्विवचनमिति** । सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिनिषेधादिति भावः । 'पचेते'मिति ... **पचेते इति** ॥

शे ।१।१।१३। अयं प्रगृह्यः स्यात् । अस्मे इन्द्राबृहस्पती ॥

**निपात एकाजनाङ् १।१।१४।**

**शे इति** । छान्दसमपीदं सन्दर्भशुद्ध्यर्थमुक्तमित्याहुः । **अस्मे इति** । अस्मभ्य-मित्यर्थः । 'सुपां सुलु'गिति भ्यसः शे आदेशः । 'शेषे लोपः' ॥

**निपात एकाच्** । निपातः किम् ? । अततेर्डः । अः । 'हे अ आगच्छ' । अत्र प्रगृह्यसंज्ञा मा भूत् । एकग्रहणाभावे 'येन विधि'रिति सूत्रात्तदन्तलाभे 'प्रेद'मित्यत्र स्यादत उक्तम्—**एक इति** । 'एका'जिति तु न बहुव्रीहिः, उक्तातिप्रसङ्गतादवस्थ्यात् । अतः 'पूर्वकालैके'ति कर्मधारय एव । ननु 'निपातोऽजना'ङि-त्युक्ते हलन्तस्य सत्यपि प्रगृह्यत्वे प्रयोजनाभावादजन्ते प्राप्ते अज्ग्रहणसमर्थ्यादज्रूप-स्यैव निपातस्य प्रगृह्यत्वे सिद्धे किमेकग्रहणेन ? । न च 'पुरोऽस्ती'त्यादौ हलन्तस्य संज्ञायां सत्यां प्रकृतिभावादतो रोरितिरोरुत्वं न स्यादतोऽज्ग्रहणसामर्थ्यमुपक्षीणमित्येक-ग्रहणमावश्यकमिति वाच्यम्; प्रगृह्यसंज्ञां प्रति रुत्वस्याऽसिद्धतया रेफान्तस्यैतस्य प्रगृह्य-संज्ञाऽभावेन दोषाऽप्रसक्तेः । न च सान्तस्य कृता प्रगृह्यसंज्ञा एकदेशविकृतन्यायेन रेफान्तस्यापि स्यादेवेति प्रकृतिभावादुत्वाभावप्रसङ्गस्तदवस्थ इति वाच्यम्; प्रगृह्यसंज्ञां प्रतीव प्रकृतिभावं प्रत्यपि रुत्वस्याऽसिद्धत्वात्प्रकृतिभावाऽप्रवृत्तेः । सकारान्तस्य तु न किंचिदपि सिद्धकाण्डस्थं प्रयोजनं प्राप्नोति यत्प्रकृतिभावेन व्यावर्त्येत । न चाज्ग्रहणसाम-र्थ्यादजन्तस्यैव प्र परा अपेत्यादिनिपातस्य प्रगृह्यसंज्ञा स्यान्न त्वज्रूपनिपातस्येति वैपरीत्य-शङ्कानिवारणार्थमेकग्रहणमिति वाच्यम्; अनाङ्ग्रहणस्य वैयर्थ्यापत्तेः । 'व्याहरति मृग' इत्यादिनिर्देशविरोधाच्चोक्तशङ्काया अप्रवृत्तेः । किंच 'निपातोऽजना'ङित्युक्तेऽप्यनाङिति प्रतिषेधसामर्थ्यान्निपातस्य विशेषणत्वाभ्युपगमे तदन्तविध्यप्रवृत्त्या निपातरूपो योऽच्स प्रगृह्य इत्यर्थलाभादज्रूपस्यैव निपातस्य प्रगृह्यत्वं सिद्धमिति नास्त्येव प्रयोजनमेकग्रहणस्य ।

नन्वेवमपि समुदायनिवृत्त्यर्थमेकग्रहणमावश्यकमेव । अन्यथा 'अ इ उ अपेहीं'त्यत्रै-काज्द्विर्वचनन्यायेन समुदायस्यैव संज्ञा स्यान्नावयवानामिति चरमस्यैव प्रकृतिभावः स्यान्न तु पूर्वयोरिति चेन्न; 'अ'जित्येकत्वस्य विवक्षयैव समुदायनिरासंभवात्समुदाय-संज्ञयाऽवयवानामननुग्रहेणैकाज्द्विर्वचनन्यायस्याऽप्यप्रवृत्तेः । एकस्मिन्निपाते संज्ञा-विधानसंभवेन निपातसमुदायस्य निपातग्रहणेनाऽग्रहणाच्च । अत्राहुर्भाष्यकाराः—

**निपात ए** । निपात इति किम् ?, चकारात्र । प्रत्ययस्य शास्त्रकल्पितार्थवत्त्वात् । 'एका'जिति कर्मधारयो वर्त्ति[illegible] 'व्याहरति मृग' इत्यादिनिर्देश[illegible] तेन 'प्रेद'मित्यादौ

—एकोऽज्निपात आङ्वर्जः प्रगृह्यः स्यात्। इ विस्मये। इ इन्द्रः। उ वितर्के। उ उमेशः। 'अना'ङित्युक्तेरङिदाकारः प्रगृह्य एव।

'अच्समुदायग्रहणशङ्कानिरासार्थमेकग्रहणं कुर्वन् ज्ञापयति वर्णग्रहणेषु व्यक्तिसङ्ख्या न विवक्ष्यते किंतु जातिरेव निर्दिश्यते' इति। तेन 'हलन्ताच्चे'ति सनः कित्वात् 'दम्भ इच्चे'तीत्त्वे 'धिप्सती'त्यादि सिद्धम्। हल्ग्रहणस्य व्यक्तिपरत्वे तु योऽत्रेकः समीपो हल् नकारो न ततः परः सन्, यस्माच्च परः सन् भकारान्नासाविकः समीप इति कित्त्वं न स्यात्, ततश्च नलोपो न स्यात्। वस्तुतस्तु अपृक्तसंज्ञायामेकग्रहणमुक्तार्थज्ञापकमित्याश्रित्य प्रकृत-सूत्रे एकाज्ग्रहणं त्यक्तुं शक्यम्। अत एव मनोरमायामनाङिति पर्युदासादेवाऽज्रूप-निपाते लब्धे निपातग्रहणमुक्तार्थं स्पष्टप्रतिपत्त्यर्थमिहैव कृतमिति निपातग्रहण-स्यव प्रयोजनमुक्तं न त्वेकाज्ग्रहणस्य॥ अत्र नव्याः—यदुक्तं मनोरमायाम्—'अनाङिति पर्युदासा'दित्यादि, तच्चिन्त्यम्, 'ओत्'सूत्रे भाष्यकारैः प्रसज्यप्रतिषेधस्यैवाङ्गीकृतत्वात्। नच लक्ष्यभेदाभावात्प्रौढिवादमात्रं भाष्यमिति वाच्यम्;—अस्मादेव भाष्यवचनाल्लक्ष्य-भेदोऽप्यस्तीति सुवचत्वात्। तथाहि—अततेर्डः—अः। 'अकारो वासुदेवः स्या'दिति वचनाद्रूढिशब्दो वा। अनेन 'अ'शब्देन सह 'आङ्मर्यादाभिविध्योः' इति आङोऽव्ययी-भावे सवर्णदीर्घे 'अव्ययीभावश्चे'ति नपुंसकत्वाद्ध्रस्वत्वे सोरम्यमि पूर्वे च कृते 'अ'मिति रूपं भाष्यकृत्संमतम्। तथा इणो निष्ठायामितः, वेञस्तु निष्ठायां संप्रसारणे उतः। अम् इतः—एतः, अम् उतः—ओतः' इत्यासमुद्रक्षितिवत्समासे रूपं च तत्संमतम्। तत्र पर्युदासपक्षे अमि पूर्वो गुणश्च न सिध्यति। अशब्दस्याङ्भिन्नत्वात्स्थानिवद्भा-वेन निपातत्वाच्च प्रगृह्यत्वात्। प्रसज्यप्रतिषेधाश्रये तु सिध्यति, तस्याङ्त्वेन प्रगृह्यत्व-निषेधात्। न चैतादृशप्रयोगोऽप्रामाणिक इति वक्तुं युक्तम्, प्रकृतभाष्यस्यैव प्रमाण-त्वात्। अन्यथा हि भाष्यकारेङ्गितमात्रावलम्बनेन तत्र प्राचां ग्रन्थानामधिक्षेपाय भवतां प्रवृत्तयो व्याहन्येरन्नित्याद्याहुः॥

अनाङ्ङर्ज इति। प्रतिषेधपक्षे तु प्रगृह्यः स्यादित्येतदुत्तरमिदं द्रष्टम्। वर्ज्यत

न दोषः। तदाह एकोऽजिति। आङ्वर्ज इति। पर्युदासस्यौचित्यात्। अत एवैकाज्नाङिति नासूत्रि। वासुदेववाचकस्य 'अ'शब्दस्य आङा सहाव्ययीभावे आ आत्-अमित्यादौ सत्यभिधाने स्वत आङ्भिन्नत्वेन पूर्वान्तवत्त्वेन निपातत्वेऽपि प्रगृह्यत्वन्न। पूर्वान्तवत्त्वेनाऽऽङ्त्वातिदेशेऽतिदिश्यमान-धर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्यनिवृत्तेरतिदेशस्वभावसिद्धत्वात्। 'ओ'दिति सूत्रे 'आ उ ओ' इत्यत्र 'अना'ङिति 'प्रतिषिद्धार्थोऽयमारम्भ' इति भाष्यन्तु पर्युदासेऽपि गम्यस्य प्रतिषेधस्य सत्त्वान्नानुपपन्नम्। 'अना'ङिति पर्युदासादेव निपातैकाज्रूपत्वे लब्धे निपातैकाज्ग्रहणं स्पष्टार्थम्। स्वाङ्गसमुदाये स्वाङ्गत्वा-

आ एवं नु मन्यसे । आ एवं किल तत् । ङित्तु न प्रगृह्यः । ईषदुष्णम् । ओष्णम् ॥

**'ईषदर्थे क्रियायोगे मर्यादाऽभिविधौ च यः ।**
**एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥'**

**ओत्** ।१।१।१५। ओदन्तो निपातः प्रगृह्यः स्यात् । अहो ईशाः ॥

**संबुद्धौ शाकल्यस्येतावनार्षे** ।१।१।१६। संबुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिके इतौ परे । विष्णो इति । विष्ण इति । विष्णविति । अनार्ष इति

---

इति वर्जः । वृजेर्ण्यन्तात्कर्मणि घञ् । वर्जनीय इत्यर्थः । आङो न भवतीति यावत् । **आ एवमिति** । पूर्वप्रक्रान्तवाक्यार्थस्य अन्यथात्वद्योतकोऽयमाकारः । पूर्वमित्थं नामंस्था इदानीं त्वेवं मन्यसे इत्यर्थः । **आ एवं किलेति** । स्मरणद्योतकोऽयमाकारः । **वाक्यस्मरणयोरित्यादि** । अत्रायमाशयः—'ईषदर्थे क्रियायोगे-मर्यादाभिविधौ च यः । एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ।' इति भाष्यस्याऽङिल्लक्षण एव तात्पर्यं, लाघवात् । अन्यस्य ङित्त्वं त्वर्थसिद्धम् । 'ईषदर्थे–' इत्यादिस्त्वेकदेशानुवादः । एवंच 'अभ्र आँ अप' इत्यत्र सप्तम्यर्थवृत्तेरप्याकारस्य ङित्वात् 'आङोऽनुनासिकश्छन्दसी'ति प्रवर्तत इति ॥

**ओत्** । निपात इति किम् ? । देवोऽसि, वायवाहि ।

**संबुद्धौ** । ऋषिर्वेदः, 'तदुक्तमृषिणा' इत्यादौ तथा दर्शनादित्यभिप्रेत्याह—**अवैदिक**

---

ऽभाववदच्समुदायेऽच्त्वाभावादजित्येवाच्समुदायग्रहणाभावे सिद्धे एकग्रहणमन्यत्र वर्णग्रहणे जातिग्रहणार्थम्, तेन 'धिप्सती'त्यादिसिद्धिरिति भाष्ये स्पष्टम् । 'जातिग्रहणार्थ'मित्यस्योपात्तजात्याश्रयैकानेकव्यक्तिग्रहणार्थमित्यर्थः । तेन 'तितउ'शब्दैकदेशस्य 'अउ' इत्यस्यानुकरणे 'अउ अकरो'दित्यत्र 'अनुकरणश्चानिती'ति निपातत्वेऽपि प्रगृह्यत्वाभाव एकग्रहणफलम्बोद्धव्यम् । ननु ङकारस्य क्वाप्यश्रवणेन ङिदङिद्विवेको दुर्ज्ञेय इत्यत आह—**वाक्यस्मरणयोरिति** । 'वाक्य'शब्देन स्वार्थगतमनभिमतत्वम् । **स्मरणं**—विस्मृतस्य स्मृतिविषयता । **एवङ्किल तदिति**—स्मृतार्थनिर्देशः । 'निपात' इत्यनुवृत्तमोदित्यनेन विशेष्यत इत्याह—**ओदन्त इति** । निपातसञ्ज्ञा चादिपदोपस्थितचादीनां—सति सम्भवेऽर्थवतामेवेति—सार्थकनिपातानां निपातपदेन तत्तदर्थविशिष्टानामेवोपस्थितिरिति—गौणमुख्यन्यायेन प्रकृतसूत्रस्थनिपातपदेन गौणार्थानां न ग्रहणमिति—'गोऽश्व'दित्यादौ च्व्यन्ते नास्य प्रवृत्तिः । एवञ्च कार्यकालपक्षेऽपि 'च्व्यन्ता निपाता' इत्यस्यानुपस्थितिरेतत्परिभाषावशात् । अव्ययसञ्ज्ञादौ तु नैतत्परिभाषाप्रवृत्तिरनित्यत्वात् । अत एवानर्थकेऽपि निपाते सा सञ्ज्ञा सिद्ध्यति ॥ 'त्रपो इती'त्यादौ प्रगृह्यत्वायाह—**सम्बुद्धिनिमित्तक इति** । 'सम्बुद्धिपर' इति व्याख्याने तु सोर्लुका लुप्तत्वेन तत्परत्वाऽभावान्न स्यात् । न [illegible] इत्यादौ किम् ? पटोऽत्र । अनार्ष

किम् ?। 'ब्रह्मबन्ध'वित्यब्रवीत् ॥

**उञः** ।१।१।१७। उञ इतौ वा प्रागुक्तम् । उ इति । विति ॥ **ऊँ** ।१।१।१८। उञ इतौ दीर्घोऽनुनासिकः प्रगृह्यश्च 'ऊँ' इत्ययमादेशो वा स्यात् । ऊँ इति ॥

---

इति । संबुद्धौ किम् ?। अहो इति । अत्र परत्वाद्विकल्पो मा भूत्। न च 'ओ'दिति सूत्रस्य निरवकाशत्वं शङ्क्यम्, 'अहो ईशा' इत्यादौ तस्य सावकाशत्वात् । इताविति किम् ?। पटोऽत्र ॥

**उञः** । 'निपात एका'जिति नित्यं प्राप्ते विभाषेयम् । शाकल्यस्येतौ प्रगृह्यमिति चात्रानुवर्तते, इत्यत आह—**इतौ वा प्रागुक्तमिति** । इह 'उञ ऊँ' इत्येकमेव सूत्रं योगविभागेन व्याख्यातम् । एकसूत्रत्वे तु उञ इतौ ऊँ शाकल्यस्येत्यर्थात् 'ऊँइति' इत्येव रूपं शाकल्यमते सिध्यति । अन्येषां तु मते नित्यं प्रगृह्य इति 'उ इति' इत्येव रूपं सिध्यति, 'विती'ति रूपं तु न सिध्यत्येवेति ज्ञेयम् ॥

**ऊँ । अनुनासिक इति ।** तेनास्मिन् परे 'यरोऽनुनासिके–' इति विकल्पः

---

किम् ?, 'ब्रह्मबन्ध'वित्यब्रवीत् । संहिताया विवक्षायामप्यवादिरहितप्रयोगार्थमिदम् । तद्विवक्षा च–वर्णोच्चारणे नियतेनार्धमात्राकालव्यवायेनोच्चारणेच्छा । तदधिकार्द्धमात्राकालव्यवायेनोच्चारणेच्छा च–तदविवक्षेति बोद्धव्यम् ॥

**उञः** । अत्रोञ् निपात एव । 'उञ ऊँ' इत्येकसूत्रत्वे तु–शाकल्यग्रहणाननुवृत्तौ 'ऊँ इती'त्येकमेव स्यात्, प्रगृह्यसञ्ज्ञाप्रकरणेन प्रगृह्यत्वस्यादेशस्य च सह विधानात् । 'उ इति' 'विती'ति च न स्यात् । आदेशे प्रगृह्यत्वकार्यन्तु स्थानिवद्भावेन बोद्धव्यम् । प्रगृह्यत्वस्य साक्षादुद्देश्यसम्बन्धस्य क्लृप्तया विधेयविशेषणत्वे मानाभावात् । शाकल्यग्रहणानुवृत्तावपि प्रगृह्यत्वस्य 'ऊँ'आदेशस्य विकल्पे 'ऊँ इति' 'विती'ति सिद्ध्यति, न तु 'उ इती'ति । प्रगृह्यत्वविकल्पेन पक्षे तदभावेऽपि अस्य तात्पर्यात् । एतदभावे 'निपात एका'जित्यस्याऽप्रवृत्तेः । तदुक्तं भाष्ये–योगविभागं प्रदर्श्य–'किमर्थो योगविभागः ?, शाकल्यमते ऊँ विभाषा यथा स्यात्, 'ऊँ इति' 'उ इति' । 'विती'ति । अनेन हि योगविभागस्य 'उ इती'ति रूपसिद्धिः फलमिति स्पष्टमेव लभ्यते । अतो योगविभागेन व्याचष्टे–**उञ इति** । उञो वाचकं पदं प्रगृह्यमित्यर्थः ॥

शाकल्यस्येतौ प्रगृह्यमित्यनुवर्त्तते, तदाह–**उञ इतौ वेत्यादि** । विकल्पाननुवृत्तौ हि 'निपात एके'त्येव सिद्धे इदं व्यर्थमेव स्यात् । एवञ्च प्राप्तविभाषेयम् । 'ऊँ' इत्यत्र शाकल्यप्रगृह्यपदयोरसम्बन्धे 'उञ' इत्यर्थाधिकाराद्प्रगृह्यस्यैवादेशे तस्य 'इको य'णिति यणि 'ऊँ इती'त्यस्याऽसिद्धिः । दीर्घोच्चारणवैयर्थ्यापत्तिश्च । विकल्पमात्रसम्बन्धेऽपि 'ऊँ इती'त्यस्यासिद्धिरिति–विधानसामर्थ्यात्प्रगृह्यपदसम्बन्धः । प्रगृह्यपदमात्रसम्बन्धेऽर्थाधिकारादप्रगृह्यस्य नित्ये ऊँ आदेशे 'ऊँ इती'ति प्रगृह्यस्य 'उ इती'ति सिद्धेऽपि 'विती'ति न सिध्येत् । तदाह–**उञ इतौ दीर्घोऽनुनासिक इत्यादि** । अत्र विशिष्टस्य

**मय उञो वो वा** ।८।३।३३। मयः परस्य उञो वो वा स्यादचि। किमु उक्तम्। किम्वुक्तम्। वत्वस्यासिद्धत्वान्नानुस्वारः॥

**ईदूतौ च सप्तम्यर्थे** ।१।१।१९। सप्तम्यर्थे पर्यवसन्नमीदूदन्तं प्रगृह्यं स्यात्।

---

'यदेतनूँ इति पठसि' 'यदेतदूँ इति वा। एतदर्थमेवात्रानुनासिकग्रहणम्। अन्यथा 'यरो ञम्यनुनासिको वे'त्येवावक्ष्यत्। 'यरो ञमि ञम्वे'त्येवावक्ष्यदित्युक्तौ तु यथासङ्ख्यप्रवृत्त्या 'अम्मयं' 'तन्ने'त्यादिसिद्धावपि 'चिन्मयं' 'एतन्मुरारि'रिति न सिध्येत्। 'कृन्मेजन्तः' 'ङमुण्नित्य'मित्यादिनिर्देशाश्रयणे तु प्रतिपत्तिगौरवम्। वस्तुतस्तु 'यरोऽनुनासिके ञम्वे'त्येव सूत्रयितुं युक्तमित्याहुः। 'प्रगृह्य'मित्यनुवर्तनादाह-**प्रगृह्यश्चेति**। ननु दीर्घोच्चारणसामर्थ्यादेव प्रकृतिभावसिद्धौ किमनेन प्रगृह्यत्वेनेति चेदत्राहुः-प्रगृह्याप्रगृह्ययोर्द्वयोरप्युञोरादेशापत्तौ प्रगृह्यादेशे प्रकृतिभावादिष्टसिद्धावपि अप्रगृह्यादेशस्याऽनुनासिको वकारः स्यात्तद्वारणाय प्रगृह्यत्वाश्रयणमिति। आदेशस्यास्य स्थानिवत्त्वेनोञ्त्वादुञ इति प्रगृह्यत्वविकल्पे प्राप्ते नित्यार्थं तदाश्रयणमित्यन्ये। यदि तु 'प्रगृह्य'मित्यस्य स्थानिविशेषणत्वं स्वीकृत्य 'प्रगृह्यस्योञः ऊँ इत्ययमादेशः' इति व्याख्यायते, तदा दीर्घानुनासिकोऽस्मिन्प्रगृह्यश्चेत्युक्तिरपि स्वरूपकथनमेवेति बोध्यम्। ऊँ इत्यत्र यदि शाकल्यस्येति नापेक्ष्यते, तदा प्रगृह्यस्योञो नित्यमादेशः स्यात्ततश्च 'विति' 'ऊँ ति' एते द्वे रूपे स्याताम्, तस्माच्छाकल्यग्रहणानुवृत्त्या आदेशविकल्पे सिद्धे त्रीणि रूपाणि सिध्यन्तीति कैयटस्तदाह-**अयमादेशो वा स्यादिति**।

**वत्वस्यासिद्धत्वादिति**। अत एवेदं त्रिपाद्यां विधीयते। प्रकृतिभावमात्रबाधनार्थत्वे हि 'इको य'णित्यनन्तरं 'मय उञो वे'त्येवावक्ष्यत्, यणं चाऽन्ववर्तयिष्यत्॥ **ईदूतौ च**। ईदूताविति किम्? 'प्रियः सूर्ये प्रियो अग्ना भवाति'। अग्निशब्दात्परस्याः सप्तम्याः 'सुपां सुलु'गित्यादिना 'डा'देशः।

---

विधिरिति न वाक्यभेदः। न च प्रगृह्यत्वमादेशश्च शाकल्यमते इति तयोरेकप्रयोगे एव प्रवृत्तिः स्यादिति वाच्यं, योगविभागसामर्थ्येन शाकल्यमते एव भावाऽभावकल्पनात्। वस्तुत उञनुवादेन सञ्ज्ञाऽऽदेशयोः सह विधानमेव न्याय्यम्। आदेशे स्थानिवद्भावात्प्रगृह्यकार्यम्। भाष्ये 'प्रगृह्यसञ्ज्ञकश्चे'त्यपि स्थानिवद्भावलब्धार्थस्वरूपकथनमिति **न्यायविदो** विचारयन्तु॥ **मय उञो**। व्याख्यानादत्र मय्प्रत्याहारः। अस्य त्रैपादिकत्वेनासिद्धत्वान्न 'प्लुतप्रगृह्या' इत्यनेन बाधः। **नानुस्वार इति**। 'किंविती'त्यादौ प्रगृह्यसञ्ज्ञाऽभावेऽस्यासिद्धत्वादि'को यणि'ति यणि अनुस्वारो भवत्येव॥ ननु 'यः शिष्यते स लुप्यमानार्थाभिधायी'ति न्यायेन गौरीशब्दस्य सप्तम्यर्थवृत्तित्वेऽपीकारस्य तत्त्वाभावोऽत आह-**ईदन्तमिति**। शब्दस्वरूपस्य विशेष्यत्वात्तदन्तविधिरिति भावः।

**सोमो गौरी अधिश्रितः। मामकी तनू इति। 'सुपां सुलु'गिति सप्तम्या लुक्। अर्थग्रहणं किम् ?। वृत्तावर्थान्तरोपसङ्क्रान्ते माभूत्। वाप्यामश्वो वाप्यश्वः॥**

---

पदकारैः प्रगृह्येषु इतिशब्दप्रयोगस्य नियमितत्वेन इहापि पदकाले इतिशब्द-प्रयोगप्रसङ्गः स चाऽनिष्ट इति बोध्यम्। सप्तमीग्रहणं किम् ?, धीती, मती, सुष्टुती। धीत्या, मत्या, सुष्टुत्या इति प्राप्ते तृतीयैकवचनस्य पूर्वसवर्ण ईकारः। ततः 'अकः सवर्णे दीर्घः' इत्येकादेशः। न त्विह 'सुपां सुलु'गिति लुक्, ह्रस्वश्रवणापत्तेः॥

**सोमो गौरी इति।** 'वातप्रमी अत्र' 'ययी आसक्त' इत्याद्युदाहरणे सत्यप्यूकारा-न्तस्य लौकिकोदाहरणाभावादुभयोरपि वेद एवोदाहरणमुक्तम्। **मामकी तनू इति।** यद्यप्यत्र संहितायां प्रगृह्यप्रयोजनं नास्ति, तथापि 'मामकी इति' 'तनू इति' पदकाले तदस्त्येव 'स्वायां तनू ऋत्व्ये नाधमाना'मित्यत्र तु संहिताकालेऽप्यस्ति, तथापि 'ऋत्यकः' इति पाक्षिकप्रकृतिभावेनाप्येतत्सिद्धं, छन्दसि रूपान्तरस्यापादयितु-मशक्यत्वादिति बोध्यम्। **सप्तम्या लुगिति।** यदि धीत्यादाविव विभक्तेः पूर्वसवर्णे कृते सवर्णदीर्घ एकादेश इति व्याख्यायेत तदा एकादेशं बाधित्वा परत्वादा-ङ्त्वाच्च 'आण्नद्याः' इत्याट् ङेराम् च स्यादिति भावः॥

**अर्थग्रहणं किमिति।** 'वाप्यश्व'इत्यादावपि सप्तम्यर्थोऽस्त्येवेति नार्थोऽर्थग्रहणेनेति प्रश्नः। **अर्थान्तरोपसङ्क्रान्त इति।** 'वाप्यश्व'इत्यत्र यो वापीशब्दः सतु वाप्य-

---

**मामकी तनू इति।** प्रगृह्येष्वितिशब्दप्रयोगस्य पदकारैर्नियमितत्वात्पदपाठे प्रगृह्यत्वफलमत्र बोद्धव्यम्। ईदूतौ किं ?, अग्ना भवाति। सप्तम्या डादेशः। तपरत्वमसन्देहार्थ। सप्तमीति किम् ?, धीती, मती। ह्रस्वान्ताभ्यान्तृतीयैकवचनस्य पूर्वसवर्णे सवर्णदीर्घः। **अर्थग्रहणङ्किमिति।** न च तदभावे 'ईदूदे'दितिवदीदूदन्ता या सप्तमीत्यर्थापत्तिः। तथा च 'ययी'त्यादावेव स्यात्, एकादेशस्य परादिवद्भावेन सप्तमीत्वात्, न तु 'गौरी'त्यादाविति–तत्सिद्धयर्थन्तदावश्यकमिति वाच्यम्; 'ईदूतौ सप्तमी प्रगृह्यम्' 'अदसः' 'एच् द्विवचन'मित्येव सिद्धे गुरुभूतन्यासकरणेन तत्प्रकरणापेक्षया वैजात्य-बोधनात्, ऊकारांशेऽसम्भवाच्च 'सञ्ज्ञाविधौ'वितितदन्तग्रहणनिषेधाऽप्रवृत्त्या 'ईदूदन्तं सप्तम्यन्त'-मित्यर्थेनेष्टसिद्धेरिति प्रश्नः। 'ययी'त्यादेरनभिधानमेवेति **परे। वृत्ताविति।** अर्थग्रहणसामर्थ्या-त्सप्तम्यर्थमात्रे पर्यवसन्नमित्यर्थेनात्र तत्संसृष्टाधेयार्थेऽपि वृत्तेर्न दोषः। 'सञ्ज्ञाया'मिति समासे जह-त्स्वार्थायां वृत्तौ पूर्वपदस्यानर्थक्येऽपि 'सुप्सुपे'ति समासे अजहत्स्वार्थायां प्रसक्तदोषस्योक्तरीत्यैव वारणमिति भावः। 'गौरी अधिश्रित' इत्यत्राधिश्रयणक्रियायामेव गौरीपदबोद्धयाधिकरणत्वान्वय इति गौर्यधिकरणके लक्षणायां मानाभाव इति–न तत्र दोषः।

**वाप्यामश्व इति।** 'सुप्सुपे'ति समासः, 'सञ्ज्ञाया'मिति वा। ननु 'सञ्ज्ञाया'मिति समासे वाक्येन सञ्ज्ञाऽनवगमान्नित्यसमासत्वेन विग्रहोऽनुचित इति चेन्न; तेषु समाससमानार्थकवाक्या-

**अणोऽप्रगृह्यस्यानुनासिकः** ।८।४।५७। अप्रगृह्यस्याणोऽवसानेऽनुनासिको वा स्यात् । दधिँ । दधि । अप्रगृह्यस्य किम् ? अग्नी ॥ इत्यच्सन्धिप्रकरणम् ॥

## अथ हल्सन्धिप्रकरणम् ।

**स्तोः श्चुना श्चुः** ।८।४।४०। सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकार-

---

धिकरणकद्रव्ये उपसङ्क्रान्तः।'सोमो गौरी' इत्यत्र गौरीशब्दस्तु सप्तम्यर्थमात्रे पर्यवसन्नः, न तु तदधिकरणकद्रव्ये उपसङ्क्रान्तः, वृत्त्यभावादिति भेदः ॥

**अणोऽप्रगृह्यस्य** । अण इति किम् ?, हर्तृ कर्तृ । **अच्सन्धिरिति** । कुत्वं श्चुत्वं वाऽत्र न कृतं स्पष्टप्रतिपत्त्यर्थम् । अत एवानुस्वारस्याच्त्वादित्यादिनिर्देशोऽप्युपपन्नः । **इति तत्त्वबोधिन्यामच्सन्धिप्रकरणम् ॥**

**अथ हल्सन्धिः । स्तोः श्चुना श्चुः** । 'स्तो'रिति समाहारद्वन्द्वः, सौत्रं पुंस्त्वम् । एवं 'श्चुः' 'ष्टु'रित्यपि बोध्यम् । **श्चुनेति** । 'सह युक्ते–' इति सूत्रे 'विनापि तद्योगं तृतीये'ति वक्ष्यमाणत्वात्तृतीया । **योगे इति** । एतदध्याहारलभ्यम् । अत्र स्थान्यादेशयोर्यथासङ्ख्यम् । निमित्तकार्यिणोस्तु न, 'शा'दिति ज्ञापकात् । यथासङ्ख्यसूत्रमिह

---

ऽभावेन नित्यसमाससदृशत्वेऽपि नित्यसमासत्वाभावात्, विभाषाधिकारबाधे मानाभावात् । नित्यसमासे हि वृत्तिघटकपदानां पृथक् प्रयोगाऽभाव एव । अत्र तु पृथक्प्रयोगेऽपि तद्बोद्धयविशिष्टार्थाप्रतीतिमात्रमित्याहुः ॥

**अणोऽप्र** । अण इति किं ?, कर्तृ हर्तृ । अत्राणपूर्वेणैव–व्याख्यानात् । 'आगच्छतमग्नी' इत्यादौ प्लुतस्याऽसिद्धत्वात्ततः प्रागेव यथोद्देशत्वात्प्रगृह्यत्वे जाते पश्चात्प्लुते तस्याप्यनुनासिकप्रतिबन्धार्थं पुनः सञ्ज्ञेति नानुनासिकः । सञ्ज्ञायाः कार्यार्थत्वात्पुनः प्रवृत्तौ कार्यमेव बीजम् । स्थानिवत्त्वन्तु न, प्लुतस्थान्यल्वृत्तिधर्मत्वेनाऽल्विधित्वात् । पूर्वसवर्णे कृते द्विवचनत्वन्तु–परादिवद्भावेन, तेन तादृूप्यानतिदेशेऽप्येतद्धर्मातिदेशाङ्गीकारात् । अत एव 'रामा'वित्यादौ परादिवद्भावेन सुप्त्वात्पदत्वं साधितम्–'अन्तादिव'दित्यत्र भाष्ये–इति स्पष्टमाकरे ॥ **अच्सन्धिरिति** । 'सिद्धमनच्त्वा'दिति वार्तिकप्रयोगेण, 'अल्पाच्तर'मिति सौत्रप्रयोगेण, 'कथमनच्त्वं'मिति भाष्यप्रयोगेण च–वृत्तिघटकाच्पदे पदान्तकार्यस्य तत्सन्निधानेन श्चुत्वस्य चाऽभावो बोद्धयते इति केचित् ॥ ***इति स्वरसन्धिः *।**

### अथ हल्सन्धिः ।

**स्तोश्चु** । 'स्'–इति 'श्'–इति च लुप्तविभक्तिके भिन्ने पदे । **योग इति** । संयोग इति तदर्थः । तेन 'चित'मित्यादौ न दोषः । अत्र 'पदस्ये'त्यधिकृतमपि न सम्बद्ध्यते । 'शा'दिति ज्ञापकात् । तेन याच्ञा सिद्धा । शात्परस्य स्तोः श्चुत्वनिषेधकात् 'शा'दिति लिङ्गादेव निमित्तकार्यिणोर्यथासङ्ख्यं न । एवमुत्तरसूत्रेऽपि–'तोः षी'ति ज्ञापकान्न तत् । **शकारचवर्गौ स्त इति** । 'यथासङ्ख्य'मिति

**चवर्गौ स्तः । हरिश्शेते । रामश्चिनोति । सच्चित् । शार्ङ्गिञ्जय ॥**

**शात् ।८।४।४४। शात्परस्य तवर्गस्य श्चुत्वं न स्यात् । विश्नः । प्रश्नः ॥**

---

नोपन्यस्तम्, 'स्थानेऽन्तरतमः' इत्यनेनापि इष्टसिद्धेर्नात्यन्तावश्यकत्वात् । **हरिश्शेत इति।** 'वा शरी'ति पाक्षिकत्वाद्विसर्जनीयस्य सस्तस्य शेन योगे शः, चवर्गयोगे 'रामश्चिनोति'। तवर्गस्य तु चवर्गयोगे 'सच्चि'दित्यादि। शेन योगे तु तच्छिव इत्याद्युदाहरिष्यति । **शात्** । 'ने'ति 'तो'रिति चानुवर्तते, तदाह–**तवर्गस्येत्यादि** । 'जश्त्व'मित्यादिव्याख्यातृनिर्देशे निःसन्दिग्धत्वेन बोधनाय 'व्रश्चे'ति षत्वं जश्त्वं च न कृतं, तथा श्चुत्वमपि न कृतमिति परिहारसम्भवाद्वर्गान्त्यमेवोदाहरति–**विश्नः प्रश्न इति** । 'विच्छ गतौ', 'प्रच्छ ज्ञीप्सायाम्'। 'यजयाचे'त्यादिना नङ्। 'छ्वोः शू'डिति छस्य शत्वम्। नङो ङित्वाद्गुणाभावः। प्रच्छेस्तु 'प्रश्ने चासन्ने'ति निर्देशात्संप्रसारणाभावः। ननु ञमङणनानां नासिकास्थानाधिक्याद्वर्गेष्वाद्यैश्चतुर्भिः सह तुल्यस्थानत्वाभावेन सावर्ण्याभावात् 'स्तोः श्चुने'ति 'तु'शब्देन नकारो न गृह्यते किं तु स्ववर्गाद्याश्चत्वार एवेति विश्नः प्रश्न इत्यत्र श्चुत्वाऽप्रसक्तेः किमनेन निषेधेनेति चेदत्राहुः,–'शा'दिति निषेधाल्लिङ्गादेव 'तुल्यास्यप्रयत्न'मित्यत्रास्यग्रहणेन नासिकास्थानभिन्नं ताल्वादिस्थानं गृह्यते, तत्स्थानं तु तुल्यमेवेति 'तु'शब्देन पञ्चमस्यापि ग्रहणात् श्चुत्वप्रसक्तौ निषेधोऽयमावश्यकः। एवंच 'तोर्लि'ति 'तु'शब्देन नकारस्यापि ग्रहणाद्विद्वाँल्लिखतीत्यादि सिध्यति । नच निमित्तकार्यिणोर्यथासङ्ख्यनिरासज्ञापकमित्युक्तत्वात्तेनैव चार्थवत्त्वे कथमुक्तार्थे ज्ञापकं भवेदिति वाच्यं;'तु'शब्देन नकारग्रहणे सिद्धे हि यथासङ्ख्यनिवृत्तिरनेन ज्ञापनीयेत्युभयज्ञापने बाधकाभावात्। नापि 'तुल्यास्ये'त्यत्र यत्किञ्चित्स्थानतुल्यत्वविवक्षायां वर्गेषु पञ्चापि वर्णाः परस्परं सवर्णा भवेयुरित्युक्तोदाहरणे श्चुत्वप्रसक्तौ 'शा'दित्यारम्भ आवश्यक इत्येतज्ज्ञापकाश्रयणं किमर्थमिति वाच्यं, तथाहि सति ञमङणनानां परस्परसावर्ण्यापत्त्या 'त्वं नयसी'त्यादौ 'अनुस्वारस्य ययि परसवर्णः' 'वा पदान्तस्ये' इत्यनुस्वारस्य ञादयोऽपि स्युः । ताल्वादिस्थानसाम्याभावेऽपि नासिकारूपस्य यत्किचित्स्थानस्य तुल्यत्वात् । नापि तुल्यास्यत्वमन्यूनास्यत्वमिति व्याख्यायां ञादीनां परस्परसावर्ण्यं न भवेत्, तेषां नासिकास्थानसाम्येऽपि ताल्वादिस्थानसाम्याभावेन न्यूनस्थान-

---

-शेषः **हरिश्शेते इति**। 'वा शरी'ति विसर्गाभावे शः । **सच्चिदिति**। चुत्वस्यासिद्धत्वाज्जश्त्वेन दत्वे तस्य चुत्वेन जकारे चर्त्वमिति बोद्धव्यम्। तयोरत्राऽलेखस्तु वैचित्र्यार्थः ॥ **विश्नःप्रश्न इति** । 'यजयाचयतविच्छप्रच्छरक्षो न'ङिति नङि 'च्छ्वो'रिति शादेशे ङित्वाद्गुणाभावः । 'प्रश्ने चासन्नकाले'

ष्टुना ष्टुः ।८।४।४१। स्तोः ष्टुना योगे ष्टुः स्यात् । रामष्षष्ठः । रामष्टीकते ।

कत्वात् । ततश्च 'त्वं नयसी'त्यादिषु नातिप्रसङ्गः । खवर्गाद्यैः सह तु ञादीनां सावर्ण्यं स्यादेव । नासिकास्थानाधिक्येऽपि तदन्यूनस्थानकत्वात्तेषामिति 'विद्वाँल्लिखती'त्यादीष्टं सिध्यति । वर्गाद्यानां तु नासिकास्थानाभावेन न्यूनस्थानकत्वात्पञ्चमेन च सावर्ण्याभावेऽपि न क्षतिरिति ज्ञापकाश्रयणं विनैवेष्टसिद्धिरिति वाच्यं, 'हे गौरि एही'त्यादौ सवर्णदीर्घापत्तेः। 'इकोऽसवर्ण' इति शाकलप्रकृतिभावानापत्तेश्च । इकारान्यूनस्थानकत्वेन तत्सवर्णत्वादेकारस्य। 'स्वराणामूष्मणां चैव विवृतं करणं स्मृतम् । तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव चे'ति वचनात्प्रयत्नभेदेन सावर्ण्याभावमभ्युपगम्योक्तानिष्टवारणेऽपि 'तद्वस्तु' 'तद्वस्त्र'मित्यत्र 'तोर्लि'ति परसवर्णविधिना दकारस्य वकारापत्तेः, वकारस्य ओष्ठस्थानाधिक्येऽपि दन्तस्थानसाम्येन लकाराऽन्यूनस्थानकत्वात् । यदि तु 'वकारस्य दन्तोष्ठ'मिति समाहारनिर्देशादोष्ठस्थानदन्तस्थानभिन्नमेव दन्तोष्ठस्थानमिति वकारस्य लकारसावर्ण्याभावात्तद्वस्त्वित्यादौ नातिप्रसङ्ग इति ब्रूषे तर्हि 'लुग्वा दुहे'त्यादिना दन्त्ये तङि विधीयमानो यः क्सस्तस्य लुक्–'अदुग्ध्वही'त्यत्र न स्यात्, किंतु 'अदुग्धे'त्यादावेव स्यात् । तथा 'पिपूर्तः' 'पिपुरती'त्यादौ विधीयमानम् 'उदोष्ठ्यपूर्वस्ये'त्युत्वं'सुस्वूर्षती'त्यादौ न स्यादुक्तरीत्या वकारस्यौष्ठ्यत्वाभावात् । न च वस्यौष्ठ्यत्वे दन्त्यत्वे च सति 'सेक्सृप्' इति षोपदेशलक्षणे स्विदादीनां पृथग्ग्रहणं व्यर्थं स्यात्तेषामपि दन्त्यान्तसादित्वादिति भ्रमितव्यम्; 'दन्त्यः केवलदन्त्यो न तु दन्तोष्ठजोऽपी'त्यादेर्मूल एव वक्ष्यमाणत्वात् । ये तु पाणिनिशिक्षायां यमानुस्वारयोरेव नासिकास्थानत्वकथनादन्येषां स्थानं नासिका न भवति किं त्वनुनासिकत्वं गुण एव । नासिकाव्यापारेणोच्चार्यमाणत्वमात्रेण नासिकास्थानत्वकथने त्वकारादीनामप्युक्तरीत्या नासिकास्थानमिति स्थाननिरूपणे तेषां तदकथनान्न्यूनतेत्यादि वदन्ति । तेषामत्रोक्तज्ञापकाश्रयणं विनैवेष्टसिद्धिः । अन्ये त्वकारादीनां नासिकया सर्वदाऽनुच्चारणादनुनासिकत्वं गुणः, 'सत्त्वे निविशतेऽपैती'त्यादिलक्षणलक्षितत्वात् । ञमङणनानां त्वनुनासिकत्वं नापैति, सर्वदैव तयोच्चारणादिति न गुणः किन्तु यमानुस्वारयोरिव स्थानमेव नासिकेति स्थाननिरूपणे 'ञमङणनानां नासिका चे'त्युक्तं नत्वकारादीनां नासिका चेति । यत्तूक्तं तुल्यास्यत्वमन्यूनास्यत्वमिति व्याख्यायां तद्वस्त्वित्यादौ 'तोर्लि'ति दकारस्य वकारप्रसङ्ग इति । तदापाततः । 'तोर्लि'त्यत्र लकारद्वयनिर्देश इति स्वीकृत्य लकाररूपे लकारे परे परसवर्ण इति व्याख्यायामुक्तदोषाप्रसक्तेरित्याहुः ॥

पेष्टा। तट्टीका। चक्रिण्ढौकसे॥ **न पदान्ताट्टोरनाम्** ।८।४।४२। 'अना'मिति लुप्तषष्ठीकं पदम्। पदान्ताट्टवर्गात्परस्याऽनामः स्तोः ष्टुर्न स्यात्। षट् सन्तः। षट्ते। पदान्तात्किम्। ईट्टे। टोः किम्?। सर्पिष्टमम्॥ ❀ **अनाम्नवतिनगरीणामिति वाच्यम्**॥ षण्णाम्। षण्णवतिः। षण्णगर्यः॥

**तोः षि** ।८।४।४३। तवर्गस्य षकारे परे न ष्टुत्वम्। सन्षष्ठः। **झलां जशोऽन्ते** ८।२।३९। वागीशः। चिद्रूपम्॥ **यरोऽनुनासिकेऽनुनासिको वा** ।८।४।४५। यरः पदान्तस्यानुनासिके परेऽनुनासिको वा स्यात्। एतन्मुरारिः। एतद्मुरारिः। स्थानप्रयत्नाभ्यामन्तरतमे स्पर्शे चरितार्थो विधिरयं रेफे न प्रवर्तते। चतुर्मुखः॥ ❀ **प्रत्यये भाषायां नित्यम्**॥ तन्मात्रम्। चिन्मयम्॥ कथं तर्हि मदोदग्राः ककुद्मन्त इति?। यवादिगणे दकारनिपातनात्॥

---

**ष्टुना ष्टुः**। इहापि कार्यिनिमित्तयोर्यथासंख्यं न, 'तोःषी'ति ज्ञापकात्। **सर्पिष्टममिति**। 'ह्रस्वात्तादौ तद्धिते' इति षत्वम्॥ **यरो**। पदान्तस्येति किम्?। वेद्मि। स्तभ्नाति। **स्पर्शे चरितार्थ इति**। प्रसिद्धप्रयोगाभिप्रायेणेदमुक्तम्। 'कमल्मुरारिः' 'वृक्षव्ँनेते'त्यादौ लकारवकारयोरनुनासिकप्रवृत्तौ बाधकाभावात्। 'स्पर्शस्यैवेष्यते' इति प्राचो ग्रन्थानुरोधेन स्पर्शभिन्नेष्वनुनासिकविधिर्न प्रवर्ततेऽनभिधानादिति वा योज्यम्॥ **रेफे न प्रवर्तत इति**। यद्यपि 'व्यक्तिः पदार्थ' इति पक्षे लक्ष्यभेदे लक्षणभेदादस्यां व्यक्तौ लक्षणस्याऽचरितार्थत्वाद्रेफेऽपि प्रवृत्तिर्दुर्वारैव, तथापि लक्ष्यानुरोधेन जातिपक्षमाश्रित्येदमुक्तम्। **दकारनिपातनादिति**।

---

इति निर्देशात्सम्प्रसारणाभावः॥ **न पदान्ता**। 'पदाट्टो'रित्येव सिद्धेऽन्तग्रहणं स्पष्टार्थम्। **टोः किमिति**। षकारस्य पदान्ते जश्त्वविधानात्प्रश्नः। 'ह्रस्वात्तादा'विति षत्वस्यासिद्धत्वाज्जश्त्वाभाव इत्युत्तरम्। **षण्णवतिरिति**। षडधिका नवतिरिति विग्रहः। षण्-णगर्य इति पृथक्पदे॥ **यरोनु**। पदान्तस्येति किं?, वेद्मि, बध्नाति। **स्पर्शे चरितार्थ इति**। उपलक्षणमिदं—वलयोरपि प्रवृत्तेः। एतच्च जातिपक्षे स्पष्टमेव। व्यक्तिपक्षेऽपि तादृशव्यक्तौ चरितार्थस्य एतद्व्यक्तिविषयतयोपप्लव एव नेति बोद्धव्यम्। स्पष्टश्चेदमिको यणचीत्यत्र **कैयटे**। **परे** तु—स्थानेऽन्तरतमसूत्रे सप्तम्यन्तपाठस्य भाष्यकृता दूषितत्वेनैतद्युक्तेरुक्तिसम्भव एव न। तस्मात् 'अनुस्वारस्ये'ति सूत्रात्सवर्णग्रहणमपकृष्य 'परः सवर्णोऽनुनासिको भवती'त्यर्थान्न दोषः। तदुक्तं भाष्ये,—'रेफेऽनुनासिकपरसवर्णत्वयोः प्रतिषेधो वक्तव्यो, न वक्तव्यो, रेफोष्मणां सवर्णा न सन्ती'त्याहुः॥

**चिन्मयमिति**। स्वार्थिकः 'तत्प्रकृतवचने' इति मयट्। तत्र 'त'दिति वाक्यभेदेन क चित्प्राचुर्यरूपप्रकृतवचनाभावेऽपि मयडर्थम्। अत एव 'चिन्मयं ब्रह्मे'ति सामानाधिकरण्यम्। 'चिन्मात्र'-

**तोर्लि** ।८।४।६०। तवर्गस्य लकारे परे परसवर्णः स्यात् । तल्लयः । विद्वाँल्लिखति । नकारस्याऽनुनासिको लकारः ॥ **उदः स्थास्तम्भोः पूर्वस्य** ।८।४।६१। उदः परयोः स्थास्तम्भोः पूर्वसवर्णः स्यात् ॥ 'आदेः परस्य'। उत्थानम् । उत्तम्भनम् । अत्राऽघोपस्य महाप्राणस्य सस्य तादृश एव थकारः । तस्य 'झरो झरी'ति पाक्षिको लोपः । लोपाभावपक्षे तु थकारस्यैव श्रवणं न तु 'खरि चे'ति चर्त्त्वम् । चर्त्त्वं प्रति थकारस्याऽसिद्धत्वात् ॥

**झयो होऽन्यतरस्याम्** ।८।४।६२। झयः परस्य हस्य पूर्वसवर्णो वा स्यात् । घोषवतो नादवतो महाप्राणस्य संवृतकण्ठस्य हस्य तादृशो वर्गचतुर्थ एवादेशः ।

---

ननु यवादिगणे 'ककु'दित्येव पठ्यते न तु 'ककुद्मन्त'इति मतुब्विशिष्टम् । तथाच यरोऽनुनासिको दुर्वारः । न च यरोनुनासिकप्रवृत्तौ झयन्तत्वाभावेन 'झयः'इति मतुपो मकारस्य वत्वाप्रसक्त्या यवादिगणे 'ककु'दिति पाठो निरर्थकः स्यादिति वाच्यम्; अनुनासिकविधेरसिद्धत्वेन झयन्तत्वानपायिद्गणे तत्पाठस्य सार्थक्यादिति चेदत्राहुः, यद्यत्र ककुद्दकारस्य नकार इष्टः स्यात्तर्हि गणे 'ककु'नित्येव पठेन्न 'ककु'दिति। मतुपः प्रकृतिभूतककुच्छब्दस्य नान्तत्वनिपातनेऽप्यन्यत्र दकारान्तप्रयोगस्य निर्बाधत्वात्। तस्माद्यरोऽनुनासिकोऽत्र न प्रवर्तत इति । अन्येत्वाहुः—'यचि भं तसौ मत्वर्थे' इति संहितया पाठे 'तसा'विति तात्पूर्वं दकारं प्रश्लिष्य भत्वेनाप्येतत्समाधातुं शक्यम् ।'तसा'विति द्विवचननिर्देशस्तु दतयोः समाहारद्वन्द्वं कृत्वा इतरेतरयोगद्वन्द्वे कृते समुपपद्यत इति ॥

**उदः स्था** । 'अनुस्वारस्य ययी'त्यत्र समस्तमपि सवर्णग्रहणमिह निष्कृष्य संबध्यते एकदेशे स्वरितत्वप्रतिज्ञानादित्यभिप्रेत्याह—**पूर्वसवर्णः स्यादिति** ॥

---

मिति काचित्कोऽपपाठः, मात्रचः प्रत्ययस्यात्रोपपत्त्यभावात् । मयूरव्यंसकादिष्वेवार्थमात्रशब्देनात्र समासस्य वक्ष्यमाणत्वात् । **निपातनादिति** । 'यवादिगणे 'ककुद्मा'निति प्रकृतिप्रत्ययसमुदायः पठ्यते' इति मतेनेदम् ॥

**उदः स्था** । 'तस्मादित्युत्तरस्ये'ति परिभाषालभ्यमर्थमाह—**उदः परयोरिति** । **अत्राघोषस्येति** । समनियतत्वेनान्यतमग्रहणे बाधकाभावेन श्वासविवारयोस्त्यागेऽपि न न्यूनतेति बोद्धव्यम् । **थस्यासिद्धत्वादिति** । त्रिपाद्यां परत्वादिति भावः । 'हलो यमा'मितिसूत्रोक्तभाष्यसम्मताष्टाध्यायीपाठे तु—थस्यासिद्धत्वाभावेन चर्त्वं भवत्येव । अत एव 'उत्पूर्वस्कन्दे रोगे उपसङ्ख्यानम्, उत्कन्दो रोग' इति भाष्यं सङ्गच्छते । मूलन्तु प्राचामनुरोधेनेति **परे** । न चेदं व्यर्थं—'झलो झली'त्यनेन सस्य लोपे उत्थानस्य सिद्धेरिति वाच्यं, झलादौ प्रत्यये तेन लोप इत्यर्थस्यानेन ज्ञापनात् । 'उदस्था'दित्यत्र तु—निर्दिश्यमानपरिभाषया निर्दिश्यमानादेरेव स्थानित्वान्न दोषः ॥

'झय' इति पञ्चमीत्याह—**झयः परस्येति** । 'पूर्वस्ये'त्यनुवर्त्तते। **घोषवत इति**। समनियतत्वेऽपि

वाग्घरिः । वाग्हरिः ॥ **शश्छोऽटि** ।८।४।६३। पदान्ताज्झयः परस्य शस्य छो वा स्यादटि । दस्य श्चुत्वेन जकारे कृते— ॥

**खरि च** ।८।४।५५। खरि परे झलां चरः स्युः । इति जकारस्य चकारः । तच्छिवः । तच्शिवः ॥ ❀ **छत्वममीति वाच्यम्** ॥ तच्श्लोकेन । तच्छ्लोकेन । अमि किम् । वाक्श्च्योतति ॥ **मोऽनुस्वारः** ।८।३।२३। मान्तस्य पदस्यानुस्वारः स्याद्धलि ॥ 'अलोऽन्त्यस्य' । हरिं वन्दे । पदस्येति किम् ? गम्यते । **नश्चापदान्तस्य झलि** ।८।४।२४। नस्य मस्य चाऽपदान्तस्य झल्यनुस्वारः स्यात् । यशांसि । आक्रंस्यते । झलि किम् ?। मन्यते ॥ **अनुस्वारस्य ययि परसवर्णः** ।८।४।५८।

---

**शश्छोऽटि** । इह पदान्तादित्यनुवर्त्य 'पदान्ताज्झय' इति व्याख्येयम्, तेनेह न, 'मध्वश्चोतन्त्यभितो विरप्शम्'। विपूर्वाद्रपेरौणादिकः शः। **छत्वममीति**। 'शश्छोऽटी'ति सूत्रं 'शश्छोमी'ति पठनीयमित्यर्थः । **तच्छ्लोकेनेति** । 'तच्छ्श्रुणे'त्याद्यप्युदाहर्तव्यम् ॥

**मोऽनुस्वारः** । 'हलि सर्वेषा'मित्यतो 'हली'त्यनुवर्तते 'पदस्ये'ति च, तदाह— **मान्तस्येत्यादि** । हलि किम् ?। त्वमत्र । किमत्र ॥

**नश्चापदान्तस्य** । अपदान्तस्य किम् ?। राजन्याहि । **आक्रंस्यत इति** । 'आङ उद्गमने' इति तङ् । 'स्नुक्रमोः—' इति नेट् ।

**अनुस्वारस्य** । अत्र 'ययी'ति स्पष्टार्थम्, अचि परेऽनुस्वाराऽभावात् । शलि तु परसवर्णोऽनुस्वारान्तरतमो न संभवतीति 'कुण्डं रथेने'त्यत्रैव 'दंशन'मित्यादावपि परसवर्णविध्यप्रवृत्तेः । अत्र वदन्ति—'ईषद्विवृतमूष्मणां, विवृतं स्वराणा'मिति भाष्यमते 'ययी'त्यस्यापार्थकत्वम् । सूत्रकारमते तदावश्यकमेव । अन्यथा 'दंशन'-

---

विनिगमनाविरहात्स्वरूपप्रतिपादनाय च त्रितयग्रहणम् ॥

**झय इति**। 'पदान्ता'दित्यपि बोद्धयम् । तेन 'विरप्श'मित्यादौ छत्वं न । **जकारे कृते इति**। 'छत्व'मिति शेषः । पूर्वोक्तभाष्यसम्मताष्टाध्यायीपाठे चर्त्वस्य छत्वं प्रत्यसिद्धत्वात् ॥

**मोऽनु** । 'पदस्ये'त्यधिकृतं 'म' इत्यनेन विशेष्यत इत्याह—**मान्तस्येति** । 'हलि सर्वेषा'मित्यतो 'हली'त्यनुवर्त्तते । हलि किं ?, राममाश्रय ॥ **नश्चा** । चेन मोऽनुकृष्यते । अपदान्तस्य किं ?, राजन्पाहिं । **यशांसीति** । यशश्शब्दाज्जसः शौ 'नपुंसकस्ये'ति नुमि 'सान्ते'ति दीर्घः । **आक्रंस्यते इति**। क्रमेर्लृट्, 'आङ उद्गमने' इति तङ्, स्यः ॥

**अनुस्वारस्य** । 'परे'ति लुप्तषष्ठीकं पृथक्पदम् । अत एव 'उदःस्थे'त्यादौ सवर्णग्रहणानुवृत्तिः, 'यरोऽनुनासिक' इत्यत्र तदपकर्षश्च सिद्धः । 'ययी'ति स्पष्टार्थम् । 'दंशन'मित्यादौ तु न दोषः, शकार-सवर्णाऽप्रसिद्धेः । प्रयत्नभेदेनाऽज्झलोः सावर्ण्याभावात् । अचि अनुस्वाराभावात् ॥

स्पष्टम्। अङ्कितः। अञ्चितः। कुण्ठितः। शान्तः। गुम्फितः। 'कुर्वन्ती'त्यत्र णत्वे प्राप्ते तस्याऽसिद्धत्वादनुस्वारे परसवर्णे च कृते तस्याऽसिद्धत्वान्न णत्वम्॥

**वा पदान्तस्य** ।८।४।५९। पदान्तस्यानुस्वारस्य यथि परे परसवर्णो वा स्यात्। त्वङ्करोपि। त्वं करोपि। सय्यँन्ता। संयन्ता। सव्वँत्सरः। संवत्सरः। यँल्लोकम्। यं लोकम्। अत्राऽनुस्वारस्य पक्षेऽनुनासिका यवलाः॥ **मो राजि समः क्वौ** ।८।३।२५। क्विबन्ते राजतौ परे समो मस्य म एव स्यात्। सम्राट्॥

**हे मपरे वा** ।८।३।२६। मपरे हकारे परे मस्य म एव स्याद्वा। 'ह्मल ह्मल चलने'। किम्ह्मलयति। किं ह्मलयति॥ ❀ **यवलपरे यवला वेति वक्तव्यम्**॥ **यथासङ्ख्यमनुदेशः समानाम्** ।१।३।१०। समसम्बन्धी विधिर्यथासङ्ख्यं स्यात्।

मित्यादावनुस्वारान्तरतमः परसवर्णोऽनुनासिक ईकारः स्यात्। ईकारशकारयोस्तन्मते सावर्ण्यस्य सत्त्वात्। तथा 'कुण्डं शेते' इत्यादावनुस्वारस्य 'वा पदान्तस्ये'ति स्यादिति। **अङ्कित इति**। 'अङ्क पदे लक्षणे चे'ति चुरादिण्यन्तात्क्तः। 'निष्ठायां सेटी'ति णिलोपः। परसवर्णेन ङः। 'अकि लक्षणे' इत्यस्माद्वा क्तः। नुमोऽनुस्वारे परसवर्णेन ङः। **अञ्चित इति**। 'अञ्चेः पूजाया'मिति निष्ठायामिट्। 'नाञ्चे'रिति नलोपनिषेधः। **कुण्ठित इति**। 'कुठि प्रतिघाते' क्तः। नुमोऽनुस्वारे परसवर्णेन णः। **शान्त इति**। 'शम उपशमे' क्तः। 'वा दान्तशान्ते'ति निपातनादिडभावः। 'अनुनासिकस्य क्वी'ति दीर्घः। मस्यानुस्वारे परसवर्णेन नकारः। **गुम्फित इति**। 'गुम्फ ग्रन्थे' क्तः। मस्यानुस्वारे परसवर्णेन मः॥

**मो राजि समः क्वौ**। राजीति किम्?, संपत्। सम इति किम्?, इदं राट्। क्वाविति किम्? संराजितुं, संराजितव्यम्। मकारस्य मकारवचनमनुस्वारनिवृत्त्यर्थं, तदाह—**म एव स्यादिति**। **सम्राडिति**। 'राजृ दीप्तौ'। संपूर्वादस्मात् 'सत्सूद्विषे—'त्यादिना क्विप्। 'व्रश्चादिना षत्वं, जश्त्वचर्त्वे। **हे मपरे वा**। मपर इति बहु-

**मो राजि**। 'ने'ति सिद्धे 'म' इत्युक्ति'र्हे मपरे' इत्येतद्विषये [illegible]म्ह्मलयती'त्यादौ 'मो नो धातो'रिति नत्वबाधनार्था। निषेधस्त्वनन्तरत्वादनुस्वारस्यैव स्यात्। 'ध्वनितचेद'मेतदोऽन्', 'अमो म'-शिति सूत्रयोर्भाष्ये॥

**हे मपरे**। 'मपरे' इति बहुव्रीहिर्न तु तत्पुरुषोऽसम्भवात्। 'मोऽनुस्वार' इत्यतो 'म'इत्यनुवर्त्तते॥

**यथासङ्ख्य**। सम्यक् ख्यानं—सङ्ख्या। क्रमवैशिष्ट्येन ज्ञानम्। 'यत्साङ्ख्यैः प्राप्यते स्थान'मित्यत्र सङ्ख्याशब्दस्य ज्ञानार्थताया दृष्टत्वात्। तामनतिक्रम्य—यथासङ्ख्यम्। अनुदेशः—पश्चाद्भवंवाक्यार्थ-

१ अनुस्वारस्य यथि परे परसवर्णः स्यादिति वृत्तिः।

किय्ँह्यः । किंह्यः । किँह्लयति । किंह्लयति । किँह्लादयति । किंह्लादयति ॥

**नपरे नः** ।८।३।२७। नपरे हकारे मस्य नः स्याद्वा । किन्ह्नुते । किंह्नुते ॥

**ङ्णोः कुक् टुक् शरि** ।८।३।२८। ङकारणकारयोः कुक्टुकावागमौ वा स्तः शरि । कुक्टुकोरसिद्धत्वाज्जश्त्वं न ॥ ॐ **चयो द्वितीयाः शरि पौष्करसादेरिति**

---

व्रीहिः । **यवलेति** । यवलाः परा यस्माद्यवलपरस्तस्मिन्हकारे परे मस्य यवला वा भवन्तीत्यर्थः ॥

**यथासङ्ख्यमनुदेशः** । अनुदिश्यत इति अनुदेशः । पश्चादुच्चार्यत इत्यर्थः । 'समाना'मिति संबन्धे षष्ठी, तदाह–**समसम्बन्धी विधिरिति** । 'समकर्मकं विधान'मिति तु नोक्तम्, तथाहि सति यत्रोद्देशिषु समेषु समानां विधानं पाघ्रादिषु पिबादीनां प्रियस्थिरादिषु च प्रस्थादीनां तत्रैव यथाक्रमं प्रवृत्तिः स्यात् । इष्यते तु अनुवाद्ययोरपि यथासङ्ख्यत्वम् । 'समूलाकृतजीवेषु हन्कृञ्ग्रहः' इत्यत्र यथा । समानामिति किम् ?, 'लक्षणेत्थंभूते'त्यत्र लक्षणादयश्चत्वारोऽर्थाः, प्रत्यादयस्तु त्रयः, तत्र सर्वेषां सर्वत्र कर्मप्रवचनीयसंज्ञा यथा स्यात् ॥

**नपरे** । अयमपि बहुव्रीहिरेव । 'हे'इति त्वनुवर्तते, तदाह–**नपरे हकारे इति** ।

**ङ्णोः** । **चयो द्वितीया इति** । एतच्च 'नादिन्याक्रोशे' इति सूत्रे भाष्ये

---

बोधकालिकः सम्बन्धः । साम्यं–सङ्ख्यया, योग्यत्वाद्व्याख्यानाच्च । एवञ्च समसङ्ख्यानां सम्बन्धी–येन क्रमेण पदज्ञानं पदादुपस्थितिर्वा तेनैव क्रमेण वाक्यार्थबोधविषयः सम्बन्धस्तेषामित्यर्थः । फलितमाह–**समसम्बन्धीति** । यद्यपि स्थानाख्यलौकिकप्रमाणादेव सिद्धं, तथापि 'परस्मैपदानाम्' एचोऽयवायाव' इत्यादौ शब्दतः सूत्रान्तरस्थक्रममादाय सम्बन्धबोधार्थम्, 'आद्यन्तौ टकिता'वित्यादौ समासनिर्देशे साहित्ये द्वन्द्वविधानादप्राप्तक्रमान्वयबोधनार्थश्चेदम् । एवञ्च तत्र यथासङ्ख्येनान्वयबोधकवाक्यकल्पना एतत्प्रामाण्यात्, ततश्च बोध इति बोद्धव्यम् । अत्र 'स्वरितेने'त्यपकृष्यते इति 'ख्यत्या'दित्यादौ नातिप्रसङ्गः । तत्र प्रतिपत्तिकालिकमेव सङ्ख्यासाम्यमेतच्छास्त्रप्रवृत्त्युपयोगीति 'ञमङणन'-मिति सूत्रे भाष्ये स्पष्टम् । एते यवला निरनुनासिका एव, विधीयमानत्वेन सवर्णाऽग्राहकत्वात् । जातिग्रहणप्राप्तस्यैव गुणभेदकत्वप्राप्तस्यापि 'अप्रत्यय' इत्यनेन निषेधाच्च । एवं 'मय उञ' इत्यत्रापि । अत एव मतोर्मस्य नानुनासिको वकारः, अन्यथा 'तद्वानासा'मित्यादौ नित्यानुनासिकापत्त्या तन्निर्देशासङ्गत्यापत्तिरित्याहुः ॥

**चयो द्वितीया इति** । 'नादिन्याक्रोशे' इत्यत्र भाष्ये इदम् । एतत्सामर्थ्यादेतत्कृतद्वितीयस्य न चर्त्वम् । 'ऊष्मोदयं प्रथमं स्पर्शमेके द्वितीयमाहुरपदान्तभाज'मिति **प्रातिशाख्ये**ऽ'पदान्तभाज'मिति चर्त्वासिद्धत्वलब्धार्थानुवादः । पदान्ते जश्त्वप्रवृत्त्या चर्त्वं विना चयोऽलाभात् । अत्र तु कृते न जश्त्वप्राप्तिरस्याऽसिद्धत्वात् । 'अफ्सरा' 'वक्षा' इति भाष्योदाहृते [illegible] एवञ्च प्राति-

वाच्यम् ॥ प्राङ्क्ष्षष्ठः । प्राङ्क्षष्ठः । प्राङ्षष्ठः । सुगण्ठ्षष्ठः । सुगण्ट्षष्ठः । सुगण्षष्ठः ॥ **डः सि धुट्** ।८।३।२९। डात्परस्य सस्य धुड्वा स्यात् । षट्त्सन्तः । षट्सन्तः ॥

**नश्च** ।८।३।३०। नकारान्तात्सस्य धुड्वा । सन्त्सः । सन्सः ॥

**शि तुक्** ।८।३।३१। नस्य पदान्तस्य शे परे तुग्वा स्यात् । 'शश्छोऽटी'ति छत्वविकल्पः । पक्षे 'झरो झरी'ति चलोपः । सञ्छम्भुः । सञ्च्छम्भुः । सञ्च्शंभुः । सञ्शम्भुः ।

---

स्थितम् । अतएव मनोरमायां 'डः सी'ति सूत्रे 'तु'डित्युच्यमाने 'चयो द्वितीयाः–' इति पक्षे थकारापत्तिरुक्ता । यदि तु 'ङ्णोः' इति सूत्रस्थं स्यात्तर्हि 'तु'डित्येव सुवचं स्यात् । तुटोऽसिद्धत्वेन 'चयो द्वितीयाः–' इत्यस्याऽप्रवृत्तेः । **पौष्करसादेरिति ।** पुष्करे तीर्थविशेषे सीदतीति पुष्करसत् । तस्यापत्यं पौष्करसादिराचार्यः । बाह्वादित्वादिञ् ॥ अनुशतिकादित्वादुभयपदवृद्धिः । **डः सि धुट्** । 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्परत्वा'दित्यभिप्रेत्याह–**सस्येति** । 'सी'ति सप्तमीनिर्देशस्तु लाघवार्थः । **षट्त्सन्त इति ।** धुटश्चर्त्वेन तकारः । 'चयो द्वितीयाः–' इति तस्य थो न, चर्त्वस्याऽसिद्धत्वात् । अतएव धुडभावे 'षट्सन्त' इत्यत्र टस्य ठो न भवति । नन्वेवमपि 'डः सि धु'गिति धुग्विधीयतां 'डकारस्य सकारे परे धु'गिति व्याख्यानसंभवात्किमनेन धुटः परादित्वाभ्युपगमेन ? । मैवम् । पूर्वान्तत्वे तु 'न पदान्ताट्टोरना'मिति निषेधाप्रवृत्त्या धकारस्य ष्टुत्वप्रसङ्गात् । अतएव वक्ष्यमाणस्तुगिहैव न कृतः । डस्य तुकि ष्टुत्वे तस्याऽसिद्धत्वेन 'चयो द्वितीयाः'–इत्यस्यापि प्रसङ्गाच्च ॥ इह धुड्विकल्पेन रूपद्वये सति टकारनकारविसर्गाणां द्वित्वविकल्पात्षोडश रूपाणि । 'खयः शरः' इति द्वित्वे द्वात्रिंशत् ॥ 'शरोऽची'ति निषेधोऽत्र न प्रवर्तते । तस्य सौत्रद्वित्वमात्रविषयत्वस्योक्तत्वात् । न च चर्त्वस्यासिद्धत्वात्खयः परत्वमेव नास्तीति शङ्क्यम् । 'पूर्वत्रासिद्धीयमद्वित्वे' इत्युक्तेः ॥

**शि तुक्** । 'शी'ति सप्तमी पूर्वत्र कृतार्थायाः 'नः' इति पञ्चम्याः षष्ठीं कल्पयती-

---

ख्याल्ये'ऽपदान्तभाज'मित्युत्सर्गः । यद्वा तयोरव्युत्पन्नत्वं, न त्वप्पूर्वात्सत्तेरसिर्वदेः सो वेत्यन्यत्र विस्तरः ॥

**डः सि** । 'सी'ति सप्तमी षष्ठ्यर्थे, व्याख्यानात् । तदाह–**सस्येति** । 'पदस्ये'त्यनुवर्तमानस्य वैयधिकरण्येनान्वयात्पदावयवस्य सस्येत्यर्थः । **षट्त्सन्त इति** । धुटि धस्य चर्त्वे लक्ष्यभेदात्पुनर्डस्य चर्त्वम् ॥**नश्च** । **नकारान्तादिति** । 'पदस्ये'त्यनुवृत्तं पञ्चम्या विपरिणम्यत इति भावः । वैयधिकरण्येनैवान्वय इति ङ्मुट्सूत्रस्थभाष्यस्वरसः । **नस्य पदान्तस्येति** । अपदान्तनकारेऽनुस्वारप्रवृत्त्या

'ञ्छौ ञचछा ञचशा ञशाविति चतुष्टयम् ।
रूपाणामिह तुक्छत्वचलोपानां विकल्पनात् ॥'

**ङमो ह्रस्वादचि ङमुण्नित्यम्** ।८।३।३२। ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याऽचो नित्यं ङमुडागमः स्यात् । प्रत्यङ्ङात्मा । सुगण्णीशः । सन्नच्युतः ॥

---

त्याह-**नस्येति** । **चलोप इति** । 'झरो झरी'त्यत्र सवर्णग्रहणसामर्थ्याद्यथासङ्ख्यं न प्रवर्तत इति भावः । **सञ्छम्भुरिति** । इह श्चुत्वतुकोरसिद्धत्वमाश्रित्य 'नश्छवी'ति रुत्वं नाशङ्क्यं, छत्वस्याऽसिद्धत्वात् । **चतुष्टयमिति** । अत्र तुकः श्चुत्वे 'चयो द्वितीयाः' इति पक्षे चस्य छत्वे शस्यापि छत्वविकल्पात्सञ्छ्छम्भुः सञ्छ्शम्भुरिति रूपद्वयवृद्धिर्बोध्या । न च शस्य छत्वपक्षे शर्परत्वाभावात् 'चयो द्वितीयाः–' इति पक्षे चस्य छो नेति शङ्क्यम्, 'शश्छोऽटी'ति छत्वस्याऽसिद्धत्वादित्याहुः ॥

**ङमो ह्रस्वात्** । ङम् प्रत्याहारः, संज्ञायां च कृतं टित्त्वं सामर्थ्यात्संज्ञिभिः संबध्यते । तेन यथासङ्ख्यं ङुट्–णुट्–नुटः प्रवर्तन्ते । नित्यग्रहणं विस्पष्टार्थं, 'हे मपरे' इति 'मय उञो वो वे'ति च विकल्पद्वयस्य मध्ये पाठादेव नित्यत्वलाभात् । नन्विह नित्यग्रहणाभावे 'हे मपरे वे'ति वाग्रहणमुत्तरसूत्रेषु पञ्चस्वप्यनुवर्तते वा न वेति शङ्का स्यादिति चेत्सत्यम् । अतएव 'विस्पष्टार्थ'मित्युक्तं न तु व्यर्थमिति । **तस्मात्परस्याऽच इति** । ननु 'ङम' इत्यस्य षष्ठ्यन्तताामाश्रित्याऽचि परे पूर्वस्यैव विधीयतां को दोष इति चेन्मैवम्, तथाहि सति ङमन्तस्य पदस्य पूर्वावयवः स्यादित्यनिष्टं प्रसज्येत । 'पदस्य यो ङम् तस्ये'ति वैयधिकरण्येन व्याख्यायामपि 'कुर्वन्नास्ते' इत्यत्र णत्वं प्रसज्येत, 'पदान्तस्ये'ति निषेधस्याऽप्रवृत्तेः । यद्यपि वहिरङ्गपरिभाषया ङमुड्विधेरसिद्धत्वादिष्टं सिध्यति, तथापि यथोद्देशपक्षे त्रैपादिकेऽन्तरङ्गे वहिरङ्गपरिभाषाया अप्रवृत्तेः प्रसज्यत एव णत्वमिति यथोक्तव्याख्यानमेव साध्विति दिक् । **सुगण्णीश इति** । ण्यल्लोपौ न स्थानिवत्,

---

फलितार्थप्रदर्शनमिदम् । 'नान्तस्य पदस्ये'त्युचितम् । **चतुष्टयमिति** । वक्ष्यमाणविकल्पैरिति भावः । तेन तुकश्चुत्वे छत्वस्यासिद्धत्वाच्चयो द्वितीया इति पक्षे चस्य छत्वेन छकारछकार–छकारशकार–घटितरूपद्वयाधिक्ये ञ्ञानुस्वारविसर्गाणां द्वित्वविकल्पेनाधिक्येऽपि न क्षतिः ॥

**ङमो** । 'पदस्ये'त्यनुवृत्तं सामानाधिकरण्यानुरोधात्पञ्चम्या विपरिणम्यते इत्याह–**तदन्तं यत्पदं तस्मादिति** । तत्र 'ङम्'–स्वयं 'ह्रस्वा'दितिविशेषणसम्बन्धमनुभूय पदविशेषणत्वेन तदन्तपरं इति भावः । 'ङम' इति पञ्चमीवत्सद्रचीति सप्तमी [illegible] **इति** । सप्तमीनिर्देशस्तु

**समः सुटि** ।८।३।५। समो रुः स्यात्सुटि । 'अलोऽन्त्यस्य' ॥

**अत्रानुनासिकः पूर्वस्य तु वा** ।८।३।२। अत्र रुप्रकरणे रोः पूर्वस्याऽनुनासिको वा स्यात् ॥

---

पूर्वत्रासिद्धे तन्निषेधात् । ननु 'परमदण्डिना'वित्यादावन्तर्वर्त्तिविभक्त्या पदत्वान्नुट् स्यादिति चेन्न; 'उत्तरपदत्वे चापदादिविधौ' इति प्रत्ययलक्षणप्रतिषेधात् । अतएव 'परमवाचौ' 'परमगोदुहौ' 'परमलिहा' वित्यादौ कुत्वघत्वनत्वादीनि न । प्राचा तु 'ङमि च पदे' इत्यतः 'पदे' इत्यनुवर्त्य 'अजादेः पदस्ये'ति व्याख्यानान्ङमुण्णेत्युक्तं, तदनेन प्रत्युक्तम् । इहैव नलोपं वारयितुमुक्तरीतेरेव तेनाऽप्यनुसर्तव्यत्वात् ॥

**समः सुटि** । यद्यपि मोऽनुस्वारेण सिद्धं, तथापि अनुनासिकत्रिसकारसिद्ध्यर्थमिदम् ॥

**अत्रानुनासिकः** । अयमधिकारो विधिर्वेति पक्षद्वयम् । आद्ये 'अत्र'ग्रहणमनर्थकम् , अधिकारादेव रुप्रकरणलाभात् । 'तु'शब्दस्तु अधिकारपक्षे परस्मात्कार्यिणः पूर्वकार्यस्य विशेषद्योतनार्थः,—'परस्य नित्यं रुत्वं पूर्वस्य तु वाऽनुनासिक' इति । विधिपक्षे 'तु'शब्दो व्यर्थो 'वा' ग्रहणं स्पष्टार्थम् , 'अनुनासिकात्परः' इति ज्ञापकादेव सिद्धेः । नहि विकल्पं विना 'अनुनासिकं विहाये'त्यनुनासिकाऽभावपक्ष संभवति । इदमेव ध्वनयितुं वृत्तौ 'तु-वे'तिशब्दावनुक्त्वा 'रोः पूर्वस्यानुनासिकः स्या'दित्येवोक्तम् । **रोः पूर्वस्येति** । उपलक्षणमेतल्लोपस्यापि । अत्र 'रुप्रकरणे यो विधिस्ततः पूर्वस्ये'ति निष्कृष्टो-

---

लाघवार्थः, 'ङम उत्तरस्याऽच' इति 'तस्मिं'न्निति सूत्रस्थभाष्यात् । ङमन्तं यत्पदमिति किम् ?, 'अनिती'त्यादौ ङमुण्मा भूदिति । भाष्ये तु विभक्तिव्यत्ययकल्पने गौरवात्पदावयवङमः परस्येति वैयधिकरण्यमेवोक्तम् । 'दण्डिने'त्यत्र ङमुडभावो—मण्डूकप्लुत्या 'ङमि च पदे' इत्यतः 'पदे' इत्यनुवर्त्याऽजादेः पदस्य ङमुडित्यर्थेन बोद्धव्यः । 'पदस्ये'त्यस्यावृत्त्या सम्बन्धेऽपि विशेषणविशेष्ययोरुभयोः सप्तम्यन्तत्वे एव तदादिविधिप्रवृत्त्या तदलाभः स्यात् । एतदर्थमेवाऽच्नोति सप्तमीनिर्देशः । 'ङमन्तं यत्पद'मित्यर्थेऽपि 'परमदण्डिने'त्यादावेतद्वारणाय 'पदे' इत्यनुवृत्तिरावश्यक्येव । अन्तर्वर्तिविभक्त्या 'दण्डि'न्नित्यस्य पदत्वात् । 'उत्तरपदत्वे चे'ति प्रत्ययलक्षणनिषेधस्तु न, 'माषकुम्भवापेने'त्यादौ 'पदव्यवायेऽपी'तिनिषेधसिद्धये तस्य यत्रोत्तरपदस्य कार्यित्वं तत्रैव प्रवृत्तेः । 'तेन निषेधेन सिद्ध'-मित्येतत्सूत्रस्थभाष्योक्तिस्त्वेकदेशिन इति दिक् । 'इको यणची'ति सौत्रो निर्देशः ॥

**रुप्रकरणे इति** । अत एव 'समः सुटी'त्यादौ प्रश्लेषेण सविधानमिति भाष्ये उक्तम् । 'रोः पूर्वस्ये'त्युपलक्षणं रुप्रकरणविधेयस्य । एवमुत्तरत्र 'रोः पूर्वस्मा'दित्यपि । अयमधिकारः । तेनोत्तरसूत्रविषये एवाऽस्य प्रवृत्तिर्न तु 'मतुवसो'रित्यत्र, तत्सूत्रस्थवार्त्तिकयोश्च । 'अत्रे'ति तु,—रुप्रकरण एवास्य सम्बन्धो न तस्मे—'ढो ढे लोप' इत्याद्यावित्यर्थसूचनार्थं—स्पष्टार्थमेव । 'तु'शब्दः—परस्य नित्यं

'अच्छौ अचछा अचशा अशाविति चतुष्टयम् ।
रूपाणामिह तुक्छत्वचलोपानां विकल्पनात् ॥'

**ङमो ह्रस्वादचि ङमुण्नित्यम्** ।८।३।३२। ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याऽचो नित्यं ङमुडागमः स्यात् । प्रत्यङ्ङात्मा । सुगण्णीशः । सन्नच्युतः ॥

---

त्याह-**नस्येति** । **चलोप इति** । 'झरो झरी'त्यत्र सवर्णग्रहणसामर्थ्याद्यथासङ्ख्यं न प्रवर्तत इति भावः । **सञ्छम्भुरिति** । इह श्चुत्वतुकोरसिद्धत्वमाश्रित्य 'नश्छवी'ति रुत्वं नाशङ्कयं, छत्वस्याऽसिद्धत्वात् । **चतुष्टयमिति** । अत्र तुकः श्चुत्वे 'चयो द्वितीयाः' इति पक्षे चस्य छत्वे शस्यापि छत्वविकल्पात्सञ्छछम्भुः सञ्छ्शम्भुरिति रूपद्वयवृद्धिर्बोध्या । न च शस्य छत्वपक्षे शर्परत्वाभावात् 'चयो द्वितीयाः–' इति पक्षे चस्य छो नेति शङ्क्यम्, 'शश्छोऽटी'ति छत्वस्याऽसिद्धत्वादित्याहुः ॥

**ङमो ह्रस्वात्** । ङम् प्रत्याहारः, संज्ञायां च कृतं टित्त्वं सामर्थ्यात्संज्ञिभिः संबध्येत । तेन यथासङ्ख्यं ङुट्-णुट्-नुटः प्रवर्तन्ते । नित्यग्रहणं विस्पष्टार्थं, 'हे मपरे' इति 'मय उञो वो वे'ति च विकल्पद्वयस्य मध्ये पाठादेव नित्यत्वलाभात् । नन्विह नित्यग्रहणाभावे 'हे मपरे वे'ति वाग्रहणमुत्तरसूत्रेषु पञ्चस्वप्यनुवर्तते वा न वेति शङ्का स्यादिति चेत्सत्यम् । अतएव 'विस्पष्टार्थ'मित्युक्तं, न तु व्यर्थमिति । **तस्मात्परस्याऽच इति** । ननु 'ङम' इत्यस्य षष्ठ्यन्ततामाश्रित्याऽचि परे पूर्वस्यैव विधीयतां को दोष इति चेन्मैवम्, तथाहि सति ङमन्तस्य पदस्य पूर्वावयवः स्यादित्यनिष्टं प्रसज्येत । 'पदस्य यो ङम् तस्ये'ति वैयधिकरण्येन व्याख्यायामपि 'कुर्वन्नास्ते' इत्यत्र णत्वं प्रसज्येत, 'पदान्तस्ये'ति निषेधस्याऽप्रवृत्तेः । यद्यपि बहिरङ्गपरिभाषया ङमुड्विधेरसिद्धत्वादिष्टं सिध्यति, तथापि यथोद्देशपक्षे त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाया अप्रवृत्तेः प्रसज्यत एव णत्वमिति यथोक्तव्याख्यानमेव साध्विति दिक् । **सुगण्णीश इति** । ण्यल्लोपौ न स्थानिवत्,

---

फलितार्थप्रदर्शनमिदम् । 'नान्तस्य पदस्ये'त्युचितम् । **चतुष्टयमिति** । वक्ष्यमाणविकल्पैरिति भावः । तेन तुकश्चुत्वे छत्वस्यासिद्धत्वाच्चयो द्वितीया इति पक्षे चस्य छत्वेन छकारछकार–छकारशकार–घटितरूपद्वयाधिक्ये अच्यानुस्वारविसर्गाणां द्वित्वविकल्पेनाधिक्येऽपि न क्षतिः ॥

**ङमो** । 'पदस्ये'त्यनुवृत्तं सामानाधिकरण्यानुरोधात्पञ्चम्या विपरिणम्यते इत्याह–**तदन्तं यत्पदं तस्मादिति** । तत्र 'ङम्'–स्वयं 'ह्रस्वा'दितिविशेषणसम्बन्धमनुभूय पदविशेषणत्वेन तदन्तपर इति भावः । 'ङम' इति पञ्चमीबलादचीति सप्तमी षष्ठ्यर्थे [illegible] **इति** । सप्तमीनिर्देशस्तु

**समः सुटि** ।८।३।५। समो रुः स्यात्सुटि । 'अलोऽन्त्यस्य' ॥

**अत्रानुनासिकः पूर्वस्य तु वा** ।८।३।२। अत्र रुप्रकरणे रोः पूर्वस्याऽनुनासिको वा स्यात् ॥

---

पूर्वत्रासिद्धे तन्निषेधात् । ननु 'परमदण्डिना'वित्यादावन्तर्वर्त्तिविभक्त्या पदत्वान्नुट् स्यादिति चेन्न; 'उत्तरपदत्वे चापदादिविधौ' इति प्रत्ययलक्षणप्रतिषेधात् । अतएव 'परमवाचौ' 'परमगोदुहौ' 'परमलिहा' वित्यादौ कुत्वघत्वनत्वादीनि न । प्राचा तु 'ञमि च पदे' इत्यतः 'पदे' इत्यनुवर्त्य 'अजादेः पदस्ये'ति व्याख्यानान्ङमुण्णेत्युक्तं, तदनेन प्रत्युक्तम् । इहैव नलोपं वारयितुमुक्तरीतेरेव तेनाऽप्यनुसर्तव्यत्वात् ॥

**समः सुटि** । यद्यपि मोऽनुस्वारेण सिद्धं, तथापि अनुनासिकत्रिसकारसिद्ध्यर्थमिदम् ॥

**अत्रानुनासिकः** । अयमधिकारो विधिर्वेति पक्षद्वयम् । आद्ये 'अत्र'ग्रहणमनर्थकम् , अधिकारादेव रुप्रकरणलाभात् । 'तु'शब्दस्तु अधिकारपक्षे परस्मात्कार्यिणः पूर्वकार्यस्य विशेषद्योतनार्थः,–'परस्य नित्यं रुत्वं पूर्वस्य तु वाऽनुनासिक' इति । विधिपक्षे 'तु'शब्दो व्यर्थो 'वा' ग्रहणं स्पष्टार्थम् , 'अनुनासिकात्परः' इति ज्ञापकादेव सिद्धेः । नहि विकल्पं विना 'अनुनासिकं विहाये'त्यनुनासिकाऽभावपक्ष संभवति । इदमेव ध्वनयितुं वृत्तौ 'तु-वे'तिशब्दावनुक्त्वा 'रोः पूर्वस्यानुनासिकः स्या'दित्येवोक्तम् । **रोः पूर्वस्येति** । उपलक्षणमेतल्लोपस्यापि । अत्र 'रुप्रकरणे यो विधिस्ततः पूर्वस्ये'ति निष्कृष्टो-

---

लाघवार्थः, 'ङम उत्तरस्याऽच' इति 'तस्मि'न्निति सूत्रस्थभाष्यात् । ङमन्तं यत्पदमिति किम् ?, 'अनिती'त्यादौ ङ्मुण्मा भूदिति । भाष्ये तु विभक्तिव्यत्ययकल्पने गौरवात्पदावयवङमः परस्येति वैयधिकरण्यमेवोक्तम् । 'दण्डिने'त्यत्र ङमुडभावो–मण्डूकप्लुत्या 'ञमि च पदे' इत्यतः 'पदे' इत्यनुवर्त्याऽजादेः पदस्य ङमुडित्यर्थेन बोद्धयः । 'पदस्ये'त्यस्यावृत्त्या सम्बन्धेऽपि विशेषणविशेष्ययोरुभयोः सप्तम्यन्तत्वे एव तदादिविधिप्रवृत्त्या तदलाभः स्यात् । एतदर्थमेवाऽचीति सप्तमीनिर्देशः । 'ङमन्तं यत्पद'मित्यर्थेऽपि 'परमदण्डिने'त्यादावेतद्वारणाय 'पदे' इत्यनुवृत्तिरावश्यक्येव । अन्तर्वर्तिविभक्त्या 'दण्डि'न्नित्यस्य पदत्वात् । 'उत्तरपदत्वे चे'ति प्रत्ययलक्षणनिषेधस्तु न, 'माषकुम्भवापेने'त्यादौ 'पदव्यवायेऽपो'तिनिषेधसिद्धये तस्य यत्रोत्तरपदस्य कार्यित्वं तत्रैव प्रवृत्तेः । 'तेन निषेधेन सिद्ध'मित्येतत्सूत्रस्थभाष्योक्तिस्त्वेकदेशिन इति दिक् । 'इको यणची'ति सौत्रो निर्देशः ॥

**रुप्रकरणे इति** । अत एव 'समः सुटी'त्यादौ प्रश्लेषेण सविधानमिति भाष्ये उक्तम् । 'रोः पूर्वस्ये'त्युपलक्षणं रुप्रकरणविधेयस्य । एवमुत्तरत्र 'रोः पूर्वस्मा'दित्यपि । अयमधिकारः । तेनोत्तरसूत्रविषये एवाऽस्य प्रवृत्तिर्न तु 'मतुवसो'रित्यत्र, तत्सूत्रस्थवार्त्तिकयोश्च । 'अत्रे'ति तु,–रुप्रकरण एवास्य सम्बन्धो न त्वग्रे–'ढो ढे लोप' इत्याद्यावित्यर्थसूचनार्थं–स्पष्टार्थमेव । 'तु'शब्दः–परस्य नित्यं

**अनुनासिकात्परोऽनुस्वारः** ।८।३।४। अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः स्यात् ॥ 'खरवसानयोर्विसर्जनीयः' ॥

**विसर्जनीयस्य सः** ।८।३।३४। खरि विसर्जनीयस्य सः स्यात् । एतदपवादे 'वा शरी'ति पाक्षिके विसर्गे प्राप्ते—॥ ॐ **संपुंकानां सो वक्तव्यः** । संस्कर्ता । सँस्कर्ता ॥ **'समो वा लोपमेके'** इति भाष्यम् । लोपस्यापि रुप्रकरणस्थत्वादनुस्वारानुनासिकाभ्यामेकसकारं रूपद्वयम् । द्विसकारं तूक्तमेव । तत्र 'अनचि चे'ति सकारस्य द्वित्वपक्षे त्रिसकारमपि रूपद्वयम् । अनुस्वारविसर्गजिह्वामूलीयोपध्मानीययमानामकारोपरि शर्षु च पाठस्योपसङ्ख्यातत्वेनानुस्वारस्याप्यच्त्वात् ।

ऽर्थः । एवं 'रोः पूर्वस्मात्पर' इत्यस्यापि 'रुप्रकरणे यो विधिस्ततः पूर्वस्मात्पर' इत्यर्थो बोध्यः ॥

**अनुनासिकात्** । ल्यब्लोपे पञ्चमीत्याह—**अनुनासिकं विहायेति** । अनुनासिकाभावपक्षे इत्यर्थः । 'पूर्वस्ये'ति प्रकृतस्य तु विभक्तिविपरिणामेन पञ्चम्यन्ततेत्यभिप्रेत्याह—**रोः पूर्वस्मादिति** । "—संसर्गवद्विप्रयोगस्यापि विशेषावगतिहेतुत्वात् 'अवत्सा धेनुरानीयता'मित्यत्रेव संभावितानुनासिकत्वगुणक एवोपस्थितत्वादाकाङ्क्षितत्वाच्चावधित्वेन सम्बध्यत इत्यभिप्रेत्याह—रोः पूर्वस्मादिति—" इति तु मनोरमायामवतारितं,तत्तु 'पूर्वस्ये'त्यनुवर्तनं विभक्तिविपरिणामं चानपेक्ष्य लौकिकन्यायेनैवेष्टं सिध्यतीत्याशयेनोक्तमित्याहुः । **अनुस्वारागम इति** । आगमत्वं च परशब्देनैव लभ्यते । यथा 'पूर्वौ तु ताभ्यामै'जित्यत्र पूर्वशब्देन ऐचोरागमत्वमिति भावः ॥

**विसर्जनी । खरीति** । एतच्च 'खरवसानयोः' इति सूत्रान्मण्डूकप्लुत्याऽनुवर्तते । **संस्कर्तेति** । 'संपरिभ्या'मिति करोतेः सुट् । नन्वनुस्वारस्याऽनच्त्वात्ततः परस्य द्वित्वं न स्यादेवेत्यनुस्वारपक्षे त्रिसकारकं रूपं कथं स्यादित्याशङ्क्याह—**अनुस्वारविसर्गेत्यादि** । **अकारोपरीति** । यदि त्विकारोपरि पठयेरंस्तर्हि 'पयःसु' 'यशःसु' इत्यादौ

रुत्वं पूर्वस्य वाऽनुनासिक इति विशेषद्योतनार्थः । 'पूर्वस्ये'त्यस्य च—रुस्थानिनः पूर्वस्येत्यर्थो बोद्धव्यः ॥ **अनुनासिकात्पर** इत्यत्र—'अनुनासिका'दिति ल्यब्लोपे पञ्चमी, व्याख्यानात् । अयमागमोऽनवयव एव, अवयवत्वे मानाभावात् । **खरीति** । विसर्गाक्षिप्तस्याप्यवसानस्य न सम्बन्धो, व्याख्यानात् । **सो वक्तव्य इति** । 'समः सुटी'त्यादिसूत्रत्रये 'स' इत्युपसङ्ख्याय—'समः सुटी'त्यत्र सकारं प्रश्लिष्य वा—एतैः सकार एव विधेय इत्यर्थः । एवञ्चास्याऽसिद्धत्वाद्रुत्वाभावेन विसर्गाऽभावे तत्तद्विधीनामप्राप्तिरेवेति भावः । स्पष्टञ्चेदं भाष्ये । विसर्गस्थानेन सत्वविधाने तु गौरवं स्फुटम् । **लोपस्यापीति** । यद्‌—'उपधारक्षणं कुर्यान्नमो रुकरणे सति । लोपे [illegible] नोपधारक्षणं मतम् ॥'

अनुनासिकवतां त्रयाणां 'शरः खयः' इति कद्वित्वे षट्। अनुस्वारवतामनुस्वारस्यापि द्वित्वे द्वादश। एषामष्टादशानां तकारस्य द्वित्वे वचनान्तरेण पुनर्द्वित्वे चैकतं द्वितं त्रितमिति चतुष्पञ्चाशत्। अणोऽनुनासिकत्वेऽष्टोत्तरशतम्॥ **पुमः खय्यम्परे**।८।३।६। अम्परे खयि पुम्शब्दस्य रुः स्यात्। व्युत्पत्तिपक्षे 'अप्रत्ययस्ये'ति षत्वपर्युदासात् ×क×पयोः प्राप्तौ, अव्युत्पत्तिपक्षे तु षत्वप्राप्तौ—'संपुंकाना'मिति सः।

---

'इणः परस्येति षत्वं स्या'दिति भावः। **अच्त्वादिति**। न चैवं 'हरिः कर्ता' 'हरिं स्मरेत्' 'रामः पाती'त्यादौ यणादिप्रसङ्गः, त्रिपादीस्थत्वेन विसर्गादीनामसिद्धत्वात्।

**अनुस्वारस्यापि द्वित्वे इति**। अपिशब्दात्ककारस्य। **वचनान्तरेणेति**। 'अचो रहाभ्या'मिति कृतेऽपि 'यणो मयः' इति भवत्येवेति भावः॥

**पुमः खयि**। पुंसः संयोगान्तलोपेऽवशिष्टभागस्येदमनुकरणम्। 'अम्पर' इति बहुव्रीहिः। **पर्युदासादिति**। 'इदुदुपधस्ये'ति षत्वविधायके सूत्रे इति भावः।

**ख्याञादेशे नेति**। 'चक्षिङः ख्या'ञित्यत्र खशादिरयमादेशः। असिद्धकाण्डे णत्वानन्तरं 'शस्य यो वे'ति स्थितमिति वक्ष्यते। एवंच यत्वस्यासिद्धतयाऽम्परत्वा-

---

**उपधारञ्जनम्**—अनुनासिकानुस्वारागमरूपम्। **नमोः**—नकार-मकारयोः। प्रकृतिभावोदाहरणं—'नॄन्पाहि' इति। तत्तु प्रातिशाख्यत्वात्तच्छाखामात्रविषयमिति भावः। अत एव भाष्ये—'समादिषु सत्वं वक्तव्य'मित्युक्तम्। रुत्वपक्षे चाऽनुनासिकाद्यापत्तिर्दोषत्वेन नोक्ता। ननु लोपपक्षे एव द्वित्वेन द्विसकारस्य सिद्धत्वात् 'समः सुटी'ति व्यर्थमित्यत आह—**त्रिसकारकमपीति**। 'स्को'रिति लोपस्तु न—अस्यासिद्धत्वात्। 'पुनर्द्वित्वेन त्रिसकारस्य सिद्धि'रिति तु न युक्तं, 'लक्ष्ये लक्षणस्ये'ति न्यायात्। एतेन—'समः सुटी'त्यत्र 'वे'ति पाठेनैव पक्षे मोऽनुस्वारेण सिद्धे 'अनुनासिकात्पर' इति व्यर्थ'मित्यपास्तम्॥ ननु व्यञ्जनात्परस्यैकस्यानेकस्य वोच्चारणे विशेषाभावोऽत आह—**अनुनासिकवतामिति**। तत्रोच्चारणे विशेषाभावकल्पने इदं वचनं व्यर्थमेव स्यादिति भावः। हयवरट्सूत्रभाष्योक्ते शर्पूपसङ्ख्याने फलमाह—**अनुस्वारवतामिति**। अपिना—कस्य सङ्ग्रहः। लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेराह—**वचनान्तरेणेति**। 'यणो मय' इत्यनेन। एकस्यैव शास्त्रस्य पुनः प्रवृत्तौ हि स न्याय इति भावः। पूर्वत्रासिद्धत्वेन पूर्वद्वित्वस्य पूर्वं प्रवृत्त्या तेन द्वितीयस्य साधुत्वे बोधिते तदनन्तरं परद्वित्वप्रवृत्त्या तयोर्मध्ये पुनरन्यस्य साधुत्वं बोध्यत इति—त्रितस्य निर्वाहो बोद्धव्यः। 'अनचि चे'त्यत्र 'यणो मय' इत्यस्योपसङ्ख्यानात् 'अचो रहाभ्या'मित्यतस्तस्य परत्वं बोद्धव्यम्॥

**पुमः ख**। 'अम्परे'इति बहुव्रीहिः। **×क×पयोरिति**। 'कुप्वो'रितिसूत्रविधेययोरित्यर्थः। 'इदुदुपधस्ये'ति सूत्रे'ऽप्रत्ययस्ये'त्यस्य प्रत्ययावयवभिन्नस्येत्यर्थादिति भावः। **अव्युत्पत्तीति**। तत्पक्षे प्रकृतिप्रत्ययविभागाभावादिति भावः। **सत्वेति**। इत्यनुनासिकपक्षे। अनुस्वारपक्षे तु—

पुँस्कोकिलः । पुंस्कोलिलः । पुँस्पुत्रः । पुंस्पुत्रः । अम्परे किम् ? । पुंक्षीरम् । खयि किम् ? । पुंदासः ॥ ॐ ख्याञादेशे न । पुंख्यानम् ॥ **नश्छव्यप्रशान्** ।८।३।७। अम्परे छवि नकारान्तस्य पदस्य रुः स्यान्न तु प्रशान्शब्दस्य । विसर्गः । सत्वम् । श्चुत्वम् । शार्ङ्गिंश्छिन्धि । शार्ङ्गिंश्छिन्धि । चक्रिंस्त्रायस्व । चक्रिंस्त्रायस्व । पदस्य किम् ? । हन्ति । अम्परे किम् ? । सन्त्सरुः खड्गमुष्टिः । अप्रशान् किं ? । प्रशान्तनोति ॥ **नॄन्पे** ।८।३।१०। 'नॄ'नित्यस्य रुः स्याद्वा पकारे परे ॥ **कुप्वोः ᳲकᳲपौ च** ।८।३।३७। कवर्गे पवर्गे च परे विसर्जनीयस्य क्रमाज्जिह्वामूलीयोपध्मानीयौ स्तः । चाद्विसर्गः । 'येन नाप्राप्ते'इति न्यायेन 'विसर्जनीयस्य स' इत्यस्यापवादोऽयम् ।

---

भावात् 'पुमः खयी'ति रुत्वं नेत्यर्थः । **पुंख्यानमिति** । चक्षिङो 'ल्युट् चे'ति ल्युटि ख्याञादेशः । ननु आदेश इह दुर्लभः, 'वर्जने प्रतिषेधः' 'असनयोश्चे'ति वार्तिकादिति चेत्सत्यम् ; 'बहुलं तण्यन्नवधकगात्रविचक्षणाऽजिराद्यर्थ'मिति वार्तिके बहुलग्रहणात्समाधेयम् । विस्तरस्त्विह मनोरमायामनुसन्धेयः । **त्रायस्वेति** । 'त्रैङ् पालने' लोटि शप्यायादेशः । **प्रशानिति** । प्रपूर्वाच्छाम्यतेः क्विप् । 'अनुनासिकस्ये'ति दीर्घः । 'मो नो धातो'रिति नः । तस्याऽसिद्धत्वान्नलोपो न ॥ **नॄन्पे** । पकारोपरि अकार उच्चारणार्थः तेन 'नॄः पुनाती'त्यादि सिद्धम् । 'उभयथर्क्षु' इत्यत 'उभयथे'नुवृत्तेर्विकल्पः फलित इत्याशयेनाह—**रुः स्याद्वेति** ॥

**कुप्वोᳲक** । अत्र 'कुप्वो'रिति रेफस्य विसर्गः, जिह्वामूलीयस्य खर्त्वात् । 'खर्परे शरी'ति विसर्गस्यास्य लोपः, जिह्वामूलीयस्य शर्त्वात् । 'वा शरी'ति विसर्गस्य विसर्ग एव वा । आदेशयोः कपावुच्चारणार्थौ । **चाद्विसर्ग इति** । प्राचा तु—'चाद्विकल्पः' इत्युक्तं, तदसत् । ᳲकᳲपाभ्यां मुक्ते विसर्जनीयस्य सत्वप्रसङ्गात् ॥

---

'कुप्वो'रित्यस्यैव प्राप्तिः । अनुस्वारव्यवधानेनोदुपधत्वाभावात् । **पुंक्षीरमिति** । क्षरधातोरुपधाया ईत्वेऽच्प्रत्यये 'क्षीर'मिति भावः ॥ **नश्छवि** । 'अप्रशा'निति षष्ठ्यर्थे प्रथमा ॥

**नॄन्पे** । 'नॄ'विति द्वितीयान्तानुकरणम् । षष्ठ्याः सौत्रो लुक् । नलोपस्तु सौत्रत्वान्न । एवं 'का'नित्यत्रापि । **चाद्विसर्ग इति** । 'शर्परे' इति सूत्रात्तदनुकर्षश्चेनेति भावः । **येन नेति** । 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधक' इति न्यायेनेत्यर्थः । 'येन ने'त्यादेर्यत्कर्तृकाऽवश्यप्राप्तावित्यर्थः । नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात् । 'प्राप्त' इति भावे क्तः । तदप्राप्तियोग्यविषयेऽचारितार्थ्यं हि बाधकत्वे बीजम् । तदुक्तं 'शर्पूर्वाः' इति सूत्रे भाष्ये—"शर्पूर्वा इत्येतद्धलादिः शेषस्य बाधकम् । नच विषयभेदे कथं बाधकत्वम् ?, इदं तावदयं प्रष्टव्यः—यदि तन्नोच्येत किमिह स्यात् ?, हलादिः शेषः । हलादिःशेषेति नाप्राप्ते तस्मिन्नारम्भादिदं तावद्बाधकं भविष्यति—" इति । 'अत [illegible] सूत्रे भाष्येऽपि स्फुट-

न तु 'शर्परे विसर्जनीय' इत्यस्य। तेन 'वासः क्षौम'मित्यादौ विसर्ग एव। नॄँ ᳲपाहि। नॄं ᳲपाहि। नॄँः पाहि। नॄंः पाहि। नॄन्पाहि॥

**कानाम्रेडिते** ।८।३।१२। कान्नकारस्य रुः स्यादाम्रेडिते परे। 'संपुंकाना'मिति सः। यद्वा-॥ **कस्कादिषु च** ।८।३।४८। एष्विण उत्तरस्य विसर्गस्य षः स्याद-न्यत्र तु सः। ᳲकᳲपयोरपवादः। इति सः। कौँस्कान्। कांस्कान्। कस्कः। कौतस्कुतः। सर्पिष्कुण्डिका। धनुष्कपालम्। आकृतिगणोऽयम्॥ **संहितायाम्**

---

**कानाम्रेडिते**। 'कान्कान्' इति वाच्ये आम्रेडितग्रहणं यत्र द्विरुक्तिस्तत्रैव यथा स्यात्। इह मा भूत् 'कान् कान् पश्यसी'ति। अत्र एकः किंशब्दः प्रश्ने द्वितीयः क्षेपे। कान् कुत्सितान् पश्यसीत्यर्थः। वार्तिके कान्ग्रहणाभावेऽपि सत्वं सिध्यतीत्याशयेनाह-**यद्वेति**। संपुमोस्तु वार्तिकेनैव सत्वम्। कस्कादिषु संस्कर्ता संस्करिष्यति पुंस्कोकिलः पुंस्काम इत्यादिबहूनां पाठे गौरवात्। कस्कादिषु 'संपुंका'निति पठित्वा सर्वमपि वार्तिकं त्यक्तुमशक्यं 'पुंस्कोकिल' इत्यादाविणः परत्वेन विसर्गस्य षत्वप्रसङ्गात्। किं तु कान्-ग्रहणमिव सम्ग्रहणं वार्तिके त्यक्तुं शक्यमित्यन्ये॥

**कस्कादिषु च**। अत्र 'सोपदादौ' इत्यतः स इति, 'इणः षः' इति सूत्रं चानु-वर्तते, तदाह-**एष्विण उत्तरस्येत्यादि**। **कौतस्कुत इति**। कुतः कुत आगत इत्यर्थे अव्ययात्त्यपि प्राप्ते गणपाठसामर्थ्यादणित्याहुः। 'अव्ययानां भमात्रे' इति वक्ष्यमाणेनाऽत्र टिलोपः। **सर्पिष्कुण्डिकेति**। 'नित्यं समासे' इत्येव सिद्धे इह पाठस्य प्रयोजनमसमासे व्यपेक्षाविरहेऽपि षत्वार्थमित्यादि वक्ष्यति। **संहितायाम्**।

---

मेतत्। **न तु शर्पर इति**। न चास्य विसर्गस्य ᳲकᳲपौ दुर्वारौ। किञ्चाऽस्यैव तौ स्यातां, 'खर-वसानयो'रिति विहितस्य तु एतयोरसिद्धत्वात्सत्वमेव स्यादिति वाच्यं, 'शर्परे इति सूत्रं 'कुप्वो'रित्य-त्रानुवर्त्य 'शर्परयोः कुप्वोः ᳲकᳲपयोरपवादो-विसर्गस्य विसर्ग' इति वाक्यभेदेन व्याख्यानेनाऽदो-षात्। स्पष्टञ्चेदं भाष्ये॥ वार्त्तिके कान्ग्रहणं शक्यमकर्तुमित्याह-**यद्वेति**। एवं सम्ग्रहणमपि त्यक्तुं शक्यम्। पुम्ग्रहणं त्वावश्यकमेव, अनुनासिकपक्षे इणः परत्वेन षत्वापत्तेः। **एष्विण इति**। गणे कृतसत्वषत्वानामेव पाठादिति भावः। **ᳲकᳲपयोरपवाद इति**। 'तद्विहितविसर्गस्यापी'त्यपि बोद्धव्यम्। 'काँस्का'निति वीप्सायां द्वित्वम्॥

**संहितायाम्**। संहिता च-स्वारसिकार्धमात्राकालव्यवायेनोच्चारणम्। ततोऽधिकार्धमात्राकाले नोच्चारणेऽवग्रहे एतदधिकारोक्तकार्यव्यावृत्तये इदम्। तदधिककालव्यवाये तु न साधुत्वं, नापि बोध इष्यते इति **[illegible]** इति तेषां शास्त्रविषयतैव नेति भावः॥

६।१।७२। इत्यधिकृत्य ॥ **छे च** ।६।१।७३। ह्रस्वस्य छे परे तुगागमः स्यात्संहितायाम् । श्चुत्वस्यासिद्धत्वाज्जश्त्वेन दः । ततश्चर्त्वस्याऽसिद्धत्वात्पूर्वं श्चुत्वेन जः । तस्य चर्त्वेन चः । श्चुत्वस्याऽसिद्धत्वात् 'चोः कु'रिति कुत्वं न । स्वच्छाया । शिवच्छाया ॥

**आङ्माङोश्च** ।६।१।७४। एतयोश्छे परे तुक्स्यात् । 'पदान्ताद्वे'ति विकल्पापवादः । आच्छादयति । माच्छिदत् ॥

**दीर्घात्** ।६।१।७५। दीर्घाच्छे परे तुक्स्यात् । दीर्घस्यायं तुङ्न तु छस्य । 'सेनासुराच्छाये'ति ज्ञापकात् । चेच्छिद्यते ॥ **पदान्ताद्वा** ।६।१।७६। दीर्घात्पदान्ताच्छे परे तुग्वा स्यात् । लक्ष्मीच्छाया । लक्ष्मीछाया ॥ **इतिहल्सन्धिप्रकरणम्** ॥

---

**इत्यधिकृत्येति** । एतच्च 'इको यणची'त्यत्रैव वक्तव्यमपि सूत्रक्रमानुरोधेनात्रोक्तम् । **छे च** । छकारोपरि अकार उच्चारणार्थः, 'विदिभिदिच्छिदे'रिति निर्देशात् । तेन 'विच्छिन्न'-मित्यादि सिद्धम् । **ह्रस्वस्येति** । एतच्च 'ह्रस्वस्य पिति कृती'त्यतोऽनुवर्तते तुक् च । **सेनासुरेति** । यदि हि छस्य तुक्स्यात्तर्हि छस्य चर्त्वे सति चद्वयं स्यात् । संनिपातपरिभाषया चर्त्वाऽप्रवृत्तौ तु छकारोपरि चकारः श्रूयेतेति भावः । **पदान्ताद्वा** । प्रकृतेन दीर्घेण पदविशेषणात्तदन्तविधिलाभेनेष्टसिद्धावप्यन्तग्रहणं पदान्तस्यैव तुग्यथा स्यात्पदस्य मा भूदित्येतदर्थम् । अन्यथा पदविधित्वात्समर्थपरिभाषोपस्थितौ समर्थेषु 'लक्ष्मीच्छाये'त्यादिष्वेव स्यात्, 'तिष्ठतु कुमारी छत्रं हर देवदत्ते'त्यत्र न स्यात्, असामर्थ्यात् । एवं 'न पदान्ताट्टो'रिति सूत्रे 'पदाट्टो'रिति वक्तव्येऽन्तग्रहणं 'दुष्टाः षट्' 'सन्तस्त्रय' इत्यत्रापि ष्टुत्वनिषेधार्थमित्याहुः ॥ इति तत्त्वबोधिन्यां हल्सन्धिप्रकरणम् ॥

---

**छे च** । 'छे' इत्यकार उच्चारणार्थः, तेनाऽच्छिन्नमित्यत्र तुक् । 'ह्रस्वस्य पिती'त्यतो 'ह्रस्वस्ये'ति 'तु'गिति च वर्त्तते । **जश्त्वेनेति** । 'स्वशब्दे उपपदे छ्यतेः के 'स्वच्छ'शब्दो निर्मले रूढः, एवं नञ्पूर्वाच्छादयतेर्डे 'अच्छ'शब्द इति पदान्तत्वं बोद्धव्यम् । स्पष्टञ्चेदममरटिप्पणे ॥

**आङ्मा** । आङ्साहचर्यान्माङव्ययमेव । **दीर्घस्यायमिति** । वक्ष्यमाणज्ञापकाद्व्याख्यानाद्वा 'दीर्घा'दिति षष्ठ्यर्थे पञ्चमीति भावः । 'एओङ्'सूत्रभाष्ये ध्वनितमेतत् । **चेच्छिद्यते इति** । तुको हलादिःशेषस्तु न, अभ्याससञ्ज्ञाप्रवृत्तिकाले स्थानिद्वारा साक्षाद्वा सन्निहितानां हलामेव तेन निवृत्तेः । अत एव 'नुगत' इत्यादि चरितार्थम् । **दीर्घात्पदान्तादिति** । पदान्तस्य दीर्घस्येत्यर्थः । योगविभागोऽनयोरैऔजिति सूत्रे भाष्ये स्पष्टः । 'दीर्घान्तस्य पदस्ये'त्यर्थेन सिद्धेऽन्तग्रहणं पदान्तविधित्वमस्य न पदविधित्वमितिबोधनद्वारा समर्थपरिभाषानुपस्थित्यर्थम् । तेनाऽसामर्थ्येऽप्यस्य प्रवृत्तिरिति समर्थसूत्रे कैयटः ॥ **इति हल्सन्धिः** ॥

# अथ विसर्गसन्धिप्रकरणम्।

'विसर्जनीयस्य सः'। विष्णुस्त्राता॥ **शर्परे विसर्जनीयः** ।८।३।३५। शर्परे खरि विसर्जनीयस्य विसर्जनीयो न त्वन्यत्। कः त्सरुः। घनाघनः क्षोभणः। इह यथायथं सत्वं जिह्वामूलीयश्च न॥

**वा शरि** ।८।३।३६। शरि परे विसर्जनीयस्य विसर्जनीय एव वा स्यात्। हरिः शेते। हरिश्शेते॥ ❀ **खर्परे शरि वा विसर्गलोपो वक्तव्यः**॥ रामस्थाता। हरिस्फुरति। पक्षे विसर्गे सत्वे च त्रैरूप्यम्॥ **'कुप्वोः ≍क≍पौ च'**॥ क≍करोति। कः करोति। क≍खनति। कः खनति। क≍पचति। कः पचति। क≍फलति। कः फलति॥ **सोऽपदादौ** ।८।३।३८। विसर्जनीयस्य सः स्यादपदाद्योः कुप्वोः परयोः॥ ❀ **पाशकल्पककाम्येष्विति वाच्यम्**॥ पयस्पाशम्। यश-

---

**अथ विसर्गसन्धिः। विष्णुस्त्रातेति**। प्रातिपदिकात् 'स्वौजसमौ'डिति सुप्रत्यये तस्य रुत्वे 'खरवसानयो'रिति विसर्गे च कृते 'विसर्जनीयस्य स' इति सः। अस्य च रुत्वं नाशङ्क्यम्, रुत्वं प्रति विसर्जनीयस्य सत्वस्याऽसिद्धत्वात्। **शर्परे विसर्जनीयः**। 'शर्परे'इति बहुव्रीहिरनुवर्तमानश्च खरन्यपदार्थः। सत्वादेरयमपवादः। यदि तु 'शर्परे ने'त्यवोच्येत तर्हि प्रकृते सत्वे निषिद्धेऽपि कुप्वोः ≍क≍पौ स्याताम् 'वासः क्षौममद्भिः प्सात'मित्यादौ, विसर्जनीयवचनात्तु विकारमात्रं बाध्यते इत्याशयेनाह–**न त्वन्यदिति**। तदेव स्फुटयति–**इहेति**।

**सोऽपदादौ। अपदाद्योरिति**। सूत्रे व्यत्ययेन एकवचनम्। यदि तु 'विसर्जनीयस्य सः' 'शर्परे विसर्जनीयः' इत्यत्र मण्डूकप्लुत्यानुवर्तितो यः खर् स इहाप्यनुवर्त्य विशेष्येत 'अपदादौ री'ति तदा यथाश्रुतं साधु। परन्तु पुनर्मण्डूकप्लुत्याऽनुवर्तने क्लेश इति भावः। अन्ये त्वाहुः–पुनर्मण्डूकप्लुतिं विनाप्यनुवर्तितुं शक्यः, 'वा शरी'त्यत्र शरा खरं विशेष्य 'शरूपे खरी'ति व्याख्याने 'कुप्वो'रिति सूत्रे 'कुप्वोः खरी'ति व्याख्याने च क्षत्यभावादिति। **पयस्पाशमिति**। 'याप्ये पाशप्'। 'ईषदसमाप्तौ कल्पप्'। 'अज्ञाते' 'कुत्सिते' इति कः। 'काम्यच्चे'ति काम्यच्।

---

❀ **अथ विसर्गसन्धिः** ❀॥ **विसर्जनीयस्य सः**। प्राग्व्याख्यातमपि विसर्जनीयपदानुवृत्तिप्रदर्शनाय स्मारितम्। 'शर्परे' इति बहुव्रीहिः। विशेष्यश्चावध्यवधिमतोः साजात्याद्विसर्जनीयाक्षिप्तः खरेव। विसर्गस्य विसर्गविधौ फलमाह–**न त्वन्यदिति**। अन्यदेव विवृणोति–**इहेति**। **त्रैरूप्यमिति**। विकल्पद्वयसामर्थ्यादिति भावः॥ **सोप। अपदाद्योरिति**। सूत्रे सौत्रत्वादेकवचनम्।

स्कल्पम् । यशस्कम् । यशस्काम्यति ॥ ❀ **अनव्ययस्येति वाच्यम्** ॥ प्रातःकल्पम् ॥ ❀ **काम्ये रोरेवेति वाच्यम्** ॥ नेह—गीः काम्यति ॥

**इणः षः** ।८।३।३९। इणः परस्य विसर्गस्य षकारः स्यात्पूर्वविषये । सर्पिष्पाशम् । सर्पिष्कल्पम् । सर्पिष्कम् । सर्पिष्काम्यति ॥

**नमस्पुरसोर्गत्योः** ।८।३।४०। गतिसंज्ञयोरनयोर्विसर्गस्य सः कुप्वोः परयोः। नमस्करोति । साक्षात्प्रभृतित्वात्कृञो योगे विभाषा गतिसंज्ञा । तदभावे नमः करोति । 'पुरोऽव्यय'मिति नित्यं गतिसंज्ञा । पुरस्करोति । अगतित्वान्नेह—पूः पुरौ पुरः प्रवेष्टव्याः ॥

---

**पाशकल्पककाम्येष्विति** वृत्तिः । सम्भवदर्शनमेतन्नतु परिगणनम्, अन्यस्याऽसम्भवात् । **प्रातःकल्पमिति** । अधिकरणशक्तिप्रधानस्यापि 'प्रातः'शब्दस्येह वृत्तिविषये शक्तिमत्परत्वं, 'दोषाभूतमहः' 'दिवाभूता रात्रि'रितिवत् । **गीः काम्यतीति** । नच सत्वनिषेधेऽपीह 'इणः षः' इति षत्वं स्यादिति वाच्यं, तत्रापि 'काम्ये रोरेवे'त्यस्याऽनुवृत्तेः । यदि तु 'इणः षः' इत्यत्रैवेदं पठ्यते तर्हि षत्वमात्रप्रतिषेधेऽपि पूर्वेण सत्वं स्यात् ॥ **इणःषः**। सोऽपदादावित्यस्यापवादः। **पुरःप्रवेष्टव्या इति** । 'पॄ पालनपूरणयोः'। 'भ्राजभासे'त्यादिना क्विप् । तदन्ताज्जस् । जसन्ततां स्फुटीकर्तुं 'पूः पुरा'वित्युपन्यस्तम् ।

---

**अनव्ययस्येति** । अत्राऽव्ययीभावातिरिक्ताऽव्ययस्यैव ग्रहणं, व्याख्यानात् । तेनोपपयस्काम्यतीत्यादौ सत्वसिद्धिरिति स्पष्टम्—'अव्ययीभावश्चे'त्यत्र भाष्ये । **गीःकाम्यतीति** । 'वाः काम्यती'त्यस्याप्युपलक्षणमिदम् ॥

**इणः षः** । 'इदुदुपधस्ये'त्यस्यासिद्धत्वात्सर्पिष्पाशमित्यादौ सत्वनिवृत्त्यर्थं, 'गीष्पाशं' 'दोष्कल्प'मित्याद्यर्थं चेदम् । अत्रानव्ययस्येत्यपदादाविति काम्ये इति च सम्बद्ध्यते । तेनोच्चैःकल्पं, दोः पश्य, गीः काम्यतीत्यादौ षत्वं न। अत एव—'अत्र प्रकरणे सर्वत्र सत्वमेव विधेयम्, इण उत्तरस्य विसर्गस्थानिकसस्यानेन षत्व'मिति भाष्योक्तपक्षान्तरं सङ्गच्छते । 'विसर्जनीयस्थानिके'त्युक्तया 'पुँस्पुत्र' इत्यादौ न दोषः । तत्र हि मस्थानिकः सः । अत्र विसर्जनीयस्येत्यनुवृत्त्यैतदर्थलाभः । 'अनव्ययस्ये'त्यादि त्वत्र पक्षेऽत्र न सम्बद्ध्यते, तेन 'द्विष्कृतं' 'दुष्काम्यती'त्यादौ षत्वसिद्धिः । 'गीःकाम्यती'त्यादौ सकाराभावादेव न दोषः। 'अपदादा'विति च न सम्बद्ध्यते । तेन 'दुष्करोती'ति षत्वसिद्धिः । परन्त्वयं पक्षोऽसङ्गतः, उत्तरसत्वस्याऽसिद्धत्वेन 'निष्कृत'मित्यादौ षत्वाऽसिद्धेः । 'प्रकरणे प्रकरणमसिद्धं न योगे योग' इति इति पक्षस्तु नास्त्येव, ज्ञापकाऽसम्भवादिति—'उपसर्गादसमासेऽपी'त्यत्र निरूपयिष्यामः।'विसर्जनीयस्यैव षत्व'मिति मूलोक्तपक्षे तु सकारषकारयोः स्वरितत्वेऽपि यथायोगं सम्बन्धो मण्डूकप्लुत्येत्यन्यत्र विस्तरः॥

**नमस्पु** । इत उत्तरमपदादाविति न सम्बध्यते, व्याख्यानात् । **साक्षात्प्रभृतित्वादिति** । 'ऊर्यादि'त्वाद्गतित्वं, स्वरादिपठितस्य तु गतित्वाभावः । तेन ... वचनेऽपि न

**इदुदुपधस्य चाऽप्रत्ययस्य** ।८।३।४१। इकारोकारोपधस्याऽप्रत्ययस्य विसर्गस्यः पः स्यात्कुप्वोः । निष्प्रत्यूहम् । आविष्कृतम् । दुष्कृतम् । अप्रत्ययस्य किम् ?।

**इदुदुपधस्य** । इदुदिति किम् ?, गीः करोति । पूः करोति । इह 'इदुतौ उपधे यस्य समुदायस्य तस्यावयवो यो विसर्ग' इति वैयधिकरण्येन सम्बन्धः । 'अप्रत्ययस्ये'-ति तु 'अप्रत्ययो यो विसर्ग' इति सम्बध्यते । सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्याऽन्याय्यत्वात् । न च विसर्गस्य प्रत्ययत्वमप्रसिद्धमिति वाच्यम्, 'अग्निः करोती'-त्यादौ स्थानिवद्भावेन तत्प्रसिद्धेः । न चातिदेशं प्रति त्रिपाद्या असिद्धत्वं शङ्क्यम्, 'अप्रत्ययस्ये'ति निषेधेनैव सिद्धत्वज्ञापनात् । अतएव 'अग्नि'रित्यादौ रोर्विसर्गः सिध्यति । अन्यथाऽपदान्तत्वान्न स्यात् । विसर्गविधिस्तु 'पुन'रित्यादौ चरितार्थः । ज्ञापकं च विशेषापेक्षम् । तेन 'अचः परस्मिन्–' इति त्रिपाद्यां न प्रवर्तते । एवं च 'पूर्वत्रासिद्धीये न स्थानिव'दिति सिद्धान्त उक्तयुक्तिमूलको न तु वाचनिक इति मनोरमायां स्थितम् । अत्र वदन्ति–'अप्रत्ययस्ये'त्यत्र प्रत्ययस्य यो विसर्जनीयो न भवतीत्याद्यर्थ एव आकरे स्थित इति 'अप्रत्ययो यो विसर्ग' इति सामानाधिकरण्येनान्वयो न युक्तः । 'सर्पिष्करोती'त्यत्र 'इसुसोः सामर्थ्ये' इति वैकल्पिकषत्वप्रवृत्तावपि 'तिष्ठतु सर्पिः पिब त्वमुदक'मित्यत्र 'इदुदुपधस्ये'त्यनेन नित्यं षत्वप्रसङ्गात् । न चाकरमतेऽप्युणादीनामव्युत्पत्त्याश्रयणे तथा स्वीकारादिष्टापत्तिरिति वाच्यम्, व्युत्पत्त्याश्रयणे दोषतादवस्थ्यात् । 'इसुसो'रित्यत्र 'सर्पिष्करोती'त्युदाहरणेन व्युत्पत्तिपक्षस्यैव वार्तिककारेण स्वीकृतत्वानुमानात् । अन्यथा 'इदुदुपधस्ये'त्यनेनैव व्युत्पत्त्यव्युत्पत्तिपक्षभेदेन षत्वविकल्पसिद्धेस्तदुदाहरणस्यासङ्गतिप्रसङ्गात् । किंच 'तिष्ठतु सर्पि'रित्यादौ 'इदुदुपधस्ये'ति षत्वस्येष्टत्वे–'कस्कादिषु सर्पिष्कुण्डिकाशब्दोऽसमासे व्यपेक्षाविरहेऽपि षत्वार्थः'–इति स्वमूलग्रन्थविरोध इति । अत्र केचित्, 'इदुद्भ्यामप्रत्ययस्ये'ति वक्तव्ये 'इदुदुपधस्ये'तिग्रहणं नित्यं य इदुदुपधस्तस्यैव विसर्गस्य षत्वं यथा स्यात्, 'कविभिः कृत'मित्यादौ मा भूदित्येवमर्थम् । भिसो विसर्गस्य हि नित्यमिदुदुपधत्वं नास्ति' 'रामै'रित्यादौ तदभावादिति, तन्न; 'अग्निः करोती'ति निषेधोदाहरणस्याऽसाङ्गत्यापत्तेः । 'देव' इत्यादावकारोपधत्वात् । 'प्रियचला' इत्यादावाकारोपधत्वेन 'चतुष्कपाल' इत्यादौ षत्वानापत्तेश्चेति यत्किञ्चिदेतत् । अन्ये तु–'प्रत्ययस्य यो विसर्जनीयो न भवती'त्यादिव्याख्याने तूक्तोदाहरणे षत्वस्याप्रवृत्तेरुपधस्येत्येतत्सुत्यजमित्याहुः।

क्षति'रित्यन्ये ॥ **इदुदु** । 'अप्रत्ययस्ये'ति पर्युदासो, लाघवात् । तत्र प्रत्ययपदं तत्सम्बन्धिपरं, तेन

अग्निः करोति । वायुः करोति । एकादेशशास्त्रनिमित्तकस्य न षत्वम् । कस्कादिषु भ्रातुष्पुत्रशब्दस्य पाठात् । तेनेह न, मातुः कृपा ॥ ॐमुहुसः प्रतिषेधः॥ मुहुः कामा ।

**तिरसोऽन्यतरस्याम्** ।८।३।४२। तिरसः सो वा स्यात्कुप्वोः । तिरःकर्ता ॥

---

स्यादेतत् । 'अप्रत्ययग्रहणमेव स्थानिवत्सूत्रं प्रति त्रिपादी सिद्धेत्यत्र ज्ञापक'मित्युक्तम् । तदिदं वैयधिकरण्येनान्वयमभ्युपगच्छतां न सिध्येत् । अत्राहुः-'न मु ने' इत्यत्र 'ने'ति योगं विभज्य 'स्थानिवत्सूत्रं प्रति त्रिपादी नासिद्धे'ति व्याख्यायते । 'प्रत्ययः', 'परश्चे'-त्यादिनिर्देशाश्चेहानुकूलाः । योगविभागस्येष्टसिद्ध्यर्थत्वात् । 'अचः परस्मिन्–' इति सूत्रं प्रति त्वसिद्धैव । ततश्च 'पूर्वत्रासिद्धे न स्थानिव'दिति सिद्धान्तो युक्तिमूलक इत्यादि सर्वं सङ्गच्छत इति । 'अप्रत्ययो यो विसर्ग' इति सामानाधिकरण्यपक्षे 'मातुः कृपे'त्यादौ 'इदु-दुपधस्ये'ति षत्वमाशङ्क्याह–**एकादेशशास्त्रनिमित्तकस्येति** । 'मातु'रित्यत्र हि 'ऋत उत्' इति एकादेशशास्त्रं विसर्गं प्रति परम्परया प्रयोजकम् । आकरे तु 'एका-देशनिमित्ता'दिति प्रचुरः पाठः । तत्र एकादेशः-एकादेशशास्त्रं तन्निमित्तं यस्य उकारस्य तस्मादित्यर्थः । नन्वेवम् 'अप्रत्ययस्ये'त्यत्र सामानाधिकरण्यपक्षोऽप्याकरसंमत इति चेदत्राहुः, 'प्रत्येकं संयोगसंज्ञे'ति पक्ष आकरसंमतोऽपि यथा निष्प्रयोजनस्तथायमपि । वैयधिकरण्यपक्षस्त्वावश्यक एव । अन्यथा 'तिष्ठतु सर्पिः पिब त्वमुदक'मित्याद्य-सिद्ध्यापत्तेरिति ॥

**भ्रातुष्पुत्रशब्दस्य पाठादिति** । नच 'षत्वतुकोरसिद्धः' इत्येकादेशशास्त्रस्या-ऽसिद्धत्वात्षत्वाप्राप्तौ विध्यर्थ एव तत्र पाठो न ज्ञापनार्थ इति वाच्यम्, 'षत्वे तुकि च कर्तव्ये पदान्तपदाद्योः सतोरेवैकादेशोऽसिद्धः' इति सिद्धान्तात् । अन्यथा 'शकहू'ष्वि-त्यत्रापि षत्वं न स्यात् । शकान् ह्वयन्तीत्यत्र 'आदेच उपदेशे' इत्यात्वे क्विपि संप्रसा-रणे कृते 'संप्रसारणाच्चे'ति पूर्वरूपैकादेशे च 'हलः' इति दीर्घः । भवति हि 'कोऽसि-चत्' 'सोऽसिच'दित्यादौ पदान्तपदाद्योरादेशः । तेन तत्र षत्वनिषेधः सिध्यति, न तु 'शकहू'ष्वित्यत्र । एवं च 'भ्रातुष्पुत्र' इत्यत्रापि 'षत्वतुको'रित्येकादेशशास्त्रमसिद्धं न भवती-

---

प्रत्ययसम्बन्धिभिन्नस्येत्यर्थः । अत एव 'कविभिः कृत'मित्यादौ न षत्वम् । स्पष्टश्चेदं भाष्ये इत्यन्यत्र विस्तरः । **एकादेशशास्त्रेति** । एकादेशशास्त्रसम्पन्नरेफस्थानिकत्वेन विसर्जनीयस्यैकादेशशास्त्र-निमित्तकत्वं बोध्यम् । स्पष्टश्चेदमत्र सूत्रे, 'उरण्रपर' इति सूत्रे च भाष्ये इत्यन्यत्र विस्तरः । 'प्रत्यय-भिन्नसम्बन्धिन' इति तु नार्थः, 'अग्निः करोती'त्यादावपि प्रत्ययभिन्नसमुदायसम्बन्धित्वेन षत्वापत्तेः । तपरकरणं किम् ?, गीः करोति । उपधाग्रहणं व्यर्थम्, 'उपधाग्रहणं न करिष्यते, इदुद्भ्यान्तु परं विसर्जनीयं विशेषयिष्यामः' इति ... ॥ **तिरसोऽन्य** ... अत्र पतिग्रहणं नानुवर्त्तते,

**द्विस्त्रिश्चतुरिति कृत्वोऽर्थे** ।८।३।४३। कृत्वोऽर्थे वर्तमानानामेषां विसर्गस्य षकारो वा स्यात्कुप्वोः । द्विष्करोति । द्विःकरोतीत्यादि । कृत्वोऽर्थे किम् ? । चतुष्कपालः ॥ **इसुसोः सामर्थ्ये** ।८।३।४४। एतयोर्विसर्गस्य षः स्याद्वा कुप्वोः ।

---

त्युक्तं ज्ञापकं सुस्थमेव । ननूक्तज्ञापकात् 'शकृद्भू'ष्वित्यत्रापि 'मातुः कृपे'त्यत्रेव षत्वं न स्यात् । मैवम् । तुल्यजातीयस्य ज्ञापकत्वात् । कश्च तुल्यजातीयः, यः कुप्वोरिति दिक् ।

**द्विस्त्रिश्चतुरिति** । इह द्वित्रिभ्यां सुजन्ताभ्यां साहचर्याच्चतुःशब्दोऽपि सुजन्त एव ग्रहीष्यते । कृत्वोर्थग्रहणं तु 'साहचर्यं न सर्वत्र व्यवस्थापक'मित्यत्र ज्ञापकम् । तेन 'दीधीवेवीटा'मित्यत्र धातुसाहचर्येऽप्यागमस्येटो ग्रहणम् । **चतुष्कपाल इति** ।

---

पराभवे तिरस्कारशब्दप्रयोगात् । अन्तर्धावेव तिरसो गतित्वात् ॥ **द्विस्त्रि** । 'कृत्वोऽर्थ' इति न विसर्गविशेषणं, चतुःशब्देऽसम्भवात्; किन्तु द्विरादीनामित्याह—**वर्तमानानामेषामिति** । 'इसुसो'रितिसूत्रवक्ष्यमाणरीत्या 'सुच' इति सूत्रयितुमुचितम्; 'सुजन्तान्तस्य पदस्ये'त्यर्थात् ॥ **चतुष्कपाल इति** । 'इदुदुपधस्ये'ति नित्यं षः । 'चतुः'शब्दोऽव्युत्पन्न इति—'अप्रत्ययस्ये'ति पर्युदासो न । अत एव 'चतुष्पाद्भ्यो ढ'ञित्यादिनिर्देशाः सङ्गच्छन्ते । 'चतुष्पञ्चाश'दित्यत्रापि षत्वं भवत्येव । न चे'दुदुपधस्यासस्य यो विसर्ग'इति हयवरट्सूत्रभाष्योक्तेः कथमत्र षत्वमिति वाच्यं, विसर्गस्य पाठाभावेनोपधात्वाऽसम्भवात्, 'तत्स्थानिनिमित्तमुपधात्वं ग्राह्य'मिति भाष्यतात्पर्यात् । अत एव 'समः सुटी'तिसूत्रभाष्ये 'सपुङ्काना'मित्यनेन रुविधिरेवास्त्वित्याशङ्क्य—'पुंस्कामे'त्यत्र षत्वापादनं सङ्गच्छते । न च 'कृत्वोऽर्थे' इत्येव 'कृत्वोऽर्थे विद्यमानस्य पदस्येदुदुपधस्य यो विसर्ग' इत्यर्थात्र'पञ्चकृत्वःकरोती'त्यादौ दोषः, नापि 'चतुष्करोती'त्यादावव्याप्तिरिति—'द्विस्त्रिश्चतु'रिति व्यर्थमिति वाच्यं,'कृत्वोऽर्थे' इत्यस्यासिद्धत्वेन चतुःशब्दे 'इदुदुपधस्ये'ति नित्यषत्वापत्तेः । 'प्रकरणे प्रकरणमसिद्ध'मिति पक्षस्तु—'उपसर्गादसमासेऽपी'ति सूत्रे कैयटे, 'पूर्वपदा'दिति सूत्रे भाष्ये च दूषित एव । 'उपसर्गा'दिति सूत्रे चोपपादयिष्यते । **किञ्च** 'पूर्वत्रे'ति 'पूर्व'शब्देन प्रकरणग्रहणेऽव्यवहितप्रकरणे एव त्रिपाद्यसिद्धत्वं स्यान्न सम्पूर्णसपादसप्ताध्याय्याम् । **किञ्चा**ऽस्याधिकारत्वात्प्रतिसूत्रमुपस्थित्या प्रतियोगमसिद्धत्वं दुर्वारमित्यन्यत्र विस्तरः ॥

**इसुसोः** । अत्रेसुसोः प्रातिपदिकावयवयोर्ग्रहणं, तेन 'पेचुः काष्ठैः', 'सख्युः पाकः', 'कविभिः कृत'मित्यादौ षत्वं न । 'नित्यं समासे' इति सूत्रोदाहरणे समासविषये तयोरेव सम्भवेनार्थाधिकारानुरोधात्, साहचर्याच्च । इसुसन्तपदावयवविसर्गस्येत्यर्थः, 'पदस्ये'त्यधिकारात् । न च प्रत्ययग्रहणपरिभाषया 'परमसर्पिष्करोती'त्यादौ षत्वानापत्तिः, अवयवस्येसुसन्तत्वेऽपि 'उत्तरपदत्वे चे'ति निषेधेनाऽपदत्वादिति वाच्यम्; 'अनुत्तरपदस्थस्ये'ति निषेधेन क्वचिदुपात्तविशेष्यसत्त्वेऽपि शब्दरूपं विशेष्यमादाय तदन्तविधिज्ञापनेन शब्दरूपं विशेष्यमादाय प्रत्ययग्रहणपरिभाषया लब्धतदन्तार्थकस्य पदविशेषणतया इसुसन्तान्तस्येत्यर्थेनादोषात् । अत एव 'वनो र चे'त्यादौ न दोषः । 'ब्राह्मणस्य सर्पिष्करोती'-त्यादौ सापेक्षत्वेनाऽसामर्थ्यं नाशङ्क्यं, तस्यैकार्थीभावसामर्थ्यविषयत्वात् । 'अधात्वभिहितं समानाधिकरणमसमर्थव'दित्युक्तेः 'सर्पिः कालक'मित्यादौ न षत्वम् । 'अधात्वभिहित'मित्युक्तेः 'सर्पिष्पीयते'

सर्पिष्करोति। सर्पिःकरोति। धनुष्करोति। धनुःकरोति। सामर्थ्यमिह व्यपेक्षा। सामर्थ्ये किम् ?। तिष्ठतु सर्पिः, पिब त्वमुदकम् ॥

**नित्यं समासेऽनुत्तरपदस्थस्य** ।८।३।४५। इसुसोर्विसर्गस्यानुत्तरपदस्थस्य नित्यं षः स्यात्कुप्वोः परयोः। सर्पिष्कुण्डिका। धनुष्कपालम्। अनुत्तरपदस्थस्येति किम् ?। परमसर्पिःकुण्डिका। कस्कादिषु सर्पिष्कुण्डिकाशब्दोऽसमासे व्यपेक्षाविरहेऽपि षत्वार्थो, व्यपेक्षायां नित्यार्थश्च। अतः **कृकमिकंसकुम्भपात्र-**

चतुर्षु कपालेषु संस्कृत इत्यर्थे 'संस्कृतं भक्षाः' इत्यणः 'द्विगोर्लुगनपत्ये' इति लुक्। अत्र मनोरमायाम्—'इदुदुपधस्येति नित्यं ष'इत्युक्तम्। एवं च 'द्वितं त्रितमिति चतुःपञ्चाश'दिति स्वमूलग्रन्थे प्रयोगश्चिन्त्यः स्यात्, चतुष्कपालवत्तत्रापि नित्यतया षत्वप्रवृत्तेः। अतोऽत्र षत्वनिवारणाय 'अप्रत्ययस्ये'त्यत्र 'प्रत्ययस्य यो विसर्जनीयो न भवती'-त्यर्थ एव स्वीकर्तव्यः। 'चतुष्कपाल' इत्यत्र तु कस्कादेराकृतिगणत्वात्षत्वप्रवृत्तिरित्याहुः। **व्यपेक्षाविरहेऽपीति**। 'तिष्ठतु सर्पिष्कुण्डिकामानये'त्यादावित्यर्थः। **व्यपेक्षायामिति**। 'इदं सर्पिष्कुण्डिकाया'इत्यत्रेत्यर्थः। अत्र 'सर्पि'रित्यसमस्तं पदमिति बोध्यम्। समासे तु 'नित्यं समासे' इत्यनेन सिद्धे समासाभावमेव ज्ञापयितुमिदमिति सर्पिर्विशेषणमुक्तम्। **नित्यार्थश्चेति**। अयं भावः—असमासे व्यपेक्षा-

इत्यत्र षत्वसिद्धिः। 'धातुसहचरितप्रत्ययाभिहितार्थेन समानाधिकरणमसमर्थवन्ने'ति तदर्थः। यदा तु-सर्पिरादिकमव्युत्पन्नं प्रातिपदिकं, पाणिनेरुणादिष्वव्युत्पत्तिपक्ष एवेति 'आयनेयीनी'ति सूत्रे भाष्ये स्पष्टमुक्तेः, तत्र हि 'शङ्ख' इत्यादावादेशानाशङ्क्य—'उणादीनां प्रतिषेधो वक्तव्यः, प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेः सिद्ध'मित्युक्तम्। 'अयामन्ताल्वाय्येत्न्विष्णुषु' इति सूत्रं व्याकरणान्तररीत्यैव, 'सर्वनामस्थान'मितिमहासञ्ज्ञावत्। अत एव भाष्ये 'उणादयोऽव्युत्पन्नानी'त्येवोक्तम्, न तु 'अनेकार्था अपि धातव' इतिवदव्युत्पन्नान्यपीत्युक्तं, तदा—'इदुदुपधस्ये'ति नित्ये षत्वे प्राप्तेऽनेन विकल्प इति। प्रत्ययग्रहणाभावात्तत्परिभाषानुपस्थितेः—'परमसर्पिष्करोती'त्यादौ षत्वविकल्पः सिद्धः। 'नित्यं समासे' इति सूत्रमनुत्तरपदस्थस्येतिप्रतिषेधार्थम्। 'नित्य'ग्रहणन्तु न कर्त्तव्यमेव; समासे नित्यषत्वस्य 'इदुदुपधस्ये'त्येव सिद्धेः। 'सर्पिष्पे'त्यादौ षत्वं त्वत्र पक्षे क्वचिदन्यदेवेत्यर्थकाद्बहुलग्रहणादिति स्पष्टं भाष्ये। **व्यपेक्षेति**। व्याख्यानात्। एकार्थीभावसामर्थ्यग्रहणे 'परमसर्पिःकुण्डिके'त्यादौ समासे विकल्पापत्तिः। 'अनुत्तरपदस्थस्ये'ति निषेधादुत्तरसूत्रस्य न प्रवृत्तिरिति भावः। नन्वनेनैव सिद्धे कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठो व्यर्थ इत्यत आह—**कस्कादिष्विति**। एतेन 'तत्सामर्थ्यादुत्तरपदस्थस्यापि षत्व'मित्यपास्तम्। **व्यपेक्षाविरहेऽपीति**। 'आनय सर्पिष्कुण्डिका तिष्ठती'त्यादौ। **व्यपेक्षायामिति**। 'इदं सर्पिष्कुण्डिकाया' इत्यत्र। प्रत्ययभिन्नविसर्गस्येत्यर्थम्—'इदुदुपधस्ये'त्यत्र व्याचक्षाणानां व्याख्यादर्शकृतां मतेऽव्यपेक्षायां तेन सिद्धेरिति भावः। एतेन 'कस्कादिपाठस्याव्य-

**कुशाकर्णीष्वनव्ययस्य** ।८।३।४६। अकारादुत्तरस्याऽनव्ययस्य विसर्गस्य समासे नित्यं सकारादेशः स्यात्करोत्यादिषु परेषु न तूत्तरपदस्थस्य। अयस्कारः। अयस्कामः। अयस्कंसः। अयस्कुम्भः। अयस्पात्रम्। अयःसहिता कुशा-अयस्कुशा। अयस्कर्णी। अतः किम्?। गीःकारः। अनव्ययस्य किम्?। स्वःकामः। समासे किम्?। यशःकरोति। अनुत्तरपदस्थस्य किम्?। परमयशःकारः॥ **अधःशिरसी पदे** ।८।३।४७। एतयोर्विसर्गस्य सादेशः स्यात्पदशब्दे परे। अधस्पदम्। शिरस्पदम्। समास इत्येव। अधःपदम्। शिरःपदम्। अनुत्तरपदस्थस्येत्येव। परमशिरःपदम्॥

❀ **कस्कादिषु च** ॥ भास्करः॥ ❀ ॥ **इति विसर्गसन्धिः** ॥ ❀ ॥

**अथ स्वादिसन्धिः**। 'स्वौजसमौ'डिति सुप्रत्यये 'शिवस् अर्च्य' इति स्थिते॥

**ससजुषो रुः** ।८।२।६६। पदान्तस्य सस्य सजुष्शब्दस्य च रुः स्यात्। जश्त्वापवादः॥

---

विरहेऽत्यन्ताप्राप्तौ नित्यतया षत्वार्थः पाठः। व्यपेक्षायां लसमासे 'इसुसोः' इति विकल्पेन प्राप्तौ नित्यार्थ इति। **अयःसहितेति**। न त्वयसो विकारः, 'जानपदे'ति ङीष्प्रसङ्गात्। **अयस्कर्णीति**। अय इव कर्णौ यस्याः। 'नासिकोदर'इति ङीष्। **अधःशिरसी**। **एतयोरिति**। सूत्रे तु षष्ठ्याः स्थाने प्रथमा बोध्या। **अधस्पदमिति**। पदस्याध इति विग्रहः। मयूरव्यंसकादित्वात्समासः। **शिरस्पदमिति**। षष्ठीसमासः।

❀ **इति तत्त्वबोधिन्यां विसर्गसन्धिप्रकरणम्** ॥ ❀

**अथ स्वादिसन्धिः**। 'शिव' इत्यस्यावसाने विसर्गस्तस्याचर्य इत्यनेन समभिव्याहारे सस्याभावाद्रुत्वं कथं स्यादित्याशङ्कायामाह—**स्वौजसमौडित्यादिनेति**। एवं चात्र मूलभूत एव सुरस्तीति रुत्वादिकं स्यादेव, विसर्गस्त्विह न भवति खरवसानाभावात्। भाविन्यवसानभङ्गेऽकृतव्यूहपरिभाषयाऽर्च्यपदसमभिव्याहारात्पूर्वमपि न भवतीति बोध्यम्। **ससजुषो रुः**। 'पदस्ये'त्यनुवृत्तं ससजूर्भ्यां विशेष्यते, विशेष-

---

पेक्षायां चारितार्थ्येन व्यपेक्षायां तस्यासिद्धत्वाद्विकल्प एवोचित' इत्यपास्तम्। 'प्रत्ययसम्बन्धिभिन्नविसर्गस्ये'त्यर्थे तु तदप्राप्तिरेवेति—व्यपेक्षायां विकल्प एवेति बोद्धव्यम्॥

**अतः कृ**। 'कृ'शब्देन तदादिग्रहणं, समासाक्षिप्तोत्तरपदस्य विशेष्यत्वात्। 'विष्वग्देवयो'रिति सूत्रे वप्रत्ययग्रहणेन धातोर्विशेषणत्वे तदादिविधिज्ञापनात्। 'अयस्कुम्भी'त्यादौ लिङ्गविशिष्टपरिभाषया सत्वं बोद्धव्यम्। **भास्कर इति**। तपरकरणात् 'अतः क्रि'त्यस्याप्राप्तिः। ❀ **इति विसर्गसन्धिः** ❀।

**अथ स्वादिसन्धिः**। 'यत्तु 'स्वौज'मित्यत्र रुरेव पाठ्यः, सर्वत्र सुग्रहणे रुग्रहणमेवास्त्विति; तन्न; 'यशोऽत्रे'त्यादौ रोरसिद्धत्वादुत्वानापत्तेः, 'अतो रो'रित्यस्य प्रथमैकवचने चारितार्थ्यात्। तद्ध्वनयन्नाह—**स्वौजसेति**। 'पदस्ये'त्यनुवृत्तं ससजूर्भ्यां विशेष्यते तेन तदन्तविधिः। आदेशस्त्वलोऽन्त्यस्येत्यन्त्यस्य।

**अतो रोरप्लुतादप्लुते** ।६।१।११३।अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति । 'भोभगो-अघो'इति प्राप्तस्य यत्वस्याऽपवादः । उत्वं प्रति रुत्वस्यासिद्धत्वं तु न भवति । रुत्वमनूद्य उत्वविधेः सामर्थ्यात् ॥ **प्रथमयोः पूर्वसवर्णः** ।६।१।१०२। अकः प्रथमाद्वितीययोरचि परे पूर्वसवर्णदीर्घ एकादेशः स्यात् । इति प्राप्ते–॥ **नादिचि**

---

णेन तदन्तविधिः । न च सजूःशब्दांशे 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्ने'ति निषेधः शङ्क्यः, तस्य प्रत्ययविधिविषयकत्वात् । सान्तं सजुष्शब्दान्तं च यत्पदं तस्य रुः स्यात्स चाऽलोऽन्त्यस्य । एवं स्थिते फलितमाह–**पदान्तस्य सस्येति । सजुष्शब्दस्येति** । तदन्तस्य पदस्येत्यर्थः । तेन 'सजुषौ' 'सजुष'इत्यत्रापि नातिव्याप्तिः । नच 'सजू'रित्यत्राऽव्याप्तिः 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति निषेधादिति वाच्यं, तस्यापि प्रत्ययविधिविषयकत्वात् । अतएव 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति 'ग्रहणवते'ति च परिभाषाद्वयमपि प्रत्ययविधिविषयकमिति 'दिव उ'त्सूत्रे हरदत्तेनोक्तम् । कैयटहरदत्ताभ्यामिति तु मनोरमायां स्थितम् । तत्र कैयटेनानुक्तत्वात्कैयटग्रहणं प्रमादपतिततमिति नव्याः । केचित्तु 'दिव उ'त्सूत्रं यस्मिन्निति बहुव्रीहिरयं, सूत्रसमुदायश्चान्यपदार्थः । तथाच 'दिव उ'त्सूत्रशब्देन 'इन्द्रे चे'ति सूत्रस्यापि क्रोडीकारात्तत्र च कैयटेनोक्तत्वान्नोक्तदोष इति कुकविकृतिवत्क्लेशेन मनोरमां समर्थयन्ति ॥ यत्वस्यासिद्धत्वादुत्वे कृतेऽपि तस्य स्थानिवत्त्वेन रुत्वाद्यत्वं स्यादित्याशङ्कायामाह–**यत्वस्यापवाद इति । उत्वविधेः सामर्थ्यादिति** । न च 'अतो रोरप्लुता'दिति सूत्रं परित्यज्य 'रोः सुपी'ति सूत्रानन्तरम् 'अत उरती'त्येव लाघवादुच्यतां किमनेन सामर्थ्याश्रयणप्रयासेनेति वाच्यम्; तथाहि सति उत्वस्यासिद्धतया 'शिवोऽर्च्य' इत्यादावाद्गुणस्याऽप्रवृत्तिप्रसङ्गात्।**प्रथमयोः** । अत्र प्रथमाशब्दः प्रथमाद्वितीययोः समुदाये गौणः, द्विवचनं तु समुदाय्यपेक्षया। 'इको यणची'त्यतोऽचीति 'अकः सवर्णे दीर्घः' इत्यतो'ऽको' 'दीर्घ'इति 'एकः पूर्वपरयो'रिति सूत्रं चानुवर्तते इत्याशयेन व्याचष्टे–**अकः प्रथमाद्वितीययोरचीत्या-**

---

तत्फलितमाह–**पदान्तस्येत्यादिना** । 'सजू'रित्यत्र व्यपदेशिवद्भावेन सिद्धिः । 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्ने'ति परिभाषाद्वयं प्रत्ययविधिविषयमिति–'असमासे निष्कादिभ्य' इत्यत्र भाष्ये स्पष्टम् । इदमुत्वापवादः । 'श्रेया'नित्यादौ त्वस्यासिद्धत्वात्संयोगान्तलोप एवेति दिक् । **यत्वस्यापवाद इति**। 'यदीदं स्यात्तर्हि यत्वं प्राप्नोती'त्येतावता । कृते त्वस्मिन् यत्वस्याऽसिद्धत्वादुत्वगुणयोर्यत्वाऽप्राप्तिरेवेति भावः ॥

**प्रथमयोः** । व्याख्यानात्**प्रथमयो**रित्यनेन प्रथमाद्वितीयारूपसुब्विभक्त्योर्ग्रहणम्, तदाह–**प्रथमाद्वितीययोरिति** । पूर्वग्रहणं किम् ? 'अग्नी' इत्यत्र पक्षे परसवर्णो मा भूदिति । दीर्घग्रहणन्तु

।६।१।१०४। अवर्णादिचि परे न पूर्वसवर्णदीर्घः । 'आद्गुणः' । 'एङः पदान्तादति' । शिवोऽर्च्यः । अत इति तपरः किम् ? । देवा अत्र । अतीति तपरः किम् ? । श्व आगन्ता । अप्लुतात्किम् ? । एहि सुस्रोत ३ अत्र स्नाहि । प्लुतस्यासिद्धत्वादतः परोऽयम् । 'अप्लुता'दिति विशेषणे तु तत्सामर्थ्यान्नाऽसिद्धत्वम् । तपरकरणस्य तु न सामर्थ्यं, दीर्घनिवृत्त्या चरितार्थत्वात् । अप्लुते इति किम् ? । तिष्ठतु पय अ३ग्निदत्त । 'गुरोरनृत' इति प्लुतः । **हशि च** ।६।१।११४। अप्लुतादतः परस्य रोरुः स्याद्धशि । शिवो

**दिना** । अचि किम् ? । रामः । अकः किम् ? गावौ, नावौ । प्रथमयोः किम् ? । वृक्षे, प्लक्षे । यद्यपीदं 'नादिची'त्यनेनैव सिध्यति, तथापि 'हरी' इत्यत्रेव 'हर्यो'रित्यत्रापि पूर्वसवर्णदीर्घः स्यात् । तद्वारणाय 'प्रथमयो'रित्युक्तमिति दिक् । पूर्वग्रहणं किम् ? । 'अग्नी' इत्यत्र पक्षे परसवर्णो मा भूत् । दीर्घग्रहणं किम् ? । त्रिमात्रे स्थानिनि त्रिमात्रो मा भूत् । 'आद्गुणः' इत्यपवादे निषिद्धे पुनरुत्सर्गस्य स्थितिरिति न्यायादिति भावः । अत्र 'भियोर्ध्यौ नदे' 'तौ स'दित्यादि लिङ्गम् । तद्धि 'नादिची'ति पूर्वसवर्णदीर्घे निषिद्धे पुनरुत्सर्गस्य वृद्धेः प्रवृत्त्यैव सिध्यति नान्यथेति । नन्वेवं 'नान्तःपदमव्यपरे' इति पाठे

त्रिमात्रस्य स्थानिनस्त्रिमात्रो मा भूदिति । सवर्णग्रहणन्तु स्पष्टार्थम् । पूर्वस्यादीर्घत्वात्पूर्वजातीय इत्यर्थेनेष्टसिद्धेरिति स्पष्टं भाष्ये । **आद्गुण इति** । 'तौ स'दिति निर्देशेन प्रथावसरन्यायस्यात्र शास्त्रेऽनाश्रयणादिति भावः । **देवदत्तहन्तृहतन्यायस्य** तु नात्र प्रवृत्तिः । देवदत्तहन्तृहनने हि नोज्जीवनं देवदत्तस्य । देवदत्तहननप्रसक्तहनने त्वस्त्येव देवदत्तजीवनम् । प्रकृते तु न हननस्थानीया गुणवृद्धिहन्तुः पूर्वसवर्णदीर्घस्य लक्ष्ये प्रवृत्तिः, किन्तु हननोद्यमसजातीयं प्रसक्तिमात्रं, प्रसक्तस्य निषेधे बाध्योज्जीवने न बाधकमिति । स्पष्टञ्चेदं 'स्वादिष्वि'ति सूत्रे कैयटे । **सुस्रोत इति** । 'सुस्रोत'शब्दः कस्यचित्सञ्ज्ञा। सम्बुद्धौ 'दूराद्धूते चे'ति प्लुतः।**तत्सामर्थ्यादिति** । प्रतियोगित्वेन तदाश्रयणसामर्थ्यादित्यर्थः। 'आश्रयात्सिद्ध' इति भाष्योक्तेः । पयस्यटति, पयो ददातीत्यर्थे—'आगच्छ हे पयो३ट्' 'आगच्छ हे पयो३दे'त्यादावेकपदस्थवर्णद्वयसापेक्षमन्तरङ्गमुत्वं प्रति वाक्यसम्पादकपदान्तरसापेक्षप्लुतस्यासिद्धत्वादुत्वे प्लुतसिद्धिः । अन्यथा प्लुतस्योत्वदृष्ट्या सिद्धत्वातपरत्वात्प्लुते आद्येऽप्लुतपरत्वाभावादन्त्येऽप्लुतात्परत्वाभावादुत्वं न स्यात् । परिभाषादृष्ट्या बहिरङ्गाऽसिद्धत्वेऽपि न क्षतिः । स्वदृष्ट्याऽसिद्धस्यापि परं प्रत्यसिद्धत्वप्रतिपादनसम्भवात्, स्वदृष्ट्याऽविद्यमानस्य परं प्रत्यविद्यमानत्वप्रतिपादनवत् । अन्तरङ्गस्यासिद्धत्वे तु प्रतिपाद्याभावे इव कं प्रत्यसिद्धत्वं प्रतिपाद्येत ? । तत्राद्ये—'वाक्यस्य टे'रित्यट्शब्दाकारः प्लुतः, अन्त्ये रेफदकारसंयोगपरत्वेनाकारस्य गुरुत्वात् 'गुरो'रिति प्लुतः । आश्रयेण तु येन नाप्राप्तिन्यायेन, प्रत्यक्षत्वेन च पूर्वत्रासिद्धत्वमेव बाध्यते, न त्विदम् । 'सुस्रोत' इत्यादौ त्वेकवाक्यमात्रसापेक्षत्वात्प्लुतोऽन्तरङ्गो, भिन्नवाक्यस्थाकारसापेक्षत्वादुत्वं बहिरङ्गमिति स्पष्टं भाष्ये । **उकारानुबन्धेति** । उकारेसञ्ज्ञकरेफस्येत्यर्थ इति भावः । तेन 'देव रुही'त्यादौ न दोषः ॥

वन्धः । 'रो'रित्युकारानुबन्धग्रहणान्नेह–प्रातरत्र । प्रातर्गच्छ । 'देवास् इहे'ति स्थिते रुत्वम् । **भोभगोअघोअपूर्वस्य योऽशि** ।८।३।१७। एतत्पूर्वस्य रोर्यादेशः स्यादशि परे । असन्धिः सौत्रः । 'लोपः शाकल्यस्य' । देवा इह । देवायिह । अशि किम् ? । देवाः सन्ति । यद्यपीह यत्वस्यासिद्धत्वाद्विसर्गो लभ्यते तथापि विसर्गस्य स्थानिवद्भावेन रुत्वाद्यत्वं स्यात् । नह्ययमल्विधिः, 'रो'रिति समुदायरूपाश्रय-

---

'सुजाते अश्वसूनृते' 'उपप्रयन्तो अध्वर'मित्यादौ 'एङः पदान्तादती'ति पूर्वरूपमेव हि तेन निषिध्यते; तस्मिंश्च निषिद्धे 'एचोऽयवायावः' इत्युत्सर्गोऽपि प्रवर्तेत । मैवम्; बाधके निषिद्धे बाध्यमपि क्वचिन्नेति स्वीकारात्तत्सिद्धेः ॥

**भोभगो । असन्धिः सौत्र इति** । सूत्रे कृतः सौत्रः । 'कृतलब्धे'त्यण् । भगो-अघोशब्दयोरोकारस्याऽकारस्य च पूर्वरूपं सौत्रत्वान्नेत्यर्थः । यदि तु भोस्भगोस-घोसिति सान्तं रान्तं वानुकृत्य-'भो'इत्यादीनां त्रयाणाम् 'अलोऽन्त्यस्ये'त्यन्त्यस्य यः स्यात्, अपूर्वस्य रोश्चे'ति व्याख्यायते, तर्हि असन्धिर्न्याय्य एवेति बोध्यम् ।

ननु रोरुकारस्यानुबन्धत्वाद्रेफमात्रं विसर्गस्थानि, तथा च 'अनल्विधौ' इति स्थानिवद्भावो न स्यादित्याशङ्क्याह–**नह्ययमिति** । यथा 'अग्रही'दित्यत्र 'ग्रहोऽलिटी'ति दीर्घस्य स्थानिवद्भावेन इट्त्वादिट ईटीति प्रवर्तते एवमिहापि विसर्गस्य रुत्वाद्यत्वं प्रवर्तेतेति भावः । यद्यपि 'रोरी'त्यतो 'र' इत्यनुवर्त्य रोर्यो रेफस्तस्य यादेश इति व्याख्याने अयमल्विधिरेव, तथापि उत्तरार्थं कर्तव्यमशिग्रहणं 'र' इत्यस्यानुवृत्तिक्लेशवारणार्थ-

---

**भोभगो** ।: 'रोः सुपी'त्यतो 'रो'रिति वर्त्तते, न तु 'रो री'त्यतो 'र' इति, 'प्रातरत्रे'त्यादावतिप्रसङ्गात् । 'अ'शब्दान्तद्वन्द्वेन पूर्वशब्दस्य बहुव्रीहिमभिप्रेत्याह–**एतत्पूर्वस्येति** । नन्वेवं पूर्वरूपापत्तिरत आह–**असन्धिरिति** । भगो–अघोशब्दौकारयोरकाराभ्यां प्राप्तपूर्वरूपात्मकसन्धिकार्याभाव इत्यर्थः । इदं प्राचामनुरोधेन । वस्तुतः सूत्रे रान्तानामेवानुकरणमसन्धिर्न्याय्य एवेति बोद्धव्यम् ।

**नह्ययमिति** । इदमर्वाचामनुसारेण । भाष्ये तु–'रेफस्य विसर्गस्थानित्वेन तद्वृत्तिरुत्वाश्रयमपीदमल्विधिरेव, स्थान्यल्वृत्तिधर्माश्रयत्वात् । 'अग्रही'दित्यत्र च दीर्घे लोपे चेट्त्वेनैव निवेशइति विशेषः । अतः 'पयःस्वि'त्यादौ दोषः । तत्र हि 'रोः सुपी'ति विसर्गः । नियमशास्त्राणि च विधायकान्येव वाच्यवृत्त्या, आर्थिकार्थमादाय तु निषेधकानीति । तत्रापि 'रो रेफस्य विसर्ग' इत्यर्थे त्वग्रहणं व्यर्थ–'मित्युक्तम् । नन्वेवं 'हे रामे'त्यादौ सम्बुद्ध्यवयवस्य हलः सस्य लोपे तद्वृत्तिसुप्त्वस्याल्धर्मत्वेन स्थानिवत्त्वाभावे पदत्वासिद्धिरिति चेन्न; आनुमानिकादेशस्य 'रामे'त्यस्य स्थानिवद्भावेन सुबन्तत्वस्य, तत्प्रयुक्तकार्यस्य वा लाभेन तत्सिद्धेः । प्रत्ययलक्षणेनापि न प्रत्ययवृत्तिधर्मलाभः । लक्षणपदोपादानेन प्रत्ययनिमित्तककार्यस्य तन्निमित्तकव्यवहारस्य वाऽतिदेशात् । एवं 'दीर्घाहो निदाघे'त्यादौ हल्ङ्यादिलोपे उक्तरीत्या स्थानिनि जायमानस्याऽसुपीति रुत्वनिषेधस्यादेशे [illegible] प्रवृत्त्या न

णात् । भोस्भगोसघोसिति सकारान्ता निपाताः । तेषां रोर्यत्वे कृते —॥

मिहैव कृतम् । **निपाता इति** । 'भोभगो–' इति सूत्रे निर्दिष्टाश्चादेराकृतिगणत्वात्तत्र बोध्याः । यदि तु 'विभाषा भवद्भगवदघवतामोच्चावस्ये'ति वार्तिकेन 'एषां रुः स्यादवस्योकारो वा संबुद्धौ' इत्यर्थकेन निष्पन्ना एव भोशब्दादयो गृह्येरन्, तदा पुंल्लिङ्गैकवचनमात्रे 'भो हरे' इत्यादिसिद्धावपि 'भो हरिहरौ,' 'भो विद्वद्वृन्द,' 'भो गङ्गे' इत्यादि न सिद्ध्येत् । तस्मा'द्विभाषा भव'दिति वार्तिकं नावश्यमाश्रयणीयमिति भावः । मनोरमायां तु–'भाष्यस्वरसरीत्या तु 'विभाषे'ति वार्तिकमारब्धव्यमेवे'त्युक्तम् । तथाहि 'हे भवन्'इतिवत् 'हे भो'इति प्रयोगस्यापीष्टत्वात् । तस्य च वार्तिकारम्भ एव सिद्धेः । 'स्युः पाट्प्याडङ्गहेहैभोः' इत्यमरोक्तानां तु संबोधनार्थानां निपातानां सह प्रयोगाऽयोगात् । किंच 'अत्र भवान्हरिः' 'तत्र भवान्', 'ततो भवान्' इतिवत्तत्र भो इत्याद्यपि वार्तिके सत्येव सिध्यति, 'इतराभ्योऽपि दृश्यन्ते' इति सर्वविभक्त्यन्तात्त्रतसोर्भवदादियोग एवेष्टत्वात् । किंच आमन्त्रितत्वे पदात्परे स्याष्टमिकनिघातः, 'आमन्त्रितं पूर्वमविद्यमानव'दित्यविद्यमानवद्भावश्चेत्यादि सिध्यति नान्यथा । 'भो हरिहरा'वित्यादिसिद्धये 'भो' इति निपातोऽप्यवश्याभ्युपगन्तव्यः । यदि तु भगोअघो इति निपातावपि प्रामाणिकौ, तर्हि स्तां नाम, वार्तिकं तूक्तप्रयोजनाय स्वीकर्तव्यमेवेति दिक् । स्यादेतत्–निपातानामभ्युपगमे यत्वविधौ त एव गृह्येरन् प्रतिपदोक्तत्वान्न तु संबुद्ध्यन्ताः, लाक्षणिकत्वादिति चेन्मैवम् । 'स्वरितेनाधिकारः' इत्यत्राधिकः कारोऽधिकार इति व्याख्यानमाश्रित्य लक्ष्यानुरोधेन स्वरितत्वमाश्रित्योभयग्रहणात् । लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वाच्च । अनित्यत्वे लिङ्गं तु 'भुवश्च महाव्याहृतेः' इति सूत्रे महाव्याहृतिग्रहणं, 'यावत्पुरे'ति सूत्रे निपातग्रहणं च । न चैवं लाक्षणिकानामपि ग्रहणे 'विभो'रिदं,–सुप्रभा गौर्यस्य स सुप्रभगुः तस्य–'सुप्रभगोरिदं', 'रघो'रिदमित्यत्रापि यत्वापत्तिरिति वाच्यम्, परस्परसाहचर्येण निपातानां वार्तिकोक्तानां च ग्रहणेऽप्यन्येषामग्रहणात् । साहचर्यं त्वेषां संबोधनार्थे इति बोध्यम् । 'भो'इत्यादीनां त्रयाणामलोऽन्त्यस्य यः स्यादिति व्याख्याने त्वर्थवद्ग्रहणपरिभाषया नातिप्रसङ्गः । न च

रेफ इति दिक् । **तेषां रोरिति** । इदञ्च–निपातानाख्याय 'विभाषा भव'दिति वार्त्तिकं प्रत्याचक्षाणस्य वृत्तिकृतो मतेन । **परेतु**–तेषामपि रोरित्यर्थः । अपिना 'विभाषा भवद्भगवदघवतामोच्चावस्ये'तिवार्त्तिकनिष्पन्नसङ्ग्रहः । 'एषामन्त्यस्य रुः स्यादवस्य चौकारः सम्बुद्धा'विति तदर्थः । अवग्रहणसामर्थ्यात् 'अलोऽन्त्यस्ये'ति नेति बोद्धव्यम् । वार्त्तिकनिष्पन्नानां त्रयाणां भोश्शब्दनिपातस्य चावश्यकत्वमन्यत्र स्पष्टमिति ॥

**व्योर्लघुप्रयत्नतरः शाकटायनस्य** ।८।३।१८। पदान्तयोर्वकारयकारयो-र्लघूच्चारणौ वयौ वा स्तोऽशि परे। यस्योच्चारणे जिह्वाग्रोपाग्रमध्यमूलानां शैथिल्यं जायते स लघूच्चारणः॥ **ओतो गार्ग्यस्य** ।८।३।२०। ओकारात्परस्य पदान्तस्याऽ-लघुप्रयत्नस्य यकारस्य नित्यं लोपः स्यात्। गार्ग्यग्रहणं पूजार्थम्। भो अच्युत। लघुप्रयत्नपक्षे—भोयच्युत। पदान्तस्य किम्?, तोयम्॥ **उञि च पदे** ।८।३।२१। अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोप उञि पदे। स उ एकाग्निः। पदे किम्?, तन्त्रयुतम्। वेञः संप्रसारणे रूपम्। यदि तु प्रतिपदोक्तो निपात 'उ'ञिति ग्रहीष्यते तर्ह्युत्तरार्थं 'पद'ग्रहणम्॥

---

'अजत्स्वार्था वृत्ति'रिति पक्षे 'विभोरिदं' 'प्रभोरिद'मित्यत्र 'भो'रित्येकदेशस्य अर्थोऽ-स्तीति शङ्क्यम्, 'जहत्स्वार्था वृत्ति'रिति मुख्यपक्षे तदभावादिति दिक्॥ **व्योर्लघु**। **वकारयकारयोरिति**। भोभगोअघोअपूर्वयोरित्यर्थः। लघुप्रयत्नतरः—लघूच्चारण-तरः। स चान्तरतम्याद्वस्य वः, यस्य य इत्याह—**वयाविति**। विधानसामर्थ्याल्लघु-प्रयत्नतरस्य न भवतीत्याशयेनाह—**अलघुप्रयत्नस्येति**। **भोयच्युतेति**। एवं भगोयच्युत। अघोयच्युत। वकारस्योदाहरणं तु—'असावादित्यः'। एतच्च काशिकायां स्पष्टम्। **उत्तरार्थं पदग्रहणमिति**। वस्तुतस्तूत्तरत्रापि नोपयुज्यते, 'पदस्ये'त्यनु-

---

**व्योर्लघु**। यद्यपि वर्णसमाम्नाये यस्य प्राथम्यात् 'य्वो'रित्युचितं, तथापि 'लोपो व्यो'रितिलोप-वारणाय सौत्रत्वमाश्रयणीयं स्यादतो 'व्यो'रित्युक्तम्। लघुतरः प्रयत्नो यस्योच्चारणे स **लघु-प्रयत्नतरः**। अन्यपदार्थसम्बन्धोत्तरं वर्तिपदार्थप्रकर्षविवक्षया साधु। प्रयत्ने लघुतरत्वञ्चैषां शैथिल्य-जनकत्वमेव। **लघूच्चारणाविति**। लघुतरोच्चारणावित्यर्थः। सूत्रे सौत्रत्वादेकवचनम्। वकारोदा-हरणम्—'असावादित्य' इति वृत्तिः। **ओतो**। 'व्यो'रित्यत्र यकारसाहचर्याद्वकारोऽपि धात्वनवयव एव। अत्राप्यर्थाधिकारात्तथैव। तेन 'स्मृतोवच्युते'त्यादौ न दोषः—तदाह—**यस्येति**। तादृशवस्या-ऽसम्भवादिति भावः। 'भोभगो' इति तु नानुवर्त्तते, विच्छेदात्,—तद्ध्वनयन्वक्ष्यति—'पदान्तस्य किं?, तोय'मिति। इदं लघुप्रयत्नयोर्न, गार्ग्यश्रुतेः,—तदाह-**अलघुप्रयत्नस्येति**। **पूजार्थमिति**। व्याख्या-नादिति भावः। तादृशश्च भोइत्यादिपूर्वक एवेत्याशयेनाह—**भो अच्युतेति**। **भाष्यानुसारिणस्तु**—भो इत्याद्यनुवृत्तिः 'स्मृतो'वित्यादौ न दोषः। तस्यानभिधानाच्च। 'अपूर्वस्ये'ति तु 'ओत'इत्यनेन विरोधान्न सम्बध्यते। 'लोपः शाकल्यस्ये'त्येव 'भोभगो' इत्याद्यनुवृत्त्या सिद्धे नित्यत्वार्थमिदमित्याहुः॥

**उञि च**। 'भो'इत्यादिपूर्वस्य पूर्वेण सिद्धेराह—**अवर्णपूर्वयोरिति**। एतदपि नित्यमेव। अत्रापि गार्ग्यग्रहणानुवृत्त्याऽलघुप्रयत्नस्यैव लोपः। एतेन—'भो'इत्यादिपूर्वे लघुप्रयत्नलोपार्थमत्रापि तदनुवृत्तिरित्यपास्तम्। वकारोदाहरणन्तु—'असा उ एकाग्नि'रिति वृत्तिः। **उत्तरार्थमिति**। 'ङमो ह्रस्वादची'त्यर्थमित्यर्थः। एतत्तत्रैव निरूपितम्। 'हलि सर्वेषा'मित्यादौ तु न सम्बद्ध्यते, व्यवहिते

हलि सर्वेषाम् ।८।३।२२। भोभगोअघोअपूर्वस्य लघ्वलघूच्चारणस्य य[कार]स्य लोपः स्याद्धलि सर्वेषां मतेन । भो देवाः ?। भो लक्ष्मि !। भो विद्वद्वृन्द ॥ भगो ! नमस्ते । अघो ! याहि । देवा नम्याः । देवा यान्ति । हलि किम् ?।

वृत्त्यैव निर्वाहात् । 'उञि च पदे' इत्यतः 'पदे' इत्यनुवर्त्य 'अजादेः पदस्ये'ति व्याख्यानात् । 'परमदण्डिनावित्यादौ ङमुण्ने'ति प्राचो व्याख्यानस्य 'ङमो ह्रस्वादची'ति सूत्रे मनोरमायां निरस्तत्वाच्च । ननु 'हलि सर्वेषा'मित्यत्र 'पदे'ग्रहणानुवृत्तौ 'हलादौ पदे' इति व्याख्यानलाभाद्वृक्षव्भ्यां वृक्षव्भिरित्यत्र वस्य नित्यं लोपो न भवति, किं तु 'लोपः शाकल्यस्ये'ति वैकल्पिक एव लोपइत्यस्ति 'पदे'ग्रहणस्य प्रयोजनमिति चेन्मैवं; 'हलि सर्वेषा'मित्यत्र वस्याऽननुवर्तितत्वात् । किंच 'माभ्यां' 'माभि'रित्यत्र भ्यामादौ परतो यस्य विकल्पेनैव भवन्मते लोपः स्यात्, तत्र 'हलि सर्वेषा'मित्यस्याऽप्रवृत्तेः । न चेष्टापत्तिः, भाष्यकारैर्दण्डिनेत्यत्र ङमुड्वारणाय 'ङमो ह्रस्वादची'त्यत्रानुवृत्त्यर्थं पदग्रहणमित्युक्तत्वात् । न च तदेव प्रयोजनमस्त्विति वाच्यं, 'ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो नित्यं ङमु'डिति व्याख्यानेन 'दण्डिने'त्यत्र ङमुटः प्रसक्त्यभावात् ।

**हलि सर्वेषाम् । यकारस्येति ।** वकारस्तु नानुवर्तते । भोभगोअघोअपूर्वस्याऽसंभवात् । अपूर्वस्तु यद्यपि संभवति 'वृक्षव्करोती'ति, तथापि तत्र लोपाऽप्रसङ्गः, 'अशी'त्यनुवर्त्याऽशा हलो विशेषणात् । 'वृक्षव्हसती'त्यादि त्वनभिधानादसाध्वित्याहुः । 'गव्य'मित्यत्र तु पदान्तत्वं नास्ति । 'गव्यूति'रित्यत्र वकारप्रश्लेषान्न वलोप इत्युक्तम् ।

**देवा नम्या इति ।** अत्र 'लोपो व्योर्वली'ति न प्रवर्तते, तं प्रति यत्वस्यासिद्धत्वात् ।

**हलि किं देवायिहेति ।** उत्तरार्थमावश्यकं 'हली'ति ग्रहणमिहैव कृतम् । तेन

'ङम' इत्यत्रैव प्रयोजनकथनपरभाष्यप्रामाण्यात् । अत एव 'लिट्त्तु' इत्यादौ धुडादयः। अन्यथा 'सादौ पदे' इत्यर्थान्न स्युः । अत एव 'माभ्या'मित्यादौ 'हलि सर्वेषा'मिति लोपसिद्धिरिति दिक् ॥

**हलि स।** 'भोभगो' इत्याद्यनुवर्त्तते। तत्रौकारात्परस्य लघूच्चारणस्यैवानेन लोपः। अलघूच्चारणस्य तु 'ओत'इत्येव सिद्धम् । अपूर्वे तूभयोरपि । न चापूर्वाल्लघुप्रयत्ने अस्याऽसिद्धत्वात् 'लोपः शाकल्यस्ये'ति प्राप्नोतीति वाच्यं; लघुप्रयत्नस्यैवानेन लोपे 'व्यो'रिति सूत्रेऽचीति करणेन हलि विधानाभावेनैव सिद्धावस्य सूत्रस्य वैयर्थ्यापत्त्या तद्बाधात् । न चाऽलघुप्रयत्नयोरेव लोपः स्याद्व्योरित्यर्थाधिकारादिति वाच्यम्, ऋषिमात्रग्रहणार्थस्य 'सर्वेषा'मित्यस्य वैयर्थ्यापत्तेः, विकल्पस्य विच्छिन्नत्वेन नित्यत्वसिद्धेः। अत्र च यकार एवानुवर्त्तते, न वकारः; वृत्तौ तथैवोक्तेः, फलाभावात्, 'अभ्यपरे' इत्यादिनिर्देशाच्च । अन्यथा तत्र सोऽस्यामयं व्यवहारात् लघ्वलघूच्चारणस्य यस्येति ।

देवायिह ॥ **रोऽसुपि** ।८।२।६९। अह्नो रेफादेशः स्यान्न तु सुपि। रोरपवादः। अहरहः। अहर्गणः। असुपि किम् ?। अहोभ्याम्। अत्राऽहन्निति रुत्वम् ॥

❀ **रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्** ॥ अहोरूपम्। गतमहो रात्रिरेषा। एकदेशविकृतस्याऽनन्यत्वादहोरात्रः। अहोरथन्तरम् ॥ ❀**अहरादीनां पत्यादिषु वा रेफः**। विसर्गापवादः। अहर्पतिः। गीर्पतिः। धूर्पतिः। पक्षे विसर्गोपध्मानीयौ ॥ **रो रि** ।८।३।१४। रेफस्य रेफे परे लोपः स्यात् ॥

**ढ्रलोपे पूर्वस्य दीर्घोऽणः** ।६।३।१११। ढरेफौ लोपयतीति तथा। तस्मि-

---

'लोपः शाकल्यस्ये'त्यस्यास्य च विषयविभागोऽत्र सिध्यतीति भावः ॥ **रोऽसुपि**। 'असुपी'ति यदि पर्युदासः स्यात्ततः सुप्सदृशे प्रत्यय एव स्यादहर्यतीत्यादौ, न त्वहर्भातीत्यादावपि। तस्मात्प्रसज्यप्रतिषेध एवेति व्याचष्टे—**न तु सुपीति**। **अहरहरिति**। 'नित्यवीप्सयो'रिति द्वित्वम्। न चात्र रेफादेशस्यासिद्धत्वात्पूर्वं नलोपे अकारस्यैव रेफः स्यादिति वाच्यम्, 'अह'न्नित्यावर्त्य एकेन लोपाभावं निपात्य द्वितीयेन रुर्विधेय इति 'अह'न्निति सूत्रे वक्ष्यमाणतया रुत्वापवादस्यापि रेफादेशस्य नकारस्थानिकत्वलाभात्। **अहोरात्र इति**। 'अहःसर्वैकदेशे'त्यादिना समासान्तो वक्ष्यते। 'रात्राह्नाहाः पुंसी'ति पुंस्त्वम्। **अहोरथन्तरमिति**। रथन्तरं साम। तेनाह्नः समाहारद्वन्द्वः। पृथक्पदत्वं वा। **अहरादीनामिति**। उभयत्राप्यादिशब्दः प्रकारे। तेन 'स्वर्चक्षा रथिरः,' 'कविः काव्येना स्वर्चना' इत्यादि ग्राह्यम्। **विसर्गापवाद इति**। सो राजिवद्रेफस्य रेफो विधीयते विकारनिवृत्त्यर्थमिति भावः ॥

**ढ्रलोपे**। 'ढ्रे'त्यकार उच्चारणार्थः। ढश्च रश्च ढ्रौ, तौ लोपयतीति ढ्रलोपः।

---

**न तु सुपीति**। पर्युदासे हि सुप्सदृशे प्रत्यय एव स्यात्, एवञ्चाऽहर्भातीत्यत्र न स्यात्। यदि तु सुब्भिन्ने शब्दे स्यात्—'दीर्घाहो निदाघे'त्यत्रापि स्यात्। सुबन्त इत्यर्थस्तु न, 'उत्तमैकाभ्या'मित्यादिनिर्देशैः सप्तमीनिर्दिष्टे प्रत्यये तदन्तविध्यभावज्ञापनात्। लक्ष्यानुरोधेन क्वचित्प्रत्ययग्रहणे शब्दस्वरूपस्य विशेषणताया एवाश्रयणाच्च। अत एव 'रदाभ्यां निष्ठे'त्यादौ न दोषः। **अहरहरिति**। 'नित्यवीप्सयो'रिति द्वित्वम्। 'न लुमते'ति निषेधात्सुप्परत्वाभावः। **गतमहो रात्रिरिति**। केचित्तु भाष्ये आतिदेशिकस्याहोरात्रस्यैवोदाहरणात्, 'न लोपः प्रातिपदिकान्तस्ये'ति सूत्रे 'न हि रूपरात्रिरथन्तरेषु रौ रे वा विशेषोऽस्ती'त्यत्र प्रायेण 'रात्रे'ति पाठाच्चेदृशानामनभिधानमेवेत्याहुः। **अनन्यत्वादिति**। रात्रिशब्दान्तात्समासादचि समासान्ते 'यस्येति 'चे'ति लोपेऽपि रात्रिशब्दत्वाऽक्षतेरिति भावः। अनुवादे रेफविशिष्टस्योपादानाद्रेफस्य रेफविधानं व्यर्थमत आह—**विसर्गापवाद इति** ॥ **ढ्रलोपे**। नायं तत्पुरुषोऽनीयरि, 'चचारे'त्यादौ न दोषापत्तेः। नापि

न्त्रर्णेऽर्थाद्ढकाररेफात्मके परे पूर्वस्याऽणो दीर्घः स्यात् । पुना रमते । हरी रम्यः । शंभू राजते । अणः किम् ? । तृढः । वृढः । 'तृहू हिंसायाम्' । 'वृहू उद्यमने' । पूर्वग्रहणमनुत्तरपदेऽपि पूर्वमात्रस्य दीर्घार्थम् । अजर्घाः । लीढः । 'मनस् रथ'

णिजन्तात्कर्मण्युपपदसमासः । **तृढो वृढ इति** । ऊदित्त्वेन वेट्त्वाद्यस्य विभाषेति निष्ठायां नेट् । ढत्वधत्वष्टुत्वढलोपाः । (यत्तु) प्राचा'दृढ'इति प्रत्युदाहृतं, तदसत्, तत्र ढलोपस्यैवाऽभावात् । 'दृढः स्थूलबलयो'रिति सूत्रेण हि दृंहेर्नकारहकारयोर्लोपः,तकारस्य ढत्वं च निपात्यते । न त्वसिद्धकाण्डस्थढत्वस्येह प्रवृत्तिः , 'दादेर्धातो'रिति घत्वेन बाधात् । न चेडभावो ढत्वं नलोपश्च निपात्यतां, धत्वष्टुत्वढलोपास्तु भविष्यन्त्येवेति वाच्यम् , तथा सति 'परिदृढय्ये'त्यत्र 'ल्यपि लघुपूर्वा'दिति णेरयादेशो न स्यात् । तथा'पारिवृढी कन्ये'त्यत्र 'इतो मनुष्यजाते'रिति ङीषं बाधित्वा 'अणिञो'रिति ष्यङ् स्यात् , ढलोपस्याऽसिद्धत्वेन गुरूपोत्तमत्वादित्याकरे स्थितम् । ननु 'परिदृढय्ये'त्यत्र ल्यबादेशः कथं भवेद्यावता परिदृढमाचष्टे इति णिचि कृते क्त्वाप्रत्यये च क्त्वान्त एव परेरन्तर्भावात्समासाभाव इति चेदत्र कैयटः—सङ्ग्रामयतेरेव सोपसर्गात्प्रत्ययोत्पत्तिर्नान्यस्मादिति नियमात्परिशब्दं पृथक्कृत्य दृढशब्दादेव णिच्क्रियते । णिजन्तस्य धातुत्वात्क्त्वाप्रत्यये कृते परेः क्त्वान्तेन कृदन्तेन समास इति सिद्धो ल्यबादेशः । णाविष्ठवद्भावाद्रभाव इति । ननु 'पूर्वस्ये'ति व्यर्थ, सप्तमीनिर्देशादेव तल्लाभादत आह—**पूर्वग्रहणमित्यादि** । 'ढ्रलोपे पूर्वस्ये'ति सूत्रस्योत्तरपदाधिकारस्थत्वादुत्तरपदस्थयोरेव ढरेफयोः परतो दीर्घः स्यान्न तु 'लीढः' 'अजर्घाः' इत्यत्रेति भावः । यद्यप्यसंभवादेवानुत्तरपदस्थे ढकारे दीर्घो भवेत्तथाप्यजर्घा इत्यत्र दीर्घो न स्यादिति ज्ञेयम् । वस्तुतस्तूत्तरपदस्य समासचरमावयवे रूढत्वात्पुना रमत इत्यादावपि न स्यात् , किंतु 'नीरक्तं' 'दूरक्त'मित्यादावेव स्यादिति तत्त्वम् । **लीढ इति** । 'लिह आस्वादने' क्तः । ढत्वधत्वष्टुत्वढलोपाः । इह ढलोपं प्रति ष्टुत्वं नासिद्धं, ढकारे परतो लोपविधिसामर्थ्यात् । अतएव 'ढो ढे लोपः' इत्यस्य पदाधिकारस्थत्वेऽप्यपदान्तस्य ढस्य लोपो भवति । **अजर्घा**

बहुव्रीहिर्व्यधिकरणत्वात् । अतो णिजन्तात्कर्मण्यण्युपपदसमास इत्याह—**ढरेफाविस्यादि** । भाष्ये तु व्यधिकरणबहुव्रीहिरेव दर्शितः । न च 'अजर्घा' इत्यादौ 'सिपि धातो'रिति रुत्वस्य, 'लीढ' इत्यादौ ढत्वादीनां, 'पितू राज्य'मित्यादौ संयोगान्तलोपस्यासिद्धत्वात्कथं दीर्घ इति वाच्यम् , ढग्रहणेन लण्सूत्रे 'अजर्घा' इति भाष्योदाहरणेन च तत्तच्छास्त्रैकवाक्यतापन्न'पूर्वत्रासिद्ध'मिति सूत्रस्थपूर्वग्रहणेनैतत्सूत्राऽग्रहणबोधनात् । **अणः किमिति** । 'अच' इत्येव सिद्धमिति प्रश्नः । 'तृंहू' इति पाठे 'नकारजावनुस्वारपञ्चमा'विति वृद्धोक्तेः 'अनिदिता'मिति नलोपे 'तृढ' इति

इत्यत्र रुत्वे कृते हशि चेत्युत्वे 'रोरी'ति लोपे च प्राप्ते ॥

**विप्रतिषेधे परं कार्यम्** ।१।४।२। तुल्यबलविरोधे परं कार्यं स्यात् ।

---

**इति** । 'गृधु अभिकाङ्क्षायां' यङ्लुकि द्वित्वे अभ्यासस्य रुक् । लङः सिपि शब्लुकि सिप ईडभावपक्षे लघूपधगुणो रपरः । 'इतश्चे'तीकारलोपे हल्ङ्यादिलोपः । भष्भावः । जश्त्वं। 'दश्चे'ति रुत्वपक्षे 'अजर्घर् र्' इति स्थिते 'रोरी'ति रेफलोपेऽनेन दीर्घः । अत्रेयं सुगमा व्याख्या—'**ढ्रलोपे पूर्वस्य दीर्घोऽणः**। लीढः, नीरक्तं, दूरक्तम्। अणः किम् ?। तृढः । वृढः । पूर्वग्रहणमनुत्तरपदेऽपि पूर्वमात्रस्य दीर्घार्थम् । अजर्घाः । पुना रमते। हरी रम्यः । शम्भू राजते'इति ॥

**विप्रतिषेधे** । विप्रतिपूर्वात् 'षिधू शास्त्रे माङ्गल्ये च' 'षिध गत्या'मित्यस्माद्वा धातोर्घञ् । 'उपसर्गात्सुनोती'ति षत्वम् । उपसर्गवशाच्च विरोधार्थकत्वम् । **कार्य-मिति** । 'अर्हे कृत्यतृचश्चे'त्यर्हार्थे कृत्यप्रत्ययः । तेन तुल्यबलविरोध इति पर्यवसानादतुल्यबलेषूत्सर्गापवादनित्यानित्यान्तरङ्गबहिरङ्गविधिषु नेदं प्रवर्तते । नह्यपवादादीनां संनिधावुत्सर्गादीनां कृत्यर्हत्वं, तैर्बाधितत्वात् । तत्र नित्यमावश्यकत्वाद्बाधकमन्तरङ्गं तु लाघवात्, अपवादस्तु वचनप्रामाण्यात्, तद्भिन्नस्तु प्रकृतसूत्रस्य विषयः । अतएव 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' इत्युक्तम् । यद्यतुल्यबलेष्वपि परमेव स्यात्तन्नोपपद्येताऽतो व्याचष्टे—**तुल्यबलविरोध इति** । जातौ पदार्थे विध्यर्थमिदं सूत्रम् । 'वृक्षेषु' 'वृक्षाभ्या'मित्यत्र हि लब्धावकाशयोरेत्वदीर्घत्वशास्त्रयोर्वृक्षेभ्य इत्यत्र युगपत्प्रसङ्गे विनिगमकाभावादप्रतिपत्तिरेव स्यात् । तदुक्तम्—'अप्रति-

---

रूपम् । अत्राऽण्पूर्वेणैव व्याख्यानात् ॥ **विप्रतिषेधे** । विप्रतिपूर्वात्कर्मव्यतिहारे वर्तमानात्सेधतेर्घञि परस्परविरोधार्थो 'विप्रतिषेध'शब्दस्तत्र नित्यस्यावश्यकतयाऽन्तरङ्गस्य ज्ञापकादिनाऽपवादस्य वचनप्रामाण्याद्बाधकत्वे स्थिते तद्भिन्नोऽस्य विषय इत्याह—**तुल्यबलेति** । द्वयोः शास्त्रयोः क्वचिल्लब्धावकाशयोरेकत्र प्रयोगे युगपदसम्भविस्वकार्यसमर्पणश्च सः । तत्र प्रायेणैकस्य कार्यद्वययोगकृतेऽसम्भवे एतस्य प्रवृत्तिः । यथा 'वृक्षेभ्य' इति । तत्र हि दीर्घत्वयोर्युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्यासम्भवः । क्वचित्केवलाऽसम्भवेऽपि, यथा 'शिष्टा'दित्यादौ । अत्र हि तातङ्शाभावयोर्युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्यासम्भवः । यद्यपि तातङादेः स्थानिवत्त्वेनाऽस्त्येव तत्, तथापि अतिदेश आदेशप्रवृत्त्युत्तरमेव, न तु तत्प्रवृत्तिकाले इति युगपदसम्भवोऽस्त्येवेति परत्वात्तातङि सकृद्गतिन्यायेन न शादेशः । स्पष्टचेदं सर्वं प्रकृतसूत्रे 'इको गुणवृद्धी' 'अदसो मा'दित्यादावाकरे । तत्र युगपदुभयोः कार्ययोरसम्भवात्पर्यायेण तृजादिवच्छास्त्रद्वयप्रसङ्गे नियमार्थमिदम्—'परमेवे'ति । तेन 'तिसृणा'मित्यत्र यौगपद्यासम्भवेन परत्वात्तिस्रादेशे पुनः स्थानिवत्त्वेन त्रयादेशो न । तत्पठ्यते—'सकृद्गतौ विप्रतिषेधे

इति लोपे प्राप्ते। 'पूर्वत्रासिद्ध'मिति 'रो री'त्यस्याऽसिद्धत्वादुत्वमेव। मनोरथः॥

पत्तिर्वा उभयोस्तुल्यबलत्वा'दिति। तत्रास्माद्वचनात्परस्मिन् कृते यदि पूर्वस्यापि निमित्तमस्ति तर्हि तदपि भवति, यथा 'भिन्धकी'त्यत्र परत्वाद्द्विभावे कृतेऽप्यकच्। तदुच्यते–'पुनः प्रसङ्गविज्ञानात्सिद्ध'मिति। व्यक्तौ तु पदार्थे तत्तद्व्यक्तिविषययोर्लक्षणयोरन्यत्र चरितार्थत्वासम्भवात्तव्यत्तव्यानीयरामिव पर्यायेण प्रवृत्तौ नियमार्थमिदं सूत्रं 'विप्रतिषेधे परमेव स्यान्न तु पूर्व'मिति। एतल्लक्षणारम्भाच्च तत्र तत्र पूर्वस्यानारम्भोऽनुमीयते। तथाच 'जुहुतात्त्व'मित्यत्र परत्वात्तातङि कृते स्थानिवद्भावेन 'हुझल्भ्यः–' इति धित्वं न भवति। तदुच्यते–'सकृद्गतौ विप्रतिषेधेन यद्बाधितं तद्बाधितमेवे'ति। लक्ष्यानुरोधाद्व्यवस्थाप्यमेतद्द्वयमपि। तत्र विधिपक्षे तूत्वे रेफलोपे च प्राप्ते इति पाठ्यम्। नियमार्थमिति पक्षे परमेव कार्यं स्यादित्येवकारोऽध्याहर्तव्यो वृत्तौ। **उत्वमेवेति।** सिद्धासि-

यद्बाधितं तद्बाधितमेवे'ति। **यद्वा**–यथा तुल्यबलयोरेकः प्रेष्यो भवति स तयोः पर्यायेण कार्यं करोति, यदा तमुभौ युगपत्प्रेषयतो नानादिक्षु च कार्ये भवतस्तदोभयोर्न करोति, यौगपद्यासम्भवात्, तथा शास्त्रयोर्लक्ष्यप्रेष्ययोः क्वचिल्लक्ष्ये यौगपद्यासम्भवादप्रतिपत्तौ प्राप्तायामिदं 'परं भवती'ति विध्यर्थम्। तत्र कृते यदि पूर्वस्यापि निमित्तमस्ति तदा तदपि भवत्येव। तत्पठ्यते–'पुनः प्रसङ्गविज्ञानात्सिद्ध'मिति। यथा 'भिन्धा'त्यत्र परत्वात्तातङि पुनर्धिर्भवति। अत्र तातङ्धिभावयोर्युगपदेकस्थानिसम्बन्धस्याङ्गरूपनिमित्तानन्तर्यस्य वा न सम्भव इति भाष्ये स्पष्टम्। कार्ये परत्वञ्च–परशास्त्रविहितत्वम्। कार्यकालपक्षेऽप्यष्टाध्यायीपाठकृतपरत्वमेव नियामकम्। अत एव 'ङमो ह्रस्वा'दित्यादौ त्रिपादीस्थे कार्यकालपक्षे एव परिभाषयोः प्रवृत्त्या एकदेशस्थत्वेऽपि परत्वात् 'तस्मादित्युत्तरस्ये'त्यनेनैव व्यवस्थेति सङ्गच्छते। त्रिपादीस्थेन शास्त्रेण विरुद्धपरिभाषाद्वयमध्ये परैव काल्यते–आकृष्यते न पूर्वेति तत्त्वम्। सञ्ज्ञानां तु कार्यकालपक्षे प्रदेशे एव वाक्यार्थेन तद्बोधोत्तरमेव विरोधप्रतिसन्धानं, कार्यज्ञानञ्चेति तत्रत्यपरत्वमेवैत्सूत्रप्रवृत्तौ बीजम्। अत एव 'कार्यकालपक्षेऽद्भ्यः परैव प्रगृह्यसञ्ज्ञे'ति 'अदसो मा'दिति सूत्रे भाष्ये उक्तम्। परिभाषाणान्तु तत्पक्षे तत्तद्देशस्थत्वेऽपि स्वस्वदेशेऽर्थबोधोऽस्त्येवेति तासां पाठकृतमेव तत्–एतत्सूत्रप्रवृत्तौ नियामकमिति बोद्धव्यम्। यद्यपीयं परिभाषा तथापि कार्यग्रहणेन कार्यमात्रग्रहणा'त्तस्मि'न्निति 'तस्मा'देतिपरिभाषयोरपि व्यवस्थापिका। कार्यकालपक्षेऽपि नैषा इकपरिभाषादिवद्विध्येकवाक्यतयाऽङ्गत्वात्कार्यनिष्पादिका, किन्तु वाक्यभेदेनैव कार्यं व्यवस्थापयति। यथा–'वृक्षेभ्य' इत्यत्रैत्वदीर्घत्वयोः प्राप्तयोः परमेत्त्वं प्रवर्तयति। एवम्–'असिद्धम्बहिरङ्ग'मित्यादयोऽपीति 'खरवसानयो'रित्यत्र कैयटे स्पष्टम्। एवञ्च 'विप्रतिषेधे' इत्येषा यथोद्देशैवेति स्थितम्। त्रिपाद्यां कार्यकालपक्षेऽप्यप्रवृत्तेः। पूर्वदृष्ट्या परावस्थानाभावादित्यन्यत्र विस्तरः॥ **इति लोपे इति।** 'उत्वं नित्य'मिति तु न, 'भोभगो' इतिसूत्रोक्तरीत्या लोपस्याऽविधित्वात्, स्थानिवत्त्वेन तद्धर्मातिदेशेऽपि उच्चारणप्रसङ्ग

**एतत्तदोः सुलोपोऽकोरनञ्समासे हलि** ।६।१।१३२। अककारयोरेतत्तदोर्यः सुस्तस्य लोपः स्याद्धलि न तु नञ्समासे । एष विष्णुः । स शंभुः । अकोः किम्?। एषको रुद्रः । अनञ्समासे किम् ? । असःशिवः । हलि किम् ?। एषोऽत्र ॥

**सोऽचि लोपे चेत्पादपूरणम्** ।६।१।१३४। 'स'इत्यस्य सोर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्येत । 'सेमामविड्ढि प्रभृतिं य ईशिषे' । इह ऋक्पाद एव गृह्यत इति वामनः । अविशेषाच्छ्लोकपादोऽपीत्यपरे । सैष दाशरथी रामः । लोपे चेदिति किम् ?। स इत्क्षेति । स एवमुक्त्वा । 'सत्येवे'त्यवधारणं तु

द्वयोरतुल्यबलत्वेन 'विप्रतिषेधे पर'मित्यस्याऽप्रवृत्तौ निष्प्रतिपक्षत्वादुत्वमेव भवतीत्यर्थः । तदुक्तम्–'पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्ये'ति । एतेन विभक्तिकार्यं प्राक् पश्चादुत्वमत्वे' इति वक्ष्यमाणग्रन्थो व्याख्यातः । **एतत्तदोः** । अत्र त्यदाद्यत्वमेकशेषश्च न कृतः, सौत्रत्वात्, 'प्रकृतिवदनुकरण'दिति वैकल्पिकातिदेशाद्वा । एवं च वृत्तावप्येतत्तदोरिति प्रयोगः साधुः। 'हल्ङ्याब्भ्यः–' इत्यस्यानन्तरमेवेदं लाघवाय न कृतं, संहिताधिकारोपजीवनादित्याहुः। सूत्रे 'सु'इति पृथक् पदं लुप्तषष्ठीकमित्याह–**एतत्तदोर्यः सुरिति** । एतत्तदर्थगतसङ्ख्याभिधायी यः सुस्तस्येत्यर्थः । एतत्तदोर्विहित' इति व्याख्याने तु 'परमस ददाति' 'परमैष ददाती'त्यादौ सुलोपो न स्यात् । 'एतत्तदोः पर' इति व्याख्यानं तु न संभवति, एतत्तन्भ्या'मिति पञ्चम्यभावात्। 'एतत्तदोरवयव'इति तु न संभवत्येव, सोः प्रत्ययत्वात् । तस्मादर्थद्वारकसंबन्ध एवाश्रितः । तदाश्रयणे लिङ्गं तु 'अनञ्समासे'इति बोध्यम् । एतत्तदोः किम्?, यो ददाति। **अकोः किमिति** । साकच्कयोः शब्दान्तरत्वादप्रसङ्ग इति प्रश्नः । **एषक इति** । अकोरिति प्रतिषेध एव 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति परिभाषां ज्ञापयतीति भावः । **सोऽचि लोपे**। 'अचीति विसपष्ट्यार्थ'मिति वृत्तौ स्थितम्। 'सस्'इति तच्छब्दस्य प्रथमैकवचनान्तस्यानुकरणं लुप्तषष्ठीकमित्याह–**स इत्यस्येति** । **बहुलग्रहणेति** ।

रूपस्थानपष्ठ्यर्थाभावेन लोपे [illegible] ॥ **एतत्तदोः** । अनुकार्यस्वरूपभङ्गभिया कोशे इवैकशेपाऽभावः । 'एतत्तदोरनन्तर' इत्यर्थः । तेन 'परमस ददाती'त्यादौ न दोषः । गौणे तु न दोषः, तत्र त्यदाद्यत्वाभावेन हल्ङ्यादिलोपस्य दुर्वारत्वात् । 'सु'इति प्रथमैकवचनमेव, व्याख्यानात् ॥ **अनञ्समासे किमिति** । तस्य पूर्वपदार्थप्रधानत्वादुपसर्जनत्वात्त्यदाद्यत्वाभावेन हल्ङ्यादिलोपो दुर्वार इति प्रश्नः । उत्तरपदार्थप्रधानः स इत्युत्तरम् । **सोऽचि** । 'स'सिति प्रथमान्तस्य लुप्तषष्ठीकमनुकरणम् । **सेमामविड्ढीति** । द्वादशाक्षरपादा जगती छन्दः । **स एवमुक्तेति** । लोपेऽत्र पादाऽपूर्तेर्न लोप इति भावः । **अवधारणन्त्विति** । वृद्धैर्व्याख्यातमवधारणन्त्वित्यर्थः ।

'स्वश्छन्दसि बहुल'मिति पूर्वसूत्राद्बहुलग्रहणानुवृत्त्या लभ्यते । तेनेह न-'सोऽहमाजन्मशुद्धानाम्' ॥ ❀ इति स्वादिसन्धिप्रकरणम् ॥ ❀ ॥

## अथाजन्तपुंलिङ्गप्रकरणम् ।

**अर्थवदधातुरप्रत्ययः प्रातिपदिकम्** ।१।२।४५। धातुं प्रत्ययं प्रत्ययान्तं च

---

अतएव लोपं विना पादपूरणेऽपि क्वचिद्भवति-'सास्मा अरम्' इति । अत्र वदन्ति-ये तु 'सोऽहमाजन्मशुद्धाना'मित्यादिसिद्ध्यर्थं 'पादश्चेल्लोपे सत्येव पूर्येते'ति सावधारणं व्याचख्युस्तेषां 'सास्मा अर'मित्यादौ सुलोपानापत्तिः । अत्र हि 'सः अस्मै' इति च्छेदः। बहुलग्रहणानुवृत्त्या तदुपपादने तु 'सोऽहमाजन्मे'त्याद्येव तथोपपाद्यतां किमवधारणेनेति ।

॥ इति तत्त्वबोधिन्यां स्वादिसन्धिप्रकरणम् ॥

**अथाजन्तपुंलिङ्गप्रकरणम् । अर्थवदधातु । प्रत्ययं प्रत्ययान्तं चेति ।** सूत्रे तन्त्रादिनोभयं विवक्षितमिति भावः । 'अर्थव'दिति नपुंसकनिर्देशस्याऽनुगुणं विशेष्यमध्याहरति-**शब्दस्वरूपमिति** । 'अधातुरप्रत्यय' इति पुंलिङ्गनिर्देशस्तु 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इत्युत्तरपदलिङ्गवत्त्वाद्बोध्य इत्याहुः । यदि तु धातुभिन्नमित्यर्थं परित्यज्यारोपितो धातुरधातुरिति व्याख्यायते, तदा नपुंसकत्वप्राप्तेराशङ्कैव नास्तीति ज्ञेयम् । अर्थवदिति किम् ?। 'धनं' 'वन'मित्यादौ प्रतिवर्णं संज्ञा मा भूत् । तस्यां च सत्यां स्वादयः स्युः । ननु सङ्ख्याकर्मादेरभावान्न भविष्यतीति चेन्न;'एकवचनमुत्सर्गतः करिष्यते' इति सिद्धान्ताद्धुंफडादिभ्य इव सोर्दुर्वारत्वात् । न चार्थवद्ग्रहणपरिभाषया अनर्थके न स्यादिति वाच्यं, तस्या विशिष्टरूपोपादानविषयत्वात् । 'प्रादूहोढ'इत्यत्र तु 'ऊढ' इति विशिष्टरूपमुपात्तमिति क्तवत्वन्तैकदेशस्यानर्थकस्योढशब्दस्य ग्रहणं नेत्यु-

---

**बहुलेत्यादि**। गमकान्तराभावादिति भावः । एवञ्च तदनुवृत्त्यैव क्वचिदप्रवृत्तौ सिद्धायामवधारणपरतया व्याख्यानं व्यर्थमिति भावः । सर्वमेतदवधारण[illegible] सूचितमित्यलम् ।

*** इति स्वादिसन्धिः ***

**अथाजन्तपुँल्लिङ्गप्रकरणम्** । स्वादिविधौ प्रातिपदिकाधिका[illegible] सञ्ज्ञामाह-**अर्थवदिति** । 'अधातु'रित्यादिः पर्युदासो, लाघवात् । **प्रत्ययान्तमिति** । आवर्तितेऽप्रत्ययपदे प्रत्ययग्रहणपरिभाषया तदन्तग्रहणम् । 'सञ्ज्ञाविधा'विति निषेधस्तु प्रत्ययस्य यत्र सञ्ज्ञा तद्विषय इति भावः। अत्र सूत्रे उत्तरसूत्रे चाऽर्थवत्त्वमेतत्सञ्ज्ञाफलभूतविभक्तीतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वम् । अन्यथाऽ**धातु**रिति पर्युदासेन व्याख्यानादर्थवत्त्वेनैव सादृश्यग्रहणेन सिद्धेरुत्तरसूत्रे कृदादीनामनर्थकानामप्रसिद्धेस्तद्वैयर्थ्यं स्यात् । न च **नञिवयुक्त**न्यायाऽनित्यत्वज्ञापनार्थं तत्, तदनित्यत्वज्ञापने भाष्यसंमतदृढतरफलाऽभावात् । 'अहन्' 'काण्डे' इत्यादावेतत्साध्यविभक्त्यन-

वर्जयित्वाऽर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात् ।

क्तम् । न ह्यत्र तथा विशेषरूपस्योपादानमस्ति । यद्यप्यधातुरित्यादिपर्युदासेनार्थवत्त्वं लभ्यते, तथाप्युत्तरार्थमर्थवद्ग्रहणं स्पष्टप्रतिपत्तये इहैव कृतम् । न चैकाज्द्विर्वचनन्यायेन समुदायस्यैव संज्ञा स्यान्नावयवानामित्यर्थवद्ग्रहणमिह व्यर्थमिति शङ्क्यं; समुदाये द्विरुक्ते अवयवा अपि द्विरुक्ता भवन्ति । 'वृक्षः प्रचलन्सहावयवैः प्रचलती'ति न्यायात् । इह तु समुदाये प्रवृत्तया प्रातिपदिकसंज्ञया नावयवानां तत्कार्यसिद्धिरिति वैषम्यात् । अतएव 'यत्र बहवो हलः संश्लिष्टास्तत्र द्वयोर्बहूनां चाऽविशेषेण संयोगसंज्ञे'ति सिद्धान्तः सङ्गच्छते । अन्यथा त्वदुपन्यस्तन्यायेन समुदाय एव संयोगसंज्ञा प्रवर्तेत । अत्र केचित्—'धनं' 'वन'मित्यादौ प्रतिवर्णं सत्यामपि संज्ञायां सत्स्वपि स्वादिषु न क्षतिः । 'हल्ङ्या'बित्यादिना सुलोपात् । न च नलोपो धस्य जश्त्वं च स्यादिति शङ्क्यम्, धातुपाठे 'धन' 'वने'त्युच्चारणसामर्थ्यात्तदप्रवृत्तेरित्याहुः । तदसत् । अकारात्सोरुत्पत्तौ रुत्वप्रवृत्तेः । यद्यपि समुदितप्रातिपदिकस्यावयवत्वेन सुपो लुकि रुत्वं न भवेत्तथापि 'चिकीर्षति' 'विद्म' इत्यादौ रेफदकारयोः पदान्तत्वे सति 'खरवसानयो'रिति विसर्गस्य 'यरोऽनुनासिके' इत्यनुनासिकस्य च प्रसङ्गादिति दिक् ।

अधातुः किम् ?, अहन् । धातोः प्रातिपदिकसंज्ञायां सत्यां तिङां स्वाद्यपवादत्वादहन्नित्यत्र हन्तेस्तिपि सिपि वा कृते 'इतश्चे'तीकारलोपे हल्ङ्यादिलोपे च प्राकृता प्रातिपदिकसंज्ञा नापगतेति 'नलोपः प्रातिपदिकान्तस्ये'ति नलोपः स्यात्तन्मा भूत् । 'अहन्' इति रुत्वं 'रोऽसुपी'ति रत्वं चेह नाशङ्क्यम्, लाक्षणिकत्वात् । न च कार्यकालपक्षे प्रत्ययान्तत्वेन पर्युदासात्प्रातिपदिकसंज्ञाऽभावेन नलोपो न भवेदिति वाच्यं, प्रत्ययलक्षणेन उक्तपर्युदासाऽप्रवृत्तेः 'न ङिसंबुद्ध्यो'रिति निषेधेन ज्ञापितत्वात् । कथमन्यथा 'राजे'त्यादौ नलोपः स्यात् । यद्यपि व्युत्पत्तिपक्षे राजन्शब्दस्य कनिन्प्रत्ययान्ततया 'कृत्तद्धिते'ति प्रातिपदिकसंज्ञायां राजेत्यादौ नलोपः स्यात्, तथा च 'न ङिसंबुद्ध्यो'रिति निषेधो न ज्ञापक इति कार्यकालपक्षेऽधातुग्रहणं व्यर्थं, तथाप्यव्युत्पत्तिपक्षे ज्ञापकमेवेति कार्यकालेऽपि तत्स्वीकर्तव्यम् । न च 'सुपो धा'त्विति सूत्रे प्रातिपदिकात्पृथग्धातुग्रहणाद्धातोर्नेयं संज्ञेति वाच्यम्, 'पुत्रीयती'त्यादौ प्रत्ययान्ते धातुग्रहणस्य चरितार्थत्वात् ।

अप्रत्ययः किम् ?, हरिषु, करोषि । अत्र सुप्सिपोर्मा भूत् । अप्रत्ययान्तः किम् ? । तत्रैव विभक्तिविशिष्टयोर्मा भूत् । न चान्तवद्भावेन 'काण्डे' 'कुड्ये' इत्यादौ प्रातिप-

पेक्षत्वेऽपि तदितरानपेक्षत्वमस्त्येवेति तत्पर्युदासः सार्थकः । न च तत्केवलप्रत्ययस्य । तदुक्तं—

दिकत्वं स्यादेव। तथा च 'ह्रस्वो नपुंसके-' इति ह्रस्वः सोरुत्पत्तिश्च स्यादिति वाच्यम्, 'सप्तम्यधिकरणे चे'त्यादिनिर्देशेन विभक्त्येकादेशस्यान्तवद्भावानभ्युपगमादिति दिक्।

ननु प्रत्ययपर्युदासो न कर्तव्यः, प्रत्ययान्तपर्युदासेनैव गतार्थत्वात्। व्यपदेशिवद्भावेन तस्यापि प्रत्ययान्तत्वादिति चेन्मैवं, प्रत्ययग्रहणे यस्मात्स विहितस्तदादेर्ग्रहणात्, केवलस्य चाऽतथात्वात्। अन्यथा सुप्तिङोरपि तदन्तत्वात्पदत्वं स्यात्। तथा च 'हरिषु' 'करोषी'त्यादौ षत्वं न स्यात्। 'सात्पदाद्यो'रिति निषेधात्। न च षत्वविधेर्निरवकाशता, 'सर्पिषे' 'एष'इत्यादौ चरितार्थत्वात्। अन्ये तु व्याचक्षते—'कृत्तद्धिते'त्यत्र हि तदन्तविधिर्वक्ष्यते। तथा च 'तद्धितग्रहणस्य तद्धितान्तानामेव नत्वन्यप्रत्ययान्तानां संज्ञे'ति नियमार्थतामाश्रित्य प्रत्ययान्तपर्युदासोऽत्र न कर्तव्यः। अथवा 'सात्पदाद्यो'रिति सूत्रे सातिग्रहणात्प्रत्ययो न प्रातिपदिकमिति सिद्धे प्रत्ययग्रहणं सामर्थ्यात्तदन्तपरम्। उत्तरसूत्रे तद्धितग्रहणं तु विध्यर्थमेवाऽस्तु। यद्वा सातिग्रहणात्प्रत्ययस्य प्रातिपदिकत्वाभावे तद्धितग्रहणस्योक्तरीत्या नियमार्थत्वे च 'अर्थवदधातुः प्रातिपदिक'मित्येव सुवचमिति; तेषाम् 'इको यणची'ति सूत्रं व्यर्थं स्यात्। 'तस्मादित्युत्तरस्य' 'वाम्नृतुपित्रुषसः-' इत्यादिनिर्देशाज्ज्ञापकादिष्टसिद्धेः। 'नाज्झलौ' इत्यत्राकारसहितोऽच् आजित्ययं मूलस्थग्रन्थोऽपि विरुध्येत, 'कालसमयवेलासु-' इत्यादिज्ञापकादेव ढत्वा-

---

'सङ्ख्याया अतिशदन्ताया' इति सूत्रे भाष्ये—'न हि लोके केवलेन प्रत्ययेनाऽर्थो गम्यते, केन तर्हि सप्रकृतिकेने'ति। हरिरप्याह—'धात्वादीनां विशुद्धानां लौकिकोऽर्थो न विद्यते। कृत्तद्धितानामर्थश्च केवलानामलौकिकः॥ प्राग्विभक्तेस्तदन्तस्य तथैवार्थो न विद्यते।' इति। अतएव पदसञ्ज्ञासूत्रेऽन्तग्रहणस्य सञ्ज्ञाविधौ तदन्तविध्यभावज्ञापकत्वे कृत्तद्धितेति सूत्रेऽन्तग्रहणं कर्त्तव्यं, न कर्त्तव्यमर्थवदिति वर्त्तते कृत्तद्धितान्तं चैवार्थवत्, न केवलाः कृतस्तद्धिता वे'ति भाष्यमुपादाय—"शास्त्रीयार्थग्रहणेऽर्थवद्ग्रहणानुवृत्तिवैयर्थ्येन तदनुवृत्तिसामर्थ्याल्लौकिकार्थप्रत्यासन्नोऽभिव्यक्ततरो योऽर्थः प्रत्ययान्तेषु लक्ष्यते स आश्रीयते"इति कैयटेनोक्तम्। लौकि(कार्थ)कं यत्पदन्तदर्थस्य प्रत्यासन्नः शास्त्रकृत्कल्पितस्वादिप्रकृतेरर्थः प्रत्ययान्तेषु सुबन्तेषु योऽभिव्यक्ततरो लक्ष्यते बोद्धृभिः स इत्यन्वयः। यत्तु—'प्रत्ययान्ते'ष्वित्यस्य कृदाद्यन्तेष्वित्यर्थ इति, तन्न; तावन्मात्रेण कस्याप्यर्थस्याऽभिव्यक्तेरप्यभावेनाभिव्यक्ततरत्वस्य सुतरामभावात्। अर्थवत्सूत्रेऽप्येवमेवेत्यनुवृत्तिसामर्थ्यादित्यनेन सूचितम्। अन्यथा 'तत्सामर्थ्या'दित्येव वदेत्। पूर्वसूत्रे यादृशार्थवत्त्वग्रहोऽत्राप्यनुवृत्तिसामर्थ्यात्तादृशार्थवत्त्वस्यैव ग्रहः। शास्त्रीयार्थग्रहणे तु तदनुवृत्तिर्व्यर्था स्यादिति तद्भावः। किञ्च पूर्वसूत्रे सामान्यतोऽर्थवत्त्वग्रहणे न किञ्चित्फलं प्रत्ययेष्वतिव्याप्तिदानातिरिक्तम्। अतएव तद्धितग्रहणस्य नियमार्थत्वाश्रयणेन 'ह्रस्वो नपुंसके' 'तस्ये'ति न्यासेन 'काण्डे' इत्यादौ ह्रस्ववारणात्फलाभावेन वा भाष्योक्ते तत्प्रत्याख्याने 'पचनावप्रिय' इत्यादौ 'पचनावे'त्यस्याऽनेन न

**कृत्तद्धितसमासाश्च** ।१।२।४६। कृत्तद्धितान्तौ समासाश्च प्रातिपदिकसंज्ञाः स्युः। पूर्वसूत्रेण सिद्धे समासग्रहणं नियमार्थम्,–

---

ऽभावसिद्धेः। यदि ज्ञापकेन प्रत्याख्यानमयुक्तमिति, यदि चाऽऽकारप्रश्लेषे एव तल्लिङ्गमित्यभ्युपगमे सूत्राक्षरैरेवेष्टं सिध्यतीत्युच्येत, तर्हि 'अप्रत्यय' इत्येतदभ्युपगम्य प्रत्ययपर्युदासे 'साति'ग्रहणं लिङ्गं, प्रत्ययान्तपर्युदासे तु तद्धितग्रहणमित्यप्रत्ययग्रहणमेवावर्त्य व्याख्यायतां, किमनया कुसृष्ट्येति दिक्। 'अधातुप्रत्यया'विति सिद्धे नञ्द्वयोपादानमप्रत्यय इत्यस्यावृत्तिसौकर्यार्थम्। महासंज्ञाकरणं श्रुत्यनुरोधात्। तथा चाथर्वणे पठ्यते–'को धातुः, किं प्रातिपदिकं, कः प्रत्ययः' इति। डित्थादीन्यव्युत्पन्नानीहोदाहरणम्। अव्युत्पत्तिपक्षस्य चेदमेव ज्ञापकमिति प्राञ्चः। वस्तुतस्तु व्युत्पत्तिपक्षे 'बहुपटव' इत्याद्यर्थं सूत्रमिति नव्याः। न चैवं 'बहुच्पूर्वः प्रातिपदिक'मित्येव सूत्र्यतामिति वाच्यम्, 'मूलकेनोपदंश'मित्यादौ कृदन्तत्वेनातिप्रसङ्गाद्गतिकारकपूर्वस्यापि कृदन्तत्वात्। न च समासग्रहणं नियमार्थमिति निस्तारः, अर्थवत्सूत्रारम्भं विना समासग्रहणस्य नियमार्थत्वाऽयोगात्॥

**कृत्तद्धितसमासाश्च**। 'अर्थव'दित्यनुवर्तते, तत्सामर्थ्यात्तदन्तविधिः। ननु यद्यर्थवत्ता पारमार्थिकी विवक्ष्यते, सा पदस्य वाक्यस्य वाऽस्ति, न तु कृत्तद्धितान्तस्य, यदि तु प्रक्रियादशायां या कल्पिता सा विवक्ष्यते, तर्हि कृत्तद्धितयोरपि साऽस्तीति कथमर्थवद्ग्रहणानुवृत्त्या तदन्तग्रहणमिति चेदत्राहुः,–अतएवार्थवद्ग्रहणसामर्थ्यमुक्तम्। प्रत्ययान्तेन ह्येकार्थीभूतेन प्रतीयमानोऽर्थ इह गृह्यते। तस्य लौकिकार्थं प्रति प्रत्यासन्नतरत्वान्मतुपः प्राशस्त्यपरतया तस्यैव ग्रहणात्। अतएव च तदुपादानं सार्थकं, पूर्वसूत्रे 'अधातु'रिति पर्युदासबलेनापि तल्लाभसंभवादिति। तदेतत्सकलमभिप्रेत्याह–**कृत्तद्धितान्ताविति**। 'लिट्' 'धु'गित्यादौ 'अधातु'रिति, 'कर्ता' 'औपगव' इत्यादौ 'अप्रत्ययान्त' इति च पर्युदासे प्राप्ते 'कृत्तद्धिते'त्यारम्भः। **नियमार्थमिति**। न च प्रत्ययान्तत्वेन पर्युदासे प्राप्ते विध्यर्थमस्त्विति शङ्क्यम्; वाक्यस्याऽप्रत्ययान्तत्वात्। प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरेव ग्रहणात्। न चैवमप्यनुपसर्जनस्त्रीप्रत्यये तदादिनियमा-

---

प्रातिपदिकत्वं नाप्युत्तरसूत्रेण। प्रातिपदिकत्वे तु टावापत्तिः। एवं च प्रत्ययस्य प्राप्तिरेव नेति केवलप्रत्ययपर्युदासो विफलः। 'दश दाडिमानि षडपूपा' इत्यादिनिरर्थकपदसमुदायव्यावृत्तिरर्थवद्ग्रहणस्य फलम्। तत्र हि 'सुपो धा'त्विति लुगापत्तिरिति भाष्ये स्पष्टमिति दिक्॥

**पूर्वसूत्रेणेति**। 'प्रत्ययग्रहणे यस्मा'दिति प्रत्ययान्तत्वाभावादिति भावः। नियमस्य सजातीय-

–यत्र सङ्घाते पूर्वो भागः पदं तस्य चेद्भवति तर्हि समासस्यैव । तेन वाक्यस्य न ॥

भावाद्राजकुमारीत्यादौ ङीबन्ते विध्यर्थमस्त्विति वाच्यम्; 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते' इति लुग्विषये हल्ङ्यादिलोपाप्रवृत्त्या श्रूयमाण एव सुपि समासप्रवृत्तेः । तत्र च कुमारीशब्दस्य सुबन्तत्वेऽपि राजकुमारीशब्दस्यातथात्वादप्रत्ययान्तत्वेन प्रवृत्तायाः संज्ञाया एकदेशविकृतन्यायेन विभक्तिलुक्यपि सुलभत्वात् । अतएव 'गोमत्प्रिय'इत्यादौ नुमादयो न, लुकः प्रागन्तरङ्गस्य हल्ङ्यादिलोपस्य प्रवृत्तौ तु स्युरेवेति दिक् । नियमशरीरमाह–**यत्र सङ्घात इति ।** नियमश्चात्र सजातीयापेक्ष इत्याह–**पूर्वो भागः पदमिति ।** षड्विधेऽपि समासे पूर्वभागस्य पदत्वाव्यभिचाराद्भवत्ययं सजातीयः । 'पूर्वो भाग' इत्युपलक्षणम्, 'उत्तरस्तु प्रत्ययो ने'त्यपि बोध्यम् । अन्यथा 'जन्मवा'नित्यादौ संज्ञा न स्यात्, 'स्वादिष्वि'त्यनेन पूर्वभागस्य पदत्वात् । न च तद्धितग्रहणसामर्थ्यात्तत्र स्यादेवेति वाच्यं, तद्धितग्रहणस्य 'भानव' इत्यादौ कृतार्थत्वात् । तत्र हि पूर्वभागस्य भत्वं, न तु पदत्वम् । न चैवमयमियानित्यादिसमुदायस्य प्रातिपदिकत्वं स्यादेव, पूर्वभागस्य पदत्वेऽप्युत्तरस्य प्रत्ययत्वादनेन नियमेन वारयितुमशक्यत्वादिति वाच्यम्; 'उत्तरस्तु प्रत्ययो ने'त्यत्र 'तद्धिहितप्रत्ययो ने'ति व्याख्यानात् । पूर्वो भागः पदमिति किम्?, बहुज्विशिष्टस्य प्रातिपदिकसंज्ञा यथा स्यात् । तेन 'बहुपटव' इत्यत्र उपोत्तमोदात्तत्वं सिध्यति । प्रथमजसो लुकि 'चितः सप्रकृतेर्बह्वकजर्थ'मिति चित्स्वरे कृते पुनर्जस उत्पत्तेः । प्रातिपदिकसंज्ञायामसत्यां तु जसेवोदात्तः स्यात् । यद्वा 'प्रकृतिप्रत्ययभावानापन्नसङ्घातस्य चेद्भवति तर्हि समासस्यैवे'ति नियमार्थं 'समास'ग्रहणम् । तेन 'गवित्ययमाहे'त्यादौ

---

विषयत्वात्साजात्यं दर्शयितुमाह–**पूर्वो भाग इति ।** एतेन यत्तच्छब्दार्थयोरननुगतत्वेन शब्दाऽनुगमस्याऽप्रयोजकत्वेन व्यवच्छेद्यानतुगमेऽपि क्षत्यभावेन च **यत्र सङ्घात**इत्यादि व्यर्थमेवेत्यपास्तम् । 'पद'शब्देनाऽत्र स्वातन्त्र्येणापि प्रयोगार्हमर्थवद्गृह्यते । अत एवा'ऽर्थवत्समुदायानां समासग्रहणं नियमार्थ'मित्युक्तमत्र भाष्ये । **भाष्ये**–'सुबन्ताना'मित्यनेन भेदसंसर्गद्वारकार्थवन्त उपलक्ष्यन्ते इति **कैयटेन** स्पष्टमेवोक्तम् । तेन 'गवित्ययमाहे'त्यादौ 'गो'इत्यादीनां सुबन्तत्वाभावेऽपि न समुदायस्य प्रातिपदिकत्वम् । अनुकरणस्यानितिपरस्यापि प्रयोगसत्त्वेन तावन्मात्रस्यापि पृथक् प्रयोगार्हत्वात् । 'बहुपटव' इत्यादौ प्रातिपदिकत्वसिद्धये–**स्वातन्त्र्येणेति ।** तत्र 'पूर्व' इत्याक्षिप्तपरेषामपि स्वातन्त्र्येण प्रयोगार्हार्थवतामेव ग्रहणात्पुत्रकाम्येत्यादौ न दोषः । अत एवाङ्गसञ्ज्ञासूत्रे भाष्ये–'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहण'मिति परिभाषायाः फलनिरूपणावसरे–'देवदत्तो गार्ग्ये'ति समुदायस्य यञन्तत्वेन प्राप्तप्रातिपदिकसञ्ज्ञाऽभावः फलत्वेनोक्तः । यथाश्रुतमूलोक्तनियमे तु नियमेनैव तत्र तदप्राप्त्या ... पूर्वो भागः

**प्रत्ययः** ।३।१।१। आ पञ्चमपरिसमाप्तेरधिकारोऽयम् ॥ **परश्च** ।३।१।२।

नातिप्रसङ्ग इति दिक् । नियमफलमाह—**तेन वाक्यस्य नेति** । 'गामभ्याज शुक्ला'-मित्यादिवाक्यस्य न भवतीत्यर्थः । सत्यां हि संज्ञायां सुब्लुक्स्यात् । नन्वेवमपि 'मूलकेनोपदंशं भुङ्क्ते' इत्यादिवाक्यस्य संज्ञा दुर्वारा, 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणा'दिति चेन्मैवम् । समासग्रहणकृतनियमेन परत्वाद्बाधात् । एवंच 'कृत्तद्धिते'ति सूत्रे कृद्ग्रहणपरिभाषा निष्फलत्वान्नोपतिष्ठते । तस्याश्च परिभाषायाः 'व्यावक्रोशी' 'व्यावहासी'-त्यत्रावकाशः । तत्र हि 'कर्मव्यतिहारे णच्स्त्रिया'मिति धातोर्णचि कृते गतिपूर्वस्य णजन्तत्वात् 'णचः स्त्रिया'मित्यञि सत्युपसर्गाकारस्यादिवृद्धिस्वरौ भवतः । कृद्ग्रहणे कारकपूर्वस्याप्युदाहरणम्-अवतप्तेनकुलस्थितमित्यादि स्फुटीभविष्यति। चकारोऽनुक्तसमुच्चयार्थः। तेन 'निपातस्यानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्ये'ति वार्तिकं गतार्थम् । येषां द्योत्योऽ-

पदमित्ययुक्तमित्यपास्तम् । **वाक्यस्य नेति** । प्रातिपदिकत्वे हि सुपः श्रवणानापत्तिः । 'पिण्डी'-मित्यादौ वाक्यैकदेशप्रयोगेऽलुक्समासे चाङ्गाधिकारविहितलुप्प्रत्ययनिमित्तकार्याणां सुबादेशानाञ्च चारितार्थ्यं, विकल्पेन समासविधानञ्च स्वराद्यर्थमिति भावः । शशशृङ्गादिपदानाञ्च बौद्धे शशशृङ्गादौ शक्तिरिति पूर्वेणैव प्रातिपदिकत्वं सिद्धम् । स्वप्नाद्यनुरोधेन च बौद्धपदार्थस्यावश्यकत्वम् । अक्षौहिणोरथन्तरादिपदेष्ववयवानामत्यन्तनिरर्थकानामप्यन्यत्र दृष्टार्थारोपेण प्रातिपदिकत्वसुबुत्पत्त्यादिना यथाकथञ्चित्साधुत्वान्वाख्यानं बोध्यम् ॥

**अधिकारोयमिति** । सञ्ज्ञाधिकार इत्यर्थः । सञ्ज्ञात्वावगमस्तु व्याख्यानात् । विकारागमानान्तु न ( तत्- )संज्ञा, 'प्रत्यय' इति महासञ्ज्ञया स्वस्वप्रकृत्यन्यतरार्थप्रत्यायकस्यैव तत्संज्ञकत्वात् । **स्वप्रकृत्यर्थत्वञ्च** धातुपाठकोशादौ तमुच्चार्य्य बोधितत्वम् । अत एव नभवधाद्यादेशानां न सञ्ज्ञा । तेषां स्थान्यर्थेनैवार्थवत्त्वं न तु स्वार्थो ऽस्ति । अत एव कोशादौ तदर्थाऽकथनम् । एतदर्थमेव भाष्ये 'स्वीयमर्थं प्रत्याययन्तो'ति विग्रहे 'स्वीय'पदोपादानं। भाष्यप्रामाण्याच्च तदर्थान्तर्भावेण प्रत्ययशब्दस्य वृत्तिः । यत्तु विकारागमादेशानां देशांशे निराकाङ्क्षत्वात्**परश्चे**त्यस्यानुपस्थितौ तत्सन्नियोगशिष्टप्रत्ययसञ्ज्ञाया अप्रवृत्तिरिति, तन्न; श्नमकज्वहुष्वप्रवृत्त्यापत्तेः । किं च 'लविषीये'त्यत्र विशेषविहितत्वात्परत्वाच्च पूर्वं सीयुटि ततो लादेशे प्रत्ययसञ्ज्ञासन्नियोगेनेटो विधीयमानमाद्युदात्तत्वं सीयुट एव स्यादत 'आगमानुदात्तत्वं वक्तव्य'मित्याद्युदात्तश्चेति सूत्रस्थभाष्यकैयटासङ्गतिः । लस्थानिकत्वेन देशांशे निराकाङ्क्षत्वेन 'परश्चे'त्यस्याऽप्रवृत्तौ 'प्रत्यय' इत्यस्याप्यप्रवृत्तौ तत्सन्नियोगकथनासङ्गतेरिति दिक् ॥

**परश्च** । 'गुप्तिज्किद्भ्य' इत्यादावपादानत्वासंभवाद्दिग्योगलक्षणा पञ्चमी । तत्र परः पूर्वो वेत्यनियमेनाध्याहारे प्रसक्ते 'पर एवे'ति नियमार्थमिदम् । 'गापोष्ट'गित्यादावपि षष्ठ्यर्थ आनन्तर्यं पूर्वपरसाधारणमित्यनियमोऽस्त्येव । अत्र 'तस्मा'दिति परिभाषोत्तराङ्गविकला प्रवर्तते इत्यव्यवहिता एव प्रत्ययाः । न चैवं षष्ठ्यंशविकलं संपूर्णं सूत्रमुपतिष्ठतां किं 'परश्चे'त्यनेनेति वाच्यम्; प्रकृत्यर्थमात्रविवक्षायां केवलप्रकृतेः प्रयोगे मा भूदिति प्रत्ययः परो भवत्येवेति नियमार्थत्वात् ।

अयमपि तथा॥ **ङ्याप्प्रातिपदिकात्**।४।१।१। 'ङ्यन्तादाबन्तात्प्रातिपदिकाच्चे'त्यापञ्चमपरिसमाप्तेरधिकारः ॥

प्यर्थो नास्ति तदर्थमिदम्,-अवद्यति । अनुकरणेषु तु अनुकार्येण सहाभेदविवक्षायामर्थवत्त्वाभावादेव न प्रातिपदिकत्वम् । 'भू सत्ताया'मिति यथा । भेदविवक्षायां तु संज्ञा स्यादेव-'भुवो वु'गिति यथा । **अधिकारोऽयमिति** । प्रत्ययशब्दः संज्ञात्वेनाधिक्रियत इत्यर्थः ॥

**ङ्याप्प्रातिपदिकात्**। समाहारद्वन्द्वादेकवचनम्। 'ङी'ति ङीप्ङीष्ङीनां सामान्यग्रहणम्, 'आ'बिति च टाप्डाप्चापाम्। **आपञ्चमपरिसमाप्तेरिति**। ननु 'घकालतनेषु-'इति ज्ञापकात्सुबन्तात्तद्धितोत्पत्तिरित्यभ्युपगतेः किमर्थस्तद्धितेषु प्रातिपदिकाधिकार इति चेदत्राहुः,-असति ह्यधिकारे 'अत इ'ञित्यत्राऽत इत्येतत्सुबन्तस्यैव विशेषणं स्यात्, ततश्च दक्षस्यापत्यमित्यत्रैव इञ्स्यान्न तु दक्षयोर्दक्षाणामित्यत्र। किञ्च 'वृद्धाच्छः' इत्यत्र 'वृद्ध'मित्येतत्सुबन्तविशेषणं मा भूत्। अन्यथा जानन्तीति ज्ञाः, 'इगुपधेति कः। 'ज्ञानमय'मित्यत्र सुबन्तस्य वृद्धत्वाच्छः स्यात्। प्रातिपदिकाधि-

---

तेन 'न केवला प्रकृतिः प्रयोक्तव्या नापि केवलः प्रत्यय'इति सिद्धम्। अनुकरणे तु अभेदविवक्षयाऽर्थवत्त्वाभावात्प्रातिपदिकत्वाभावेन प्रकृतित्वाभावाद्ब्रवितय्यमाहेत्यादौ नानुपपत्तिः। **प्रकृतित्वं** च प्रत्ययविधावुद्देश्यतावच्छेदकाक्रान्तत्वम्। अयं न्यायः शास्त्रावोधितान्यतरप्रयोगविषयः। अत एव 'लिट्' 'श्या'नित्यादौ न दोषः। अत्र प्रकृतिविशेषोद्देशेनैव प्रत्ययानां विधानान्नापि केवल इति न्यायमूलकम्। एतन्मूलकमेव पठ्यते'ऽपदं न प्रयुञ्जीते'ति। अपरिनिष्ठितमिति तदर्थः। **परनिष्ठित**त्वञ्चाऽप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वम्। निहते तिङन्तादावव्याप्तिवारणायाऽ**प्रवृत्तेति**। वैकल्पिकेडागमोद्देश्यतावच्छेदकाक्रान्ते 'सेद्धे'त्यादावव्याप्तिवारणाय **नित्येतीति** दिक् ॥

**ङ्याप्प्रातिपदिकात्**। समाहारद्वन्द्वः। ननु 'परश्चे'त्यनेन प्रकृतेराक्षेपात्प्रातिपदिकाधिकारो व्यर्थः। तिङन्तात्त न द्वितीयादिः, सङ्ख्याभावात्, सङ्ख्यायास्तिङोक्तत्वाच्च। धातुभ्यस्तु न, तिङमपवादत्वात्। 'तस्ये'त्यादिसमर्थविभक्तिनिर्देशात्तमब्विधौ तिङश्चेति ज्ञापकाच्च न तेभ्यस्तद्धितव्यावृत्त्यर्थ इति चेन्न; तदभावे 'स्वार्थद्रव्यलिङ्गसङ्ख्याकारकप्रयुक्तकार्यैः संस्कृतस्य बहिर्भूतापत्यादियोग' इति 'कुत्सिते' इति सूत्रभाष्योक्तन्यायेन, तस्यापत्यमित्यादेस्तत्संबन्ध्यपत्यमित्याद्यर्थे प्रथमोच्चारितबोध्यात्प्रत्यय इत्यर्थस्य सत्त्वेन च सार्थकतद्धितानां सुबन्तादुत्पत्त्याऽनुदात्तादेरित्यस्य प्राधान्यादुपस्थितसुबन्तविशेषणत्वापत्तौ सर्वस्य विकारः 'सार्व' इत्यत्राऽञनापत्तेः, 'सर्वस्य सुपी'त्याद्युदात्तत्वात्। तदधिकारसामर्थ्यात्तु प्रातिपदिकस्यैव तद्विशेषणमिति न दोषः, सर्वशब्दस्योञ्छादिपाठेनान्तोदात्तत्वात्। स्पष्टञ्चेदमत्र भाष्ये। न चाऽन्तरङ्गानपीति न्यायेन लुङ्निमित्तप्रत्ययात्पूर्वमाद्युदात्तप्राप्त्या तस्य सुबन्तविशेषणत्वेपि न दोष इति वाच्यं; तेन न्यायेन ... निमित्तविनाशक-

'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहण'मित्येव सिद्धे ङ्याब्ग्रहणं ङ्याबन्तात्तद्धितोत्पत्तिर्यथा स्यान्ङ्याब्भ्यां प्राङ्माभूदित्येवमर्थम् ॥

---

कारे तु वृद्धं यत्प्रातिपदिकं तत्प्रकृतिकात्सुबन्ताच्छ इत्यर्थलाभादिह प्रातिपदिकस्याऽवृद्धत्वाच्छो न भवति किंतु अणेव भवति । शब्दकौस्तुभे त्वसत्यस्मिन्नधिकारे वाक्यादपि कप्रत्ययादयः स्युः । ततो विशिष्टप्रातिपदिकतया सकलसुब्लोपे स्पष्टमेवानिष्टमिति स्थितम् । **लिङ्गविशिष्टस्येति ।** लिङ्गबोधकप्रत्ययविशिष्टस्यापीत्यर्थः । परिभाषायाः प्रयोजनं-श्वश्रूः । प्रत्ययान्तत्वेनाऽप्रातिपदिकत्वेऽपि इह स्वादयः । न च 'श्वशुरः श्वश्र्वे'ति निर्देशादेव स्वादिसिद्धिरिति वाच्यम् । निर्देशस्य शब्दपरत्वात् । 'विपराभ्यां जेः' 'ङेर्यः' इतिवत् । किंच कुमारीमाचष्टे कुमारयति । 'णाविष्ठव'दिति टिलोपः । एवं यामिन्य इवाचरन्ति 'यामिनयन्ती'त्यत्राचारे क्विपि फलम् ।

**ङ्याब्भ्यां प्रागिति ।** तेन 'एनिका' 'आर्यका' च सिध्यति । तथाहि 'न सामिवचने'इति ज्ञापयिष्यमाणोऽत्यन्तस्वार्थिकः कः एतार्याशब्दाभ्यां ङ्यापौ बाधेत, ततश्च

---

लुक एव प्राबल्यबोधनेन दोषात् । 'सर्वस्य सुपी'त्यत्र सौवरीणां सप्तमीनां तदन्तसप्तमीत्वात् प्रत्यये परतः पूर्वस्य कार्यत्वाभावेन 'न लुमते'त्यस्याप्राप्तौ प्रत्ययलक्षणेन सुबन्ततया तस्याऽन्तरङ्गनिमित्तविनाशकत्वाभावात् । अत एव सर्वस्तोमादिबहुव्रीहेराद्युदात्तत्वसिद्धिः । न चानुदात्तादिप्रकृतिकपष्ठ्यन्तादित्यर्थेन न दोप इति वाच्यं, 'गर्गादिभ्य' इत्यादौ सुबन्तं प्रति गर्गादीनां विशेपणत्वासम्भवादगत्या लक्षणास्वीकारेपि प्रकृते लक्षणायां मानाभावात् । वस्तुतस्तत्रापि न लक्षणा, 'गर्गादिरूपात्प्रातिपदिकात्तत्सम्बन्ध्यपत्यमित्यर्थे प्रत्यय' इत्यर्थे प्रातिपदिकात्परत्वं तद्व्यवधानेन भविष्यति । तद्व्यतिरिक्तव्यवधाने तु न, मानाभावात् । एतच्च मतुप्सूत्रे कैयटे स्पष्टमित्यन्यत्र विस्तरः । **लिङ्गविशिष्टस्येति ।** इयञ्च प्रातिपदिकसामान्यग्रहणे तद्विशेपग्रहणे च । अनया परिभापया ङ्याब्ग्रहणवैयर्थ्यस्य भाष्ये शङ्कितत्वात् । विशेपविपये बहुतरोदाहरणदानाच्च । स्त्रीप्रत्ययसमभिव्याहारे प्रातिपदिकत्वतद्व्याप्यधर्मा विशिष्टेऽनेनातिदिश्यन्ते । अत एव 'बहुव्रीहेरूधस' इति सूत्रे भाष्ये 'नद्यृतश्चे'त्यस्य नद्यन्तबहुव्रीहेरित्यर्थेन 'कुण्डोध्नी'त्यत्र कबापादितः । अन्यथा तु ङ्यन्तस्य बहुव्रीहित्वाभावात्तदसङ्गतिः । 'नद्यन्तानां यो बहुव्रीहि'रित्यर्थेन च परिहृत इत्यन्यत् । समासान्तेपु तत्परिभापाऽभावस्तु 'ङ्याप्'सूत्रभाष्योक्तोऽवयवविपय एव । समुदायविपये तत्प्रवृत्तावपि दोपाभावेन तदंशे तदप्रवृत्तौ न मानमित्याशयः । **ङ्याबन्तादिति ।** ङ्याब्ग्रहणं स्त्रीप्रत्ययमात्रोपलक्षणम् । तेन 'ब्रह्मबन्धूतरा' 'युवतितरे'त्यादेः सिद्धिः । 'जातेश्चे'ति निपेधान्न पुंवत्त्वम् । वयोवाचिनां वैकल्पिकजातिकार्यस्य वक्ष्यमाणत्वात् । **तद्धित इति ।** एतच्च समासान्ततिप्रत्ययाद्यतिरिक्तपरं, व्याख्यानात् । एतेन 'यूनीति' 'बहुगोमतीके'ति स्यादित्यपास्तम् । एवञ्च स्त्रीप्रत्ययेष्वत्यन्तस्वार्थिकानारभ्य तद्धितेपु च ङ्याब्ग्रहणा [illegible] वाधनं वे'—

**स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्** ।४।१।२। ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः । सुङस्योरुकारेकारौ जशटङपाश्चेतः ॥

'एतिका' 'आर्यिके'त्येव रूपं स्यात् । ङ्याब्ग्रहणसामर्थ्यात्तु ङीबन्तात्कनि 'एनिके'-त्यपि सिध्यति । 'वर्णादनुदात्ता'दित्यस्य वैकल्पिकत्वात् । आबन्तात्कनि तु 'उदीचामातः स्थाने' इतीत्त्वविकल्पादार्यका आर्यिकेति रूपद्वयं सिध्यति ।

वस्तुतस्तु ङ्यापोर्ग्रहणं मास्तु, 'घकालतनेषु–' इत्यलुग्विधानसमर्थ्यात्सुबन्तात्तद्धितोत्पत्तिरिति हि निष्कर्षः । तथा च सुपः प्रागेव ङ्यापौ प्रवर्तेते । स्वार्थद्रव्यलिङ्गसङ्ख्याकारकप्रयुक्तकार्याणां क्रमिकत्वस्वीकारादित्यवधेयम् ॥

**स्वौजसमौट्** । समाहारे द्वन्द्वः । **सुङस्योरिति** । सोरुकारः 'अर्वणस्त्रसा'-वित्यत्र विशेषणार्थः । 'असी'त्युक्ते हि असकारादावित्यर्थः स्यात् । तथा च 'वाजमर्वत्सु' इति न सिध्येत् । ङसेरिकारः 'टाङसिङसां–' 'ङसिङ्योः स्मात्स्मिनौ' इत्येतदर्थः । जश्शसोर्जकारशकारौ 'जसः शी' 'तस्माच्छसो नः' इत्यनयोर्विषयविभागार्थौ ।

नन्वन्यतरस्य निरनुबन्धकत्वमेवास्त्विति चेन्न, जसो जकाराभावे 'औ'इत्यस्य आव् स्यात्, ततश्च प्रत्ययस्य वकारान्तता संभाव्येत । एवं शसः शकाराभावे औटो डित्त्वं संभाव्येत । तथाच 'तेजसी' इत्यादौ टिलोपः स्यात् । अथवा 'लिहा'वित्यादौ डित्त्वसामर्थ्यादभस्यापि टेर्लोपः संभाव्येत । औटष्टकारः 'सु'डिति प्रत्याहारार्थः । टाट-

ति चरितार्थम् । अत्यन्तस्वार्थिकानां सुबुत्पत्तेः पूर्वमुत्पत्तिरिति 'सर्वस्य द्वे' इति सूत्रे भाष्ये स्पष्टं, कैयटे च । तत्र हि 'पदस्ये'त्यस्य प्रयोजनन्द्विपदिकेत्यादौ द्वित्वसङ्ख्यायुक्तपदार्थस्य वीप्सितत्वाद्वीप्सायामेकत्वलक्षणसङ्ख्याया अनन्तर्भावात्समासाद्विभक्त्यभावेन पदत्वाभावात्प्राक्तद्धितोत्पत्तेर्द्विर्वचनाऽभाव इत्युक्तम् । 'पुंयोगा' दिति सूत्रे भाष्येऽप्येतत्स्फुटम् । तत्र हि–'गतिकारकोपपदाना'मित्यस्याः 'साङ्कूटिन' मिति प्रयोजनमुक्तम् । तत्र हि अभिविधौ भाव इनुणि 'कूटिन्'शब्दादण्प्रत्ययविभक्त्योः प्राप्तयोः स्वार्थिकत्वेनाऽन्तरङ्गत्वादणि 'कूटि'न्नित्यस्यैव वृद्धिः स्यादित्युक्तम् । तस्यापि सुबन्तादुत्पत्तौ तु पूर्वं सुपीनुणन्तत्वरूपाधिकसापेक्षत्वेन बहिरङ्गतयाऽणः पूर्वं समासे विशिष्टादणि रूपसिद्धौ भाष्याऽसङ्गतिः । प्राक्सुबुत्पत्तेः समासे तूक्तरीत्यैवान्तरङ्गत्वात्पूर्वं समासे ततो विशिष्टादणिति साङ्कूटिनासिद्धिरित्यन्यत्र विस्तरः ॥

**स्वौजस** । सूत्रे समाहारद्वन्द्वः । **टङपाश्चेत इति** । न च फलाभावः, लोपस्यैव फलत्वात् । तत्र तत्रेतरव्यावृत्त्या चरितार्थानां लोपफलकत्वस्वीकारे बाधकाभावात् । 'काम्य'जादौ तु लोपे सति वर्णोच्चारणवैयर्थ्यम् तस्मात्... बोध्यम् ॥

**विभक्तिश्च** ।१।४।१०४। सुप्तिङौ विभक्तिसंज्ञौ स्तः। तत्र 'सु' 'औ' 'जस्' इत्यादीनां सप्तानां त्रिकाणां प्रथमादयः सप्तम्यन्ताः प्राचां संज्ञास्ताभिरिहापि व्यवहारः॥

**सुपः** ।१।४।१०३। सुपस्त्रीणि त्रीणि वचनान्येकश एकवचनद्विवचनबहुवचन-

---

कारस्तु 'टाङसिङसां–' 'द्वितीयाटौस्वेनः' इति विशेषणार्थः । एतेन 'आदिरन्त्येने'ति सूत्रे काशिकाकारेण यदुक्तम्—'अन्त्येनेति किम् ?, 'सु'डिति तृतीयैकवचनावयवेन मा भूत्'–इति तत्परास्तम् । औटष्टकारस्यानन्यार्थतया तेनैव संभवात्, प्रत्यासत्तेश्च । अतएव शब्दकौस्तुभे तत्रान्यदेव प्रयोजनमुक्तम् । 'मध्यमेनेता सहित आदिस्तदुत्तरेषामपि ग्राहको मा भूदित्यन्त्येनेति ग्रहणम् । अन्त्येनेता सहितो मध्यमः पूर्वेषामपि मा भूदित्यादिग्रहणम्'–इति । अमुमेवार्थं मनसि निधाय–'आद्यन्ताभ्यामवयवाभ्यामवयवी समुदाय आक्षिप्यते'–इति निष्कृष्टमुक्तं प्राक् । प्रकृतमनुसरामः–ङेप्रभृतीनां ङकारो 'घेर्ङिति' 'ङेराम्–' इति विशेषणार्थः । सुपः पकारस्तु प्रत्याहारार्थः ॥

**विभक्तिश्च** । 'तिङस्त्रीणि त्रीणि–' इत्यतस्तिङ्ग्रहणं व्यवहितमपि स्वरितत्वबलादनुवर्तते । 'सुपः' इति च संनिहितमित्यभिप्रेत्याह–**सुप्तिङाविति** । तिङां विभक्तिसंज्ञायाः प्रयोजनं 'न विभक्तौ तुस्माः' इति । सुपां तु त्यदाद्यत्वादिकमपि । चकारः पुरुषवचनसंज्ञाभ्यां समावेशार्थः। अन्यथा एकसंज्ञाधिकारादेकवचनादिसंज्ञाभिः सह वचनद्वयप्रामाण्यात्पर्यायः स्यात् । ततश्च 'रामेभ्यो' 'नमामे'त्यादौ बहुवचनसंज्ञापक्षे विभक्तित्वाभावात्सस्येत्संज्ञा स्यात् ।

**इहापीति** । अस्मिन्नपि तन्त्रे 'प्रातिपदिकार्थलिङ्गपरिमाणे'त्यादावित्यर्थः ।

**सुपः** । अत्र 'तिङस्त्रीणि त्रीणि–' इति सूत्रात् 'त्रीणि त्रीणी'ति पदं, 'तान्येकवचने'ति सूत्रं च 'तानी'ति पदं विहायानुवर्तत इति व्याचष्टे–**सुपस्त्रीणि त्रीणी**त्यादिना । **एकश इति** । एकैकमित्यर्थः । सङ्ख्यैकवचनाच्चे'ति वीप्सायां प्रथमान्ताच्छस् ।

---

'न विभक्तौ' विति निषेधोपयोगिनीं विभक्तिसञ्ज्ञामाह––**विभक्तिश्च** । चकारं एकसञ्ज्ञाधिकारेपि पुरुषवचनसञ्ज्ञाभ्यां समावेशार्थः । अन्यथा पर्यायः स्यात् । 'सुप' इति सूत्रं, 'तिङस्त्रीणी'ति सूत्रात्तिङ इति चानुवर्तते । 'प्रथमयो'रित्यादौ व्याख्यानात्प्राचां वैयाकरणानां प्रथमाद्वितीयापदवाच्ययोर्ग्रहणं बोध्यम् । अन्यथा 'औजसोः पूर्वे'त्येव वदेत् । विभक्तिप्रदेशेषु 'सुप्ति'ङिति न वक्तुं शक्यम्, 'यत्र' 'तत्रे'त्यादौ त्यदाद्यत्वानापत्तेः । तेषां सुप्सञ्ज्ञा त्वशक्या, 'एतर्हि'त्यादौ 'सुपि चे'ति दीर्घापत्तेः । **सप्तम्यन्ता इति** । 'स्त्रीलिङ्गा' इति शेषः । **प्राचाम्**–वैयाकरणान्तराणाम् । **इहापि**–अस्मिन् व्याकरणेऽपि ॥ **सुपः** । 'सु'विति प्रत्याहारात्षष्ठ्यत्र ॥ **द्व्येकयोः** । नियमार्थे इमे । इह सूत्रे 'द्व्येक'शब्दौ सङ्ख्यापरौ न सङ्ख्येयपरौ [illegible] **वचनयोरिति** ।

संज्ञानि स्युः ॥ **द्व्येकयोर्द्विवचनैकवचने**।१।४।२२। द्वित्वैकत्वयोरेते स्तः ॥

**बहुषु बहुवचनम्**।१।४।२१। बहुत्वे एतत्स्यात् । रुत्वविसर्गौ । रामः ॥

**द्व्येकयोः**। इह 'द्व्येक'शब्दौ सङ्ख्यापरावित्यभिप्रेत्याह-**द्वित्वैकत्वयोरिति**। सङ्ख्येयपरत्वे तु बहुवचनं स्यादिति भावः। **बहुषु**। अयमपि सङ्ख्यापर एवेत्याह-**बहुत्व इति**। बहुवचनं त्वाश्रयद्रव्यगतबहुत्वं धर्मे आरोप्य कृतम्। तत्फलं तु बहुः पर्वत इति वैपुल्यवाचिनो नेह ग्रहणमिति सूचनमेव। वस्तुतो व्यर्थं तत्, परत्वादेकवचनसंभवादिति शब्दकौस्तुभादौ स्थितम्। **रुत्वविसर्गाविति**। ननु रुत्वस्यासिद्धत्वादुकारस्येत्संज्ञालोपयोरभावात् 'स्थानिवदादेशः' इत्यस्यापि त्रिपाद्यामप्रवृत्त्या रेफान्तस्य 'सुप्तिङन्त'मिति पदसंज्ञाभावेन विसर्गोऽत्र दुर्लभः। विसर्गविधेस्तु 'पुन'रित्यादौ चरितार्थत्वादिति चेन्मैवम्; 'न मु ने' इति सूत्रे 'ने'ति योगं विभज्य 'असिद्धं ने'ति व्याख्यायामिष्टसिद्धिरित्युक्तत्वात्। **राम इति**। संज्ञाशब्दोऽयमव्युत्पन्न इति पक्षेऽर्थवत्सूत्रेण प्रातिपदिकसंज्ञा, 'करणाधिकरणयोश्चे'त्यधिकारे घापवादेन 'हलश्चे'ति घञा रमन्तेऽस्मिन्निति व्युत्पादने तु 'कृत्तद्धिते'ति सूत्रेणेति विवेकः। अत्र केचित्परिष्कुर्वन्ति-'गन्धर्वः शरभो रामः सृमरो गवयः शशः। इत्यादयो मृगेन्द्राद्या गवाद्याः पशुजातयः' इत्यमरोक्त्या यदि पशुविशेषे प्रयुज्यते तदा रूढोऽयं रामशब्द इत्यर्थवत्सूत्रेण संज्ञा। यदा तु रामचन्द्रे भगवति प्रयुज्यते तदा रमन्ते योगिनोऽस्मिन्निति व्युत्पत्त्याश्रयणा कृत्तद्धितेति सूत्रेण संज्ञेति ॥

---

लौकिकप्रयोगे त्वादशतः सङ्ख्याः सङ्ख्येये इति कोशभाष्याद्युक्तेः सङ्ख्येयपरत्वे एव प्रायः साधुत्वं, क चित्सङ्ख्यापरत्वेऽपि सङ्ख्येयगतसङ्ख्यारोपेण साधुत्वम्। अत एव कयोर्द्वित्वे इत्याद्यर्थे 'कयोर्द्वयोः' 'केषां बहु'ष्विति भाष्ये प्रयुक्तमिति बोध्यम्। 'एक'शब्दो द्विशब्दसाहचर्यात्सङ्ख्यावाच्येव। एकग्रहणं त्यक्त्वैकवचनमुत्सर्गः कर्तव्यः। तेनाव्ययेभ्यः 'पचतिकल्प'मित्यादौ च व्यर्थैकवचनप्रयोगसिद्धिरिति 'तद्धितश्चे'ति सूत्रे भाष्ये स्पष्टम् ॥

बहुषु। 'बहु'शब्दोऽत्र त्रित्वादिपरार्धान्तसङ्ख्यानां व्यापको यो धर्मविशेषो बहुत्वन्तत्परः। बहुवचनन्त्वाश्रयगतं बहुत्वं धर्मे आरोप्य कृतं, तेन वैपुल्यवाचिनो न ग्रहणम्। 'दारा' इत्यादौ त्ववयवादिगतबहुत्वस्यावयविन्यारोपो बोध्यः। स च कोशवृद्धव्यवहारानुसारेणैवेति नातिप्रसङ्गः। 'भर्तृदारयोरप्ततेजसो'रित्यादौ वृत्तौ तु द्विवचनमेव, आरोपे मानाभावात्। अत एव 'द्व्येकयो'रिति सङ्गच्छते। एतेनैकस्मिन्नपि 'गुरवः समागता' इत्यादि समर्थितम्। अन्वर्थसञ्ज्ञयैव सिद्धे इदं सूत्रद्वयं स्पष्टार्थम्। **राम इति**। [illegible] दिसमर्थं ॥

**सरूपाणामेकशेष एकविभक्तौ** ।१।२।६४। एकविभक्तौ यानि सरूपाण्येव

---

**सरूपाणामेकशेषः ।** इतरनिवृत्तिपूर्वकमवस्थानं शेषशब्दार्थः । न च विरूपेष्वेकशेषाऽप्रवृत्त्या 'घटकलशा'विति द्वन्द्वापत्तिरिति शङ्क्यम्, 'विरूपाणा'मिति वार्तिकस्य वक्ष्यमाणत्वात् । वस्तुतस्तु सूत्राक्षरैरेव वार्तिकार्थो लभ्यते । रूप्यते बोध्यते इति रूपमर्थः, समानं रूपं येषामिति सरूपाः । 'ज्योतिर्जनपदे'त्यादिना समानस्य सभावः, तथा समानं रूपं स्वरूपं येषां ते सरूपाः । सरूपाश्च सरूपाश्च सरूपाः, तेषामित्येकशेषेण व्याख्यानात् । न च स्वाङ्गे स्वव्यापारायोगो वाक्यापरिसमाप्तिन्यायादिति वाच्यम् ; उद्देश्यतावच्छेदकरूपाक्रान्ततया स्वस्मिन्नपि प्रवृत्तेः । अन्यथा 'तुल्यास्यप्रयत्न'मित्यादौ सवर्णदीर्घो न स्यात् । तथाऽर्थवत्सूत्रान्तर्गतानां प्रातिपदिकत्वं, 'प्रत्ययः' 'परश्चे'त्यत्र सुप्प्रत्ययः, 'ससजुषो'रित्यत्र रुः, 'खरवसानयो'रिति सूत्रे विसर्गश्च न स्यादिति सर्वोपप्लवः स्यात् । 'स्वाध्यायोऽध्येतव्यः' इत्यस्य 'नेह नाने'त्यादिश्रुतेश्च स्वस्मिन्नपि यथा प्रवृत्तिस्तथा दीर्घादीनामपीति चेत्तुल्यमेकशेषेऽपि । एतेन 'अ इ उ'णित्यादौ 'आद्गुणः'इत्यादिसन्धिकार्यं कुतो नेत्याशङ्कायाम्—'वर्णोपदेशकालेऽजादिसंज्ञानामनिष्पादात्सन्धिर्ने'ति केषांचित्समाधानं परास्तम् । वर्णोपदेशे इत्संज्ञायामच्प्रत्याहारे च निष्पन्ने प्रवर्तमानानां गुणादीनामुपेन्द्र इत्यादौ तटस्थ इव उद्देश्यतावच्छेदकरूपाक्रान्ते वर्णोपदेशादावपि प्रवृत्तेरावश्यकत्वात् ॥

स्यादेतत्—'सरूपाणामेक एकविभक्तौ' इत्येव सूत्रमस्तु, किमनेन 'शेष'ग्रहणेन ? । अत्राहुः—तथाहि सति सरूपाणां स्थाने एकोऽन्तरतम आदेशो भवतीत्यर्थः स्यात् । तथा चाश्वश्चाश्वश्चेत्यत्रोदात्तद्वयवतः स्थाने उदात्तद्वयवानादेशस्तथाऽनुदात्तद्वयवतः स्थानेऽनुदात्तद्वयवानादेशः प्रसज्येतेति । **एकविभक्तौ यानीति ।** विभक्तिः सारूप्ये उपलक्षणं न त्वेकशेषे निमित्तम् । एवं चाऽनैमित्तिकत्वेनान्तरङ्गोऽयमेकशेषः सुबुत्पत्तेः प्रागेव प्रवर्तते । यद्येतन्नारभ्येत तर्हि प्रत्येकं विभक्तिः स्याद्द्वन्द्वश्च प्रवर्तेत । आरब्धे त्वेकशेषेऽनेकसुबन्तविरहाद्द्वन्द्वस्य प्राप्तिरेव नास्तीति भावः । ननु सुबुत्पत्तेः प्रागेकशेषप्रवृत्तौ शिष्यमाणं यत्प्रातिपदिकं तदेकमेवार्थं बोधयतीति द्विवचनाद्यनुत्पत्तौ 'रामौ' 'रामा'इत्यादि न सिध्येत् । नैष दोषः, शिष्यमाणस्य लुप्यमानार्थाभिधायित्वात् । अतएव 'कृत्तद्धितसमासैकशेषे'त्येकशेषो वृत्तिषु गण्यते । परार्थाभिधानं हि वृत्तिः । अतएव च लुप्तेऽपि प्रत्यये'लिङ्''धु'गित्यादौ कर्ता प्रतीयत इति दिक् । **सरूपाण्येवेति ।**

---

**सरूपाणमे**[illegible] 'एव'इति सूत्रे [illegible] **सरूपाण्येवेति** । तेन जननी-

दृष्टानि तेषामेक एव शिष्यते। 'प्रथमयोः पूर्वसवर्णः' 'नादिचि' 'वृद्धिरेचि'। रामौ ॥

एतच्च उत्तरसूत्रस्थस्यैवकारस्येहानुकर्षणाल्लभ्यते। अत्र च 'एकस्यामपि विभक्तौ परतो विरूपाणि न दृष्टानी'ति पर्यवसन्नोऽर्थः, तेन मातृशब्दयोर्जननीवाचिपरिच्छेत्तृवाचिनो-र्नैकशेषः, 'मातृभ्यां' 'मातृभि'रित्यादौ सारूप्येऽपि औजसादिषु वैरूप्यात्। नन्वेवं 'पयः पयो नयति' 'देवदेवे'त्यादावतिप्रतिप्रसङ्गः स्यादेवेति चेत्; उच्यते—सहविवक्षा-यामेवैकशेषः प्रवर्तते। इतरेतरयोगद्वन्द्वस्य विषय इति यावत्। यत्र ह्यनेकस्यार्थस्य मिलि-तस्येतरान्वयः स तथाभूतो विषयः। इदं च 'इदितो नुम्धातो'रिति लिङ्गाल्लभ्यते, न्यायाच्च। तथाहि—'यः शिष्यते स लुप्यमानार्थाभिधायी'ति स्थिते श्रूयमाणैकशब्दोप-स्थितं सर्वमविशेषादेकरूप्येणैवान्वयितुमर्हति। यद्वा 'तिष्यपुनर्वस्वो'रिति सूत्राद्द्वन्द्वे इत्य-नुवर्त्य 'द्वन्द्वे प्रसक्ते सती'ति व्याख्येयं, न तु 'द्वन्द्वे कृते सती'ति। 'पन्थानौ' 'पन्थान'

परिच्छेत्तृवाचिनोर्मातृशब्दयोर्भ्यामि नैकशेषः। न चैकविभक्ताविति व्यर्थं, 'यानि सरूपाण्येवे'त्युक्त्यै-वोक्तदोषवारणादिति वाच्यं, हरिणस्त्रीवाचकहरिणीशब्दस्य हरितवर्णविशिष्टस्त्रीवाचकहरिणीशब्दस्य चैकशेषानापत्तेः, पुंवद्भावेन तद्धितादौ वैरूप्यात्। **दृष्टानीति**। 'लौकिके प्रयोगे' इति शेषः। एकशेषश्चायमनैमित्तिकत्वेनान्तरङ्गत्वाद्विभक्त्युत्पत्तेः पूर्वमेवेति एतद्विषये द्वन्द्वप्राप्तिरेव नेति बोध्यम्। ननु तन्त्रेणैव सिद्धेरिदं व्यर्थम्। यथा 'अक्षा भज्यन्तां भुज्यन्तान्दीव्यन्ता'मित्यत्राऽक्षा इति कारकस्य सकृदुपादानेऽपि सर्वत्रान्वयः। तन्त्रकारणन्तु शब्दानान्तुल्यरूपता। एवम'क्षो भज्यतां भुज्य-तान्दीव्यता'मित्यपि। तन्त्रन्द्वेधा, शब्दतन्त्रमर्थतन्त्रञ्च। शब्दस्य पर्यायपरिवृत्त्यसहत्वे आद्यम्। यथा-'ऽक्षा' इत्यादौ। तत्सहत्वे त्वन्त्यम्। यथा 'घटा' इत्यादौ। तत्राक्षा भज्यन्तां भुज्यन्तां दीव्यन्ता-मित्यादावन्वयिपदार्थभेदाद्बोद्धुरावृत्त्यैव बोधः। उच्चारणन्तु तन्त्रेण। अन्वयिपदार्थस्यैकत्वे तु एकोप-स्थित्यैवान्वयो यथा 'ऽक्षान्पश्य' 'घटान्पश्ये'त्यादाविति चेत्सत्यं, 'सरूपाणामेकशेष एवे'ति नियमार्थ-त्वात्। तत्फलन्तु प्रत्यर्थं शब्दनिवेशस्यापि दर्शनेन कदाचित्तादृशप्रयोगे प्राप्तद्वन्द्वस्य निवृत्तिः। स चायं नियमो विभक्तौ यानि सरूपाण्येव तद्विषयः, सहविवक्षाविषयश्च। अत एव 'विभक्त्यन्ता-नामेकशेष' इति पक्षे 'द्वन्द्वप्रतिषेधो वक्तव्य' इत्याशङ्क्या'ऽनवकाश एकशेषो द्वन्द्वं बाधिष्यते' इति भाष्ये उक्तम्। किं चा'ऽसहविवक्षायामपि तत्प्रवृत्तौ सहविवक्षायान्द्वन्द्वस्येवाऽन्यत्र कर्मधारयस्यापि बाधापत्तौ 'सारवसारवोर्मिज' इत्यादिप्रयोगविरोधापत्तिः। असहविवक्षाविषयेण विभक्त्यन्ततन्त्रेण 'ब्राह्मणाभ्यां कृतन्देहि' 'पयः पयो जरयती'त्यादि' 'नीलोत्पलस्पर्धिनी नेत्रे तनुर्वा हरे'रितिव-द्विद्वन्मानसहंसेतिवच्चेष्टमेवेति बोध्यम्। न चाऽसहविवक्षायान्तन्त्रसत्त्वे 'इदित' इति गुरुनिर्देशो व्यर्थः, अन्यपदार्थावगतये तत्सत्त्वात्। 'इद्यस्य धातो'रिति करणे तु गौरवम्। एतच्च सूत्रं भाष्ये प्रत्याख्यातम् 'अर्थावर्थौ प्रति यदर्थानर्थान्प्रति च यत्तदपि प्रत्यर्थमेवे'त्याश्रयणेन। अनेकघटादिपदानां साहित्ये वृत्तिरेव न, अनभिधानात्। एकस्यैव त्वनेकार्थस्य तत्र वृत्तिरभिधानस्वाभाव्यादिति तदाशयः। 'द्विर्वचनेत्री'त्यादावेकशेषशब्दस्तु भाष्ये तन्त्रपरः। स चोचारयितुः, बोद्धुस्त्वावृत्तिरेवेति बोध्यम्।

**चुटू** ।१।३।७। प्रत्ययाद्यौ चुटू इतौ स्तः । इति जस्येत्संज्ञायाम् ॥

इत्यादौ 'ऋक्पूरब्धू'रित्यादिना समासान्तापत्तेः, 'करौ' 'करा' इत्यादौ 'द्वन्द्वश्च प्राणितूर्ये'त्यादिना एकवद्भावापत्तेश्चेति दिक् । सूत्रे 'शेष'शब्दः कर्मसाधन इत्याह–**एक एव शिष्यत इति** । असत्येकग्रहणे द्विबह्वोरपि शेषः स्यादित्येकग्रहणम् । न चैवमप्येकविभक्तावित्यत्र एकग्रहणं व्यर्थमिति शङ्क्यम् , 'एकस्यामपि विभक्तौ परतः विरूपाणि न दृष्टानी'त्यर्थलाभाय तस्यावश्यकत्वात् । किंच 'स्वसा च स्वसारौ चे'त्यादौ विभक्तौ परतः पूर्वभागयोर्वैरूप्यदर्शनात्स्वसार इत्येकशेषस्तत्र न स्यात् । तथा 'स्वसरि च स्वस्रोश्चे'त्यत्र वैरूप्यदर्शनात्स्वस्रष्विति न स्यात् । किं तु 'कमलौ' 'कमल' इत्यादिष्वेव स्यात् । कृते त्वेकग्रहणे नायं दोषः प्रसज्यते । एकविभक्तौ परतः पूर्वत्र वैरूप्याऽदर्शनात् । यदा तु विभक्तावित्यत्रैकत्वस्य विवक्षितत्वान्मास्त्वत्र एकग्रहणमित्युच्यते, तर्हि स्पष्टप्रतिपत्त्यर्थमेवास्त्विति केचित् । अन्ये त्वाहुः–एकग्रहणमेकैकविभक्तावित्यर्थलाभार्थम् । तथा च सकलविभक्तावित्यर्थलाभादेवकारापकर्षणं विनैव सिद्धमिष्टमिति दिक् । एकश्च एकश्च द्वौ च द्वौ चेत्यादावेकशेषो न भवत्यनभिधानात् । द्वन्द्वोऽप्यत्रानभिधानेनैव वारणीयः । उत्सर्गतः सङ्ख्याशब्देष्वेवमेव । विंशत्यादौ त्वेकशेष इष्ट एवेति बोध्यम् ।

**चुटू** । 'आदिर्ञिटुडवः' इत्यत 'आदिः', 'षः प्रत्ययस्य' इत्यतः 'प्रत्ययस्ये'ति

---

'एकविभक्ता'वित्यत्रैकपदन्तु स्पष्टार्थम् 'एकस्यामपि विभक्तौ यानि विरूपाणि ने'त्यर्थं स्पष्टं बोधयितुम् । ध्वनितचेदं 'विभक्तिः सारूप्ये उपलक्षण'मिति भाष्ये एकपदानुच्चारणेन । समाहारद्वन्द्वविषये तु नैकशेषः । 'एकवचास्यान्यतरस्या'मित्यनेनैकशेषविषयपदानां समाहारे वृत्त्यभावबोधनात् ।

'न ब्राह्मणं हन्या'दित्यादौ तु जातिपक्षेणैव निर्वाहः । अत एव तत्र व्यक्तिपक्षे 'यं कञ्चिद्ब्राह्मणमहत्वा कृती स्या'दिति दूषणं भाष्ये उक्तम् । शेषशब्दार्थश्चेतरनिवृत्तिपूर्वकमवस्थानन्तदाह–एक **एवेति** । 'एके'ति लुप्तविभक्त्यन्तं पृथक्पदम् । अत एव तत्र 'सरूपाणा'मित्यस्यान्वयः । तत्रावस्थानस्य सिद्धतया निवृत्तिरेव विधेया । तत्र 'शिष्यमाणं लुप्यमानार्थाभिधायी'ति न्यायेन श्रूयमाणपदवृत्त्या बोधः । धातुषु तु नास्य प्रवृत्तिः । एकनिष्ठानेकव्यापाराणामिवानेकनिष्ठानामप्येकधातुत एव निवृत्तभेदानां प्रतीत्याऽनेकधातुप्रयोगाऽप्रसक्तेः । सरूपाणां किम् ? । घटपटौ । 'शेष' इत्येतन्मात्रोक्तौ द्विबह्वोरपि शेषः प्रसज्येत । 'एक' इत्येतावदुक्तौ त्वेक आदेश इत्यर्थः स्यात् । तथा चाश्वश्चाश्वश्चेत्यादौ कदाचित्त्युदात्तवत्त्वद्व्यनुदात्तवत्त्वरूपसाम्यमादायोभयस्वरितैकादेशः प्रसज्येत । न चा'ऽक्षस्याऽदेवनस्ये'ति फिट्सूत्रेण शकटाक्षे आद्युदात्तस्य, देवनाक्षे 'फिष' इत्यन्तोदात्तस्य चैकशेषे कदाचिदन्तोदात्तस्यापि शेषः स्यादिति वाच्यं; 'स्वरभिन्नानां यस्योत्तरस्वरविधि'रिति वचनेनैव निर्वाहात् । एकादिदशान्तसङ्ख्यावाचिनामेकशेषद्वन्द्वावनभिधानान्न भवतः । विंशत्यादौ त्विष्टएवैकशेष इत्यलम् ।

**चुटू** । 'आदिर्ञिटुडव' इत्यत 'आदि'रिति, 'षः प्रत्ययस्ये'त्यतः 'प्रत्ययस्ये'ति चानुवर्तते' तदाह–

**न विभक्तौ तुस्माः** ।१।३।४। विभक्तिस्थास्तवर्गसकारमकारा इतो न स्युः । इति सकारस्य नेत्त्वम् ।

**अतो गुणे** ।६।१।९७। अपदान्तादकाराद्गुणे परतः पररूपमेकादेशः स्यात् । इति प्राप्ते । परत्वात्पूर्वसवर्णदीर्घः । 'अतो गुणे' इति हि **पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरा**'निति न्यायेन 'अकः सवर्णे' इत्यस्यैवापवादो नतु 'प्रथमयो'रित्यस्यापि । रामाः ॥

**एकवचनं संबुद्धिः**।२।३।४९। संबोधने प्रथमाया एकवचनं संबुद्धिसंज्ञं स्यात् ॥

---

चानुवर्तते, तदाह-**प्रत्ययाद्याविति** । प्रत्ययाद्याविति किम् ? । वाचाटः । 'तेन वित्तश्चुञ्चुप्चणपौ' इत्यत्र प्रत्ययादौ यकारो लुप्तनिर्दिष्टस्तेन चस्य नेत्संज्ञेति वक्ष्यति ।

**न विभक्तौ** । 'हलन्त्य'मितीत्संज्ञाप्राप्तौ निषेधारम्भः । 'तु' इत्यस्योदाहरणं रामात्, पचेरन् । मकारस्य तु-रामम्, अद्राक्षम् । विभक्तौ किम् ? । 'अचो यत्', 'ऊर्णाया युस्', 'रुधादिभ्यः श्नम्' । एतेष्वन्त्यस्येत्संज्ञा यथा स्यात् । 'इदमस्थमु'रित्यत्र मकारपरित्राणार्थमुकारानुबन्धासञ्जनादनित्योऽयमिति ज्ञायते । अन्यथा 'प्राग्दिशो विभक्ति'रिति थमो विभक्तित्वाद्दानीमो मकारस्येवानेनैव सूत्रेणेत्त्वनिषेधसिद्धेः किं तेनेति । तेन 'किमोऽत्' क्वेति सिद्धम् । **एकवचनम्** । 'सुः संबुद्धि'रित्येव सुवचम् । न च सप्तमीबहुवचनेऽतिप्रसङ्गः । 'संबोधने प्रथमे'त्यधिकारादेव तदभावादिति नव्याः । अत्र व्याचख्युः-'सुः संबुद्धि'रिति वाच्ये एकवचनग्रहणमेकोऽर्थ उच्यते येन तावन्मात्रस्य प्रत्ययस्य संज्ञार्थम् । अन्यथा 'सामन्त्रित'मिति पूर्वसूत्रे तदन्तस्यामन्त्रितसंज्ञा कृतेति

---

**प्रत्ययाद्याविति** । तेन वाचाटे नेत्त्वम् । प्रत्ययेति किम् ? । चामरादावित्त्वं मा भूदिति । चुञ्चुप्चणपोर्यादित्वात्परनिमित्तयलोपस्य बहिरङ्गासिद्धत्वात्प्रत्ययादित्वाभावान्नेत्त्वम् ॥

**न विभक्तौ** । 'हलन्त्य'मित्यस्य निषेधोयम् । अनित्यमिदन्थमोर्मकारपरित्राणार्थादुदित्करणात् । तेन 'किमोत्' क्वेति सिद्धम् । प्राग्दिशीयत्वादयं विभक्तिः । अत एव दानीमो मस्य नेत्त्वमिति नव्याः । भाष्ये तु प्राग्दिशीयेष्वस्याप्रवृत्तावुदित्त्वं ज्ञापकमित्युक्त्वा 'दानीं चे'ति सूत्रे 'लोपो व्यो'रिति लोपेन यकारं प्रश्लिष्येत्सञ्ज्ञा वारिता । अन्यत्राऽनित्यत्वस्य फलाभावाच्चैवमेवोक्तम् । लोपस्यासिद्धत्वाच्च नान्त्यत्वमितिबोध्यम् । विभक्तौ किम् ?, अचो यत् ॥

**अतो गुणे** । 'उस्यपदान्ता'दित्यतो'ऽपदान्ता'दिति, 'एङि पररूप'मित्यतः 'पररूप'मिति चानुवर्त्तते । **पुरस्तादिति** । अत एव 'नादिची'तीज्ग्रहणं चरितार्थं, तद्धि 'रामाः' 'रामा नित्यादौ दीर्घनिषेधाऽभावाय । पररूपेण पूर्वसवर्णदीर्घबाधे हि तद्वैयर्थ्यं स्पष्टमेव । **नोत्तरानिति** । अनन्तरापेक्षयोत्तरान् व्यवहितानित्यर्थः ॥ **एकवचनं** । 'सुः संबुद्धि'रित्युचितम् । 'संबोधने चे'त्यतः 'संबोधन'इत्यनुवृत्तेः

**एङ्ह्रस्वात्संबुद्धेः** ।६।१।६९। एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते संबुद्धेश्चेत् । संबुद्ध्याक्षिप्तस्याङ्गस्यैङ्ह्रस्वाभ्यां विशेषणान्नेह,—हे कतरत्कुलेति । हे राम । हे रामौ ।

प्रक्रमाऽभेदाय इयमपि संज्ञा तदन्तस्यैव स्यादिति । **एङ्ह्रस्वात्संबुद्धेः** । यद्यत्र 'हल्ड्याब्भ्यः' इत्यतो हलमननुवर्त्य 'एङन्ताद्ध्रस्वान्ताच्चाङ्गात्परस्याः संबुद्धेर्लोप' इति व्याख्यायेत, हलनुवृत्तावप्यङ्गात्परा या संबुद्धिः तस्याः यद्धलिति वा, उभयथापि 'हे ज्ञाने'ति न सिध्येत् । लोपात्परत्वात्सोरतोऽमि अमि पूर्वत्वे च कृते एकादेशस्य परादिवद्भावे ह्रस्वान्तात्परत्वाभावात्, पूर्वान्तवद्भावे अम एवाभावादुभयत आश्रयणे नान्तादिवदिति निषेधादतो व्याचष्टे—**एङन्ता**दित्यादिना **चे**दित्यन्तेन । **संबुद्ध्याक्षिप्तस्येति** । तदन्तस्यैव संज्ञाभ्युपगमे तु सम्बुद्ध्याऽङ्गमाक्षेप्तुं न शक्यते इति बोध्यम् ।

**ह्रस्वात्परत्वं नास्तीति** । तथा च सूत्रे एङ्ग्रहणमावश्यकमिति भावः । किं च 'इमां किमाचामयसे न चक्षुषी'इति श्रीहर्षप्रयोगे 'से'इति पृथक्पदं, 'सलक्ष्मीके हे दमयन्ती'त्यर्थ इति 'निगरणचलनार्थेभ्यश्चे'ति सूत्रे मनोरमायां व्युत्पादितम् । ततश्च

सप्तमीबहुवचने न दोषः । 'संबुद्धावङ्गस्य गुण' इति व्यवहारान्न तदन्तस्य सञ्ज्ञा । तस्मात्पारायणादावदृष्टार्थमेवं न्यास इति बोध्यम् । **संबुद्ध्याक्षिप्तस्येति** । संबुद्धेः प्रत्ययत्वेन 'यस्मात्स विहितस्तदादी'त्यंशोपस्थितिः । स चाऽत्र योग्यतया पञ्चम्यन्त इति भावः । प्रत्यये गृह्यमाणे यस्मात्स विहित इत्याद्युपतिष्ठत इति 'प्रत्ययग्रहणे यस्मात्स विहित' इत्यादिपरिभाषार्थं इत्यङ्गस्येति सूत्रे भाष्ये स्पष्टम् । अनुमानरूपाक्षेपस्तु नात्र, फलाभावात् । यथा पीनत्वानुपपत्त्याऽनुमीयमानरात्रिभोजनस्य पीनत्वोपपत्तिः फलं, न तथैतत्सूत्रे, तदनुमानेन संबुद्ध्युपपत्तिर्भवति । **किं च** प्रत्ययस्योत्पत्तावङ्गापेक्षत्वेऽपि ज्ञाने तदपेक्षत्वाभावेन शास्त्रे तदाक्षेपे मानाभावः । अत एवाङ्गस्येति सूत्रे तत्स्थाने 'प्रत्यय' इत्यधिकारः कार्य इति पक्षे 'प्राऽकरो'दित्यादावुपसर्गात्पूर्वमडादिः स्यादित्याशङ्क्य 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादे'रिति परिभाषोपस्थित्या समाहितं भाष्ये न त्वङ्गाक्षेपेणेति दिक् । **अङ्गस्य**—उक्तार्थस्य । 'हल्ड्या'विति सूत्राद्धलित्यनुवर्त्तते । **हे कतरदिति** । प्रकृत्यकारस्य टिलोपेनाऽपहारादिति भावः । न चाङ्गात्परस्याः संबुद्धेरवयवस्य हलो लोप इत्युचितम्, संबुद्ध्याक्षिप्तस्य संबुद्ध्यैवान्वयस्योचितत्वादत आह—**कुलेतीति** । अत्र परत्वात्पूर्वरूपे उभयत आश्रयणेऽन्तादिवद्भावाऽभावात्तत्स्वीकारेऽपि ह्रस्वसंबुद्ध्योः पौर्वापर्यव्यवहाराऽसम्भवात्तद्रूप्यानतिदेशाच्च ह्रस्वान्ताङ्गात्परसम्बुद्धेरभावान्मलोपो न स्यात् । एवञ्च लक्ष्यानुरोधादन्याक्षिप्तस्याप्यन्यत्रान्वय इति भावः। एतदर्थमेव 'हल्लुप्यते संबुद्धेश्चे'दिति व्याख्यातम् । मस्य संबुद्धित्वाऽसंभवात् । अर्धविकारेणैकदेशविकृतन्यायेनापि न संबुद्धित्वम् । एकवचनसञ्ज्ञासंबुद्धिसंज्ञयोरुक्तपरिमाणनिष्ठतया तयोस्तेन न्यायेनाऽलाभाच्च । मकारस्यादेशत्वाभावाच्च नात्र स्थानिवद्भावः । अत एव 'राम'मित्यादौ 'सुपि चे'ति दीर्घो न । न च संबुद्धित्वस्य सकारमात्रनिष्ठत्वेन स्थानिभूतात्धर्मत्वेनाऽमः सम्बुद्धित्वाभावे कथं मस्य

हे रामाः। एङ्ग्रहणं किम्?। हे हरे। हे विष्णो। अत्र हि परत्वान्नित्यत्वाच्च संबुद्धिगुणे कृते ह्रस्वात्परत्वं नास्ति॥ **अमि पूर्वः** ।६।१।१०७। अकोऽम्यचि परतः पूर्वरूपमेकादेशः स्यात्। रामम्। रामौ॥ **लशक्वतद्धिते** ।१।३।८। तद्धितवर्ज-

---

तत्रापि संबुद्धिलोपार्थमेङ्ग्रहणमावश्यकमेव। स्यादेतत्। एङ्ग्रहणस्य 'से'इत्यत्र सावकाशतया 'हे हरे'इत्यादौ संबुद्धिलोपो न स्यात्, संनिपातपरिभाषाविरोधात्। तथा ह्रस्वग्रहणस्यापि 'हे रामे'त्यत्र सावकाशत्वात् 'हे गौरी'त्यत्र परत्वाद्धल्ङ्यादिलोपं बाधित्वा 'अम्बार्थनद्यो'रिति ह्रस्वे कृते संबुद्धिलोपो न स्यात्। लक्ष्मीशब्दे तु हल्ङ्यादिलोपस्याप्यभावाद्धे लक्ष्मीत्यत्र सुतरां संबुद्धिलोपो न स्यात्। सत्यम्, 'गुणात्संबुद्धे'रिति वक्तव्ये एङ्ह्रस्वग्रहणसामर्थ्यात्संनिपातपरिभाषां बाधित्वाऽपि संबुद्धिलोपः प्रवर्तते इति दिक्॥

**अमि पूर्वः**। 'प्रथमयो'रिति पूर्वसवर्णदीर्घे प्राप्तेऽयमारम्भः। 'इको यणची'त्यतोऽचीत्यनुवर्तते, तदाह—**अम्यचीति**। अमि योऽच् तस्मिन्। अमोऽवयवे अचीति यावत्। तेन मकारसहितस्य पूर्वरूपं नेति स्थितं मनोरमायाम्। एवम् 'अक्षादूहिन्या'मित्यादावपि 'ऊहिन्यां योऽच् तस्मि'न्नित्यादि बोध्यम्। 'पदास्वैरिबाह्ये'त्यादिनिर्देशाश्चास्मिन्व्याख्याने लिङ्गमित्यपि स्थितम्। कथं तर्हि काशिकादावमि परत इत्येवोक्तं, न त्वम्यचीति चेदत्राहुः—'तस्मादित्युत्तरस्य', 'आदेः परस्ये'त्यादेरेवादेश इति निर्णीते 'एकः पूर्वपरयो'रित्यादेशः पूर्वपरयोर्वर्णयोरेव भविष्यतीत्याशयेन नोक्तमिति॥

**लशक्व**। 'आदिर्ञिटुडवः'इत्यत 'आदि'रित्यनुवर्तते 'षः प्रत्ययस्ये'त्यतः प्रत्ययस्येति, 'अतद्धिते' इति पर्युदासाद्वा लभ्यत इत्याह—**प्रत्ययाद्या इति**। लश्च शश्च

---

संबुद्ध्यवयवत्वमिति वाच्यं, सुप्सञ्ज्ञाया उकारविशिष्टे सत्त्वेन तदुपस्थाप्ये जायमानैकवचनसञ्ज्ञाया विशिष्टे सत्त्वेन सम्बुद्धिसञ्ज्ञायामित्सञ्ज्ञोकारविशिष्टस्यैवोद्देश्यत्वेन तस्याऽनल्विधित्वात्। एतेनाऽदुडादेशेनैव नपुंसकत्वाभिव्यक्तौ 'कुलेती'ति व्यर्थमित्यपास्तम्। **एङ्ग्रहणं किमिति**। 'हरे' 'विष्णो'इत्यादावङ्गाधिकारस्थात्परनिमित्तापेक्षाच्चगुणात्पूर्वं ह्रस्वान्तत्वादेव सिद्धिः। 'से'प्रभृतानां सम्बोधने प्रयोगसत्वे 'ए'ग्रहणेनैव सिद्धेः प्रत्याहारग्रहणं व्यर्थमिति प्रश्नः। **हरे इति**। सामर्थ्यादेवाऽत्र सन्निपातपरिभाषा न। 'गुणात्संबुद्धे'रिति वक्तव्ये एङ्ह्रस्वग्रहणसामर्थ्याच्च। अत एव 'हे लक्ष्मि' इत्यादौ लोपसिद्धिः। **परत्वादित्यभ्युच्चयः**। **नित्यत्वाच्चेति**। चेनानवकाशत्वसङ्ग्रहः। नपुंसके 'त्रपो'इत्यादावस्यापि लुका बाध इत्यन्यत्॥

**अमि पूर्वः**। 'पूर्वसवर्ण' इत्यनुवृत्त्यैव सिद्धे 'पूर्व'ग्रहणन्तु 'राम'मित्यादौ द्विमात्रवारणाय। **लशकु**। समाहारद्वन्द्वः। अतद्धिते किम्?, 'कर्णललाटात्कनलङ्कारे', कर्णिका। कित्त्वफलन्त्वादिवृद्धिः स्यात्। आदिग्रहणाद्रूङः पाकनो न। तस्य कित्त्वे गुणो न स्यात्।

प्रत्ययाद्या लशकुचर्गा इतः स्युः। इति शसः शस्येत्संज्ञा॥ **तस्माच्छसो नः पुंसि** ।६।१।१०३। पूर्वसवर्णदीर्घात्परो यः शसः सकारस्तस्य नः स्यात्पुंसि॥

**अट्कुप्वाङ्नुम्व्यवायेऽपि** ।८।४।२। अट्कवर्गः पवर्ग आङ्नुम्—एतैर्व्यस्तैर्यथासंभवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः स्यात्समानपदे। 'पदव्यवायेऽपी'ति निषेधं

---

कुश्चेति समाहारद्वन्द्वे 'लशक्वि'ति नपुंसकम्। तदितरेतरयोगद्वन्द्वेन विवृणोति—**लशकवर्गा इति**। अतद्धित इति किम् ?, 'प्राणिस्थादातः—' इति लच्—चूडालः। 'लोमादिभ्यः शः'। लोमशः। अत्र प्रयोजनाभावादेव नेत्संज्ञेति नेदं प्रत्युदाहरणमिति नव्याः। 'कर्णललाटा'दिति भवार्थे कन्। कर्णिका। सत्यां हीत्संज्ञायां 'क्किति चे'ति वृद्धिः स्यात्। प्रत्ययाद्या इति किम् ?। 'जल्पभिक्षे'ति वृङः षाकन्। वराकः। अत्र 'क्ङिति चे'ति गुणो न स्यात्। **तस्माच्छसो**। 'त'च्छब्देन संनिहितः पूर्वसवर्णदीर्घः परामृश्यते। दीर्घमात्रपरामर्शे तु 'एतान् गाः पश्ये'त्यत्रापि नत्वप्रसङ्गात्। 'शस'इत्यवयवषष्ठी, स चावयवः परत्वेन विशेष्यते—पूर्वसवर्णदीर्घात्परस्य शसोऽवयवस्येति, तदेतदाह—**परो यः शसः सकार इति**। 'परो यः श'सिति न व्याख्यातम्। कृते पूर्वसवर्णदीर्घे ततः परस्य शसोऽसंभवात्। **अट्कुप्वाङ्**। 'रषाभ्या'मिति पञ्चमीनिर्देशाद्व्यवहितस्याऽप्राप्तौ वचनमिदम्। तत्र सर्वैर्व्यवायोऽसंभवी। 'एकैकमात्रव्यवाय' इत्यपि नार्थः, क्षुभ्नादिषु क्षुभ्नपाठसामर्थ्यात्, 'सरूपाणाम्—' इत्यादिनिर्देशाच्चेत्यभिप्रेत्याह—**व्यस्तैर्यथासंभवं मिलितैश्चेत्यादि**। नन्वेवं 'कृत्स्नं' 'कार्त्स्न्य'मित्यादावडादिव्यवधानाभावाणत्वाभावेऽप्यादर्शनेत्यादावड्व्यवधानादतिप्रसङ्गः। न च अडादिभिरेव व्यवधान इति नियमः, अप्राप्ते विधिरयमित्युक्तत्वात्। सत्यम्। योगविभागोऽत्र बोध्यः। 'व्यवायेऽपि' इत्येको योगो विध्यर्थः। 'अट्कुप्वाङ्नुम्—' इत्यन्यो नियमार्थः। छान्दसो भिसो लुक्। अत्र योगविभागं विनापि निर्वाहः सुकर इति तु नव्याः। तथाहि—'अट्कुप्वाङ्—' इति सूत्रे 'रषाभ्याम्' इत्यनुवर्तते। पञ्चमीश्रुत्या 'तस्मादित्युत्तरस्ये'ति परिभाषोपतिष्ठते। उपस्थितापि सा वचनप्रामाण्याद्डादिव्यवाये न प्रवर्तते। तदन्यव्यवाये तु प्रवर्तत एव। अतएव-येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादेकवर्णव्यवहितस्यैव इको गुणो न तु भिनत्तीत्यादावनेकव्यवहितस्येकः—इति 'पुगन्तलघूपधस्ये'ति सूत्रे वक्ष्यति। एवं च यत्राडादिभिरेव व्यवधानं रामेणेत्यादौ तत्र भवत्येव णत्वम्। यत्र

---

**तस्माच्छ**। 'पुंसी'ति पञ्चम्यर्थे सप्तमी। पुंसो विहितस्येत्यर्थः। 'तत्र विद्यमानाद्विहितस्ये'त्यर्थो वा। तस्मादिति किम् ?। एतान् गाः पश्य। पुंसि किम् ? स्त्रीः॥

बाधितुमाङ्ग्रहणम् । नुम्ग्रहणमनुस्वारोपलक्षणार्थम् । तच्चाऽकर्तुं शक्यम् । अयोगवाहानामट्सूपदेशस्योक्तत्वात् । इति णत्वे प्राप्ते ॥ **पदान्तस्य** ।८।४।३७। पदान्तस्य नस्य णत्वं न स्यात् । रामान् ॥ **यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्** ।१।३।१३। यः प्रत्ययो यस्मात्क्रियते तदादि शब्दस्वरूपं तस्मिन्प्रत्यये परेऽङ्गसंज्ञं

---

लडादिभिन्नेन व्यवधानमादर्शेनेत्यादौ तत्र न भवति, 'तस्मा'दिति परिभाषाया जागरूकत्वात्। **निषेधं बाधितुमिति** । तेन 'पर्याणद्ध'मित्यत्र 'उपसर्गादसमासेऽपि–'इति णत्वं सिध्यतीति भावः । **उपलक्षणार्थमिति** । नुम्स्थानिकस्य स्वाभाविकस्य वाऽनुस्वारमात्रस्योपलक्षणार्थं नुम्ग्रहणमित्यर्थः । तेन 'बृहि वृद्धौ' इदित्त्वान्नुम् । तस्यानुस्वारः । 'तृंहू हिंसायां' स्वाभाविकोऽत्रानुस्वारः । बृंहणम् तृंहणम् । उभयत्राप्यत्र णत्वं सिद्धम् । **अयोगवाहानामिति** । अविद्यमानो योगः प्रत्याहारेषु संबन्धो येषां ते अयोगाः । अनुपदिष्टत्वादुपदिष्टैरगृहीतत्वाच्च प्रत्याहारसंबन्धशून्या इत्यर्थः । वाहयन्ति निर्वाहयन्ति प्रयोगमिति वाहाः । अयोगाश्च ते वाहाश्च अयोगवाहाः । अनुपदिष्टत्वे उपदिष्टैरगृहीतत्वे च सति श्रूयमाणा इत्यर्थः ।

**अट्स्विति** । निष्कर्षस्त्वकारोपरीति । तेन पयःस्वित्यादाविणः परस्येति षत्वं न भवति । अतएवोक्तं प्राक्–'अनुस्वारविसर्गजिह्वामूलीयोपध्मानीययमानामकारोपरी'ति । **णत्वं**

---

अट्कु । **बाधितुमिति** । तेन 'पर्याणद्ध'मित्यत्रो**पसर्गादसमासे**पीति णत्वसिद्धिरिति भावः। **अयोगवाहानामिति** । न विद्यते योगो वर्णसमाम्नाये येषान्तेऽयोगाः । अनुपदिष्टत्वादुपदिष्टैरगृहीतत्वाच्चेत्यर्थः। ते च ते वाहयन्ति प्रयोगं निर्वाहयन्ति ते वाहाः । ते चानुस्वारविसर्गजिह्वामूलीयोपध्मानीययमाः । अत एवोरःकेणेत्यादौ विसर्गव्यवधानेऽपि णत्वसिद्धिः । तदुक्तं भाष्ये–'नार्थो नुम्ग्रहणेनानुस्वारे कृतेऽड्व्यवाये इत्येव सिद्ध'मिति । आदर्शेनेत्यादौ तु नातिप्रसङ्गः, अडतिरिक्तव्यवायात् । 'तस्मा'दित्युपस्थितं निर्दिष्टग्रहणमेतत्समभिव्याहारेऽडादिव्यतिरिक्ताऽव्यवहितपरम् । तदुक्तम्–'णत्वेऽन्यव्यवाये प्रतिषेधो वक्तव्यो, न वाऽन्येन व्यवहितत्वा'दिति ग्रन्थेन । एतदुत्तर'मटा व्यवायसत्त्वात्प्राप्नोत्येव, अटैव व्यवाय इत्यर्था'दित्यादिभाष्यमेकदेशिनोक्तिप्रत्युक्तिपरम् । 'चुटुतुलशर्व्यवाये ने'ति प्रतियोगिज्ञानसापेक्षनिषेधबोधकगुरुन्यासेन सिद्धेऽट्कुप्वाङित्युक्त्या एतैरेव व्यवाये इत्यर्थं वदता तस्यास्तदुक्तित्वध्वननात् । एतद्वार्तिकमतम् । भाष्ये तु–'रषाभ्या'मिति सूत्रे 'ऋवर्णान्नस्ये'त्यस्य प्रत्याख्यानाय 'व्यवाये'इति योगं विभज्याट्कुप्वाङ्नुम्भिरित्येतत्,–एतैरेवाक्षरसमाम्नायिकैर्व्यवाये नान्यैरित्यर्थकं व्याख्यातम्, तदा तेनादर्शेनेत्यादौ प्राप्तिरेव नेति बोध्यम् । **णत्वे इति** । णकार इत्यर्थः। **पदान्तस्य** । 'नभाभूपू'इति सूत्रान्नेति वर्त्तते । अत्र सूत्रेऽनन्तरस्येत्यादिव्यवस्थापकन्यायानामप्रवृत्तिर्बोध्या । 'अपदान्तस्ये'त्यनुवर्त्यैतस्य भाष्ये प्रत्याख्यानात् । **यस्मात्प्र** । 'यस्मा'दिति 'तदादी'ति तच्छब्दाकाङ्क्षापूरणाय । **तदादीति** । तत्प्रकृतिरूपमादिर्यस्येत्यर्थः । प्रत्यासत्ति-

स्यात् । 'भवामि' 'भविष्यामी'त्यादौ विकरणविशिष्टस्याऽङ्गसंज्ञार्थं तदादिग्रहणम् । विधिरिति किम् ? । स्त्री इयती । प्रत्यये किम् ? वव्रश्च । प्रत्ययविशिष्टस्य ततो-

---

**न स्यादिति** । 'न भाभूपूकमिगमी'त्यतो 'ने'त्यनुवर्तत इति भावः । **यस्मात्** । **तदादीति** । तत्प्रकृतिरूपमादिर्यस्य शब्दस्वरूपस्येति बहुव्रीहिः । ननु 'यस्मात्प्रत्ययविधिस्तदङ्ग'मित्येवास्तु किमादिग्रहणेनेत्यत आह—**भवामीत्यादि** । प्रकृतिमात्रस्य तु व्यपदेशिवद्भावेन तदादित्वादङ्गत्वम्, तेन 'कर्ता' 'कारक' इत्याद्यपि सिध्यतीति भावः । **अङ्गसंज्ञार्थमिति** । अन्यथा 'अतो दीर्घो यञी'ति दीर्घो न स्यादिति भावः । नचारम्भसामर्थ्यादेव दीर्घः स्यादिति वाच्यम् । 'पय गतौ' 'वय गतौ' आभ्यां यङ्लुकि पापामि पापावः । वावामि वावाव इत्यादौ चरितार्थत्वात् । **स्त्री इयतीति** । इदमः परिमाणे वतुप् । 'किमिदम्भ्यां वो घ' इति घः । तस्य इयादेशः । 'इदंकिमो'रिति ईश् । 'यस्येति च' इति ईशो लोपः । 'उगितश्च' इति ङीप् । सत्यां संज्ञायां स्त्रीशब्दस्य 'यस्येति च' इति लोपः स्यात् । न चेशो लोपस्य 'असिद्धवदत्राभा'दित्यसिद्धत्वान्नातिप्रसङ्ग इति वाच्यम्, 'प्राग्भादसिद्धत्व'मिति पक्षाभ्युपगमादनित्यत्वाद्वेति व्याख्यातारः । नव्यास्तु—'स्त्री अं पश्यती'त्यत्र स्त्रीशब्दस्य 'स्त्रियाः' इति इयङ् स्यात् । अकारादमि कृते 'अमि पूर्वः' इत्येकादेशस्य परादिवद्भावेन प्रत्ययत्वात् । अततेर्डप्रत्यये टिलोपे च सत्यकारस्य स्वत एव प्रत्ययत्वाच्च । विधिग्रहणे कृते तु नायं दोषः प्रसज्यते । अम्प्रत्ययस्य अकाराद्प्रत्ययस्य चाततेर्विहितत्वेऽपि स्त्रीशब्दादविधानात् । स्यादेतत् । वतुपोऽम्प्रत्ययस्य च स्त्रीशब्दादविधानेऽपि सोर्विधिरस्त्येवेति तद्दोषतादवस्थ्यमिति चेन्नैवम्, संनिधानबलेन 'यस्माद्यः प्रत्ययो विहितस्तस्मिंस्तदङ्ग'मिति व्याख्यानात् ।

**प्रत्यये किमिति** । 'तदादिरूपं किय'दित्यपेक्षायां यस्मात्प्रत्यय इति प्रत्ययस्य श्रुतत्वात्प्रत्ययपर्यन्तमेवाङ्गं भविष्यतीति मत्वा प्रश्नः । प्रत्ययस्य श्रुतत्वेऽपि प्रत्ययविशिष्टं, ततोऽप्यधिकं वा निरवधिकमङ्गं स्यात्, तदादीत्यस्यार्थनिर्णये प्रत्ययश्रवणस्यो-

---

न्यायलब्धार्थमाह—**तस्मिन्प्रत्यये इति** । 'गुणः कृतात्मसंस्कार'इति न्यायेनात्रापि तस्मिन्नितिपरिभाषाप्रवृत्तिः । प्रकृतिमात्रस्य तु व्यपदेशिवद्भावेन तदादित्वं बोध्यम् । **स्त्री इयतीति** । इदम्शब्दाद्वतुपि वस्य 'किमिदंभ्यां वो घ' इति घादेशे तस्येयादेशे 'इदम्किमो'रितीशि 'यस्ये'ति लोपे ङीपि 'इयती'ति रूपम् । न च तत्र परतः स्त्रीशब्दस्येयङाद्यापत्तिरूपो दोषो न, 'यस्ये'ति लोपस्याभीयत्वादसिद्धत्वेनात्र तदप्राप्तेरिति वाच्यं, व्याश्रयत्वेनाभीयासिद्धत्वाऽप्राप्तेः । तत्र हि समानाश्रयत्वमसिद्धत्वाश्रयशास्त्रसंबन्धिनिमित्तसमुदायान्यूनानतिरिक्ताश्रयकत्वम् । अस्ति च 'यस्ये'ति लोपापेक्षया 'स्त्रियाः' इति [illegible] इयङ्प्रवृत्त्या स्त्री-

ऽप्यधिकस्य वा माभूत्॥ **अङ्गस्य** ।६।४।१। इत्यधिकृत्य॥ **टाङसिङसामिनात्स्याः** ।७।१।१२। अकारान्तादङ्गाट्टादीनां क्रमादिनादय आदेशाः स्युः। णत्वम्। रामेण॥ **सुपि च** ।७।३।१०२। यञादौ सुपि परेऽतोऽङ्गस्य दीर्घः स्यात्। रामा-

---

पक्षयादित्याशयेन व्याचष्टे-**प्रत्ययविशिष्टस्येत्यादिना**। प्रत्ययविशिष्टस्येति किम्?। वव्रश्च। अत्र विशिष्टस्याङ्गसंज्ञायाम् 'उरत्' इत्यदादेशस्य परनिमित्तत्वालाभात् 'अचः परस्मिन्नि'ति स्थानिवत्त्वाप्रवृत्त्या 'न संप्रसारणे-' इति निषेधाभावादभ्यासस्य पुनरपि संप्रसारणं प्रवर्तेत। तथा 'भ्रर्थं' 'श्र्यर्थ'मित्यत्र 'अचि श्नुधातुभ्रुवाम्-' इति इयङुवङौ स्याताम्, उक्तरीत्या अचीत्यनेनाजादौ प्रत्यय इत्यलाभात्। ततोऽधिकस्याङ्गसंज्ञायां तु 'देवदत्त ओदनमपाक्षी'दित्यत्र देवदत्तशब्दात्प्रागडागमः स्याद्देवदत्तशब्दात्सुप्रत्ययस्य विहितत्वेन लुङः प्राग्वर्तिसमुदायस्याऽङ्गत्वात्। द्वितीयप्रत्ययग्रहणे कृते तु न कोऽपि दोषः प्रसज्यते। अन्ये तु यस्माल्लुङादिविधिः प्रत्यासत्त्या तस्यैवाङ्गस्याडागमः स्यादिति ततोऽप्यधिकस्येत्येतदनास्थयोक्तं, किंतु एतस्यापि प्रत्ययविशिष्टस्याङ्गत्वे यद्दूषणं तदेवेत्याहुः। **टाङसि**। 'अतो भिस ऐ'सित्यस्मादनुवृत्तेन 'अत' इत्यनेन सामानाधिकरण्येन विशेषणात् 'अङ्गस्ये'त्यधिकृतं पष्ठ्यन्तमपि पञ्चम्या विपरिणम्यते, विशेषणेन तदन्तविधिस्तदाह-**अकारान्तादङ्गादिति**॥ **सुपि च**। 'यञी'त्यनुवर्तते। अल्ग्रहणात्तदादिविधिरित्याह-**यञादौ सुपीति**। यञि किम्?।

---

शब्दस्य सुनिरूपिताङ्गत्वेऽपि न दोषः। 'विधि'ग्रहणादेव 'भनक्ती'त्यादाव'तो दीर्घो यञी'ति न। तदादिग्रहणं 'करोमी'त्यादौ विकरणस्य गुणार्थम्। **प्रत्ययविशिष्टस्येति**। तथा सति अङ्गेन प्रत्ययपरत्वलाभानापत्तौ 'वव्रश्चे'त्यस्याऽसिद्धिः। किं च 'राजपुरुष' इत्यादौ 'न लुमते'ति निषेधात्पूर्वपदे पदत्वाऽभावेन नलोपानापत्तिरिति भावः। **ततोऽप्यधिकस्य वेति**। 'देवदत्त ओदनमपाक्षी'दित्यादौ देवदत्तादिशब्दोत्तरसुपं निमित्तीकृत्य लुङ्पर्यन्तमङ्गत्वात्तस्य लुङ्परत्वेन देवात्पूर्वमप्यडापत्तिः। अङ्गसञ्ज्ञायाः प्रत्ययनिमित्तत्वाभावेन लुङादिनिरूपिताङ्गत्येत्यर्थस्य दुर्लभत्वादिति भावः॥

**टाङसि**। 'अङ्गस्ये'ति षष्ठ्या 'अतो भिस' इत्यतोऽनुवृत्तेनाऽत इत्यनेन पञ्चम्यन्तेन सामानाधिकरण्यानुरोधात्पञ्चम्या विपरिणाम इत्याह-**अकारान्तादिति**। 'अकारात्परेषामङ्गसञ्ज्ञानिमित्तटादीनामित्यर्थ' इति पक्षान्तरं भाष्ये। किं चादन्तादङ्गादित्यर्थेऽपि 'ब्राह्मणभिस्से'त्यादावतिप्रसङ्गः। 'ब्राह्मणे'त्यस्यापि 'युवोरनाका'विति सूत्रभाष्योक्तरीत्याऽन्तर्वर्तिविभक्त्याऽङ्गत्वात्। अर्थवत्परिभाषया, प्रत्ययग्रहणपरिभाषया वा प्रत्ययस्यैव भिसो ग्रहणे त्वेषामङ्गाधिकारे पाठो व्यर्थः। भिसः प्रत्ययस्यैव ग्रहणे हि प्रत्यासत्त्या तन्निरूपिताङ्गस्य ग्रहणमिति युज्यते वक्तुं नान्यथा। इदमेव हि 'अतो भिस' [illegible] भाष्ये दत्तमित्यलम्। **सुपि च**। 'अतो दीर्घो यञी'त्यनुवर्तते,

भ्याम् ॥ **अतो भिस ऐस्** ।७।१।९। अकारान्तादङ्गाद्भिस ऐस् स्यात् । अनेकाल्त्वात्सर्वादेशः । रामैः ॥ **ङेर्यः** ।७।१।१३। अतोऽङ्गात्परस्य 'ङे' इत्यस्य यादेशः स्यात् । रामाय । इह स्थानिवद्भावेन यादेशस्य सुप्त्वा'त्सुपि चे'ति दीर्घः । **संनि-**

---

रामः । अत इति किम् ? । अग्निभ्याम् ॥ **अतो भिस ऐस्** । ननु 'ए'सित्येवास्तु । न च 'अतो गुणे' इति पररूपापत्तिः । एकारोच्चारणवैयर्थ्यापत्तेः । अन्यथा इसमेव विदध्यादिति चेत्सत्यम् । एदैतोर्द्विमात्रत्वाऽविशेषेण गौरवाभावात् । 'वहुलं छन्दसि' इत्यत्र 'अनतोऽपि भवति नद्यै'रिति काशिकोदाहृतप्रयोगस्य ऐस्करणं विना अनिर्वाहाच्च । केचिदैस्करणं निर्जरसैरित्यैकारश्रवणार्थमिति व्याचख्युः, तच्चिन्त्यम् । संनिपातपरिभाषया जरसादेशाप्रवृत्तेर्निर्जरैरित्येव भाष्ये सिद्धान्तितत्वात् ॥

**ङेर्यः** । 'ङे'रिति चतुर्थ्येकवचनस्य ग्रहणं न सप्तम्येकवचनस्य,व्याख्यानात् । अतएव 'ङेरा'मित्यत्रास्याऽग्रहणम्, 'समानाधिकरणे' 'स्त्रिया'मित्यादिनिर्देशाच्च । **स्थानिवद्भावेनेति** । आदेशालाश्रयविधौ स्थानिवत्त्वनिषेधाभावादिति भावः । **सुपि चेति दीर्घ इति** । न च परत्वात् 'अकृत्सार्वधातुकयोः—' इति दीर्घोऽस्त्विति शङ्क्यम्, तत्र 'अयङ्यि क्ङिति' इत्यतः 'क्ङिती'त्यनुवर्तनात् । अन्यथा 'उरुये'त्यत्रापि दीर्घः स्यात् । उरुशब्दात्परस्य 'टा' इत्यस्य 'सुपां सुलुक्' इति यादेशः । एतच्च काशिकायां स्पष्टम् । यद्यपि ङेर्यादेशस्य ङित्त्वमस्ति 'न ल्यपि' इति ज्ञापकेन अनुबन्धकार्येष्वल्विधावपि स्थानिवत्त्वाभ्युपगात्, तथापि शानचः शित्त्वेन लिङ्गेन क्वचिदनुबन्धकार्येषु स्थानिवत्त्वानभ्युपगमादादेशे ङित्त्वं नेत्यभ्युपेत्येदं । विरोधाभावात्परत्वमत्राकिंचित्करमित्यनादरेण वा 'अकृत्सार्वधातुकयोः—' इति दीर्घो नोक्त इति स्थितस्य गतिमाहुः । ननु 'ज्यादादीयसः' इति ईयस आकारविधानमङ्गवृत्तपरिभाषायां लिङ्गम् । अन्यथा 'बहोर्लोपः—' इत्यतो 'लोप' इत्यनुवर्त्य लोपमेव विदध्यादाकारं तु न विदध्यात्, 'अकृत्सार्वधातुकयोः' इति दीर्घेण ज्यायानिति रूपसिद्धेरिति भाष्ये स्थितं, तदिदानीं विरुध्येत,'क्ङिती'त्यनुवृत्तौ तु 'ज्याया'नित्यत्र 'अकृत्सार्वे'ति दीर्घाप्रवृत्तेः । तथाच 'अकृत्—' इति सूत्रे क्ङितीति नानुवर्तनीयमुरुया धृष्णुयेत्यत्र दीर्घाभावश्छान्दस इत्येवाभ्युपेयमिति चेत्, अत्राहुः, 'ज्ञाजनोर्जा' इत्याकारग्रहणमुक्तपरिभाषालिङ्गम् । अन्यथा जमेव विदध्यात् । 'अतो दीर्घो यञि' इति 'जायते' 'जानाती'त्यादौ दीर्घसिद्धेरित्यपि भाष्ये स्थितं, तच्च ज्ञापकम् 'अकृत्—' इत्यत्र क्ङितीत्यनुवृत्तावपि सङ्गच्छते । एवं च सति 'ज्यादात्' इत्याकारग्रहणं

---

'यञी'त्यनेनाऽस्थादिति विधारत्याह—**यञादाविति** । **ङेर्यः** । चतुर्थ्येकवचनस्यैव ग्रहणं

पातलक्षणो विधिरनिमित्तं तद्विघातस्ये'ति परिभाषा तु नेह प्रवर्तते, 'कष्टाय क्रमणे' इत्यादिनिर्देशेन तस्या अनित्यत्वज्ञापनात् । रामाभ्याम् ॥

**बहुवचने झल्येत्** ।७।३।१०३। झलादौ बहुवचने सुपि परेऽतोऽङ्गस्यैकारः स्यात् । रामेभ्यः । बहुवचने किम् ? । रामः। रामस्य । झलि किम् ? । रामाणाम् । सुपि किम् ? । पचध्वम् । जश्त्वम् । **वावसाने** ।८।४।५६। अवसाने झलां चरो वा स्युः । रामात् । रामाद् । द्वित्वे रूपचतुष्टयम् । रामाभ्याम् । रामेभ्यः । रामस्य । सस्य

---

लिङ्गमिति तु भाष्ये प्रौढिवादमात्रमस्तु । **संनिपातेति** । संनिपातः संश्लेषः लक्षणं निमित्तं यस्य स संनिपातलक्षणः, तं संनिपातं विहन्तीति तद्विघातः । कर्मण्यण् , कुत्वतत्वे । उपजीवकविधिःस्वोपजीव्यविघातकविधेर्निमित्तं न भवतीत्यर्थः । **रामः । रामस्येति** । यद्यपि रामस्येत्यत्र संनिपातपरिभाषयाऽयेत्त्वं सुपरिहरम्,तथापि 'अदः सर्वेषा'मिति निर्देशादेत्त्वविधौ संनिपातपरिभाषा न प्रवर्तत इत्याशयेनोक्तमिति स्थितस्य गतिः समर्थनीया । **जश्त्वं वावसान इति** । अत्राहुः-जश्त्वे कृतेऽवसाने चर्त्वमिति न मन्तव्यं, किंतु येननाप्राप्तिन्यायेन अवसाने चर्त्वस्य जश्त्वापवादत्वाच्चर्त्वाभावपक्षे जश्त्वमिति योज्यम् । **द्वित्व**

---

व्याख्यानादित्याह–ङे **इत्येतस्येति** । **सन्निपातेति** । उपजीव्यविरोधन्यायमूलैषा । सन्निपातः संश्लेषस्तन्निमित्तको यो विधिः स तं सन्निपातं यो विहन्ति स तद्विघातस्तस्यानिमित्तमित्यर्थः । न च यञादित्वसापेक्षदीर्घस्य बहिरङ्गतयाऽसिद्धत्वान्नात्र सन्निपातविघात इति वाच्यम्, आरोपिताऽसिद्धत्वेऽपि वस्तुतस्तद्विघातस्य जायमानत्वेन तत्प्रवृत्तेः । किं चान्तरङ्गे कर्त्तव्ये बहिरङ्गासिद्धत्वेऽपि तत्र कृतेऽसिद्धत्वे मानाभावः । किञ्चाऽऽतिदेशिकसन्निपातविघाताभावमादायैतदप्रवृत्तौ 'गौरी'त्यादौ संबुद्धिलोपेऽपि स्थानिवत्त्वेन ह्रस्वनिमित्तविघाताऽभावात्तत्रैतस्या अतिव्याप्तिपरभाष्याऽसङ्गतिः । सन्निपातस्याऽशास्त्रीयत्वान्नात्र स्थानिवत्त्वमिति चेत्तत्रासिद्धत्वमपि कथमिति वद ? । 'कार्यस्य निमित्तं ययोः सन्निपातस्तयोः सूत्रे उपादानमपेक्षित'मिति तु नाग्रहः । अत एव 'दाक्षि'रित्यत्राकारान्तप्रकृतीञ्सन्निपातनिमित्ताऽङ्गसञ्ज्ञाऽनया परिभाषयाऽल्लोपस्य निमित्तन्न स्यादित्याशङ्क्याऽनित्यत्वेन समाहितं भाष्ये कृन्मेजन्तसूत्रे । न ह्यङ्गसञ्ज्ञायामदन्तस्याङ्गसञ्ज्ञेत्युक्तमस्ति । न च 'कष्टाये'त्यस्याकृत्सावैति दीर्घेणोपपत्तेरनित्यताज्ञापकत्वं कथमिति वाच्यम्, तस्यापि सन्निपातपरिभाषयाऽप्राप्तेः। विरोधाभावात्फले विशेषाभावाच्च परत्वेऽप्यकृदिति नोपन्यस्तम् । तस्याऽकृदित्यादिपर्युदासेनाऽलुप्त्येव प्रवृत्तिरित्यन्ये ।

**झलि किमिति** । 'उतो वृद्धि'रित्यतो 'हली'त्येवानुवर्त्य सन्निपातपरिभाषया 'रामाणा'मित्यत्र न दोष इति प्रश्नः । झल्ग्रहणमेत्त्वे सन्निपातपरिभाषाया अप्रवृत्तिज्ञापनार्थं, तेन 'सर्वेषा'मित्यादावेत्त्वसिद्धिरित्युत्तरम् । एतेन 'बहुवचने किं रामस्ये'ति व्याख्यातम् । 'रामाभ्या'मित्यपि प्रत्युदाहरणं बोध्यम् । 'बहुवचने झली'गिति तु न सूत्रितम् । 'ज्ञानयो'रित्यादौ नुमापत्तेः । इटि तु 'गत्ने' इत्यादौ गुणे तस्य पञ्चमीसमासेन स्थानिवत्त्वादेङित्यस्याऽप्राप्तौ व्यवधानाद्धल्ङ्याबित्यस्यचाऽप्राप्तौ संबुद्धिलोपानापत्तिः । **जश्त्वमिति** । चर्त्वमिति शेषः । अवसाने चर्त्वस्य प्राप्तजश्त्वापवाद-

द्वित्वपक्षे 'खरि चे'ति चर्त्वेऽप्यान्तरतम्यात्सस्य स एव न तु तकारः, अल्पप्राणतया प्रयत्नभेदात् । अतएव 'सः सी'ति तादेश आरभ्यते ॥

**ओसि च** ७।३।१०४। ओसि परेऽतोऽङ्गस्यैकारः स्यात् । रामयोः ॥

**ह्रस्वनद्यापो नुट्**।७।१।५४। ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडागमः

---

इति। 'अनचि चे' त्यनेन। 'अनचीति प्रसज्यप्रतिषेध'इति प्रागेवोक्तम्। पर्युदासाभ्युपगमे तु इह द्वित्वं न स्यात्। **तादेश आरभ्यत इति।** वत्स्यतीत्यादौ चर्त्वेन तकारो न लभ्यत इति 'सः स्यार्धधातुके' इत्यनेन सकारस्य तकारो विधीयत इत्यर्थः ॥

**ह्रस्वनद्यापो।** 'अङ्गस्ये'त्यनुवर्तते । तच्च पञ्चम्यन्तेन सामानाधिकरण्यादङ्गादिति विपरिणम्य ह्रस्वादिभिर्विशेष्यते, विशेषणेन तदन्तविधिरित्याशयेनाह—**ह्रस्वान्तादिति।** एतेन 'ह्रस्वनद्यापः—' इति पञ्चमी न तु षष्ठीति स्फोरितम्। ज्ञापकं त्वत्र 'नामी'ति। नहि प्रकृत्यागमत्वे अङ्गसंज्ञानिमित्तं नाम् सम्भवति। एवं चानया पञ्चम्याऽनन्यार्थया 'तस्मादित्युत्तरस्ये'ति परिभाषोपस्थित्या 'आमि सर्वनाम्नः सुट्' इत्यतोऽनुवृत्तमामीति सप्तम्यन्तं 'ङः सि धु'डित्यत्रेव षष्ठ्या विपरिणम्यते, 'आमी'ति सप्तम्याः 'त्रेस्त्रयः' इत्यत्र चरितार्थत्वादित्यभिप्रेत्याह—**आमो नुडागमः स्यादिति।**

अत्र नव्याः—'नुट्' इति योगं विभज्य 'अङ्गात्परस्यामो नुट्' इत्युत्सर्गविधिं कृत्वा 'नद्यापः' इत्यंशेन 'दीर्घात्परस्यामो नुट् चेद्भवति तर्हि नद्याप एव' इति नियमविधिं व्याख्याय ह्रस्वग्रहणं प्रत्याख्येयम्। न चैवं 'लिहां' 'दुहा'मित्यादावतिप्रसङ्ग इति वाच्यम्। 'हलन्ताच्चेद्भवति तर्हि षट्चतुर्भ्य एवे'ति नियमाभ्युपगमात्। 'ध्वंस्वनडुहां' 'कतिपयचतुरां' 'युजिक्रुञ्चां' 'झलाम्' इत्यादिनिर्देशाच्च। तस्माद्ध्रस्वग्रहणप्रत्याख्याने न कोऽपि दोष इत्याहुः। अत्र वदन्ति—'नु'डिति पृथग्योगे कृते सति ङेरामि कृते परमप्याटं बाधित्वाऽन्तरङ्गत्वादामो नुट् स्यात्। तथा च—'परत्वादाटा नुड्बाध्यते'— इति वक्ष्यमाणग्रन्थेन, 'आटि कृते सकृद्गतिन्यायान्नुट् ने'ति भाष्यग्रन्थेन च विरोधः स्यात्। यद्यपि 'नियमसूत्राणां विधिमुखेन प्रवृत्ति'रिति पक्षे ङेरामि कृते तस्य 'नद्यापः'

---

त्वात्। **द्वित्वे रूपेति।** 'पूर्वत्रासिद्धमद्वित्वे' इति न्यायाच्चर्त्वोत्तरन्द्वित्वं बोध्यम्। **तादेश इति।** अन्यथा 'खरि चे'ति चर्त्वेन सिद्धाविदं व्यर्थं स्यादिति भावः ॥

**ह्रस्वन ॥** 'ह्रस्वनद्याप' इति पञ्चमी। 'आमि सर्वनाम्न' इत्यत 'आमी'ति वर्त्तते, तच्च षष्ठ्या विपरिणम्यते, 'नामी'ति लिङ्गादित्याह—**ह्रस्वान्तादित्यादि।** 'आ'मत्र षष्ठीबहुवचनमेव, न तु ङेरामादीति स्पष्टं भाष्ये। यत्तु 'नु'डिति विभज्य सामान्येन नुड्विधेयः। 'नद्याप' इति 'दीर्घान्ताच्चेन्नद्याप एवे'ति नियमार्थमिति दीर्घेषु न दोषः। 'हलन्ताच्चेत्षट्चतुर्भ्य एवे'ति नियम इति हलन्तेषु

स्यात् । नामि । ६।४।३। नामि परेऽजन्ताङ्गस्य दीर्घः स्यात् । रामाणाम् । 'सुपिंचे'ति

इत्यनेनैव नुडागमे प्रसज्यमाने 'आण्नद्याः' इत्यनेन स बाध्यत इति 'परत्वादाटा नुड् बाध्यत' इत्यादिग्रन्थः सङ्गच्छते, तथापि 'नियमसूत्राणां निषेधमुखेन प्रवृत्ति'रिति पक्षे परमपि आटं बाधित्वा अन्तरङ्गत्वान्नुट् स्यादेव । किंच 'नद्यापः' इत्यत्र 'नद्यापः परस्यामो नुडेव स्यान्नान्यत्' इत्यर्थः स्यात् । तथा च गौर्यां रमायां सर्वासां सर्वस्यामिति न सिध्येत् । सुडामस्य पुंसि, आट्याट्स्याडागमानां तु ङिदन्तरे चरितार्थत्वात् । अपि च गौर्यामित्यादौ ङेरामि कृते नुटं बाधित्वा प्राप्तमाटं बाधितुं नदीग्रहणम्; एवं रमायां सर्वासां सर्वस्यामित्यादौ प्राप्तं याटं सुटं स्याटं च बाधितुमाब्ग्रहणमिति 'नद्यापः' एतद्विध्यर्थमेव स्यान्न नियमार्थम् । ततश्च विश्वपां वातप्रम्यामित्यादौ नुड् दुर्वार एव । 'नद्यां मतुप्' 'भाषायां सदवसश्रुवः' 'सर्वासां प्रायदर्शनम्' 'तदस्यां प्रहरणम्' इत्यादिनिर्देशाञ्शरणीकृत्य विध्यर्थतापादनस्य नुडेवेति प्रागुक्तनियमस्य च निवारणे तु प्रतिपत्तिगौरवम् । अपि च—'आकारान्तादीकारान्तादूकारान्ताचेद्भवति तर्हि नद्याप एव' इति नियमस्यापि संभवात् विश्वपां वातप्रम्यां खलप्वामित्यादौ नुडागमाभावेऽपि गवामित्यादौ नुट् स्यात् । न च छन्दसि 'गोः पादान्ते'—इत्यारम्भाल्लोके गोशब्दात्परस्यामो नुड् न भवेदिति वाच्यम्, 'पादान्ते गोशब्दात्परस्यामो नुट् चेच्छन्दस्येवे'ति नियमेन लोके पादान्ते 'गोना'मिति प्रयोगस्याभावेऽप्यपादान्ते तस्यानिवार्यत्वापत्तेः । रायां ग्लावां नवामित्यादौ दुर्निवारत्वाच्च । यदि तु 'दीर्घात्परस्य आमो नुट् चे'दित्यादिनियमे 'गोः पादान्ते' इति सूत्रं विध्यर्थं भवेत् । 'आकारान्तादिभ्यः परस्यामो नुट् चे'दित्यादिनियमे तु नियमार्थं स्यात्तत्र विधिनियमयोर्विधिरेव ज्यायानिति न्यायाननुसन्धानेन 'दीर्घान्तात्परस्यामो नुट् चे'दित्यादिनियम एव स्वीक्रियत इत्युच्यते तदापि पुनः प्रतिपत्तिगौरवमस्त्येव, तस्माद्ध्रस्वग्रहणप्रत्याख्यानस्यातिक्लेशसाध्यत्वाद्यथाश्रुतमेव रमणीयमिति ।

**नामि** । 'ढ्लोपे'—इत्यतो 'दीर्घ' इत्यनुवर्त्तते । दीर्घश्रुत्योपस्थितेनाऽच इत्यनेनाङ्गस्येति

न दोषः । एवंच ह्रस्वग्रहणं न कार्यमिति, तन्न; 'नद्याप' इत्यस्य 'सौलिङ्गनाचेन्नद्याप एवे'ति नियमपरतयाऽपि व्याख्यातुं शक्यत्वेन नदीत्वाप्त्वयोर्ह्रस्वेपि दृष्टत्वेन त्वदुक्तनियमे दृढतरमानाभावेन च 'मतीना'मित्यादौ नुडनापत्तेः ॥

**नामि** । 'ढलोप' इत्यतो 'दीर्घ' इत्यनुवर्त्तते । अङ्गस्येति किम् ? । चर्मणाम । नन्वामीत्येवास्तु, नित्यत्वात्पूर्वं दीर्घे(कृते)ऽपि ह्रस्वान्तान्नुडित्येतत्सामर्थ्याद्भूतपूर्वह्रस्वान्तत्वमादाय नुट्सिद्धेः । न च 'नृ चे'ति दीर्घविकल्पार्थमित्यत्र नृ चरितार्थः 'नन्नद्याप' इत्येव सिद्धेः । तदुक्तं भाष्ये—

दीर्घो यद्यपि परस्तथापीह न प्रवर्तते । संनिपातपरिभाषाविरोधात् । 'नामी'-

---

विशेष्यते । विशेषणेन च तदन्तविधिः । तदेतदाह—**अजन्ताङ्गस्येत्यादि** । अर्थवद्ग्रहणपरिभाषया 'नामी'ति नुट्सहित एवाम् गृह्यते । तेन पामनामङ्गनामित्यादौ न भवति । तत्र हि पामादिलक्षणे नप्रत्यये टापि द्वितीयैकवचने च कृते त्रयाणामपि प्रत्ययानां प्रत्येकमर्थवत्त्वेऽपि 'ना'मिति समुदायस्यानर्थकत्वात् । यद्यपि नलोपस्यासिद्धत्वादनेन 'पामना'मित्यत्र दीर्घः सुपरिहरः, तथापि 'नोपधायाः' इत्यनेन तु स्यादेवेति बोध्यम् । 'नुटि' इति तु न सूत्रितम् । 'भृञः किन्नुट् च' इत्यौणादिकगन्प्रत्ययान्ते भृङ्गशब्दे मा भूदिति । स्यादेतत् । नुडागमस्याम्भक्तत्वादाम्ग्रहणेन सनकारोऽप्याम् ग्रहीष्यत इति 'आमि' इत्येव सूत्रमस्तु । न चामीति दीर्घस्य कृताकृतप्रसङ्गित्वेन नित्यत्वात्परमपि नुटं बाधित्वा अग्नीनामिन्दूनामित्यत्र दीर्घे कृते ह्रस्वाश्रयो नुट् न भवेदिति वाच्यम्, ह्रस्वान्तान्नुडिति वचनसामर्थ्यात्कृतेऽपि दीर्घे भूतपूर्वगत्याश्रयणेन तत्प्रवृत्तेः। नापि 'न तिसृचतसृ' इति निषेधात्तिसृणां चतसृणामित्यत्र ह्रस्वान्तान्नुडिति वचनस्य प्रयोजनमस्तीति वाच्यम्। 'चतसृणा'मित्यत्र 'षट्चतुर्भ्यश्च' इत्यनेनैव नुट्सिद्धेः, 'ह्रस्वनद्यापः—' इति सूत्रे 'त्रेस्त्रयः' इत्यतः 'त्रे'रित्यनुवर्त्य त्रिशब्दात्परस्यामो नुडिति व्याख्यानात्तिसृणामित्यत्रापि तत्सिद्धेः । यद्यपि नृणामित्यत्र प्रयोजनमस्ति, तथापि नैकमुदाहरणं ह्रस्वग्रहणं प्रयोजयति। अन्यथा 'नृनद्यापः' इत्येव वदेत् । तस्मादामीत्युक्तौ न किंचिद्बाधकमस्तीत्यामः सनकारस्य ग्रहणं व्यर्थमिति चेत् , अत्रोच्यते उत्तरार्थं सनकारग्रहणं कर्तव्यं, 'नोपधायाः' इति दीर्घो नामि यथा स्यात्, 'चर्मणां' 'वर्मणा'मित्यत्र मा भूदिति । तदुक्तं वार्तिककृता—'नामि दीर्घ आमि चेत्स्यात्कृते दीर्घे

---

'नैकमुदाहरणं योगारम्भं प्रयोजयती'ति । 'तिसृणा'मिति 'ष'डित्यत्र 'त्रे'रित्यनुवृत्त्या सिद्धमिति भाष्ये एव स्पष्टम् ।। एतेन 'ऋन्नद्याप' इति न्यासे भाष्यतात्पर्यमित्यपास्तम् । 'चतसृणां' 'प्रियचतसृणा'-मित्यत्र 'षट्चतुर्भ्य' इति सिद्धं । गौणे तदप्रवृत्तौ तु न मानं । बहुवचनन्तु लाघवार्थं । द्विवचने हि 'चतुर्भ्या'मिति गुरुनिर्देशः स्यात् । 'नैकमुदाहरण'मिति प्रकृतसूत्रस्थभाष्यविरोधश्च । समाहारद्वन्द्वेन निर्देशे कार्ये बहुवचननिर्देशस्तदर्थं इति तु न युक्तम् । 'अस्थिदधि' 'तिसृभ्यो जस' इत्यादौ व्यभिचारात् । न चाऽङ्गाधिकारे पञ्चम्या यदुच्यते गृह्यमाणविभक्तेस्तद्भवतीति सर्वादिसूत्रभाष्याद्गृह्यमाणाद्विहितविभक्तेरित्यर्थकादस्य नुटो गौणेऽप्रवृत्तिः, 'षड्भ्य' इत्यत्रापि विहितविशेषणमेवेत्याशयेन 'परमषट्'त्यादौ लुगभावमाशङ्क्य 'षट्प्रधान एव समास' इत्युक्तं । समासस्य षट्प्रधानत्वेन सङ्ख्याप्रकारकसङ्ख्येयविशेष्यकबोधजनकत्वेन षट्त्वसत्त्वान्न दोष इति तदर्थः। 'ष्णान्ते'त्यत्र लोके गणनायां प्रसिद्धानामेव ग्रहणमित्यत्र न मानं । प्रकृतेऽपि तथैव, 'षड्भ्य' इत्यादौ पञ्चम्या विहितविभक्तित्वाद-

त्यनेन त्वारम्भसामर्थ्यात्परिभाषा बाध्यते । रामे । रामयोः । सुपि एत्वे कृते ।

---

न नुड्भवेत् । वचनाद्यत्र तन्नास्ति नोपधायाश्च वर्मणाम्' इति । अत्र वदन्ति— वचनाद्भूतपूर्वगत्याश्रयणेन तत्प्रवृत्तिरित्येतच्चिन्त्यम् । गौणत्वे 'षट्चतुर्भ्यश्च' इति नुटोऽप्रवृत्त्या 'प्रियचतसृणा'मित्यत्र नुडर्थं ह्रस्ववचनस्य चरितार्थत्वेन सामर्थ्यस्योपक्षयात् । तत्र हि 'नुमचिर-' इति रादेशात्पूर्वविप्रतिषेधेन नुडिष्यत इति । तदयुक्तम् । 'ऋन्नयापः' इति सूत्रितेऽपि ऋदन्तान्नुट् सिध्यत्येवेति ह्रस्वग्रहणसामर्थ्यस्यानुपक्षीणत्वादिति दिक् । **परिभाषाविरोधादिति** । कृताकृतप्रसङ्गित्वेन 'नामि' इति दीर्घस्य नित्यत्वात्परोऽपि 'सुपि च' इति दीर्घो न प्रवर्तत इति नोक्तम् । 'शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति' इति 'नामि' इति दीर्घस्याप्यनित्यत्वात् ।

**आरम्भसामर्थ्यादिति** । 'सुपि च' इत्यस्य तु न सामर्थ्यं, रामाभ्यामित्यादौ सावकाशत्वादिति भावः । ननु 'कतीना'मित्यत्र परत्वात् 'षट्चतुर्भ्यश्च' इति नुटि 'नामि' इति दीर्घः सन्निपातपरिभाषामबाधित्वैव प्रवर्तत इत्यारम्भसामर्थ्यस्योपक्षयात्

---

ङ्गस्येत्यनेन संबन्धाऽयोग्यत्वाद्विहितेत्यध्याहारेण प्रत्ययविशेषणतैवेति भाष्योक्तेरिति गौणे नुटोऽप्रवृत्तिरिति वाच्यम् , 'नामी'ति सूत्रस्थोक्तभाष्यप्रामाण्यान्नुड्विधायके विहितपदानध्याहारेण 'षडादिभ्यः परस्याङ्गसञ्ज्ञानिमित्तस्यामो नु'डित्यर्थेन गौणेऽपि प्रवृत्तेः । 'अतो भिस' इत्यादाववङ्गस्येत्यस्यैवमन्वयस्याङ्गसञ्ज्ञासूत्रे भाष्ये उक्तत्वात् । अत एव 'परमचतुर्णा'मित्यादौ नुट् । यद्यप्येवं षड्भ्योऽद्ड्डुतरादिभ्य इत्यनयोरपि वक्तुं शक्यं, तथापि लक्ष्यानुसाराच्चत्र विहितविशेषणम् । 'विरुद्धविभक्तित्वा'दिति भाष्योक्तयुक्तिस्त्वेकदेशिन इति बोध्यम् । 'अड्डुतरादिभ्यः' 'षड्भ्यो लु'गित्यनयोरेव सर्वादिसूत्रे भाष्ये उपन्यासाच्च । 'षड्भ्य' इत्यादेः 'षडर्थगतसङ्ख्याभिधायिजश्शसोरित्यादिक्रमेणार्थं इति कैयटोक्तं तु 'अड्डुतरादिभ्य' इति सूत्रे भाष्यविरोधादिभिर्दूषयिष्यते । न च 'पदां' 'दता'मित्यादावतिप्रसङ्गः । ह्रस्वत्वं नाम मात्राकालिकाच्त्वं, तत्र सामर्थ्याद्विशेषणीभूतमात्राकालिकत्वांश एव भूतपूर्वगत्याश्रयणं न तु विशेष्यभूताऽच्त्वांशेपीत्यदोषादिति चेन्न, 'नोपधाया' इत्युत्तरार्थत्वात् । तेन 'चर्मणा'मित्यादौ दीर्घाभावः सिद्ध इति दिक् । **परिभाषाविरोधादिति** । सर्वत्राऽनित्यत्वाश्रयणे मानाभाव इति भावः । कृताऽकृतप्रसङ्गित्वान्नामीति नित्यम् । न च विशेषाभावेन फलाभावान्न कृते तत्प्राप्तिरिति वाच्यं, विशेषाभावेऽपि पर्जन्यन्यायेन शास्त्रप्रवृत्तेरिको झलिति सूत्रे भाष्ये उक्तत्वात् । 'आयादय' इति सूत्रे भाष्ये स्यादिभिः परत्वादायादिबाधमाशङ्क्यानवकाशत्वादायादयः । न च 'गोपायती' त्यादिरवकाशः । अत्रापि शपः स्यादेः प्राप्तेः । 'न च नास्ति विशेषः । अन्यदिदानीमिदमुच्यते नास्ति विशेष इति । यदुक्तमायादीनां स्यादिभिरव्याप्तोऽकाशइतिसनास्त्यवकाश'इति भाष्योक्तेश्चेत्यपि बोध्यम् ।

**आरम्भेति** । यत्तु 'कतीना'मित्यत्र 'षट्चतुर्भ्य' इति नुटि सन्निपातपरिभाषाया अप्राप्तेः सावकाशत्वमस्त्येवेति, तन्न, ... 'कतीना'मित्येव सिद्धे सामान्यसूत्रारम्भेत्यर्थात् ।

**अपदान्तस्य मूर्धन्यः** ।८।३।५५। आ पादपरिसमाप्तेरधिकारोऽयम् । **इण्कोः** ।८।३।५७। इत्यधिकृत्य । **आदेशप्रत्यययोः** ।८।३।५९। 'सहेः साडः सः' इति सूत्रात्स

'नामि' इति सूत्रमपि 'रामाणा'मित्यत्र सन्निपातपरिभाषया न प्रवर्तते । तथा च 'आचार्याणाम्' इति निर्देशेनोक्तपरिभाषाया अनित्यत्वमाश्रित्य 'सुपि च' इति दीर्घ एव परत्वात्प्रवर्ततामिति चेत् । अत्र केचित्समाधयन्ति—चतुर्ग्रहणसाहचर्याद्धलन्त-षट्संज्ञकादेव परस्यामः षट्संज्ञाश्रयो नुड्भवति न तु कतिशब्दात्परस्यामः, तथा च 'कतीना'मित्यत्र ह्रस्वाश्रय एव नुडित्यारम्भसामर्थ्यं नोपक्षीणमिति । तदपरे न क्षमन्ते । रेफो यथा हल्संज्ञकस्तथा अम्संज्ञकोऽपि भवतीत्यमन्तषट्संज्ञकादेव परस्यामः षट्संज्ञाश्रयो नुड्भवति न तु षकारान्तात्परस्येति वक्तुं शक्यतया 'षण्णा'-मित्यत्र नुडभावप्रसङ्गात् । तस्मादिह साहचर्यं न ग्राह्यमेव । अन्ये तु 'षट्चतुर्भ्य–' इति बहुवचननिर्देशादर्थपरोऽयं निर्देशः, तथा चार्थे प्राधान्यं यत्र तत्रैव षट्संज्ञाश्रयो नुड्भवति न तु प्रियपञ्चां प्रियषषामित्यादाविति सिद्धान्ताद्बहिरङ्गः षट्संज्ञाश्रयो नुट् । तथा चान्तरङ्गत्वात्कतीनामित्यत्र ह्रस्वाश्रय एव नुडिति 'नामि' इति दीर्घः सन्निपातपरिभाषां बाधित्वैव प्रवर्तते, ततश्चारम्भसामर्थ्यादिति मूलोक्तग्रन्थस्य न काप्यनुपपत्तिरिति समादधुः । इतरे तु 'आरम्भसामर्थ्या'दित्यस्यायमर्थो 'न तिसृचतसृ' इति निषेधारम्भसामर्थ्यादिति । 'तिसृणा'मित्यत्र ह्रस्वान्तलक्षणे नुटि कृते 'नामि' इति दीर्घप्रवृत्तौ हि 'न तिसृ–' इति निषेध आरभ्यते । सन्निपातपरिभाषया दीर्घा-प्रवृत्तौ तु किमनेन निषेधेन ?। अतो ज्ञायते 'नामि' इति दीर्घः संनिपातपरिभाषां बाधत इति । यैस्तु 'ह्रस्वनद्यापः–' इत्यत्र ह्रस्वग्रहणं प्रत्याख्यायते, तैस्तु 'नामि' इति दीर्घे आरम्भसामर्थ्यं नाश्रयणीयमेव । **अपदान्तस्य** । 'ष' इत्येव सिद्धे मूर्धन्यग्रहणम् 'इणः षीध्वम्–' इति ढत्वार्थम् । चकृढ्वे । अकृढ्वम् । **इण्कोः** । समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । कोः किम् ?। गवाक्षु । गवाङ्षु । **आदेशप्रत्यययोः** । प्रत्ययशब्दः प्रत्ययावयवे लाक्षणिकः, 'हलि सर्वेषाम्' इति निर्देशात् 'सातपदाद्योः' इत्यत्र सातिग्रहणाच्च लिङ्गादित्याशयेन व्याचष्टे–**आदेशः प्रत्ययावयवश्चेति** । यदि तु आदेशावयवो गृह्येत,

एवञ्च 'न तिसृचतसृ'इत्यकरणेन लाघवमिति भावः । 'नुटी'ति तु नोक्तम् । 'भृङ्ग'इत्यत्रोणादीनां व्युत्पत्तिपक्षे 'भृञः किन्नुट्च्चे'ति नुटि दीर्घापत्तेः । व्युत्पत्तिपक्षस्य चेदमेव ज्ञापकं बोध्यमिति दिक् ।

**अपदान्तस्य** । 'ष' इत्येव सिद्धे मूर्धन्यग्रहणं 'इणः षीध्व'मित्यत्र ढविधानार्थं, 'रषाभ्या'-मित्यत्रानुवृत्त्यर्थं च । एवं च तत्र णग्रहणं पदान्तस्येति च न कर्त्तव्यमिति भाष्ये स्पष्टम् । **इण्कोः** । वर्गग्रहणं षत्वस्यासिद्धत्वात्तक्षित्याद्यर्थम् । **आदेश** । प्रत्ययशब्दस्तदवयवपरो व्याख्यानात् , सातेः

इति पञ्चम्यन्तं पदमनुवर्तते। इण्कवर्गाभ्यां परस्याऽपदान्तस्यादेशः प्रत्ययावयवश्च यः सकारस्तस्य मूर्धन्यादेशः स्यात्। विवृताऽघोषस्य सस्य तादृश एव षः। रामेषु। इण्कोः किम्?। रामस्य। आदेशप्रत्यययोः किम्?। सुपीः। सुपिसौ। सुपिसः। अपदान्तस्य किम्?। हरिस्तत्र। एवं कृष्णमुकुन्दादयः।

**सर्वादीनि सर्वनामानि।१।१।२७।** सर्वादीनि शब्दस्वरूपाणि सर्वनामसंज्ञानि

---

तर्हि 'तिसृणा'मित्यादौ दोषः। यद्यपि सकारोच्चारणसामर्थ्यात्तत्र षत्वं न स्यात्, तथापि विसंविसं मुसलंमुसलमित्यादौ षत्वं दुर्वारं स्यात्। आष्टमिकद्विर्वचनस्यादेशरूपत्वात्। यदि तु 'प्रत्ययो यः सकार' इति गृह्येत, तर्हि 'रामेषु' 'करिष्यती'त्यादौ न स्यात्, किंतु 'इन्द्रो मा वक्षत्' इत्यादावेव स्यात्। इह मनोरमायामेकापि षष्ठी, विषयभेदाद्भिद्यत इत्युक्त्वा सहविवक्षाभावेऽपि सौत्रत्वाद्द्वन्द्व इत्युक्तं, तत्तु प्रत्ययशब्दे लक्षणामनङ्गीकृत्य यथाश्रुताभिप्रायेणोक्तमिति बोध्यम्। **विवृताघोषस्येति।** 'विवृतस्य सस्य तादृश एवे'त्युक्ते ऋकारेऽतिप्रसङ्गस्तद्वारणायाऽघोषस्येति। 'अघोषस्ये'त्येतावदुच्यमाने ठकारेऽतिप्रसङ्गस्तद्वारणायोभयमुपात्तम्। **तादृश एव ष इति।** तादृशः ष एवादेशो भवति नान्य इत्यर्थः। नच 'दधिसेचौ' 'दधिसेच' इत्यादौ प्राक् सुबुत्पत्तेः समासे षत्वं वारयितुं पदादादिः पदादिरिति पञ्चमीसमासो भाष्ये उक्तस्ततश्चेहापि 'सात्पदाद्योः' इति निषेधः स्यात्, 'करिष्यती'त्यादौ षत्वविधेः सावकाशत्वादिति चेन्मैवम्, 'स्वादिषु' इति या पदसंज्ञा तामाश्रित्य उक्तनिषेधो न प्रवर्तत इति सातिग्रहणेन ज्ञापितत्वात्। **रामस्येति।** 'टाङसिङसामिनात्स्याः' इति वक्तव्ये सकारोच्चारणसामर्थ्यात्षत्वं न भवेत्, नडादिषु 'अमुष्ये'ति निपातनात्ततः फगादौ 'आमुष्यायण-' इत्यादिवार्तिकनिर्देशाच्च 'अमुष्ये'त्यत्र षत्वं भवेदिति यदि तर्हि 'विश्वपा'स्वित्यादि प्रत्युदाहर्तव्यम्। न च तत्रापि 'षु'बिति वक्तव्ये 'सु'बिति सकारोच्चारणसामर्थ्यादेव न भवेदिति शङ्क्यं, 'लिट्त्सु' 'प्रशान्त्सु' 'इत्यत्र 'डः सि धुट्' 'नश्चे'ति धुटः प्रवृत्तये सकारोच्चारणस्यावश्यं स्वीकर्तव्यत्वादिति दिक्॥ **सर्वादीनीति।** तद्गुणसंविज्ञानो बहुव्रीहिरयम्। 'अदः सर्वेषा'मिति लिङ्गात्। आदिशब्दोऽत्रावयववाची।

---

षत्वनिषेधाल्लिङ्गाच्च, तदाह–**प्रत्ययावयवस्येत्यादि । विवृताघोषस्येति ।** विवृतत्वरूपाभ्यन्तरप्रयत्नवतोऽघोषरूपबाह्यप्रयत्नवतश्चेत्यर्थः । ठकारवारणायाद्यम् । ऋकारवारणाय द्वितीयम् । **रामस्येति ।** टाङसीति सूत्रे सकारोच्चारणं त्विण्कोरित्यनुवृत्तावेव तात्पर्यग्राहकमिति भावः ॥ **सर्वादीनि ।** तद्गुणसंविज्ञानो बहुव्रीहिः । 'आदि'शब्दोऽवयववाची । तेन सर्वशब्दघटित

स्युः । तदन्तस्यापीयं संज्ञा । 'द्वन्द्वे चे'ति ज्ञापकात् । तेन 'परमसर्वत्रे'ति त्रल्,

सर्व आदिराद्यावयवो येषां तानीति विग्रहः । उद्भूतावयवभेदः समुदायः समासार्थ इति बहुवचनम् । तस्य समुदायस्य युगपल्लक्ष्ये प्रयोगाभावात् 'आनर्थक्यात्तदङ्गेषु' इति न्यायेन तदवयवेषु प्रवर्तमाना सर्वनामसंज्ञाऽविशेषात्सर्वशब्देऽपि प्रवर्तत इति युक्तं तद्गुणसंविज्ञानत्वम् । तस्यान्यपदार्थस्य गुणा वर्तिपदार्थरूपाणि विशेषणानि तेषां कार्यान्वयितया संविज्ञानं यत्र स तद्गुणसंविज्ञान इत्यक्षरार्थः । लोकवेदयोरपि संयोग-समवायान्यतरसम्बन्धे 'लोहितोष्णीषा ऋत्विजश्चरन्ति', 'लम्बकर्णमानये'त्यादौ तद्गुणसंविज्ञानत्वमेव । स्वस्वामिभावसंबन्धे त्वतद्गुणसंविज्ञानत्वं 'चित्रगुमानये'त्यादौ ।

ननु 'सर्वनामानी'त्यत्र 'पूर्वपदात्संज्ञाया'मिति णत्वं कस्मान्न भवति? । सौत्रत्वान्नेति चेत्, लोके सर्वनामशब्दस्यासाधुत्वापत्त्या 'सर्वनामसंज्ञानि स्यु'रित्युत्तरग्रन्थस्यासाधुत्वापत्तेरिति चेन्मैवम्-। 'निपातनाण्णत्वं ने'ति भाष्योक्तव्याख्याश्रयणादिष्टसिद्धेः । अत्र भाष्यानुसाराद्बाधकान्येव निपातनानि भवन्तीति पक्ष आश्रितः । 'अबाधकान्यपि निपातनानि भवन्ती'ति पक्षस्तु 'विभाषा फाल्गुनी'ति सूत्रे श्रवणाशब्दे निपातितेऽपि 'श्रावणी'ति प्रयोगोऽपि साधुरित्येवमर्थमाश्रयिष्यते। विशेषणानुगुणंविशेष्यमध्याहरति—**शब्दस्वरूपाणीति । द्वन्द्वे चेति ।** स हि निषेधः समुदायस्यैव न त्ववयवानामिति वक्ष्यति, न च तदन्तविधिं विना समुदाये संज्ञाप्रसक्तिरस्तीति भावः । नन्वङ्गाधिकारे तदन्तविधिं विनैव 'परमसर्वस्मै' इत्यादौ स्मायादिसिद्धेस्तदन्तसंज्ञायाः किं फलमित्यत आह—**तेनेति** । न चेहापि 'प्रातिपदिका'दित्यनुवृत्तेः सर्वनाम्नस्तद्विशेषणत्वे तदन्त-

उद्भूतावयवभेदः समूहः समासार्थ इति बहुवचनम् । 'उद्भूतावयवभेद' इत्यस्यारोपितावयवगतसङ्ख्य इत्यर्थः । तत्र वैयर्थ्यादप्रवृत्तावपि अवयवेषु प्रवर्त्तमानाऽविशेषात्सर्वशब्देऽपि भवति । 'सर्वनामानी'-त्यत्र 'पूर्वपदा'दिति णत्वमत एव निपातनान्न । नाप्राप्ते णत्वे कृतस्य निपातनस्य तद्बाधकत्वात् णत्वसहितमसाधु इति स्पष्टं भाष्ये । 'प्रयोजनं सर्वनामाव्ययसंज्ञाया'मिति वार्तिकाच्छब्दरूपं विशेष्यमादाय प्राप्तस्तदन्तविधिरित्याह—**द्वन्द्वे चेतीति** । प्रथमार्थे सप्तमी । द्वन्द्वः सर्वनामसंज्ञो नेति तदर्थः । न हि तदन्तविधिं विना समुदाये सञ्ज्ञाप्रवृत्तिरस्ति या निषिध्येतेति भावः । ननु तदन्तस्यापि सर्वनामत्वे 'सर्वनाम्नः स्मा'इत्यादिषु 'सर्वनाम्नो विहितस्य ङेः स्मै' इत्यर्थाश्रयणेनातिसर्वादौ दोषाभावादुपसर्जनप्रतिषेधो न कार्य्य इति भाष्ये सूचितं विरुध्येतेति चेन्न, 'प्रयोजनं सर्वनामाव्ययसञ्ज्ञाया'मिति तदन्तविधिसूत्रस्थवार्त्तिकभाष्यविरोधेनास्य भाष्यस्यैकदेश्युक्तित्वात् । इत एवाऽरुचेर्भाष्ये पक्षान्तरोपादानम् । न च ऋष्युक्तपक्षेषु नारुचिरिति भ्रमितव्यम् । वृद्धिसञ्ज्ञासूत्रे'परितुष्यन्त्वल्वपि भवाननाकृतिलिङ्गेन वेत्याहे'ति वार्तिककारं प्रति भाष्योक्तेः । **अकच्चेति** ।

'परमभवका'नित्यत्राऽकच्च सिद्ध्यति। **जसः शी** ।७।१।१७। अदन्तात्सर्वनाम्नः परस्य जसः शी स्यात्। अनेकाल्त्वात्सर्वादेशः। नचाऽवंगस्तृ इत्यादाविव 'नानुबन्धकृतमनेकाल्त्व'मिति वाच्यं, सर्वादेशत्वात्प्रागित्संज्ञाया एवाभावात्। सर्वे॥

**सर्वनाम्नः स्मै** ।७।१।१४। अतः सर्वनाम्नो 'ङे' इत्यस्य स्मै स्यात्। सर्वस्मै॥ **ङसिङ्योः स्मात्स्मिनौ** ।७।१।१५। अतः सर्वनाम्नो ङसिङ्योरेतौ स्तः। सर्वस्मात्॥ **आमि सर्वनाम्नः सुट्** ।७।१।५२। अवर्णान्तात्परस्य सर्वनाम्नो विहि-

---

विधिर्भविष्यतीति वाच्यं,'समासप्रत्ययविधौ प्रतिषेधः' इत्युक्तत्वादिति भावः। **अकच्चेति।** चकारात्परमसर्वतइत्यत्र तसिल्। **जसः शी**। दीर्घोच्चारणमुत्तरार्थ—वारिणी। मधुनी।

**अनेकाल्त्वादिति।** न तु शित्त्वादिति भावः। **इत्संज्ञाया एवाभावादिति।** 'तृ' इत्यत्रोपदेशकाल एव ऋकारस्येत्संज्ञा, शीभावस्य तु सर्वादेशत्वानन्तरं स्थानिवत्त्वेन प्रत्ययत्वे लब्धे 'लशक्वतद्धिते' इति प्रत्ययादेशस्येत्संज्ञेति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमिति भावः। **अवर्णान्तादिति।** अवर्णान्तादङ्गात्परस्येत्यर्थः। तेन 'येषां' 'तेषा' मित्यादौ

---

'कुत्सित' इति सूत्रोक्तभाष्यरीत्या सङ्ख्याकारकाभ्यां पूर्णार्थस्येतरान्वयेन सुबन्तादेव तद्धितोत्पत्तेः प्रत्यासत्त्या सर्वनामप्रकृतिकसुबन्तात्तदर्थगतकुत्साविवक्षायां सर्वनामावयवटेः प्रागकजित्यर्थात्तदन्तसञ्ज्ञाऽभावे तदसिद्धिरिति भावः। एवमेव त्रलाद्यसिद्धिर्बोध्या। एतेनावयवनिष्ठसर्वनामत्वेन तत्सिद्धिरित्यपास्तम्॥

**जशः शीः**। दीर्घोच्चारणमुत्तरार्थं 'वारिणी' इति। 'अदन्ता'दिति 'परस्ये'त्यनेनान्वेति। 'अत' इत्यस्याङ्गविशेषणतया अदन्तादङ्गादित्यर्थः। 'सर्वनाम्न' इति तु विहितविशेषणं, तस्य तु नाङ्गं विशेष्यमावृत्तौ मानाभावात्। तेन 'वर्णाश्रमेतरा' 'मासपूर्वा' इत्यत्र न। अत एव 'विभाषा जसी'ति चरितार्थम्। 'अङ्गसञ्ज्ञानिमित्तस्यादन्तात्सर्वनाम्नो विहितस्ये'त्यर्थस्तु न; 'ते' 'तेषा'मित्याद्यसिद्धेः। अत्वविधौ विषयसप्तमी तु न, 'तस्मि'न्निति परिभाषाबाधे मानाभावात्। **प्रागित्सञ्ज्ञाया इति।** प्रत्ययादिशज्ञानाभावात्तज्ज्ञानाभाव इति भावः। **परे** त्वनुबन्धत्वयोग्यतयाऽत्रापि तन्निषेधप्रवृत्त्या शित्त्वादेव सर्वादेशः। इत्सञ्ज्ञायोग्यशकारवत्त्वमेव तत्सूत्रे शित्त्वम्। अत एव काऽणोविषये 'नानुबन्धकृतमसारूप्य'मिति विकल्पाऽभावः। अन्यथा कादीनां कादेर्वाक्यार्थबोधोत्तरं प्रत्ययत्वज्ञाने इत्संज्ञादेः प्रवृत्त्या वाक्यार्थबोधरूपतत्प्रवृत्तिकालेऽनुबन्धज्ञानाऽभावेन विकल्पो दुर्वारः। पश्चादनुबन्धत्वज्ञानेऽपि जातनिवृत्त्ययोगात्। यदि तत्र पश्चात्तज्ज्ञाने तन्निवृत्तिस्तर्ह्यत्रापि पश्चात्तज्ज्ञाने सर्वादेशत्वस्यापि निवृत्त्यापत्तिः। ध्वनितं चेदं लुटः प्रथमस्यानेकाल्शिदित्यादिसूत्रेषु भाष्ये इति प्राहुः। **अतः सर्वानाम्न इति।** अदन्तादङ्गात्परस्य सर्वनाम्नो विहितस्येत्यर्थः। तेन 'मासपूर्वाये'त्यत्र स्मै न।

**ङसिङ्योः**। स्मात्स्मिनोर्हल्न्त्यमिति न, 'न विभक्तौ'विति निषेधात्। यद्यपीत्त्वप्रवृत्तिकाले न विभक्तित्वज्ञानं तथापि 'विभक्ता'वित्यस्य विभक्तित्वयोग्ये इत्यर्थान्न दोषः। अत एव सूत्रे 'तु'-

तस्याऽऽमः सुडागमः स्यात् । एत्वषत्वे । सर्वेषाम् । सर्वस्मिन् । शेषं रामवत् । एवं विश्वादयोऽप्यदन्ताः। सर्वादयश्च पञ्चत्रिंशत् । सर्व, विश्व, उभ, उभय, डतर, डतम, अन्य, अन्यतर, इतर, त्वत्, त्व, नेम, सम, सिम । **पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः ।** त्यद्, तद्, यद्, एतद्, इदम्, अदस्, एक, द्वि, युष्मद्, अस्मद्, भवतु, किम्—इति । उभशब्दो द्वित्वविशिष्टस्य वाचकः । अतएव नित्यं द्विवचनान्तः । तस्येह पाठस्तूभकावित्यकजर्थः । नच कप्रत्ययेनेष्टसिद्धिः, द्विवचन-

---

न्यऽव्यार्थतः। **सर्वनाम्नो विहितस्येति।** 'सर्वनाम्नः परस्ये'ति तु नोक्तं, 'वर्णाश्रमेतराणा'मित्यत्र सुट्प्रसङ्गात्, 'द्वन्द्वे चे'त्यनेन समुदायस्य सर्वनामसंज्ञानिषेधेऽप्यवयवस्याऽनिषेधात् । विहितविशेषणत्वाश्रयणे प्रमाणं तु 'दक्षिणोत्तरपूर्वाणा'मिति भाष्यकारप्रयोग एव । **आम इति ।** 'सर्वनाम्न' इति पञ्चम्या निरवकाशतया 'आमी'ति सप्तम्याः 'त्रेस्त्रयः' इत्युत्तरसूत्रे कृतार्थायाः षष्ठी प्रकल्प्यत इति भावः । **पञ्चत्रिंशदिति ।** पञ्च च त्रिंशच्चेति द्वन्द्वः । पञ्चाधिकात्रिंशदिति तत्पुरुषो वा । न च 'सङ्ख्यायास्तत्पुरुषस्ये'ति वक्ष्यमाणवार्तिकेन समासान्तो डच्स्यादिति वाच्यम्, तत्रैव वार्तिके—'अन्यत्राधिकलोपा'दित्युक्तत्वात् । ननु सर्वेषां नाम सर्वनामेत्यन्वर्थत्वात् संज्ञायाः सर्वविश्वादय एव संज्ञिनो भविष्यन्ति नान्ये इति किमनेन पञ्चत्रिंशदिति परिगणनेन, 'सर्वादीनि'ति सूत्रेण वा ? मैवम् । परिगणनाभावे कृत्स्नसकलसमस्तादिष्वतिप्रसङ्गात् । एवं च 'पञ्चत्रिंशत्सङ्ख्याकानि सर्वादीन्येव सर्वनामसंज्ञकानि नान्यानी'ति नियमाय 'सर्वादीनी'ति सूत्रमावश्यकं न त्वनुनासिकसंज्ञासूत्रमिव मन्दप्रयोजनमिति बोध्यम् ॥

**पूर्वपरावर ।** व्यवस्थायामसंज्ञायां यानि पूर्वपरावरदक्षिणोत्तरापराधराणि तानि सर्वादिगणसंनिविष्टानि नान्यानीत्यर्थः । सर्वनामसंज्ञा तु 'सर्वादीनि सर्वनामानि' इत्यनेनैव सिध्यति । एवमुत्तरसूत्रद्वयेऽपि बोध्यम् । 'त्यद्' 'तद्' एतौ उक्तपरामर्शकौ । तत्रा-

---

ग्रहणं चरितार्थम् ॥ **आमिस ।** 'आङ्गेसेरसु'गित्यत 'आ'दिति वर्त्तते । **पञ्चत्रिंशदिति ।** तेन सर्वार्थप्रतिपादकत्वेऽपि कृत्स्नसकलादिशब्दानां नेति भावः । सर्वविश्वौ बुद्धिस्थाऽनेकसङ्ख्याकावयवारब्धसमुदाये शक्तौ । तस्य समुदायस्यानुद्भूतावयवभेदत्वे एकवचनं, यथा 'सर्वो लोक' इति । तादृक्समुदायद्वयादिविवक्षायां द्विवचनादि,—'सर्वौ व्यूहौ' 'सर्वे व्यूहा' इति । यदाऽप्युद्भूतावयवभेदसमुदायविवक्षा तदापि बहुवचनं 'सर्वे घटा' इति ॥

**पूर्वपरावर ।** व्यवस्थाऽसंज्ञावर्तिन एवेमे सर्वादय इत्यर्थः । एवमुत्तरसूत्रद्वयेऽपि । **नित्यं द्विवचनान्त इति ।** द्विवचनान्त एवेत्यर्थः । **अकजर्थ इति ।** तत्र काऽकचोः को विशेषः,

परत्वाभावेनोभयत उभयत्रेत्यादावियाऽयच्प्रसङ्गात् । तदुक्तम्-'उभयोऽन्यत्रे'ति ॥

यश्छान्दस' इति गणरत्नकारोक्तिर्नादर्तव्या। 'स्यश्छन्दसि बहुल'मिति सूत्रे छन्दोग्रहण-वैयर्थ्यापत्तेः । **एक इति ।** 'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा । साधारणे समानेऽल्पे सङ्ख्यायां च प्रयुज्यते' ॥ **अत एवेति ।** द्वयोर्द्विवचनस्यैव युक्तत्वा-दिति भावः । **नित्यं द्विवचनान्त इति ।** सर्वदा द्विवचनान्त इत्यर्थः । न चैव'मुभादुदात्तो नित्यम्', 'उभ(शब्द)स्य सर्वनामत्वे कोऽर्थः'-इति सूत्रकारभाष्यकार-प्रयोगो विरुध्यत इति शङ्क्यम्, अर्थपरस्यैव नित्यं द्विवचनान्तता न तु स्वरूपानुकरण-परस्येत्यभ्युपगमात् । अथ सर्वादिषूभशब्दपाठो व्यर्थः, सर्वनामकार्याणां स्मायादीनां द्विवचनेऽभावात् । न च 'सर्वनाम्नस्तृतीया चे'ति सूत्रेणोभाभ्यां हेतुभ्याम् उभयोर्हेत्वो-रिति षष्ठीतृतीयासिद्धिस्तत्फलमिति वाच्यम् । 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शन'-मिति वार्तिकेनैव गतार्थत्वात् । न च वृत्तिकृता 'सर्वनाम्नस्तृतीया चे'ति सूत्रे पठितत्वा-दिदमपि वार्तिकं सर्वनाम्न एव सर्वविभक्तिप्रापकं नान्यस्येति वाच्यम्, भाष्ये 'हेतौ' इति सूत्रे तद्वार्तिकस्य पठितत्वात्। अत एव 'अन्नेन कारणेन वसति' 'अन्नस्य कारणस्ये'त्युदा-हृतं हरदत्तेनेत्याशङ्क्याह-**तस्येह पाठस्त्विति** । ननु कप्रत्ययेनापीष्टसिद्धेः किमनेना-ऽकजर्थपाठेन ? । न च काऽकचोः स्वरे विशेषोऽस्तीति वाच्यम्, प्रत्ययस्वरेण चित्स्व-रेण वाऽन्तोदात्तत्वे विशेषाऽभावादित्याशङ्क्याह-**न चेति ।** उभशब्दस्य द्विवचनपरत्व-मकच्प्रत्ययो न विहन्ति, टेः प्राग्जायमानत्वात्, तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणात् । कप्रत्ययस्तु विहन्त्येव, प्रातिपदिकात्परत्र जायमानत्वादित्याशयेनाह-**द्विवचनपरत्वा-भावेनेति । अयच्प्रसङ्गादिति ।** उभशब्दात्त्रतसोः परतः स्वार्थे यथा अय-ज्भवति तथा कप्रत्यये सति स्यादिति भावः। यद्यपि स्वार्थे अयज्दृष्टान्तेऽपि दुर्लभस्तथापि 'उभादुदात्त' इति सूत्रे 'नित्य'मिति योगविभागात्सुलभ एव । तथाहि-**'उभादुदात्तः'** । 'द्वित्रिभ्या'मिति सूत्राद्वेति नानुवर्तते, अस्वरितत्वात् । अवयववृत्तेः सङ्ख्यावाचिन उभशब्दादवयविन्यर्थे अयच् स्यात् । उभयो मणिः । उभयः पाशः । ततो-**'नित्यम्'** । उभशब्दाद्वृत्तिविषये नित्यमयच्स्यात्स्वार्थे । तेन 'उभयतः', उभ-यत्र,' 'उभयपक्षविनीतनिद्राः' इत्यादि सिद्धम् । नन्वेवमकचि कृतेऽप्ययज्दुर्वारः,

---

प्रत्ययस्वरचित्स्वराभ्यामन्तोदात्तत्वस्यैव सत्त्वात् । न च सुबन्तात्तद्धितोत्पत्त्या चित्त्वप्रयुक्तमन्तोदा-त्तत्वमुभकाभ्यामित्यादौ सुबन्तस्य, के तु प्रकृतेरिति विशेष इति वाच्यं, तद्धितविधौ 'प्रातिपदिका'-दित्यधिकारेण प्रातिपदिकस्यैव प्रकृतित्वात् । स च जायमानो न्यायात्सुबन्तात्पर इत्यन्यत् । युष्मद-

अन्यत्रेति–द्विवचनपरत्वाऽभावे॥ 'उभयशब्दस्य द्विवचनं नास्ती'ति कैयटः। 'अस्तीति'

'वृत्तिविषये स्वार्थे नित्यमय'जिति त्वयैवोक्तत्वादिति चेत्, एवं तर्हि योगविभागस्येष्टसिद्ध्यर्थतया 'उभौ साभ्यासस्ये'ति निर्देशेन च यत्र द्विवचनं न श्रूयते तत्रैवायमिति व्याख्यायते, न तु वृत्तिविषय इति न दोषः। **तदुक्तमिति**। 'वार्तिककृते'ति शेषः। **उभयोऽन्यत्रेति**। उभयेति यः स्वार्थिकोऽयजन्तः सोऽन्यत्र प्रयुज्यते, न तु द्विवचने परत इत्यर्थः। न च 'उभा'वित्यादौ द्विवचनपरत्वं दुरुपपादम् 'उभयत आश्रयणेऽन्तादिवद्भावविरहादिति वाच्यम्; 'उभशब्दादुत्पन्नं द्विवचनं लुका नापहृतं यत्र ततोऽन्यत्रायजिति विवक्षितोऽर्थ'इति मनोरमायामुक्तत्वात्। एवं च सर्वादिषूभशब्दपाठोऽकजर्थ इति स्थितम्। भाष्ये तु—कप्रत्ययस्य स्वार्थिकत्वेन स्वार्थाभिधानसमर्थत्वादुभशब्दात्परस्य द्विवचनपरत्वमस्तीत्याश्रित्योभशब्दपाठः सर्वादिगणे प्रत्याख्यातः। मनोरमायां तु—भाष्ये प्रत्याख्यानं प्रौढिवादमात्रं, कृत्रिमस्यैव द्विवचनस्येह ग्रहीतुमुचितत्वादन्यथा त्रतसिलादावतिप्रसक्तत्वादित्यादि स्थितम्।

**उभयशब्दस्येति**। उभाववयवौ यस्य उभयः। 'उभादुदात्तो नित्य'मिति तयपोऽयच्। **नास्तीति**। अनभिधानादिति भावः। तथा चोभयशब्दस्य द्विवचनानुत्पादादसर्वविभक्तित्वेनाऽव्ययत्वे प्राप्ते 'तद्धितश्चासर्वविभक्ति'रिति सूत्रे 'कृत्तद्धितानां ग्रहणं च पाठे' इति भाष्ये कैयटेनावतारितम्। **अस्तीति**। 'पचतिकल्पं' 'पचतिरूप'मित्यादि-

स्मद्विषये तु वचनात्सुबन्तस्यैव प्रकृतित्वं तुस्यैव टेः प्रागकजिति बोध्यम्। न चाऽकचि तन्मध्यपतितन्यायेन तस्योभयग्रहणेन ग्रहणे उभकाववयवौ यस्येत्यर्थे उभकशब्दादयच्युभकय इति रूपं, के तु नेति विशेषः। 'कश्चिदानीं काकचोविशेष' इति भाष्यप्रामाण्येन तेषामनभिधानादिति शङ्क्यं न चेति। **द्विवचनपरत्वाभावेनेति**। अकचि तन्मध्यपतितन्यायेनोभशब्दस्य द्विवचनपरत्वं, के तु तेन व्यवधानान्न तस्य तत्त्वमित्यर्थः। 'उभादुदात्त' इति सूत्रे भाष्यकृताऽयचः प्रत्ययान्तरत्वेन व्याख्यानान्महाविभाषासम्बन्धस्यावश्यकत्वेन नित्यग्रहणमयोग्यं सयोगविभागेनोभशब्दाद्वृत्तिविषयेऽत्यन्तस्वार्थिकाऽयज्विधानार्थम्। अयच तद्विषये सुबुत्पत्तेः पूर्वमेव, स्वार्थिकत्वेनाऽन्तरङ्गत्वात्। अत एवाऽयज्विशिष्टस्योभस्य सर्वनामत्वात्सर्वनामप्रकृतिकसप्तम्याद्यन्तत्वेन त्रलाद्युत्पत्तिः। अत्र नित्यशब्दस्य वाच्यार्थविरोधान्महाविभाषाया असम्बन्धः। अयमप्याद्युदात्त एव, उदात्तग्रहणानुवृत्तेः। अयश्च वार्तिकप्रामाण्याद्यत्रोभशब्दस्योभयशब्दस्य वा द्विवचनविषयत्वाभावसम्भावना तत्रैव। अत एवोभयोर्वास इत्यादौ 'शयवासे'त्यलुकि नायच्, तद्ध्वनयन्वार्तिकमाह–**उभयोन्यत्रेति**। **द्विवचनपरत्वाभावे इति**। तत्परत्वविषयत्वाऽभावे इत्यर्थः। 'उभयो मणि'रित्यादौ तु न, 'लिट्यभ्यासस्योभयेषा'मितिनिर्देशेन योगविभागस्येष्टसिद्ध्यर्थत्वेन च तस्य क्वचिदप्रवृत्तेः। अतो रूपाद्यन्ते नायच्, रूपादेरस्मादनभिधानमेव वा। अयच्यकच् तु न वाच्यः रूपजीव्यत्वेन कस्यैव प्राप्तेः।

हरदत्तः । तस्माज्जस्ययजादेशस्य स्थानिवद्भावेन तयप्प्रत्ययान्ततया 'प्रथमचरमे'ति विकल्पे प्राप्ते विभक्तिनिरपेक्षत्वेनाऽन्तरङ्गत्वान्नित्यैव संज्ञा भवति । उभये । डतरडतमौ प्रत्ययौ । 'प्रत्ययग्रहणे तदन्तग्रहण'मिति तदन्ता ग्राह्याः । यद्यपि संज्ञाविधौ प्रत्ययग्रहणे

---

वारणेन पाठस्योपक्षीणत्वादनभिधाने प्रमाणं नास्तीति भावः । **तस्मादिति ।** उभयशब्दादित्यर्थः । **तयप्प्रत्ययान्ततयेति ।** 'उभयशब्दस्ये'ति शेषः । यदि तूभयशब्दादयच् स्वतन्त्रः, नतु तयप आदेश इति निष्कर्षः स्वीक्रियते, तदाऽत्र 'प्रथमचरमतये'ति वैकल्पिकप्राप्तिर्नास्त्येवेति बोध्यम् । **नित्यैवेति ।** 'उभया अमित्रा' इति तु छान्दसत्वाद्बोध्यम् । **डतरडतमाविति ।** 'किंयत्तदोर्निर्धारणे द्वयोरेकस्य

---

अपवादस्त्वन्यत्र चरितार्थः । अत्रेदं चिन्त्यम्,—'अकज्विधावेवोभग्रहणेन सिद्धे संज्ञाप्रणयनं किमर्थम् ? अनभिव्यक्तपदार्थकत्वात्संज्ञाव्यावृत्तिः, सर्वनामसाहचर्याच्च । अत एवोपसर्जनव्यावृत्ति'रिति ॥

'उभयोन्यत्रे'ति वार्त्तिके तयप्समानार्थकोऽप्ययज्गृह्यते, 'उभयो मणिः' 'उभये देवमनुष्या' इति भाष्ये तदुदाहरणात् । स्वार्थिकस्य च ग्रहणं, तदुपक्रमेण वार्त्तिकप्रवृत्तेः । एवञ्चाऽवयवद्वयारब्धमणिद्वय-विवक्षयोद्भूतावयवभेदविवक्षया वा द्विवचनमस्याऽसाध्वेव । एतन्मूलकमेवोभयस्याऽसर्वविभक्तित्व-न्तद्धितश्चेति सूत्रे कैयटेनोक्तं तदाह—**कैयट इति । हरदत्त इति ।** अत्राऽरुचिबीजं तु प्रागुक्तभाष्य-विरोधः । भाष्ये तूभशब्दपाठः प्रत्याख्यातः, कप्रत्ययस्याज्ञातावर्थविशिष्टस्वार्थे विधानेन द्वित्वसङ्ख्या-प्रकारकसङ्ख्येयविशेष्यकबोधविषयार्थानुवादकत्वरूपद्विवचनत्वेन वार्त्तिके द्विवचनशब्देन तस्यापि ग्रहणमुभशब्दग्रहणवत् । अत एवोभयोरुभावुभोभावित्यादौ नोपेयम् । तदुक्तं भाष्ये 'केप्यन्तरेण वचनन्द्विवचनपरो भविष्यति, कथं ?—स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्तीति प्रकृतिग्रहणेन स्वार्थिकानामपि ग्रहणं भवती'ति । इति-हेतोः प्रकृतेः—कादिप्रकृतेरुभशब्दस्य ग्राहकेण द्विवचन-शब्देन स्वार्थिकस्यापि ग्रहणमिति तदर्थः । त्रतसिलादिस्तु विभक्त्यादेस्स्वार्थे विहितावपि तत्त-त्कारकशक्तिप्रधानावेवेति न तयोरुक्तद्विवचनत्वमिति । **तस्मात्**—उभयशब्दात् । **जसीति ।** अव-यववद्वयारब्धसमुदायबहुत्वविवक्षायामित्यर्थः । **अन्तरङ्गत्वादिति ।** सर्वार्थबोधकत्वरूपार्थस्योभय-त्रापि निमित्तत्वेन न तत्कृतं नित्यसञ्ज्ञाया बहिरङ्गत्वम् । अत एव सञ्ज्ञोपसर्जनप्रथमादिशब्दे न विकल्पः, अर्थकृतबहिरङ्गत्वस्यानाश्रयणाच्चेति भावः । इदमर्वाचामनुरोधेन । परे त्वस्य पक्षेऽभावबोध-कतया 'निषेधाश्च बलीयांस' इत्यनेनाऽस्य प्राप्तिः । किञ्च ना'ऽन्तरङ्गं बलीय' इत्यस्यात्र विषयो, युगपत्प्रा-प्त्यभावात् । सञ्ज्ञानां बाध्यबाधकभावाभावेन प्रातिपदिकसञ्ज्ञासमकालमेव सर्वनामसञ्ज्ञाप्रवृत्तेः । अत एवोभये इत्यत्र सर्वनाम्नो विहितत्वेन शीभावसिद्धिः । 'पूर्वपरे'त्यादि तु पक्षे तदभावमात्रबोध-कम् । 'असिद्धं बहिरङ्ग'मित्यपि न, अन्तरङ्गोत्तरं बहिरङ्गप्राप्तेः । अन्तरङ्गे कर्त्तव्ये बहिरङ्गासिद्धत्वेऽपि तत्प्रवृत्त्युत्तरं बहिरङ्गप्रवृत्तेरनया वारयितुमशक्यत्वात् । बहुशस्तथा दृष्टत्वात्, तदुत्तरमप्येतत्प्रवृत्त्या पूर्वादिष्विव पक्षे तदभावविशिष्टे साधुत्वबोधनस्य शक्यत्वात् । 'जसीति विषयसप्तमी'ति पक्षेऽपि प्रातिपदिकादिसञ्ज्ञोत्तरमेवास्याः प्रवृत्तिः, तदुत्तरमेव तद्विषयात् । स्थानिवदतिदेशप्रापितायां निरवका-

तदन्तग्रहणं नास्ति, 'सुप्तिङन्त'मिति ज्ञापकात् । तथापीह तदन्तग्रहणम् । केवलयोः संज्ञायाः प्रयोजनाऽभावात् । अन्यतराऽन्यतमशब्दावव्युत्पन्नौ स्वभावाद्द्विबहुविषये निर्धारणे वर्तेते । तत्रान्यतमशब्दस्य गणे पाठाभावान्न संज्ञा । 'त्व' 'त्व' इति द्वावप्यदन्तावन्यपर्यायौ । एक उदात्तोऽपरोऽनुदात्त इत्येके । एकस्तान्त इत्यपरे । नेम इत्यर्धे । समः सर्वपर्यायः । तुल्यपर्यायस्तु नेह गृह्यते । 'यथासङ्ख्यमनुदेशः समाना'मिति ज्ञापकात् । अन्तरं बहिर्योगेति गणसूत्रे-अपुरीति वक्तव्यम् ।

---

डतरच्', 'वा बहूनां जातिपरिप्रश्ने डतमच्', 'एकाच्च प्राचा'मिति विहितौ । **अव्युत्पन्नाविति** । एतच्च पस्पशायां कैयटे स्पष्टम् । **एके इति** । काशिकाकाराः । 'एतं त्वं मन्ये' इत्युदात्तस्य 'उत त्वः पश्यन्' इत्यनुदात्तस्य च दर्शनादिति भावः ।

**एक इति** । प्रथम इत्यर्थः । संहितया पाठे तान्तत्वस्याऽस्फुटत्वेऽपि 'त्व'दिति तान्तश्छेत्तव्यः । अन्यथा एकश्रुत्या सकृदेव पठेत् । न च तान्ते विप्रतिपत्तव्यम् । 'त्वत्वसमसिमेत्यनुच्चानी'ति फिट्सूत्रात् । तथाच ऋङ्मन्त्रः—'स्तरीरु त्वद्भवति सूत उ त्वत्' इति । जयदेवोपि प्रायुङ्क्त—'त्वदधरमधूनि पिबन्त'मिति । त्वत्तोऽन्यस्या अधर इति विग्रहो न तु तवाधर इति, 'पश्यति दिशि दिशि रहसि भवन्त'मिति पूर्ववाक्येन सहाऽनन्वयापत्तेः । **सम इति** । तथाच श्रूयते—'मा नो वृकाय वृक्ये समस्मै' । 'उतो समस्मिन्' इत्यादि । 'सिमः कृत्स्ने च शक्ते च स्यान्मर्यादावबद्धयोः' ।

**गणसूत्र इति** । यद्यपि भाष्येऽष्टाध्यायीस्थसूत्रे 'अपुरीति वक्तव्य'मिति वार्तिकं पठितं, तथापि तद्गणसूत्रस्यैव शेषो न तु जसि विभाषाविधायकस्य । 'अत' इत्यधिकृत्य

---

शत्वाच्च । प्रत्यक्षस्य स्थानिवद्भावस्यानुमानिक्याऽनया बाधाऽयोगाच्च । सर्वनामसञ्ज्ञायामुक्तयुक्त्या यथोद्देशपक्षस्यैवौचित्यात् (च) । अत एव 'तयादेशे उभयप्रतिषेधः । तयपो ग्रहणेन ग्रहणाज्जसि विभाषा प्राप्नोती'ति स्थानिवत्सूत्रस्थं वार्त्तिकमयच्प्रत्ययान्तरमिति सूत्राशयप्रदर्शनेन भाष्ये प्रत्याख्यातं, न त्वन्तरङ्गन्यायबलेन । 'उभयी'त्यत्र ङीप्तु 'टिड्ढे'ति सूत्रे मात्रशब्दादारभ्यायचश्चकारात्प्रत्याहाराश्रयणेन सिद्धः । 'अत' इत्यनुवृत्त्या च 'कती'त्यादौ नातिप्रसङ्गः । तयब्ग्रहणन्तु सूत्रेऽव्युत्पत्त्यानुवादः । द्वित्रिशब्दप्रकृतिकाऽयजन्तस्य जसः शीविषयेऽनभिधानमेव । पुंस्येव वाऽनभिधानमिति तदाशय इति वदन्ति । **तथापीहेति** । 'प्रत्ययग्रहणे तदन्तग्रहण'मिति, 'प्रयोजनं सर्वनामाव्ययसञ्ज्ञाया'मिति च तदन्तविधिद्वयेन 'डतरान्तान्ते'त्याद्यर्थं परमकतरस्य, व्यपदेशिवद्भावेन कतरस्य च सञ्ज्ञासिद्धेति भावः । तत्र मानमाह—**केवलयोरिति** । **प्रयोजनाभावात्**—फलाभावादित्यर्थः । 'अदन्तादङ्गात्परस्य सर्वनाम्नो विहितस्ये'त्येव 'जसः शी'त्यादेरर्थादिति भावः । ननु 'डतर'ग्रहणेनैव सिद्धेऽन्यतरशब्दपाठो व्यर्थोऽत आह—**अन्यतरेति** । [illegible] **अपुरीति** । पूःशब्दस्य

अन्तरायां पुरि ॥ **पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्** ।१।१।३४। एतेषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणपाठात्सर्वत्र या प्राप्ता सा जसि वा स्यात् । पूर्वे । पूर्वाः । स्वाऽभिधेयापेक्षावधिनियमो व्यवस्था । व्यवस्थायां किम् ? । दक्षिणा गाथकाः। कुशला इत्यर्थः। असंज्ञायां किम् ?। उत्तराः

---

जसः शीविधानादावन्तात्प्राप्त्यभावात् । **अन्तरायामिति** । प्राकाराद्बाह्यायां, तदन्तर्वर्तिन्यां चेत्यर्थः । लिङ्गविशिष्टपरिभाषया एकादेशस्य पूर्वान्तत्वेन ग्रहणाद्वा सर्वनामतायाः प्राप्तिर्बोध्या ।

इत्थं सर्वादिगणं व्याख्यायेदानीं तदन्तर्गतत्रिसूत्रीसमानाकारामष्टाध्यायीस्थां त्रिसूत्रीं व्याचष्टे—**पूर्वपरावरेत्यादिना । स्वाभिधेयेति** । स्वस्य पूर्वादिशब्दस्याऽभिधेयेनापेक्ष्यमाणस्यावधेर्नियम इत्यर्थः । अपेक्ष्यते इत्यपेक्षः । कर्मणि घञ् । कथं तर्हि 'दिशः सपत्नी भव दक्षिणस्याः' इति । अत्राहुः—अस्त्येवात्रापि व्यवस्था, प्रसिद्धलाग्नावधिवाची शब्दः प्रयुज्यते । न च संज्ञात्वान्निषेधः । आधुनिकसङ्केतो हि संज्ञा, न च दिक्षु साऽस्तीति । 'दिक्षु चिरन्तनः, कुरुषु त्वाधुनिकः सङ्केत' इत्यत्र तु व्याख्यातृवचनमेव प्रमाणम् । एतेन 'विश्वेषां देवाना'मिति व्याख्यातम्, वेदे प्रसिद्धत्वाद्देवगणविशेषे विश्वशब्दस्याधुनिकसङ्केताऽभावात् । **दक्षिणा गाथका इति** । 'गस्थक'निति शिल्पिनि थकन् । इहामुकस्मात्कुशला इत्यवध्यन्वयसंभवेऽपि तन्नियमो नास्तीति भावः । एवम् 'धरे ताम्बूलरागः' 'उत्तरे प्रत्युत्तरे च शक्तः' इत्यपि प्रत्युदाहर्तव्यम् । **उत्तराः कुरव इति** । सुमेरुमवधिमपेक्ष्य कुरुषु उत्तरशब्दो वर्तते इत्यस्तीह व्यवस्था, किं त्वाधुनिकसङ्के-

---

विशेष्यत्वे नेत्यर्थः । तद्धनयन् स्त्रियामुदाहरति—**अन्तरायामिति** । **'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा । साधारणे समानेऽल्पे सङ्ख्यायां च प्रयुज्यते'** इति केचित् । **केवले** असहाये । तत्र सङ्ख्यान्यार्थाऽसहायवाची 'ष्णान्ता षट्' 'बहुषु बहुवचनम्' 'एकादाकिनिच्चे'त्यादिसूत्रेषु भाष्ये स्पष्टमुक्तः । 'एको गोत्रे' इति सूत्रशेषे भाष्ये प्रथमार्थोऽपि उक्तः । साधारणसमानार्थयोः सङ्ख्यावाचिन एवार्थतः पर्यवसानं, यथा 'तेनैकदिक्' 'चैत्रमैत्रयोरेका माते'त्यादौ । सर्वस्य द्वे इति सूत्रे 'एकैकस्य' इति भाष्यमुपादाय 'के चिदाहुरल्पार्थोऽप्येकशब्दोऽस्ती'ति वदता कैयटेन 'के चि'दित्युक्त्या तदर्थकाऽभावो ध्वनित एव । एवं च प्रधानार्थे न दृढं मानम् ।

**स्वाभिधेयापेक्षावधीति**,—समस्तः पाठः। नियमेनावधिसापेक्षेऽर्थे वर्तमानपूर्वादीनामित्यर्थः। **दक्षिणा गाथका इति** । उत्कर्षस्यावधिसापेक्षत्वादत्र व्यवस्थास्तीत्याग्रहे तु 'उत्तरे प्रत्युत्तरे च शक्त' इति प्रत्युदाहरणं बोध्यम् । **उत्तराः कुरव इति** । सुमेर्ववधिकपरदेशत्वरूपोपाधिविशिष्टकुरुषूत्तरशब्दः शब्दं प्रवृत्तिनिमित्तीकृत्य वर्तते इति व्यवस्थाविषयत्वं बोध्यम् । दिग्वाचकपूर्वादि-

कुरवः ॥ **स्वमज्ञातिधनाख्यायाम्** ।१।१।३५। ज्ञातिधनान्यवाचिनः स्वशब्दस्य या प्राप्ता संज्ञा सा जसि वा स्यात् । स्वे । स्वाः । आत्मीया इत्यर्थः । आत्मान इति वा । ज्ञातिधनवाचिनस्तु स्वाः । ज्ञातयोऽर्था वा ॥

**अन्तरं वहिर्योगोपसंव्यानयोः** ।१।१।३६। बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य या प्राप्ता संज्ञा सा जसि वा स्यात् । अन्तरे अन्तरा वा गृहाः । बाह्या

---

तोऽयमित्याहुः । **स्वमज्ञाति** । आत्माऽत्मीयज्ञातिधनवाची स्वशब्दः, तत्र ज्ञातिधनयोः पर्युदासादात्मात्मीयौ परिशिष्टावित्याशयेन व्याचष्टे–**आत्मीया इत्यर्थः । आत्मान इति वेति** । यत्त्वाहुः–आत्मनि स्वशब्दो नपुंसकः, तेन 'स्वे' 'स्वा' इत्युदाहरणं तत्राऽयुक्तमिति । तद्भसात् । 'स्वो ज्ञातावात्मनि, स्वं त्रिष्वात्मीये, स्वोऽस्त्रियां धने' इत्यमरसिंहोक्तेरात्मन्यपि स्वशब्दस्य पुंस्त्वात् । न च 'स्वो ज्ञातौ' इत्यमरकोशे 'आत्मनीत्यस्य 'स्व'मित्युत्तरेणान्वयादात्मवाची स्वशब्दो नपुंसक एवेति वाच्यम्, 'स्वः स्यात्पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीयेऽस्त्रियां धने' इति मेदिनीकोशविरोधेनात्मनीति पूर्वान्वयि, न तूत्तरान्वयीति व्याख्यातुमुचितत्वात् । किंच 'विभाषा जसी'ति प्रकरणे 'स्वमात्मीये' इत्येव वक्तव्ये गुरुनिर्देशं कुर्वन्सूत्रकारोऽप्यात्मवाचिस्वशब्दस्य पुंस्त्वे प्रमाणम् । तस्मात् 'स्वे' 'स्वाः' इत्यस्य आत्मान इति विवरणं सम्यगेवेति स्थितम् । **ज्ञातिधनवाचिनस्त्विति** । ताच्छील्येन णिनिना ज्ञातिधनयोरप्यात्मीयत्वं पुरस्कृत्य प्रवृत्तौ सर्वनामताऽस्त्येवेति ध्वनयति । एतदर्थमेव हि सूत्रे आख्याग्रहणं कृतम् । 'स्वमात्मात्मीयाख्याया'मिति वक्तव्ये ज्ञातिधनयोः पर्युदासाश्रयणं मात्रालाघवाय । न च 'स्वमात्मात्मीययोः' इत्युच्यमाने आख्याग्रहणं नापेक्षितमिति वाच्यम्; वस्तुतस्तु आत्मीयस्यापि ज्ञातित्वेन धनत्वेन विवक्षायां सर्वनामता मा भूदिति तस्यावश्यकत्वात् ।

**अन्तरं वहिर्योगोपसंव्यानयोरिति** । 'बहि'रित्यनावृतो देशो, बाह्यं चोच्यते । तत्राद्यमर्थं गृहीत्वाह–**बाह्या इत्यर्थ इति** । द्वितीये त्वाभ्यन्तरा इत्यर्थो

---

शब्दानां मध्याह्नसूर्यसंयोगिदेशावधिकोदयाचलारताचलसन्निहितदेश-तत्कालिकसूर्यसम्मुखयावद्देश–तत्कालिकतत्पृष्ठस्थयावद्देश–रूपोपाधिविशिष्टदिशि तत्तच्छब्दं प्रवृत्तिनिमित्तीकृत्य प्रवृत्तिरिति उपाध्यत्वर्गलतया व्यवस्थाऽस्त्येव, मध्याह्ने सूर्यस्योदङ्मुखत्वात् । देशवृत्तीनान्तत्तदवधिकोदयाचलसन्निहितत्वादि प्रवृत्तिनिमित्तमित्यन्यत्र विस्तरः । **'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये । छिद्रात्मीयविनाबहिरवसरमध्येन्तरात्मनि चे'ति** कोशोक्तार्थान्तरव्युदासार्थमाह–**अन्तरं बहिर्योगेति** । अयं त्रिसूत्र्या क्रियमाणः सञ्ज्ञाविकल्पो जसाधारणे शीभाव एव, न त्वकजाद्युदात्तत्वादाविति बोध्यम् ॥

इत्यर्थः । अन्तरे अन्तरा वा शाटकाः । परिधानीया इत्यर्थः ॥ **पूर्वादिभ्यो नवभ्यो वा** ।७।१।१६। एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः । पूर्वस्मात् । पूर्वात् । पूर्वस्मिन् । पूर्वे । एवं परादीनामपि । शेषं सर्ववत् । एकशब्दः सङ्ख्यायां नित्यैकवचनान्तः ॥ **न बहुव्रीहौ** ।१।१।२९। बहुव्रीहौ चिकीर्षिते सर्वनामसंज्ञा न स्यात् । त्वकं पिता यस्य स त्वत्कपितृकः । अहकं पिता यस्य स मत्कपितृकः । इह समासात्प्रागेव प्रक्रियावाक्ये सर्वनामसंज्ञा निषिध्यते । अन्यथा लौकिके विग्रहवाक्ये इव तत्राप्यकच्प्रवर्तेत । स च समासेऽपि श्रूयेत । अतिक्रान्तो भवकन्तमतिभवकानितिवत् । भाष्यकारस्तु 'त्वकत्पितृको''मकत्पितृक' इति रूपे इष्टापत्तिं

---

बोध्यः । बाह्येन ह्याभ्यन्तरस्य योगोऽस्ति । अर्थद्वयमप्याकरे स्थितम् । इदमेवाऽर्थद्वयं मनसि निधाय 'अन्तरायां पुरी'त्यत्र प्राकाराद्बाह्यायां तदन्तर्वर्तिन्यां वेति व्याख्यातम् । 'उपसंव्यान'शब्दोऽपि करणव्युत्पत्त्या उत्तरीयपरः, कर्मव्युत्पत्त्या त्वन्तरीयपरः। एकशब्दस्याष्टावर्था उक्तास्तत्र विशेषमाह-**सङ्ख्यायामिति**। अन्येषु तु सप्तस्वर्थेषु वचनान्तरमपि स्यादेव, 'एके' 'एके'षामिति यथेति भावः ॥

**न बहुव्रीहौ** । कृते बहुव्रीहौ निषेधो व्यर्थः । 'उपसर्जनीभूतास्तु न सर्वादयः' इति वक्ष्यमाणत्वात्। अत आह-**चिकीर्षित इति** । 'बहुव्रीहा'वित्यत्र विषयसप्तम्याश्रयणादयमर्थो लभ्यते । **त्वकमिति** । अज्ञाते कुत्सिते वा 'अव्ययसर्वनाम्ना'मित्यकच् । एवमहकमित्यत्रापि । **प्रक्रियावाक्ये इति** । अलौकिकविग्रहवाक्ये इत्यर्थः । तच्च 'युष्मद् सु पितृ सु' इत्याद्याकारकम् । ननु तत्राऽकच् प्रवर्ततां को दोष इत्यत आह- **स चेति** । न च निमित्तस्यानुपसर्जनत्वस्य विनाशोन्मुखत्वादकृतव्यूहपरिभाषया समासात्प्रागपि सर्वनामता न भविष्यतीति वाच्यं, तस्या अनित्यत्वात्। तत्र चैतत्सूत्रस्यैव ज्ञापकत्वात् । **अतिभवकानिति** । इदमेव ज्ञापनफलमिति भावः ।

---

**न बहुव्रीहौ** । 'चिकीर्षित'इत्यध्याहारलभ्यं । प्राचीनवृत्तिकृद्रीत्येदं व्याख्यानम् । नेदं सूत्रं बहुव्रीहेस्तत्त्वनिषेधकम्, उपसर्जनप्रतिषेधेन सिद्धेः । **प्रक्रियावाक्ये इति** । अलौकिके इत्यर्थः । न चालौकिके समासप्रवृत्त्यैकार्थीभावस्यापि तत्रैव कल्पनादुपसर्जनत्वादेव समासइव तत्रापि निषेधः सिद्ध इति वाच्यं, तत्रैकार्थीभावस्यारोपेऽपि स्वार्थविशिष्टार्थान्तरबोधकत्वरूपोपसर्जनत्वाभावेनातिभवकानित्यत्रेव प्राप्तस्याकचोऽभावार्थं सञ्ज्ञानिषेध इत्यत्र तात्पर्यात् । लौकिके तु नास्यप्रवृत्तिस्तत्र समासस्य चिकीर्षितत्वाभावात् । 'अतिक्रान्त' इत्यादिना पूर्वोक्तस्य लौकिकवाक्यस्य समासस्य च दृष्टान्तद्वयमुच्यते। अकृतव्यूहपरिभाषा तु नास्त्येवेति भावः। **भाष्यकारस्त्विति**।'अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयौ'मिति भाष्योक्तेर्वृत्तिकृद्रीत्येदं व्याख्यानमयुक्तमिति भावः। ननु स्मृतिद्वयप्रामाण्या-

कृत्वैतत्सूत्रं प्रत्याचख्यौ । यथोत्तरं मुनीनां प्रामाण्यम् । संज्ञोपसर्जनीभूतास्तु न सर्वादयः । महासंज्ञाकरणेन तदनुगुणानामेव गणे संनिवेशात् । अतः संज्ञाकार्यमन्तर्गणकार्यं च तेषां न भवति । सर्वो नाम कश्चित्तस्मै सर्वाय देहि । अतिक्रान्तः

---

'अत्यादयः क्रान्ताद्यर्थे द्वितीयये'ति प्रादिसमासः । **प्रत्याचख्याविति** । 'ङ्ग्वोः शू' डिति सतुग्ग्रहणं, प्रकृतिप्रत्यापत्तिवचनं वा अनित्यत्वे ज्ञापकं, लक्ष्यानुरोधाच्च व्यवस्थेति भावः । **यथोत्तरमिति** । तथाच सम्प्रति भाष्यकारोक्त्यैव व्यवस्थेति भावः ।

**गणे संनिवेशादिति** । एतेन 'पूर्वपरावरे'ति गणसूत्रे 'असंज्ञाया'मिति ग्रहणं मन्दप्रयोजनमिति ध्वनितम् । संज्ञायां यानि पूर्वादीनि तेषां गणे संनिवेशाऽभावात् । एवमष्टाध्यायीस्थे 'पूर्वपरावरे'ति सूत्रेऽपि 'असंज्ञाया'मित्येतत्त्यक्तुं शक्यम् । न च तदभावे जसि परतः संज्ञायाम् 'उत्तराः कुरव' इत्यत्राऽप्राप्तविकल्पः स्यादिति वाच्यं, सर्वनामसंज्ञाया अन्वर्थत्वेन संज्ञायामप्राप्तविधेरसंभवादसंज्ञायामेव पूर्वेण प्राप्ता संज्ञा जसि वा स्यादिति वक्तुमुचितत्वात् । **संज्ञाकार्यमिति** । सर्वनामसंज्ञाप्रयुक्तं स्मायादिकमित्यर्थः । **अन्तर्गणकार्यमिति** । 'अद्डुतरादिभ्यः', 'त्यदादीनामः', 'तदोः सः सौ-'

---

द्विकल्पोऽस्तु कथं प्रत्याख्यानमत आह–**यथोत्तरमिति** । एतच्च 'धिन्विकृण्व्योरचे'ति सूत्रे भाष्ये ध्वनितम् । एवञ्च वृत्तिकृदुक्तार्थकं नेदम् । तस्मादुपसर्जनप्रतिषेधानुवादकम् । यद्वा वार्त्तिककृता तु तस्य कृतत्वात्सूत्रकृतेदमारब्धम् । सञ्ज्ञाया अन्वर्थत्वमपि भाष्यकृदूहितमेव न 'सूत्रकृदूहित'मिति 'विभाषा दि'गिति सूत्रे कैयटे स्पष्टम् । सूत्रे सप्तमीनिर्देशः प्रथमार्थएव । अत एव वृत्तिकृदुक्तः प्रक्रियावाक्ये निषेध इत्यर्थो भाष्यकृता बहुव्रीहिपदस्य तदर्थवाक्यस्थपदलक्षणया साधितः । अन्यथा मूलोक्तरीत्या सिद्धे तादृशलक्षणाप्रयासो व्यर्थः स्यादिति तत्त्वम् । **तदनुगुणानामेवेति** । प्राधान्येनोपस्थितिविषयप्रसिद्धस्वीयसर्वार्थवाचकत्वसमानाधिकरणसर्वनामपदवत्त्वेन बोधकमहासञ्ज्ञया सर्वार्थोपस्थापकसर्वादीनामनुकरणावश्यकत्वेनेतरेषामनुकरणे मानाऽभावः । 'नाम'पदस्वारस्येन प्राधान्येनेत्यस्य लाभः । उपसर्जनं हीतरविशेषणतयैवोपस्थापकमिति तेन तद्व्यावृत्तिः । पूर्वादिसङ्ग्रहाय–**'स्वीयसर्वार्थे'ति** । सञ्ज्ञाव्यावृत्तये 'ऽभिव्यक्ते'ति न्यायमूलकं **'प्रसिद्धे'ति**ति भावः । सर्वादिसूत्रस्य चायमर्थः–'सर्वादीनि तदन्तानि चोक्तसर्वार्थवाचकत्वसमानाधिकरणसर्वनामपदवन्ती'ति । तत्र प्राप्ताऽप्राप्तविवेकन्यायेन सर्वनामपदवत्त्वांशे एव विधिः, सर्वार्थवाचकत्वस्य लोकतः सिद्धेः । एतेनान्वर्थसंज्ञोपस्थितसर्वार्थवाचकस्य विशेष्यतया 'सर्वादीनी'त्यस्य तद्विशेषणत्वात्तदन्तविधिरित्यपास्तम् । एकपदोपस्थाप्ययोरर्थयोः परस्परमुद्देश्यविधेयभावेनान्वयस्याव्युत्पन्नत्वात्, रूढ्यर्थयोगार्थयोरन्यतरवियोगेनान्यत्रान्वयायोगाच्च । तदन्ते सर्वार्थवाचकत्वं त्ववयवद्वारा बोध्यम् । एतेन तदाक्षिप्तस्य विशेष्यतेत्यपास्तम् । तद्विनाऽनुपपत्त्यभावेनाक्षेपायोगात्, आक्षिप्तस्य शाब्देऽन्वये मानाभावाच्च । केचित्तु आवृत्त्या एकस्योद्देश्यता परस्य विधेयतेति वदन्ति । परन्त्वाद्यः पक्ष इतो लघुरिति बोध्यम् । **संनिवेशादिति** ।

सर्वमतिसर्वः, तस्मै अतिसर्वाय देहि। अतिकतरं कुलम्। अतितत्॥

**तृतीयासमासे**।१।१।३०। अत्र सर्वनामता न स्यात्। मासपूर्वाय। तृतीयासमासाऽर्थवाक्येऽपि न। मासेन पूर्वाय॥ **द्वन्द्वे च**।१।१।३१। द्वन्द्वे उक्ता संज्ञा न। वर्णाश्रमेतराणाम्। समुदायस्यायं निषेधो न त्ववयवानाम्। नचैवं तदन्तविधिना सुट्प्रसङ्गः, 'सर्वनाम्नो विहितस्यामः सु'डिति व्याख्यातत्वात्॥

---

इत्यादिकमित्यर्थः। **अतिकतरमिति**। अत्राऽद्ड्डादेशो न। 'अतित'दित्यत्र तु त्यदाद्यत्वं,'तदोः सः सौ' इति सत्वं च नेति भावः। **तृतीयासमासे**। अत्र 'विभाषा दिक्समासे-' इत्यतः समास इत्यनुवर्तमाने पुनः समासग्रहणं गौणार्थस्यापि सङ्ग्रहार्थमित्यभिप्रेत्याह-**तृतीयासमासार्थेति**। इह 'पूर्वसदृशे'ति विहितः समासो गृह्यते, प्रतिपदोक्तत्वात्। न तु 'कर्तृकरणे' इति समासः, तेन 'त्वयका कृत'मित्यत्र निषेधो न भवति। 'ओकारसकारभकारादौ सुपी'ति व्यवस्थापयिष्यमाणत्वादिह सुप्रष्टेः प्रागकच्। **द्वन्द्वे च**। **समुदायस्येति**। तत्रैव द्वन्द्वशब्दस्य मुख्यत्वात्। न च द्वन्द्वे यानि सर्वादीनीति संबन्धः,कारकाणां क्रिययैवान्वयात्। न च 'द्वन्द्वे विद्यमानानि यानी'ति संबन्धः, विद्यतिक्रियाध्याहारे गौरवात्, निषेध्याया भवतिक्रियाया एव प्राधान्येन तदन्वयस्यैव न्याय्यत्वाच्चेति भावः।

**सुट्प्रसङ्ग इति**। न च 'द्वन्द्वे चे'ति निषेधसामर्थ्यात् 'वर्णाश्रमेतराणा'मित्यादौ सुण्न प्रसज्यत इति वाच्यम्, अनाङ्गस्य त्रतसिलादेर्व्यावृत्त्या तत्सामर्थ्यस्योपक्षीण-

---

तदनुमानादित्यर्थः। अत्रोपसर्जनत्वमितरविशेषणत्वेनार्थोपरथापकत्वम्। 'तदोः स' इति सूत्रे 'अदस एव दस्य नान्यस्ये'ति नियमेन 'द्वीयतेरप्रत्यये द्व इति प्राप्नोति स्व इति चेष्यते, यथालक्षणमप्रयुक्ते' इति भाष्यन्तु प्रकृतसूत्रनञ्सूत्रस्थानेकभाष्यविरोधादेकदेश्युक्तिरिति तद्विरोधः॥ **तृतीया समासे**। 'द्वन्द्वे चे'ति सूत्रस्थाकरोक्तरीत्या, 'न बहुव्रीहा'विति सूत्रस्थाकरोक्तरीत्या च प्रथमार्थे सप्तमी। अत्रापि समासस्यैव निषेधो नावयवानाम्। **समुदायस्येति**। 'अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशय'मिति भाष्योक्त्या प्रकरणविषयस्मृत्या एतत्प्रकरणस्थसप्तमीनिर्देशानां प्रथमार्थकत्वमिति तस्यावयवसञ्ज्ञानिषेधकत्वाभाव उचितः। किं चावयवमात्रस्य निषेधे 'वर्णाश्रमेतराणा'मित्यत्र सर्वार्थवाचकसर्वाद्यन्तत्वेन समुदायसंज्ञायां सुडापत्तिः, तस्य संज्ञानिषेधेऽपि सर्वार्थवाचकसर्वादित्वानपायात्। अवयवस्य व्यपदेशिवद्भावेन, समुदायस्य च द्वन्द्वे विद्यमानत्वेन निषेधे तु अवयवस्य निषेधे फलाऽभावः। न च त्वच्छब्दस्य तान्तत्वे काऽकचोर्विशेषेण फलम्। द्वन्द्वावयवमात्रे सुन्दरादिविशेषणान्वयाभाववत्कुत्सादिविवक्षाया अभावात्। समुदाये तद्विवक्षायां समुदायोत्तरप्रत्ययेनावयवगतकुत्सादेरपि बोधेनोक्तार्थत्वादवयवेभ्यः पृथक्तदनुत्पत्तेः। अन्यथा तव प्रत्येकं कप्रत्ययोत्पत्त्यापत्तिः। अत एवोक्तं भाष्ये-'अकज्झि न भवती'ति 'विभाषा जसी'ति सूत्रे। समुदायकुत्साविवक्षायामिति तदर्थः। कृतमिया समाससु भवत्येव। तत्र सर्वनामत्वात् निषेधः कल्पे 'वदधरमधुरमधूनि

**विभाषा जसि** ।१।१।३२। जसाधारं यत्कार्यं शीभावाख्यं तत्र कर्तव्ये द्वन्द्वे उक्ता संज्ञा वा स्यात् । वर्णाश्रमेतरे । वर्णाश्रमेतराः । 'शीभावं प्रत्येव विभाषे'त्युक्तमतो नाकच् । किंतु कप्रत्यय एव । वर्णाश्रमेतरकाः । **प्रथमचरमतयाल्पार्धकतिपयनेमाश्च** ।१।१।३३। एते जसः कार्यं प्रत्युक्तसंज्ञा वा स्युः । प्रथमे । प्रथमाः । शेषं रामवत् । तयः प्रत्ययस्ततस्तदन्ता ग्राह्याः । द्वितये । द्वितयाः। शेषं रामवत् । नेमे । नेमाः । शेषं सर्ववत् ॥ ❀ **विभाषाप्रकरणे तीयस्य ङित्सूपसङ्ख्यानम्** । द्वितीयस्मै । द्वितीयायेत्यादि । एवं तृतीयः । अर्थवद्ग्रहणान्नेह—

---

त्वात् । **जसाधारमिति** । शीभावेन जस्यपहृतेऽप्यौपचारिकमाधारत्वमत्र बोध्यम् । यद्वा जस इर्जसिः, तस्मिन् । सौत्रः सप्तम्या लुगित्यर्थतो व्याचष्टे-**जसाधारमिति** । अन्यथा सत्यकचि 'जसः शी'त्यस्य प्रवृत्तौ 'वर्णाश्रमेतरके' इत्यपि रूपं स्यादिति भावः। यदा अज्ञातः कुत्सितो वा इतरः—इतरक इत्यकचं कृत्वा वर्णाश्च आश्रमाश्च इतरकाश्चेति द्वन्द्वः क्रियते तदा रूपद्वयं स्यादेव । परं तु इतरशब्देन द्वन्द्वं कृत्वा अज्ञाता वर्णाश्रमेतरा इत्यज्ञातावर्थयोगो यदा क्रियते तदा 'वर्णाश्रमेतरका' इत्येकमेव रूपं साध्विति बोध्यम् । ननु द्वन्द्वावयवस्येतरशब्दस्याप्यकच् दुर्वारः, अवयवस्य सर्वनामताऽनपायात् । 'द्वन्द्वे चे'त्यनेन हि समुदायस्य निषेधो न त्ववयवानामिति चेत्; अत्राहुः—सिद्धान्ते हि 'जहत्स्वार्था वृत्ति'रिति पक्षो मुख्यस्तस्मिंस्तु पक्षेऽवयवानामित्युक्तं, निरर्थकत्वादज्ञातायर्थयोगाभावेनाऽकचः प्राप्तिरेव नास्ति । येस्तु 'द्वन्द्वे चे'ति चकारेणावयवेष्वपि संज्ञा निषिध्यत इत्युच्यते, तेषामजहत्स्वार्थावृत्तिपक्षाभ्युपगमेऽपि न दोष इति । **प्रथमचरम** । नेमशब्दस्य नित्यं प्राप्तेऽन्येषामप्राप्ते चायमारम्भः । **तयः प्रत्यय इति** । 'सङ्ख्याया अवयवे तय'बिति विहितः । **तीयस्येति** ।

---

पिबन्त'मिति जयदेवप्रयोगवलेनान्यार्थकत्वच्छब्दस्य सत्त्वेपि तस्य सर्वनामत्वे मानाभावात्, बहुसम्मतत्वाच्च । एतेन 'न बहुव्रीहा'विति वदस्यापि द्वन्द्वे चिकीर्षित इत्यर्थ' इत्यपास्तम् । फलाभावात् । जसाधारे शीभावे एव विकल्पविधायकस्य 'विभाषा जसी'त्यस्याऽसङ्गतेश्चेति भावः । उद्भूतावयवभेदसमूहस्य द्वन्द्वे विशेष्यतयोपसर्जने संज्ञाया अप्राप्त्या 'द्वन्द्वे चे'त्यपि 'न बहुव्रीहा'विति वदिति तत्त्वम् । अत एव 'गोस्त्रियो'रिति सूत्रे 'कुक्कुटमयूर्या'वित्यादौ ह्रस्ववारणाय 'द्वन्द्वे ने'ति वचनमारब्धमिति दिक् । **नाकजिति** । समुदायनिष्ठकुत्साबोधकोऽकज्नेत्यर्थः । **प्रथमचरम** । अत्र सूत्रे 'ने'ति न सम्बध्यते, प्रथमादिष्वसम्भवात् । 'जसी'त्यनुवृत्तेरर्थाधिकारादयमपि शीभावे एव विकल्पस्तदाह—**जसः कार्यं प्रतीति** । **तयः**—'सङ्ख्याया अवयवे तय'बिति । **प्रत्यय इति,—तदन्ता** इत्यत्र हेतुरुक्तः । **द्वितीयतृतीयौ** ... सम्प्रसारणे चास्ति साधू । **अर्थवदिति** । प्रतिपदोक्तस्येत्यपि

पटुजातीयाय । निर्जरः। **जराया जरसन्यतरस्याम्**।७।२।१०१। जराशब्दस्य जरस् वा स्यादजादौ विभक्तौ । **पदाङ्गाधिकारे तस्य च तदन्तस्य च** । अनेकाल्त्वात्सर्वादेशे प्राप्ते-। **निर्दिश्यमानस्यादेशा भवन्ति**। एकदेशविकृतस्यानन्यत्वाज्जर-

'द्वेस्तीयः', 'त्रेः सम्प्रसारणं चे'तिविहितस्य । **पटुजातीयायेति**। 'प्रकारवचनेजातीयर्'।

**जराया जर** । 'अष्टन आ विभक्तौ' इत्यतो 'विभक्ता'वित्यनुवर्त्य 'अचि र ऋतः' इत्यतोऽनुवृत्तेनाचीत्यनेन विशेष्यते, विशेषणेनेह तदादिविधिः, 'यस्मिन् विधिस्तदादावल्ग्रहणे' इत्यस्य तदन्तविधेरपवादत्वादित्याशयेनाह-**अजादौ विभक्ताविति** । अजादौ किम् ?। जराभ्याम् । जराभिः । विभक्ताविति किम् ?। जराया इदं जारम् । न च 'जराया असु'ङ्वास्त्विति वाच्यम् । जराशब्दात् 'तत्करोती'ति णिचि 'णाविष्ठवत्-' इति टिलोपे ततः क्विपि णिलोपे चैकदेशविकृतस्यानन्यतया 'ज'रित्यस्य जराशब्दत्वादसुङि सति 'ङिच्चे'त्यन्त्यस्य प्रवृत्त्या 'जसौ' 'जस' इति रूपापत्तेः। इष्यते त्वत्रापि 'जरसौ' 'जरस' इति । न च णिलोपस्य स्थानिवद्भावाद्विभक्तिपरत्वाभावेन 'जरसा'वित्यादि न सिध्यतीति शङ्क्यम्, 'क्वौ लुप्तं न स्थानिव'दिति निषेधात् । यद्यपि 'क्वौ लुप्तं न स्थानिव'दिति क्वाचित्कं, तथापीह तदाश्रयणे 'जर'सिति गुर्वादेशकरणमेव मानमित्यवधेयम् । **पदाङ्गाधिकार इति** । परिभाषेयं 'येन विधि'रित्यस्य प्रपञ्चभूता । अतएव मनोरमायां 'पदमङ्गं च विशेष्यं विशेषणेन च तदन्तविधि'रित्युक्तम् । 'विशेष्य'मिति तु प्रायेणेति बोध्यम् । तेन 'अल्लोपोऽनः' इति सूत्रे 'अङ्गावयवो योऽ'निति वक्ष्यमाणग्रन्थः स्वरसतः सङ्गच्छते । अत्र नव्याः-'नन्वाकरे 'तस्य तदुत्तरपदस्य चे'तिप्रचुरः पाठः । 'तदन्तस्य चे'ति पाठे तु बहुच्पूर्वकेष्वपि पदाङ्गाधिकारकार्याणि प्रवर्तेर'न्नित्याशङ्क्य समादधुः-'अनभिधानात्पदाङ्गाधिकारकार्याणि बहुच्पूर्वकेषु न प्रवर्तन्त इत्याशयेन फलितार्थकथनपरतया 'तदुत्तरपदस्य चे'ति पठितं न त्विदमपूर्वं वचन'मिति । सोपसर्गस्य सर्वस्य स्थाने जरसादेशमाशङ्क्याह-**निर्दिश्येति** । ननु तदन्तविधिनाऽपि

बोध्यम् । तेनाऽनन्ते आद्युदात्तस्य 'द्वितीयाय भागाये'त्येव । अनभावे तु स्मै भवत्येव ॥

**जराया** । 'अष्टन' इत्यतो विभक्तावित्यचि र इत्यतोऽचीति अनुवर्त्तते, तदादिविधिश्चेत्याह-**अजादाविति** । 'जरसा'वित्यादौ तु व्यपदेशिवद्भावेन । विभक्तौ किम् ? जराया इदं जारम् । प्रतिपत्तिलाघवाय जराया असुङ् न कृतः । **पदाङ्गाधिकारे इति** । पदमङ्गं च विशेष्यं, विशेषणेन तदन्तविधिरिति भावः । पदशब्देनोत्तरपदाधिकारः, केवलपदाधिकारश्च गृह्यत इति 'येन विधि'रित्यत्राकरे स्पष्टम् । **निर्दिश्यमानस्येति** । 'षष्ठी स्थानेयोगे'ति सूत्रमावर्त्तते । आवृत्तस्य चायमर्थः,-'षष्ठ्यन्तमुच्चार्यमाणमेव स्थानेन युज्यते न प्रतीयमान'मिति, [illegible] नन्वयं जर-

शब्दस्य जरस् । निर्जरसौ । निर्जरसः । इनादीन्बाधित्वा परत्वाज्जरस् । निर्जरसा । निर्जरसे । निर्जरसः । पक्षे हलादौ च रामवत् । वृत्तिकृता तु पूर्वविप्रतिषेधेनेनाऽतोः

---

जराशब्दान्तं यदङ्गं तत्रैव निर्दिश्यमानजराशब्दे जरसादेशेन भवितव्यं न त्वन्यत्रे-त्यत आह–**एकदेशविकृतस्येति** । पदाधिकारेऽपि तदन्तविधावुदाहरणं 'तदन्त-स्यापि रुत्वरत्वे 'दीर्घाहा निदाघ'इत्यादि वक्ष्यति । 'अलुगुत्तरपदे' इत्ययमुत्तरपदाधि-कारोऽपि पदाधिकारग्रहणेन गृह्यते । तत्फलं तु तत्रैव स्फुटीकरिष्यति । **पक्षे इति** ।

---

शब्दो न जराशब्दोऽत आह–**एकदेशेति** । स्थानिवत्सूत्रेणेति भावः । 'जराया' इत्यक्तपरिमाणस्य ग्रहात् । अनेन स्थानिबुद्ध्यैव कार्यप्रवृत्त्या 'निर्दिश्यमानस्ये'ति परिभाषाबाधाऽभावो बोध्यः । 'येन विधिस्तदन्तस्ये'त्यस्य तु संज्ञासूत्रत्वात्सूत्रस्थजराशब्दो जराशब्दान्तपर इति तदन्ते आदेशप्रवृत्तौ परिभाषाविरोधः स्पष्ट एवेति दिक् । **निर्जरसेति** । अत्र 'स्वादि'ष्विति पदत्वेन रुत्वं न, भत्वेन पदत्वबाधात् । सूत्रेपूत्तरसूत्रस्थस्य पूर्वत्रापकर्षवदग्रे लेखो वैचित्र्यायेति बोध्यम् । **पक्षे इति** । जरसा-देशाभावपक्षे इति भावः । इदमर्वाचामनुरोधेन । **परे तु** 'विभक्त्यादेशेभ्यः परत्वाज्जर'सित्यसङ्गतं, विभक्त्यादेशानामेव पूर्वविप्रतिषेधेनेष्टत्वात् । अत एव 'जराया' इति सूत्रे–'ऽजरांसी'त्यत्र नुम्जरसोः प्राप्तयोर्विप्रतिषेधेन जरसिति भाष्योक्तं सङ्गच्छते, अन्यथा त्वद्रीत्या शिभावात्पूर्वमेव जरसः प्रवृत्तौ तदा सर्वनामस्थानत्वाभावान्नुमा विप्रतिषेधविचाराऽसङ्गतिः स्पष्टैव । मम तु पूर्वविप्रतिषेधेन जरसः पूर्वं शिभावे प्रवृत्ते तत्सङ्गतिः स्पष्टैव । अत एव 'टाङसी'ति सूत्रे कैयटेनोक्तं–'भाष्यकारः सन्निपात-परिभाषया जरसादेशमनभ्युपयन्नतिजरेणातिजरादिति भाष्यं न त्वतिजरसिनाऽतिजरसादिति गौरव-मुद्भावितवा'निति । भवद्रीत्या पूर्वं जरसादेशे इनाद्यप्राप्त्या तदभावपक्षे च तस्याऽप्राप्त्या 'सन्निपात-परिभाषया जरसादेशमनभ्युपय'न्नित्यस्याऽसङ्गतिः स्पष्टैव । वृत्तिकारोप्याह–'अतिजरसिन अतिजरसा-दिति के चिदिच्छन्ति, यथा तु भाष्यं तथा नैतदिष्यत'इति । **लक्ष्यत इति** । नपुंसकद्वितीयैक-वचनेऽपि लुग्बाधेनाऽतोमित्यमि सन्निपातपरिभाषया जरसभावः । न च तत्र नाऽकारान्तसन्निपातकृत एवाजादिः किं तु तदभावेऽपि, एषा तु सन्निपातलक्षणविधिं विना न यस्य प्रवृत्तियोग्यता तत्रैवेति अत्र भवत्येव जरसिति वाच्यम् । मानाभावात्, 'टाङसी'ति सूत्रस्थेनातिजरेणेत्येतद्विषयकैयटेन विरोधाच्च । ध्वनितश्चेदं 'जराया' इति सूत्रे भाष्ये । तत्र हि पूर्वपक्षिणा 'अतिजरसं पश्ये'त्यत्र लुकस्मान्ने'ति पृष्टे परेण 'प्रथमैकवचनेप्यतिजरसुन्तिष्ठतीत्यत्रापि कुतो लुङ् शङ्क्यते' इति पृष्टे पूर्वपक्षिणा 'प्रथमैक-वचनेऽम्भावोत्तरमेव जरस्, तत्र जरसि कृते सन्निपातपरिभाषया न लु'गिति विशेष उक्तः । यद्वाऽम्भावे कृते सन्निपातपरिभाषया न जर'सिति पाठभेदेन विशेष उक्तः । ततः परेण–'यद्येवमति-जरसमतिजरसैरिति'अत्र न प्राप्नोति, अतिजर'मिति द्वितीयैकवचनादौ शङ्किते, सिद्धान्तिना 'इष्टमेवैत-त्सङ्गृहीतमतिजरमतिजरैरिति भवितव्य'मिति । अत्र विशेषोपपादनेऽन्त्यपाठ एव युक्तः । अन्यथा लुकः प्रथमैकवचने तेनाभावे उपपादिते द्वितीयैकवचनेऽपि तेन न्यायेन लुकोऽप्राप्तौ विशेषोक्तिरसङ्गतेति बोध्यम् । एवं स्थिते जरसादेशे कृते 'भाष्या ... स्त्वादौ भाष्यकारप्रक्षेपेण वारणं विफलमेव, तेषां

कृतयोः संनिपातपरिभाषाया अनित्यत्वमाश्रित्य जरसि कृते 'निर्जरसिन' 'निर्जरसा'-दिति रूपे, न तु 'निर्जरसा''निर्जरस इति केचि'दित्युक्तम्। तथा भिसि'निर्जरसै'रिति रूपान्तरमुक्तम्। तदनुसारिभिश्च षष्ठ्येकवचने 'निर्जरस्ये'त्येव रूपं स्वीकृतम्। एतच्च भाष्यविरुद्धम्॥

पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु ।६।१।

---

जरसादेशभावे। **तदनुसारिभिरिति**। ये तु 'निर्जरसिने'त्यादि व्याचक्षते तन्मतानुसारिभिरित्यर्थः। **निर्जरस्येत्येवेति**। पूर्वविप्रतिषेधेन स्यादेशे कृते जरसादेशो न प्रवर्तत इत्येकमेव रूपमिति तेषामाशयः। अतएव 'वीतजन्मजरसः परं शुचिर्ब्रह्मणः पद'मिति भारविप्रयोगमसमञ्जसं मत्वा 'वीतजन्मरजसः' इति पठनीयमिति तैरुक्तम्। **एतच्चेति**। भाष्यकृता हि 'टाङसी'ति सूत्रे इनातौ प्रत्याख्याय नादेशमदादेशं च विधाय नादेशे परे एत्वं 'आङि चापः' इत्यत्र 'आङि चे'ति योगं विभज्य साधितम्। तथा च 'निर्जरसिन' निर्जरसा'दित्येतद्भाष्यविरुद्धमिति स्पष्टमेव। न च नादेशे कृते हलि लोपप्रवृत्त्या 'अनेने'त्येतन्न सिध्यतीति शङ्क्यम्, नशब्दे परतो विशिष्याऽनादेशविधानात्। तथाहि 'अनाप्यकः' इत्यत्र 'अन्-नापि' इति पदच्छेदः। नपुंसकत्वात्सोर्लुकि नलोपः। 'नापी'ति समाहारद्वन्द्वात्सप्तम्येकवचनम्। न च ङसेरदादेशे कृते पररूपं स्यादित्यपि शङ्क्यम्, अकारोच्चारणसामर्थ्याद्दीर्घसंभवात्। तथा 'जराया जरसन्यतरस्या'मित्यस्मिन्नेव सूत्रे भाष्ये उक्तम्-'अतिजरैरिति भवितव्यं संनिपातपरिभाषये'ति। ततश्च 'निर्जरसै'रित्यपि भाष्यविरुद्धमेव। एतेन 'अतो भिसः'इति सूत्रे 'ए'सिति वक्तव्ये ऐस्करणं 'निर्जरसै'रिति रूपार्थमिति केषांचिद्व्याख्यानं प्रामादिकमिति स्पष्टमेव॥

---

परत्वात्। अतिखट्वशब्दे तेषां वारणाय तु प्रश्लेष आवश्यक इत्याहुः। **परे तु**-जरसादेशाद्विभक्तिसम्बन्धिकार्यमात्रं पूर्वविप्रतिषेधेन, तेन 'जराणा'मित्यादावपि पूर्वं नुटि जरसोऽभाव एव। एवञ्च 'ह्रस्वनद्याप' इत्यत्राकारप्रश्लेषे न फलं नापि मानम्। अत एव 'ङ्याप्ग्रहणेऽदीर्घ' इतिवज्जरसादेशस्य स्थानिवत्त्वप्रतिषेधो वार्त्तिककृता नारब्ध इत्याहुः।

**परिभाषाया अनित्यत्वमिति**। इनातोरिकारदीर्घोच्चारणमेसि कर्त्तव्ये ऐस्करणञ्च तदनित्यत्वे मूलमिति तदभिमानः। **षष्ठ्येकवचने इति**। एकसूत्रोपात्तत्वात्स्यादेशविषयेऽपि पूर्वविप्रतिषेध इति तद्भावः। **एतच्च भाष्येति**। इनातोरिकारदीर्घोच्चारणप्रत्याख्यानपरभाष्येत्यर्थः। 'इष्टमेवैतत्सङ्गृहीतमतिजरमतिजरैरिति भवितव्य'मिति 'जराया' इति सूत्रस्थभाष्ये इति चार्थः इत्यन्यत्र विस्तरः।

।६३। पाद दन्त नासिका मास हृदय निशा असृज् यूष् दोष् यकृत् शकृत् उदक आस्य–एषां पदादय आदेशाः स्युः शसादौ वा । यत्तु 'आसनशब्दस्य आसन्नादेश' इति काशिकायामुक्तं तत्प्रामादिकम् । पादः । पादौ । पादाः । पादम् । पादौ । पदः । पादान् । पदा । पादेनेत्यादि । **सुडनपुंसकस्य** ।१।१।४३। सुट् प्रत्याहारः । स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य । **स्वादिष्वसर्वनामस्थाने**

---

**पद्न्नो । शसादौ वेति ।** 'अनुदात्तस्य चर्दुपधस्ये'त्यतोऽन्यतरस्यामित्यनुवर्तत इति भावः । अत्र शस्प्रभृतयो निमित्ततयोपात्तास्ते च पदाद्यादेशानुरूपान्प्रकृतिविशेषानाक्षिपन्तीत्याह–**पाददन्तेति ।** यद्यपि 'शीर्षंश्छन्दसी'त्यतः 'छन्दसी'त्यनुवर्तते, तथापि भाषायामपि क्वचित्पदादयो भवन्ति 'मासश्छन्दसी'ति वार्तिके छन्दोग्रहणसामर्थ्यादिति वक्ष्यति । **प्रामादिकमिति ।** तथाहि–'आस्नो वृकस्य वर्तिका'-मिति मन्त्रे मुखादित्यर्थः, औचित्यात् । 'वृकस्य चिद्वर्तिकामन्तरास्यात्' इति मन्त्रान्तरसंवादाच्च । तथा 'हव्या जुह्वान आसनि' इति मन्त्रे मुखे इत्यर्थः । एवम् 'आसन्यं प्राणमूचुः' इत्यादावपि बोध्यम् । **सुडनपुंसकस्य ।** 'सुट् स्त्रीपुंसयो'रिति वक्तव्येऽनपुंसकस्येति वचनं ज्ञापकं 'प्रसज्यप्रतिषेधेऽपि नञ्समासोऽस्ती'ति कैयटः ।

---

**पद्न्नो ।** आदेशाः स्वानुरूपाः स्थानिनः आक्षिप्यन्ते इत्याह–**पाददन्तेति ।** 'अनुदात्तस्य चर्दुपधस्ये'त्यतोऽन्यतरस्यामित्यनुवर्तते । अत एव तुल्यास्यसूत्रादिभाष्ये 'आस्ये तुल्यः' 'पादेनोपहतं' 'मासेन पूर्वाये'त्यादिप्रयोगाः, 'हृदयस्य प्रिय' इति सौत्रप्रयोगश्चोपपन्ना भवन्ति । 'ये च तद्धिते' इति सूत्रस्थे 'वा केशे'ष्विति वार्तिके वाग्रहणन्तु तत्र सूत्रे वाग्रहणसम्बन्धबोधकम् । यद्यपि निशाशब्दस्य निश्शब्दप्रकृतिकत्वेन सागुरिमतसिद्धतयाऽऽपो वैकल्पिकत्वेन च वाकाचेत्युभयवन्निश्शियोः सूत्रे निश्ग्रहणं विनापि सिद्धिस्तथापि तुदि हलन्तस्यासाधुत्वबोधनायाऽत्र ग्रहणमिति वृत्त्यनुसारिणः । परे त्वनुदात्तस्येति सूत्रेऽन्यतरस्यामित्यस्य स्वरितत्वं नास्ति । अत एव 'शीर्षंश्छन्दसी'ति सूत्रे 'शीर्षन्निति प्रकृत्यन्तरन्द्रष्टव्यम्, आदेशत्वे हि छन्दसि शिरश्शब्दस्य प्रयोगो न स्या'दित्युक्तं भाष्ये । अन्यथा विकल्पानुवृत्त्यादेशत्वेऽपि दोषाभावेन तदसङ्गतिः स्पष्टैव । 'ये च तद्धिते'इत्यत्र चादेशत्वाय शिरसो ग्रहणं कर्त्तव्यमित्युक्तं, वा केशेष्विति च वक्तव्यमित्युक्तं । तस्माच्छसादिविषयाणि प्रकृत्यन्तराण्येव पदादयः । एवं मांस्पृत्स्वपि । अत एव नस्पृतोः स्थानिवद्भावादावन्तत्वमादाय 'नसां पृतां'मित्यादौ न नुडादि । 'नासिकाया नस्यत्तस्क्षुद्रे'ष्विति वार्तिके आदेशत्वमेव, 'नासिकाया' इत्युक्तेः । अत एव तद्विषये 'नासिकाक्षुद्र' इत्यादि न । अत एव 'पदादिषु मांस्पृत्स्नूनामुपसङ्ख्यान'-मिति वार्तिके स्थानिनिर्देशो न कृत इत्याहुः । **प्रत्याहार इति ।** व्याख्यानादौटष्टकारणेति भावः । **अक्लीबस्येति ।** पर्युदासपरतयाऽप्यस्य भाष्ये व्याख्यानाल्लघुत्वाच्चेति भावः । प्रसज्यप्रतिषेधेन व्याख्यानेऽत एव ज्ञापकालेपं चिदसमर्थसमासानां साधुत्वं बोध्यम् ।

१।४।१७। कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं पदसंज्ञं स्यात् ।

**यचि भम्** ।१।४।१८। यकारादिष्वजादिषु च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं भसंज्ञं स्यात् । **आ कडारादेका संज्ञा** ।१।४।१। इत ऊर्ध्वं 'कडाराः कर्मधारये' इत्यतः प्रागेकस्यैकैव सञ्ज्ञा ज्ञेया, या पराऽनवकाशा च । तेन

---

तेन 'असूर्यंपश्यानि मुखानी'त्यादि सिद्धम् । **स्वादिष्वसर्वनाम** । 'सु'रत्र सप्तमीबहुवचनमिति न शङ्क्यम्, किंतु 'असर्वनामस्थाने' इति पर्युदासात्प्रथमैकवचनमेव । 'सुपी'त्येव सिद्धे आदिग्रहणमधिकपरिग्रहार्थमित्याशयेनाह-**कप्प्रत्ययावधिष्विति** । नन्वेवं-राजे'त्यत्र नलोपो न स्यात्प्रत्ययलक्षणेन सर्वनामस्थानपरतया पदत्वाभावात् । नैष दोषः । सौ परतः 'स्वादिषु'इत्यनेन पदत्वाऽसंभवेऽपि सुब्विशिष्टस्य 'सुप्तिङन्तं'मिति पदसंज्ञायां हल्ङ्यादिना सुलोपे एकदेशविकृतन्यायेन नकारान्तस्य पदत्वात् । यदि तु 'स्वादिषु' इतियोगेन स्वादिषु परेषु पूर्वं पदं भवतीति पूर्वस्य पदसंज्ञां विधाय 'यचि भ'मित्यत्र 'यची'ति छित्त्वा यजादौ सर्वनामस्थाने परतः पूर्वं पदं नेति निषिध्यते, तदा औजसादिषु पदसंज्ञाभावेऽपि सौ परतः पदत्वसंभवात् 'राजे'त्यादौ नलोपे कार्ये न काप्यनुपपत्तिः । **यचि भम्** । 'यची'त्यल्ग्रहणेन सप्तमीनिर्देशात्तदादिविधिरित्याह-**यकारादिष्वित्यादि** । यकारादिषु किम् ? । गार्ग्यः । वात्स्यः । गर्गादिभ्यो यञि 'यस्येति चे'त्यकारलोपो यथा स्यात् । असर्वनामस्थानेषु किम् ? । सुपादौ, सुपादः, विद्वांसौ, विद्वांसः, दित्यवाहौ, दित्यवाह इत्यादौ 'पादः पत्' 'वसोः संप्रसारणम्' 'वाह ऊ'ठित्यादयो मा भूवन्निति ॥

**आ कडारा** । इह 'प्राक्कडारात्समासः' इत्यस्य नावधित्वं, व्याप्तिन्यायात् । 'तत्पुरुषो द्विगुश्चे'ति लिङ्गाच्च । संज्ञाद्वयसमावेशार्थं हि तत्र चकारः । तदाह-**कडाराः**

---

**स्वादिषु** । 'सु'रत्र प्रथमैकवचनम् । आदिग्रहणेन कबन्तानां ग्रहणं व्याख्यानात्, तदाह-**कप्प्रत्ययावधीति** । तदन्तेष्वित्यर्थः । **यचि भम्** । समाहारद्वन्द्वे सौत्रत्वान्न टच्, 'यचा'त्यनेन स्वादेर्विशेषणात्तदादिविधिः । **असर्वनामेति** । तेन 'सुपादा'वित्यादौ पादः पन्न । भसंज्ञा पदत्वकार्यप्रतिबन्धरूपेऽशास्त्रीयेपि कार्ये भवति, 'न पदान्ते'ति सूत्रस्थभाष्यप्रामाण्यात् । **आकडारा** । 'प्राक्कडारा'दिति नावधिः, 'तत्पुरुषो द्विगुश्चे'ति लिङ्गात् । समावेशार्थं हि तदित्याह-**कडारा इत्यादि** । व्याप्त्यर्थकाऽऽङा 'आ चार्था'दिति वक्तुं युक्तम् । **एकैवेति** । सङ्ख्यावाच्येकशब्दोपादानादवधारणं सम्पद्यत इति भावः । **या परेति** । द्वयोः सावकाशयोः परा, निरवकाशत्वे तु सैवेत्यर्थः । आभ्यामेव बाधसिद्धिस्तु न, अन्यत्र तव्यदादौ कृत्कृत्यप्रत्ययसञ्ज्ञादीनां समावेशदर्शनेन विरोधाऽभावाद्विप्रतिषेधाऽप्रवृत्तेः । लौकिकस्य तक्रकौण्डिन्यन्यायस्यापि लोके सञ्ज्ञाविषयेऽदर्शनेन शास्त्रेपि सञ्ज्ञा-

।६३। पाद दन्त नासिका मास हृदय निशा असृज् यूष् दोष् यकृत् शकृत् उदक आस्य—एषां पदादय आदेशाः स्युः शसादौ वा । यत्तु 'आसनशब्दस्य आसन्नादेश' इति काशिकायामुक्तं तत्प्रामादिकम् । पादः । पादौ । पादाः । पादम् । पादौ । पदः । पादान् । पदा । पादेनेत्यादि । **सुडनपुंसकस्य** ।१।१।४३। सुट् प्रत्याहारः । स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य । **स्वादिष्वसर्वनामस्थाने**

---

**पद्दन्नो । शसादौ वेति ।** 'अनुदात्तस्य चर्दुपधस्ये'त्यतोऽन्यतरस्यामित्यनुवर्तत इति भावः । अत्र शस्प्रभृतयो निमित्ततयोपात्तास्ते च पदाद्यादेशानुरूपान्प्रकृतिविशेषानाक्षिपन्तीत्याह—**पाददन्तेति** । यद्यपि 'शीर्षंश्छन्दसी'त्यतः 'छन्दसी'त्यनुवर्तते, तथापि भाषायामपि क्वचित्पदादयो भवन्ति 'मासश्छन्दसी'ति वार्तिके छन्दोग्रहणसामर्थ्यादिति वक्ष्यति । **प्रामादिकमिति ।** तथाहि—'आस्नो वृकस्य वर्तिका'मिति मन्त्रे मुखादित्यर्थः, औचित्यात् । 'वृकस्य चिद्वर्तिकामन्तरास्यात्' इति मन्त्रान्तरसंवादाच्च । तथा 'हव्या जुह्वान आसनि' इति मन्त्रे मुखे इत्यर्थः । एवम् 'आसन्यं प्राणमूचुः' इत्यादावपि बोध्यम् । **सुडनपुंसकस्य ।** 'सुट् स्त्रीपुंसयो'रिति वक्तव्येऽनपुंसकस्येति वचनं ज्ञापकं 'प्रसज्यप्रतिषेधेऽपि नञ्समासोऽस्ती'ति कैयटः ।

---

**पद्दनो ।** आदेशाः स्वानुरूपाः स्थानिन आक्षिप्यन्ते इत्याह—**पाददन्तेति** । 'अनुदात्तस्य चर्दुपधस्ये'त्यतोऽन्यतरस्यामित्यनुवर्तते । अत एव तुल्यास्यसूत्रादिभाष्ये 'आस्ये तुल्यः' 'पादेनोपहतं' 'मासेन पूर्वाय'त्यादिप्रयोगाः, 'हृदयस्य प्रिय' इति सौत्रप्रयोगश्चोपपन्ना भवन्ति । 'ये च तद्धिते' इति सूत्रस्थे 'वा केशे'ष्विति वार्तिके वाग्रहणन्तु तत्र सूत्रे वाग्रहणासम्बन्धबोधकम् । यद्यपि निशाशब्दस्य निश्शब्दप्रकृतिकत्वेन सागुरिमतसिद्धतयाऽऽपो वैकल्पिकत्वेन च वाकाचेत्युभयवन्निश्शियोः सूत्रे निश्ग्रहणं विनापि सिद्धिस्तथापि सुटि हलन्तस्यासाधुत्वबोधनायाऽत्र ग्रहणमिति वृत्त्यनुसारिणः । परे त्वनुदात्तस्येति सूत्रेऽन्यतरस्यामित्यस्य स्वरितत्वं नास्ति । अत एव 'शीर्षंश्छन्दसी'ति सूत्रे 'शीर्षन्निति प्रकृत्यन्तरन्द्रष्टव्यम्, आदेशत्वे हि छन्दसि शिरश्शब्दस्य प्रयोगो न स्या'दित्युक्तं भाष्ये । अन्यथा विकल्पानुवृत्त्यादेशत्वेऽपि दोषाभावेन तदसङ्गतिः स्पष्टैव । 'ये च तद्धिते'इत्यत्र चादेशत्वाय शिरसो ग्रहणं कर्तव्यमित्युक्तं, वा केशेष्विति च वक्तव्यमित्युक्तं । तस्माच्छसादिविषयाणि प्रकृत्यन्तराण्येव पदादयः । एवं मांस्पृत्स्वपि । अत एव नस्पृतोः स्थानिवद्भावादावन्तत्वमादाय 'नसां' 'पृतां'मित्यादौ न नुडादि । 'नासिकाया नस्यत्तस्क्षुद्रे'ष्विति वार्तिके आदेशत्वमेव, 'नासिकाया' इत्युक्तेः । अत एव तद्विषये 'नासिकाक्षुद्र' इत्यादि न । अत एव 'पदादिषु मांस्पृत्स्नूनामुपसङ्ख्यान'मिति वार्तिके स्थानिनिर्देशो न कृत इत्याहुः । **प्रत्याहार इति** । व्याख्यानादौटष्टकारणेति भावः । **अक्लीबस्येति** । पर्युदासपरतयाऽप्यस्य भाष्ये व्याख्यानाल्लघुत्वाच्चेति भावः । प्रसज्यप्रतिषेधेन व्याख्यानेऽत एव ज्ञापकात्केषांचिदसमर्थसमासानां साधुत्वं बोध्यम् ॥

१।४।१७। कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं पदसंज्ञं स्यात्।

**यचि भम्**।१।४।१८। यकारादिष्वजादिषु च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं भसंज्ञं स्यात्। **आ कडारादेका संज्ञा**।१।४।१। इत ऊर्ध्वं 'कडाराः कर्मधारये' इत्यतः प्रागेकस्यैकैव सञ्ज्ञा ज्ञेया, या पराऽनवकाशा च। तेन

---

तेन 'असूर्यंपश्यानि मुखानी'त्यादि सिद्धम्। **स्वादिष्वसर्वनाम**। 'सु'रत्र सप्तमीबहुवचनमिति न शङ्क्यम्, किंतु 'असर्वनामस्थाने' इति पर्युदासात्प्रथमैकवचनमेव। 'सुपी'त्येव सिद्धे आदिग्रहणमधिकपरिग्रहार्थमित्याशयेनाह–**कप्प्रत्ययावधिष्विति**। नन्वेवं-राजे'त्यत्र नलोपो न स्यात्प्रत्ययलक्षणेन सर्वनामस्थानपरतया पदत्वाभावात्। नैष दोषः। सौ परतः 'स्वादिषु'इत्यनेन पदत्वाऽसंभवेऽपि सुब्विशिष्टस्य 'सुप्तिङन्त'मिति पदसंज्ञायां हल्ङ्यादिना सुलोपे एकदेशविकृतन्यायेन नकारान्तस्य पदत्वात्। यदि तु 'स्वादिषु' इतियोगेन स्वादिषु परेषु पूर्वं पदं भवतीति पूर्वस्य पदसंज्ञां विधाय 'यचि भ'मित्यत्र 'यची'ति छित्त्वा यजादौ सर्वनामस्थाने परतः पूर्वं पदं नेति निषिध्यते, तदा औजसादिषु पदसंज्ञाभावेऽपि सौ परतः पदत्वसंभवात् 'राजे'त्यादौ नलोपे कार्ये न काप्यनुपपत्तिः। **यचि भम्**। 'यची'त्यल्ग्रहणेन सप्तमीनिर्देशात्तदादिविधिरित्याह–**यकारादिष्वित्यादि**। यकारादिषु किम्? । गार्ग्यः। वात्स्यः। गर्गादिभ्यो यञि 'यस्येति चे'त्यकारलोपो यथा स्यात्। असर्वनामस्थानेषु किम्? । सुपादौ, सुपादः, विद्वांसौ, विद्वांसः, दित्यवाहौ, दित्यवाह इत्यादौ 'पादः पत्' 'वसोः संप्रसारणम्' 'वाह ऊ'डित्यादयो मा भूवन्निति ॥

**आ कडारा**। इह 'प्राक्कडारात्समासः' इत्यस्य नावधित्वं, व्याप्तिन्यायात्। 'तत्पुरुषो द्विगुश्चे'ति लिङ्गाच्च। संज्ञाद्वयसमावेशार्थं हि तत्र चकारः। तदाह–**कडाराः**

---

**स्वादिषु**। 'सु'रत्र प्रथमैकवचनम्। आदिग्रहणेन कबन्तानां ग्रहणं व्याख्यानात्, तदाह–**कप्प्रत्ययावधीति**। तदन्तेष्वित्यर्थः। **यचि भम्**। समाहारद्वन्द्वे सौत्रत्वान्न टच्, 'यचो'त्यनेन स्वादेर्विशेषणात्तदादिविधिः। **असर्वनामेति**। तेन 'सुपादौ' इत्यादौ पादः पन्न। भसंज्ञा पदत्वकार्यप्रतिबन्धरूपेऽशास्त्रीयेपि कार्ये भवति, 'न पदान्त' सूत्रस्थसाध्यप्रामाण्यात्। **आकडारा**। 'प्राक्कडारा'दिति नावधिः, 'तत्पुरुषो द्विगुश्चे'ति लिङ्गात्। समावेशार्थं हि तदित्याह–**कडारा इत्यादि**। व्याप्त्यर्थकाऽऽङ्। 'आ चार्था'दिति वक्तुं युक्तम्। **एकैवेति**। सञ्ज्ञावाच्येकशब्दोपादानादवधारणं सम्पद्यत इति भावः। **या परेति**। द्वयोः सावकाशयोः परा, निरवकाशत्वे तु सैवेत्यर्थः। आभ्यामेव बाधसिद्धिस्तु न, अन्यत्र तव्यदादौ कृत्कृत्यप्रत्ययसञ्ज्ञादीनां समावेशदर्शनेन विरोधाऽभावादिप्रतिषेधाऽप्रवृत्तेः। लौकिकस्य तक्रकौण्डिन्यन्यायस्यापि लोके सञ्ज्ञाविषयेऽदर्शनेन शास्त्रेपि सञ्ज्ञा-

शसादावचि भसंज्ञैव न पदत्वम्। अतो जश्त्वं न। दतः। दता। जश्त्वम्। दद्भ्यामित्यादि। मासः। मासा। भ्यामि रुत्वे यत्वे च यलोपः—माभ्याम्, माभिरित्यादि। **भस्य** ।६।४।१२९। अधिकारोऽयम्। **अल्लोपोऽनः** ।६।४।१३४। अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याऽकारस्य लोपः स्यात् ॥

---

**कर्मधारय इत्यत इति। एकस्यैकैव संज्ञेति।** उभयोः सावकाशत्वे 'विप्रतिषेधे पर'मिति परैव गृह्यते, निरवकाशत्वे तु सैव। तत्र परस्या उदाहरणं—'धनुषा विध्यती'ति। अत्र शराणामपायं प्रत्यवधिभूतस्यैव धनुषो व्यधनं प्रति साधकत्वमित्युभयप्रसङ्गे परत्वात्करणसंज्ञा अपादानसंज्ञां बाधते। निरवकाशायाः पूर्वस्यास्तूदाहरणं 'भवतष्ठक्छसौ' भवदीय इति। अत्र हि 'सिति चे'ति पदसंज्ञा परामपि भसंज्ञां बाधते, निरवकाशत्वात्। तेन तकारस्य जश्त्वं भवति। प्रकृते तु पराऽनवकाशा भसंज्ञां पदसंज्ञा बाधते इति शसादावचि सैव ग्रहीतुमुचितेत्याशयेनाह—**या परेत्यादि। यलोप इति।** 'हलि सर्वेषा'मित्यनेन। 'लोपो व्योर्वली'ति तु न प्रवर्तते, यत्वस्याऽसिद्धत्वात्। **अल्लोपोनः।** 'भस्ये'त्यनेनाक्षिप्तः प्रत्ययविशेषः, अङ्गं चेति द्वयमनो विशेषणम्, अन् तु अकारस्येत्यभिप्रेत्य व्याचष्टे—**अङ्गावयव इत्यादि।** 'अन्नन्तस्य भस्याङ्गस्याकारस्य लोपः स्या'दिति प्राचां व्याख्याने 'तक्ष्णे'त्यादौ तकाराकारस्यापि लोपः स्यात्। 'भस्याङ्गस्यानोऽकारस्ये'ति व्याख्याने तु 'अनसा' 'मनसे'त्यादौ स्यात्। तन्त्रावृत्त्यादिनाऽन्नन्तस्य भस्याङ्गस्यानोऽकारस्येति व्याख्यानेऽपि 'अनस्तक्ष्णे'त्यादाव-

---

विषयेऽप्रवृत्तेश्च। **तेनेति।** अनवकाशत्वेनेत्यर्थः। परोदाहरणन्त्वपादानमुत्तराणि कारकाणि बाधन्त-इत्याद्याकरे स्पष्टम्। विरोधाद्यभावेन विप्रतिषेधसूत्राद्यप्रवृत्तावपि परत्वादेरन्यत्र बलत्त्वेन दृष्टतयाऽत्रापि तेन व्यवस्था। अपादानादिसंज्ञानां समावेशे तु तत्कार्ययोः पर्यायापत्तिर्दोषः। भपदसञ्ज्ञयोः समावेशे तु 'राज' इत्यादौ नलोपाद्यापत्तिर्बोध्या। न च 'राजन्य' इत्यादौ 'सुप्तिङन्त'मिति पदत्वन्दुर्वारं, परया भसञ्ज्ञया तु न बाधस्तस्या अन्तरङ्गत्वादिति वाच्यम्; समानावधिकाया अन्तरङ्गाया अप्यनया बाध्यसामान्यचिन्तयाऽपवादत्वेनैव बाधादित्याहुः। आकडारस्थसञ्ज्ञासु च यथोद्देशपक्ष एवेत्यदद्यङ्शब्दे निरूपयिष्यते। भपदसञ्ज्ञाविधावङ्गप्रकरणे 'भस्ये'त्यस्य पाठेनाङ्गमित्यनुवर्त्याङ्गं सत्पदम्भवति भं (न)भवतीत्यर्थेन ताभ्यान्तस्याः समावेश एव न पर्याय इति बोध्यम्। पुरुषसञ्ज्ञा-परस्मैपदसञ्ज्ञयोरपि 'णलुत्तमो वे'ति ज्ञापकात्समावेशः। गुरुलघुसञ्ज्ञे वर्णस्य, नदीघिसञ्ज्ञे तदन्तस्येति भिन्नावधिकत्वात्समाविशतः। 'उभे अपि वर्णस्ये'ति पक्ष आकरे उपलभ्यमानोऽप्येकदेशिन एव, समावेशानुपपादनादिति दिक्। **यलोप इति।** 'हलि सर्वेषा'मित्यनेनेत्यर्थः ॥

**अल्लोपोऽनः।** तपरकरणं किम्?, 'अनितेः' किप्यान इत्यादौ लोपाभावाय, अन्त्वन्तत्रैकदेश-

**रषाभ्यां नो णः समानपदे** ।८।४।१। एकपदस्थाभ्यां रेफषकाराभ्यां परस्य नस्य णः स्यात् । यूष्णः । यूष्णा । 'पूर्वस्मादपि विधौ स्थानिवद्भाव' इति पक्षे

---

तिव्याप्तिरेवेति भावः । सूत्रे तपरकरणं नञ्समासभ्रमनिवारणाय कृतमित्येके ।

ननु प्राणितीति प्राण्, ततः शसादिप्रत्यये 'प्राणः' 'प्राणे'त्यादौ 'अनितेः' इति णत्वस्याऽसिद्धतयाऽतिप्रसङ्गः स्यादिति तद्वारणायैव तपरकरणमस्त्विति चेन्मैवम् । सवर्णदीर्घे कृते अन एव तत्राऽसत्त्वात् । न च 'वार्णादाङ्गं बलीयः' इति सवर्णदीर्घात्प्रागेव लोपः प्रवर्तत इति अस्त्येवान्रूपमिति वाच्यम्, तथाहि सति व्यावर्त्यालाभेन तपरकरण-वैयर्थ्यस्य तदवस्थत्वात् । वस्तुतो वार्णपरिभाषेह न प्रवर्तते, युगपत्प्रवृत्तावेव वार्णादाङ्गस्य बलीयस्त्वात् । क्विपि 'अनुनासिकस्ये'ति दीर्घे सवर्णदीर्घात्प्रागपि अनोऽभावाच्च । तस्माद्भ्रमनिरासार्थमेव तपरकरणं न तु 'प्राण'इत्यादावनोऽकारलोपवारणार्थमिति तेषामाशयः । वस्तुतस्तु एकदेशविकृतन्यायेन भवत्येव तत्राऽतिप्रसङ्ग इति तपरकरणमत्रावश्यकमेवेति नव्याः ॥ **रषाभ्यां नो णः** । अत्र 'अपदान्तस्य मूर्धन्यः' इत्यनुवर्त्य णग्रहणं, 'पदान्तस्ये'ति सूत्रं च भाष्ये प्रत्याख्यातम् । **समानपदे इति** । निमित्त-निमित्तिनोरपदस्थत्वाऽसंभवात्पदे इतीयतैव सामर्थ्यादेकपदत्वे लब्धे समानग्रहणं यत्समानमेव पदं, निमित्तवत्पदभिन्नपदस्थत्वाभाववदिति यावत्, तत्र यथा स्यादित्येतदर्थम् । तेन समासे 'रामनाम' 'गन्धर्वगान'मित्यादौ न भवति । तत्र हि नकारस्यैकपदवृत्तित्वेऽपि निमित्तवत्पदभिन्नपदस्थत्वात् । भवति हि 'यूष्ण' इत्यादौ णत्वम् । निमित्तवत्पदभिन्नपदत्वाऽभाववद्वृत्तित्वान्नकारस्य । 'मातृभोगीण' इत्यादावपि नस्य णत्वं भवत्येव, प्रत्ययवृत्तित्वेऽपि निमित्तवत्पदभिन्नपदवृत्तित्वाऽभावात् । एतेन समानग्रहणमखण्डपदलाभार्थमिति व्याख्याय 'रामनामे'त्यादावतिप्रसङ्गे निवारिनेऽपि 'मातृभोगीण' इत्यादावव्याप्तिः स्यादेवेति केषांचिदुक्तिः परास्ता । उक्तरीत्या त्वव्याप्तिशङ्काया निरस्तत्वात् । **यूष्ण इति** । यूषो मण्डः । 'मुद्गामलकयूषस्तु भेदी

---

विकृतन्यायेने'त्यन्यत्र विस्तरः । **पूर्वस्मादिति** । 'अचः परस्मि'न्नित्यत्र पूर्वविधावित्यस्यावृत्त्या पञ्चमीसमासाश्रयणादयमर्थो लभ्यते इति भावः । तेन 'प्रत्यैपिप'न्नित्यादिसिद्धिः, अन्यथा जुस् स्यात् । अत एवोभे अभ्यस्तमिति सूत्रे 'उभे'ग्रहणं यत्रोभे श्रूयेते तत्रैवाभ्यस्तसञ्ज्ञार्थम्, 'ऐत्सन्' इत्यत्राभ्यस्त-लक्षणो जुस्मा भूदिति उक्ते, शपैकादेशस्य पूर्वविधाविति पञ्चमीसमासेन स्थानिवत्त्वाज्जुसोऽप्राप्तेरसति प्रयोजने उभेग्रहणं सहार्थमित्युक्तम् । तेन उभे यत्र श्रूयेते इत्यर्थेऽपि प्रत्यैपिपन्निति सिद्धये आवश्यकेन पञ्चमीसमासेन तत्सिद्धावुभेग्रहणं सहार्थमिति तद्भावः । **इति पक्षे त्विति** । तुनाऽस्याऽनित्यत्वं सूचितं । 'प्रविगणय्ये'ति भाष्योदाहरणमपि तदनित्यत्वे एव सङ्गच्छते । अत एव 'द्वे गौ'रित्यत्र वृद्धेः

त्वङ्व्यवाय इत्येवात्र णत्वम् । **पूर्वत्रासिद्धीये न स्थानिवदिति** तु इह नास्ति, **तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति** निषेधात् ॥

**न लोपः प्रातिपदिकान्तस्य** ।८।२।७। 'ने'ति 'प्रातिपदिके'ति च लुप्तषष्ठीके

---

दीपनपाचनः' इति दर्शनात् । **पूर्वत्रासिद्धीये न स्थानिवदिति** । एतच्च न्याय-सिद्धं, त्रिपाद्या असिद्धत्वेन तत्रत्ये कर्तव्ये 'अचः परस्मि'न्नित्यतिदेशस्याप्रवृत्तेः ।

**तस्येति** । तस्य–'पूर्वत्रासिद्धे ने'त्यस्य । तथाच स्थलत्रये स्थानिवद्भावो वक्तव्य इत्यर्थः । संयोगादिलोपे–चक्र्यत्र । इह 'अचः परस्मि'न्निति यणादेशस्य स्थानिवत्त्वात् 'स्कोः' इति कलोपो न । लत्वे-निगाल्यते । अत्र णिलोपस्य स्थानिवत्त्वा-'दचि विभाषे'ति लत्वम् । णत्वे–माषवपनी । इह 'यस्येति चे'त्यल्लोपस्य स्थानिवत्त्वेन नकारस्य प्रातिपदिकान्तत्वाभावाण्णत्वं न । ननु 'गर्गभगिनी'त्यत्रेव 'माषवपनी'त्य-त्रापि णत्वप्राप्तिर्नास्त्येव, 'उत्तरपदं यत्प्रातिपदिकं तदन्तस्ये'ति वक्ष्यमाणत्वात् । अत्राहुः–'साधनं कृते'ति ल्युडन्तेन समासे पश्चान्ङीपि 'यस्येति चे'त्यल्लोपे कृते नका-रस्योत्तरपदान्तत्वाण्णत्वप्राप्तिरस्त्येवेति। स्यादेतत् 'यूष्ण'इत्यादौ 'रषाभ्या'मित्यस्य नोप-योगः,ष्टुत्वेनैव रूपसिद्धेः । अतएव च 'षग्रहणमुत्तरार्थ'मित्याकरे स्थितमिति चेदुच्यते-उत्तरार्थतयाऽपीह षग्रहणं स्थितं, ततश्च 'यूष्णः' 'पुष्णाती'त्यादौ 'रषाभ्या'मिति णत्वस्य प्रवृत्तिः केन वार्यताम् ?। ष्टुत्वेनेति चेन्न; तस्यासिद्धत्वात् । न च वचनप्रामाण्या-त्सिद्धत्वं शङ्क्यम्, 'पुष्टः' 'पुष्टिः' 'षष्ठः' इत्यादौ चरितार्थत्वात् । 'नस्य षयोगे ण' इत्यंशोऽचरितार्थ इति चेन्न, तस्य पृथगनुक्तेः। इह षात्परस्येत्युक्तिप्यचरितार्थत्वस्यापि तुल्यत्वाच्च । एवमप्युत्तरार्थं षग्रहणमित्याकरो विरुध्यत इति चेन्न; आकरेऽपीह षग्रहणं विना पुष्णातीत्यादिलक्ष्यस्याऽसिद्धिर्नास्तीत्येतावदभिप्रेतं, न तु'पुष्णाती'त्यादौ'रषाभ्या'-मित्यस्याऽप्रवृत्तिरिति ।

**नलोपः प्रातिपदिकान्तस्य । लुप्तषष्ठीके इति** । सौत्रत्वात् । न तु षष्ठीतत्पुरुषौ,

---

स्थानिवत्त्वान्न संबुद्धिलोपः । 'पूर्वस्मान्निमित्तत्वेनाश्रिता'दिति व्याख्याने तु न मानम् । केचित्तु पूर्वस्मादव्यवहितपरस्य कार्ये एव स्थानिवत्त्वं, 'प्रविगणय्ये'त्यादौ तु स्थानिवद्भावलब्धाकारस्यैव व्य-पदेशिवद्भावेन लघुपूर्वत्वमादाय न दोषः, तदनित्यत्वे च न मानमित्याहुः। **पूर्वत्रासिद्धे नेति** । अति-देशदृष्ट्या त्रिपाद्या असिद्धत्वेन न्यायसिद्धानुवादोऽयम् । तत्फलं त्वतिदेशान्तराणां वतिघटितानान्त्रि-पाद्यां प्रवृत्तिबोधनम् । अत एवामी क्षीरपेणेत्यादौ मीत्वणत्वे भवतः । अत्रैकारस्याऽदस्सम्बन्धित्वं 'पे' इत्यस्यैकाजुत्तरपदत्वधान्तवद्भावाधीनम् । **तस्य दोष इति** । इदं वाचनिकमेव 'न मुने' इति । सूत्रे 'ने'ति योगविभागस्तु भाष्ये न दृश्यते । अत एव सिद्धकाण्डं वार्तिककृतारब्धं 'न लोपः सु'विति

पदे। प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नकारस्य लोपः स्यात्। नलोपस्याऽसिद्धत्वाद्दीर्घत्वमेत्त्वमैस्त्वं च न। यूषभ्याम्। यूषभिः। यूषभ्य इत्यादि॥

**विभाषा ङिश्योः** ।६।४।१३६। अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याऽकारस्य लोपो वा स्यान्ङिश्योः परयोः। यूष्णि। यूषणि। पक्षे रामवत्। 'पद्दन्न' इति सूत्रे 'प्रभृति'ग्रहणं प्रकारार्थम्। तथाच—औङः श्यामपि दोषन्नादेशो भाष्ये ककुद्दोषणी इत्युदाहृतः। तेन 'पदङ्घ्रिश्चरणोऽस्त्रियाम्', 'स्वान्तं हृन्मानसं मन' इति सङ्गच्छते। 'आसन्यं प्राणमूचु'रिति च। आस्ये भवः आसन्यः।

---

पूर्वपदे सापेक्षत्वेन समासासंभवात्, प्रातिपदिकस्य पदविशेषणत्वाच्चेति भावः।

**तदन्तस्येति**। षष्ठीतत्पुरुषोऽयम्। तस्य—प्रातिपदिकसंज्ञकपदस्याऽन्तो यो नकारस्तस्येत्यर्थः। यदि तु प्रातिपदिकेनैव'ने'त्यनेनापि पदं विशेष्यते तदा विशेषणेन तदन्तविधौ सौत्रमन्तग्रहणं शक्यमकर्त्तुमिति मनोरमायां स्थितम्। प्रातिपदिकेति किम्?। अहन्। पदमिति किम्?। राजानौ। राजानः॥

**विभाषा ङिश्योः**। 'शी'ति 'नपुंसकाच्चे'ति विहितो गृह्यते, न तु 'जश्शसोः शिः'। तस्मिन्नभत्वात्। 'भस्ये'त्यनेनाऽसर्वनामस्थाने इत्यस्यैव यजादेराक्षेपात्। तदेतदाह—**असर्वनामस्थानेत्यादि**। **ककुद्दोषणी इति**। ककुत्-दोषणी इति च्छेदः। एकपदत्वे त्वनुपपत्तिरनुपदमेव वक्ष्यते। **आसन्यमिति**। 'ये चाभावकर्मणो'रिति

---

सूत्रं च सूत्रकृता। **प्रकारार्थमिति**। प्रकारः सादृश्यं, तच्च सुप्त्वेन। 'मांसपचनी'त्यादावपि 'न लुमते'ति निषेधानित्यत्वाच्छसादिपरत्वं बोध्यम्। शब्दत्वेन सादृश्यमित्यन्ये। तन्न। 'वा शोकष्यञ्रोगे'ष्वित्यस्य वैयर्थ्यापत्तेः। 'नासिकाया यत्तस्क्षुद्रेषु न'सिति भाष्यपठितवार्त्तिकस्य वैयर्थ्यापत्तेश्च। 'आसन्यं प्राणमूचु'रित्यत्रापि तद्वदेव शसादिपरत्वम्। अत्र 'सुप्रभृति'ष्विति वाच्ये 'शस्प्रभृति'ष्वित्युक्त्याऽन्यत्र क्वचिदेव प्रवृत्तिर्बोध्यते। अत एव पद्दन्निशां ग्रहणं चरितार्थं, तेषां द्विविधानामपि कोशसिद्धतया तत्र व्यवस्थार्थताया एव वक्तव्यतया सुप्प्रत्ययमात्रे प्रवृत्तौ तस्या असम्भवेन तद्वैयर्थ्यं स्पष्टमेव। प्रकारार्थत्वे प्रमाणमाह—**भाष्ये इति**। तत्र हि 'शस्प्रभृति'ष्वित्युच्यतेऽशस्प्रभृतिष्वपि दृश्यते 'शलादोषणी ककुद्दोषणी याचते महादेव' इत्युक्तम्, आद्यस्याश्विगुप्रैषे पठ्यमानस्य शलाकाकारे दोषणी इत्यर्थः। छान्दसः कादिलोपः। 'एतेन दोष' इत्यकारान्तस्य दूषणवाचिनो दोषन्नादेश' इत्यपास्तम्। **तेन पदङ्घ्रिरिति**। न च कोशस्थपदादीनां पादाद्यादेशत्वे पादशब्दिभ्यः पृथक्पदादिवचनं तत्र व्यर्थं, न हि स्थान्यादेशयोः पृथगुपादाने प्रयोजनमस्ति, स्थान्युपादानेनैव तदर्थाभिधानसमर्थादेशस्याप्यर्थबोधनात्। अत एव नसाद्यादेशानाङ्कोशेऽनुपन्यास इति वाच्यम्, पदादीनां भाष्यरीत्याऽनादेशत्वात्। तत्त्वेपि 'तृज्वत्क्रोष्टु'रिति वद्व्यवस्थार्थमस्यावश्यकत्वेन सौ परतो हृदादीनां प्रयोगार्थं प्रकारार्थत्वस्यावश्यकत्वात्। स्पष्टं चेदं 'वा शोके'ति सूत्रे मूले।

दोष्शब्दस्य नपुंसकत्वमप्यत एव भाष्यात्। तेन 'दक्षिणं दोर्निशाचर' इति सङ्गच्छते। 'भुजबाहू प्रवेष्टो दो'रिति साहचर्यात्पुंस्त्वमपि। 'दोषं तस्य तथाविधस्य भजत' इति। द्वयोरह्नोर्भवो द्व्यह्नः। **सङ्ख्याविसायपूर्वस्याह्नस्याऽहन्नन्यतरस्यां ङौ**।६।३।११०। सङ्ख्यादिपूर्वस्याह्नस्याऽहनादेशो वा स्यान्ङौ। द्व्यह्नि। द्व्यहनि। द्व्यह्ने। विगतमहर्व्यह्नः। व्यह्नि। व्यहनि। व्यह्ने। अह्नः सायः सायाह्नः। सायाह्नि। सायाहनि। सायाह्ने। **इत्यदन्ताः**॥

विश्वपाः। **दीर्घाज्जसि च**।६।१।१०५। दीर्घाज्जसि इचि च परे प्रथमयोः

---

प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपो न। **अत एवेति**। 'ककुद्दोषणी' इति भाष्यप्रयोगादेवेत्यर्थः। यद्यपि ककुच्च दोश्च तयोः समाहारः ककुद्दोः। ककुद्दोश्च ककुद्दोश्च ककुद्दोषणी इत्येकशेषे कृते भाष्यं सुयोजमिति दोःशब्दस्य नपुंसकत्वे नेदं प्रमाणं, तथापि 'ककु'दित्यस्य पृथक्पदत्वमेव न्याय्यम्। अन्यथा बाह्वोर्द्वित्वे लब्धेऽपि ककुद एकत्वं न लभ्येतेति भावः। 'तमुपाद्रवदुद्यम्य दक्षिणं दोर्निशाचरः' इति रघुः, तत्र दक्षिणं दोरुद्यम्य तमुपाद्रवदित्यन्वयः। **दोषं तस्येति**। अयं च श्रीहर्षप्रयोगः। दोषं हस्तं दूषणं च भजतः चापस्येति संबन्धः। **द्वयोरह्नोर्भव इति**। 'तद्धितार्थे' इति समासः। 'राजाहःसखिभ्य' इति टच्, 'अह्नोऽह्न एतेभ्यः' इति अह्नादेशः, कालाट्ठञो 'द्विगोर्लुगनपत्ये' इति लुक्। **अह्नः साय इति**। स्यतेर्घञि अवसानवचनः सायशब्दः, 'सङ्ख्याविसाये'ति ज्ञापकादेकदेशिसमासः। **इत्यदन्ताः**॥

**विश्वपा इति**। विश्वं पाति रक्षतीति विग्रहे 'पा रक्षणे' इत्यस्मात् 'आतोऽ-

---

कोशे शब्दा अर्थपरा एव। शक्तिग्रहस्तु पदत्वहेतुकानुमानेन सामान्यत एव। एवञ्च 'विष्णुर्नारायण' इत्यादौ 'विष्णुपदार्थाभिन्नो नारायणपदार्थ' इति क्रमेण बोध इत्यादि मञ्जूषायां नामार्थवादे विस्तरेण निरूपितम्। 'एतत्पदममुकवाचक'मिति शक्तिग्रहस्तु स्वस्वप्रसिद्धिमादाय तत्तत्पुरुषस्याऽनियतः पश्चान्मनसैव। 'अम्बे देवि सरस्वति इडे काव्ये विहव्ये एतानि तेऽघ्न्ये नामानी'त्यादौ यत एतानि तव नामानि अतस्त्वदभिन्ना एषामर्था इति बोधः। अत एव 'नामन्त्रिते समानाधिकरणे' इति सूत्रभाष्ये 'सामान्यवचन'मित्यस्येदं प्रत्युदाहरणं दत्तम्, अन्यथैकार्थबोधकत्वरूपसामानाधिकरण्यस्याप्यभावात्तदसङ्गतिः स्पष्टैव। एकशेषस्तु न। तथा सति तत्तच्छब्दस्वरूपस्य सम्यग्बोधानापत्तेः। अनेकशब्दानां स्वरूपबोधनपूर्वमेकार्थबोधने कोशतात्पर्यात्। अत एव 'यत्तदेतेभ्य' इत्यादौ पाणिनिनैकशेषो न कृतः। एतेन कोशे शब्दानां शब्दपरता। अत एवैकशेषो न। अर्थपरत्वन्तु न सम्भवति, इतः पूर्वं शक्तिग्रहाऽभावात्। 'एते शब्दा एकार्था' इति बोधः, एवञ्चात्र प्रकारार्थत्वाभावेऽपि न क्षतिरित्यपास्त'मिति दिक्। **सङ्ख्यावि**। 'सायेभ्य' इति वक्तव्ये पूर्वग्रहणमुत्तरपद इत्यधिकृतस्य प्राप्यन्तत्वलाभाय। एतेन 'द्व्यह्नप्रिय' इत्येतदुदाहरणमित्यपास्तम्। **विश्वपा इति**। विश्वं

पूर्वसवर्णदीर्घो न स्यात्। वृद्धिः। विश्वपौ। सवर्णदीर्घः–विश्वपाः। यद्यपीह औङि 'नादिचीत्येव सिद्धं जसि तु सत्यपि पूर्वसवर्णदीर्घे क्षतिर्नास्ति तथापि 'गौर्यौ' 'गौर्य' इत्याद्यर्थं सूत्रमिहापि न्याय्यत्वादुपन्यस्तम्। **आतो धातोः** ।६।४।१४०। आकारान्तो यो धातुस्तदन्तस्य भस्याऽङ्गस्य लोपः स्यात्। 'अलोऽन्त्यस्य'। विश्वपः। विश्वपाभ्यामित्यादि। एवं शङ्खध्मादयः। धातोः किम्? । हाहान्। टा सवर्णदीर्घः-हाहा। ङे वृद्धिः–हाहै। ङसिङसोर्दीर्घः–हाहाः। ओसि वृद्धिः–हाहौः।

---

नुपसर्गे' इति कं बाधित्वा 'आतो मनिन्क्वनिब्वनिपश्चे'ति चकाराद्विजिति व्याख्यातारः। इह च्छन्दसि 'आतो मनिन्–' इति विच्। लोके तु 'अन्येभ्योऽपि दृश्यते' इत्यनेनेति विवेकः। **दीर्घाज्जसि च**। चकारादिचीत्यनुकृष्यते, नेति चानुवर्तते, तदाह–**दीर्घा-ज्जसि इचि चेति**। सूत्रे चकाराभावे ह्रस्वाकारादिचि दीर्घाकारात्तु जसीति व्यवस्था संभाव्येतेति भावः। **इत्याद्यर्थमिति**। ननु 'यू स्त्र्याख्यौ' 'ल्वादिभ्यः' इति निर्देशादिक्प्रत्याहाराऽच्प्रत्याहारयोरेव निरूढलक्षणेति व्याख्यायतां, तथाच दीर्घस्या-ऽच्त्वाभावाद्गौर्यावित्यादौ पूर्वसवर्णदीर्घो न प्राप्नोतीति किमनेन निषेधसूत्रेणेति चेन्मैवम्, अस्मादेव निषेधाज्ज्ञापकादिगज्भिन्नेष्वपि प्रत्याहारेषु लक्षणा स्वीक्रियते। अन्यथा 'गौरी'रित्यादौ शसि परतः पूर्वसवर्णदीर्घो न स्यात्। किंच 'उपार्छती'त्यादौ 'उरण्-परः', 'नैषादकर्षुकः' इत्यादौ 'इसुसु'गिति ठस्य कादेशः, 'अर्मीषि'मित्यादौ इणः पर-स्य सस्य च षत्वं न सिध्यतीति दिक्। 'प्रथमयोः–' इति सूत्रानन्तरं 'दीर्घाच्छसी'-त्येव सुवचम्। दीर्घाच्छस्येव पूर्वसवर्णदीर्घ इति तस्यार्थः। एवं च चकारो न कर्तव्यो नेति च नानुवर्तनीयमिति महल्लाघवमित्येके। 'शसि दीर्घादेवे'ति विपरीतनियमवारणाय 'नॄन्पे', 'कानाम्रेडिते' इति निर्देशाश्रयणे प्रतिपत्तिगौरवं स्यादिति यथान्यास एव श्रेय इत्यन्ये। **हाहानिति**। गन्धर्वविशेषवाचकमव्युत्पन्नं प्रातिपदिकमिदम्। 'हाहा

---

पातीति विग्रहे 'आतोनुपसर्गे' इति प्राप्ते वासरूपन्यायेना'तो मनिन्क्वनिब्वनिपश्चे'ति चेन विच्। स चादन्तेभ्यो लोकेपि, 'कीलालप आगत'मिति 'विभाषा पूर्वाह्णे'ति सूत्रे भाष्यप्रयोगात्। क्विप्स्त्वाद-न्तेभ्यो भाष्यानुक्तक्विब्भ्योऽनभिधानमेव। अत एव 'यूस्त्र्याख्या'विति सूत्रे 'स्त्र्याख्या'वित्यत्र विजुक्तो भाष्ये न तु क्विप्। अत एव 'संस्था' इत्यादिप्रयोगे भाष्यकृता इत्वं न कृतमिति कश्चित्। अन्ये क्विपमेवाहुः।

**दीर्घाज्ज**। चेनेचीत्यनुकर्षः। 'दीर्घाच्छस्येवे'ति नियमपरं 'दीर्घाच्छसी'त्येव तु न सूत्रितं, 'दीर्घा-देव शसि'ति विपरीतनियमापत्तेः। प्रत्याहारेषु जातिपक्षाश्रयणादत्र प्राप्तिः। **न्याय्यत्वादिति**। जसि पूर्वसवर्णदीर्घनिषेधस्य न्याय्यत्वादित्यर्थः। **धातो किं हाहानिति**। अव्युत्पन्नमिदम्

डावाद्गुणः—हाहे। शेषं विश्वपावत्। 'आत' इति योगविभागादधातोरप्याकारलोपः क्वचित्। क्त्वः। श्नः॥ इत्यादन्ताः॥

हरिः। 'प्रथमयोः पूर्वसवर्णः'। हरी। **जसि च** ।७।३।१०९। ह्रस्वान्तस्याऽङ्गस्य गुणः स्याज्जसि परे। हरयः। **ह्रस्वस्य गुणः** ।७।३।१०८। ह्रस्वस्य गुणः स्यात्संबुद्धौ। 'एङ्ह्रस्वा'दिति संबुद्धिलोपः। हे हरे। हरिम्। हरी। हरीन्॥

**शेषो घ्यसखि** ।१।४।७। अनदीसंज्ञौ ह्रस्वौ याविदुतौ तदन्तं सखिवर्जं घिसंज्ञं स्यात्। शेषः किम्?। मत्यै। एकसंज्ञाधिकारात्सिद्धे 'शेष'ग्रहणं स्पष्टार्थम्।

---

हूहूश्चैवमाद्या गन्धर्वाः' इत्यमरः। केचित्तु अकारो वासुदेवस्तेन सह वर्तन्ते इति सास्तान् सानिति प्रत्युदाहरन्ति। **क्त्वः श्न इति**। यद्यपि 'क्त्वो ल्यप्' 'श्नःशानज्झौ', 'क्रमश्च क्त्वि' इति निर्देशादेतत्सूत्रेष्वातो लोपः सिध्यति, तथापि 'क्त्वो ल्यब्भवति' 'श्नः शानज्भवती'ति व्याख्यानवाक्येष्वसाधुत्वशङ्कावारणायेदमुक्तम्। **इत्यादन्ताः**॥

सूत्रे शेषपदस्य प्रयोजनमाह—**अनदीसंज्ञाविति**। 'यूस्त्र्याख्यौ' इत्यतः 'यू' इति, 'ङिति ह्रस्वश्चे'त्यतः 'ह्रस्व' इति चानुवर्तते तदाह—**ह्रस्वौ यावित्यादि**।

---

अस्य क्रियाशब्दत्वे तु 'सा'निति प्रत्युदाहरणम्। परे तु क्त्वः श्नः इत्यादिसिद्ध्यर्थमातोऽनाप इति वक्तव्यमित्युक्ते 'आत' इति योगविभागेन तत्संसाध्य तत्प्रत्याख्यातं भाष्ये। एवञ्च साशब्दादेर्यद्यभिधानं तदा योगविभागेन लोप इष्ट एव। सूत्रे धातुग्रहणमात्रन्तनिवृत्त्यर्थमेव। भाष्यवार्तिककृतोरज्ञानकल्पनापेक्षयेदृशार्थकल्पनस्यैवौचित्यात्। आवन्तादाचारक्विवेव न, तत्क्विबन्ताद्वा कर्तृक्विब्नाऽनभिधानादिति न तत्र सूत्रवार्तिकयोर्विरोधः। अत एव 'प्रथमयो'रिति सूत्रभाष्ये 'पररूपं बाध्यसामान्यचिन्तया दीर्घमात्रस्य बाधक'मिति पक्षे 'रामा'नित्यादिसिद्ध्यर्थम'तो दीर्घ' इति 'सुपि चे'ति चानुवर्त्तमाने 'बहुवचने झल्ये'दिति सूत्रे 'बहुवचने' इति योगविभागेन पररूपबाधकं दीर्घं विधाय 'रामाणा'मित्यादावनेन दीर्घे परत्वात्कृतेऽग्नीनामित्यादौ सावकाशस्य नुटोऽप्राप्तिमाशङ्क्य 'ह्रस्वनद्याप' इति सूत्रे 'आङ्से'रित्यत आड्ग्रहणानुवृत्त्या समाधाय 'कीलालपा'मित्यादौ नुड्विधायके 'आतो धातो'रित्यनुवर्त्य लोपेन नुड्बाधकेन समाहितम्। नुड्विधायके आब्ग्रहणं न कार्यमिति तदाशयः। अधात्ववयवाकारान्तानां लोपाभावे तु तदसङ्गतिः स्पष्टैवेत्याहुः। **क्त्वः श्न इति**। क्त्वाप्रत्ययस्येडित्याद्यर्थकं 'क्त्व इट्'श्नः शरयेत्त्व'मित्यादिप्रयोगस्थमत्रोदाहरणम्, एतेनाचारक्विन्तात्कर्तृक्विप्येते प्रयोगा निर्वाह्या इत्यपास्तम्। आचारक्विन्तस्य भाष्ये काप्यनुपन्यासेन तेभ्यः कर्तृक्विपो ऽनभिधानस्यैव लाभाच्च। **इत्यादन्ताः**॥

**जसि च**। 'ह्रस्वस्य गुण' इति वर्त्तते। **ह्रस्वस्य**। 'सम्बुद्धौ चे'त्यतः 'सम्बुद्धा'विति वर्त्तते। **शेषो घ्य**। 'यूस्त्र्याख्या'वित्यतो 'यू' इति 'ङिति ह्रस्वश्चे'त्यतो 'ह्रस्व' इति च वर्त्तते। शेषपदार्थमाह—**अनदीत्यादि**। **तदन्तमिति**। अनुवृत्तयोर्यां शेषपदार्थस्य विशेषणत्वात्तदन्तलाभ इति

ह्रस्वौ किम् ?। वातप्रम्ये । इदुतौ किम् ?। मात्रे । **आङो नाऽस्त्रियाम्।** ७।३।१२०। घेः परस्याङो ना स्यादस्त्रियाम् । 'आ'ङिति टासञ्ज्ञा प्राचाम् । हरिणा । अस्त्रियां किम् ?। मत्या ॥ **घेर्ङिति** ।७।३।१११। घिसंज्ञकस्य ङिति सुपि गुणः स्यात् । हरये । घेः किम् ?। सख्ये । ङिति किम् ?। हरिभ्याम् । सुपि किम् ? पट्वी । 'घेर्ङिती'ति गुणे कृते—॥ **ङसिङसोश्च** ।६।१।११०। एङो ङसिङसोरति परे

---

**मत्यै इति ।** नदीसंज्ञापक्षेऽपि घिसंज्ञायां सत्याम् 'आण्नद्या' इत्याडागमे 'घेर्ङिती'ति गुणे कृतेऽयादेशे च 'मतयै' इति स्यादिति भावः । **आङो ना ।** 'पुंसी'ति तु नोक्तम्, 'अमुना कुलेने'त्यत्र यथा स्यात् । न च नुमा रूपसिद्धिः, मुत्वस्याऽसिद्धत्वात् 'इकोऽची'ति नुमोऽप्रवृत्तेः । नादेशे तु नाऽसिद्धत्वम् । 'न मुने' इति निषेधात् 'न मु ने' इति निषेधो नुम्येव किं न स्यात्,—'न' इत्यकारस्याऽविवक्षितत्वादिति वाच्यम्, 'अमुना घटेने'-त्याद्यसिद्ध्यापत्तेः । 'अमुष्मै कुलाये'त्यादौ नुम्प्रसङ्गाच्च । न च तत्र स्मायादेशे सति नुमोऽप्रवृत्तिरिति शङ्क्यं, स्मायादेशं बाधित्वा परत्वान्नुमः प्रवृत्तेः । **प्राचामिति ।** 'आचार्याणा'मिति शेषः। **ङसिङसोश्च ।** इह ङसिङसौ द्वौ, एङावपि द्वौ, तयोर्यथासङ्ख्यं न, अस्वरितत्वात् । अल्पाच्तरस्य पूर्वनिपाताऽकरणाल्लिङ्गात्, 'अच्च घेः' 'उपसर्गे घोः

---

भावः । ननु 'मत्यै' इत्यत्रानवकाशत्वान्नदीसंज्ञैव भविष्यतीति 'शेष'ग्रहणं व्यर्थमत आह—**एकसंज्ञे-ति । अधिकारादिति ।** 'कडाराः कर्मधारय' इत्येतत्पर्यन्तं तस्य बुद्धिस्थत्वादित्यर्थः। **स्पष्टार्थमिति ।** 'ऋतो ङी'ति तु 'यू' इत्यनुवृत्तावेव तात्पर्य-स्पष्टतया तदन्तविधिलाभार्थमिति भावः । **मात्रे इति ।** 'ऋतो ङी'ति तु 'यू' इत्यनुवृत्तावेव तात्पर्य-ग्राहकमिति भावः । **आङो ना ।** 'पुंसो'ति तु नोक्तम् । 'अमुना कुलेने'त्यत्र मुत्वस्याऽसिद्धत्वा-न्नुमनापत्तौ पुंस्त्वाभावेन नाभावस्याप्यनापत्तौ रूपाऽसिद्धेः । 'न मु ने' इति निषेधस्तु न नुमि, 'न मु टादेश' इति वार्त्तिकविरोधात् । अत एव सूत्रकृता स्त्रीतिवन्नेति नोक्तम् । तथा सति तन्त्रेण नकारनिर्देशोपि सम्भाव्येत । आगन्तुनाऽकारेण तस्यापि न इति निर्देशेन तन्त्रस्वीकारे त्वत्यन्तं ज्ञानगौरवमिति न किञ्चिल्लाघवमिति स्पष्टं भाष्ये। **आङितीति ।** ङकारविशिष्टा संज्ञा न त्वस्य ङस्येत्त्वम् । अत एव 'हरिणा' 'मत्ये'त्यादौ न गुणः । एवमौङ आप्त्र इत्यत्रापि । अत एवाऽसंभवे एवापवादत्वमिति वार्तिकमतेऽपि 'रमे' इत्यादौ न याट् । **घेर्ङिति ।** 'सुपि चे'त्यतः 'सुपी'ति वर्त्तते, तेन 'पट्वी'ति सिद्धम् । न च 'घेर्ङी'ति सूत्रं कार्यं; ङकारादावित्यर्थः, 'प्रवाहवे'त्यत्राङ्यांजयारासु-पसङ्ख्यानमित्याङादेशस्तु 'ङा' इत्येव वक्तुं शक्य इति वाच्यं, मत्यामित्यादावाम्याण्नद्या इत्यस्यानापत्तेः। अल्विधित्वेन स्थानित्वाभावात् । इद्ग्रहणे त्वनुबन्धकार्यत्वात्स्थानिवत्त्वं स्पष्टमिति दिक् । **ङसि ङ ।** एङो द्वित्वेपि अस्वरितत्वाद्यथासङ्ख्यं न । 'ङितश्चे'ति तु नासूत्रि, 'ऋत उ'दित्यत्र 'ऋदन्तान्ङितोऽति परे पूर्वपरयोरु'दित्यर्थे 'जाग्रता'त्यादौ दोषः स्यादिति । 'ङसो'रित्येव सिद्धे ङसिग्रहणं स्पष्टार्थम् ।

पूर्वरूपमेकादेशः स्यात् । हरेः । हर्योः । हरीणाम् ॥ **अच्च घेः** ।७।३।११९। इदुद्भ्यामुत्तरस्य ङेरौत्स्याद्धेरन्तादेशश्चाकारः । हरौ । हर्योः । हरिषु । एवं श्रीपत्यग्निरविकव्यादयः ॥ **अनङ् सौ** ।७।१।९३। सख्युरङ्गस्याऽनङादेशः स्यादसंबुद्धौ सौ

---

क्रि'रिति निर्देशाच्च । **अच्च घेः** । अत्र 'इदुद्भ्याम्', 'औ'दिति 'ङेरा'मित्यतो 'ङे'रिति च पदत्रयमनुवर्तत इत्याशयेनाह–**इदुद्भ्यां परस्य ङेरौत्स्यादिति** । 'घेरुत्तरस्ये'ति प्राचां व्याख्यानमिह तु नोक्तम् । सूत्रे 'घे'रित्यस्य षष्ठ्यन्तत्वात्, तन्त्रावृत्त्यादौ च प्रमाणाभावात् । 'ओ'दिति पूर्वसूत्रे 'इदुद्भ्यामुत्तरस्य ङे'रिति क्लृप्तसम्बन्धस्य त्यागाऽयोगाच्च । यत्तु व्याचख्युः–'अ'दिति तपरत्वं 'वुद्धा'वित्यादावत्त्वे कृते स्त्रियां टाप् मा भूदित्येतदर्थमिति; तच्चिन्त्यम् । तपरग्रहणाद्धि टापा सह दीर्घो मा भूट्टाप्तु स्यादेव, लक्षणद्वयबाधे मानाभावात् । अतएव 'कृन्मेजन्त' इति सूत्रे भाष्यादौ संनिपातपरिभाषया 'पद्धता'वित्यत्र टान्नेत्युक्तम्, टापा व्यवधाने ह्यानन्तर्यविघातः स्यादिति । तपरकरणाट्टावभावे तु संनिपातपरिभाषोपन्यासस्तत्र विरुध्येत । यद्यपि व्याचख्युः–'औतस्तकारः स्वरितार्थ' इति, तदपि न । 'स्तीर्णे बर्हिषि समिधाने अग्नौ' इत्यादौ स्वरितत्वाऽदर्शनात् । 'न विभक्तौ' इति सूत्रे ङेरौतस्तु तकार उच्चारणार्थो नेत्संज्ञक इति स्वयमेव भाषितत्वाच्च । तस्मादुभयत्र तपकरणमुच्चारणार्थमेवेति मनोरमायां स्थितम् ॥ **अनङ् सौ** । नकारादकार उच्चारणार्थः । 'असंबुद्धौ' इति पर्युदासात्साविति

---

**अच्च घेः**। इदुद्भ्यामितिकिम् ? 'घेः परस्य ङेरौदच्चे'तिङिप्रकृतेर्घेरौदच्चेति वाऽर्थो मा भूदिति । अदौतोस्तपरत्वं मुखसुखार्थम्, इत्सञ्ज्ञायां च 'तस्य लोप'इति तयोर्लोपः। न चौतो विभक्तित्वान्न विभक्ताविति निषेधात्कथमित्सञ्ज्ञेति वाच्यं, 'मुखसुखार्थ'मित्यस्य तदेव प्रयोजनन्न तु कार्यान्तरं नापि प्रयोगश्रवणमित्यर्थात्तत्त्वप्रतिज्ञयैव न विभक्तावित्यस्य तत्राऽप्रवृत्तेः । अतएवेद्वृद्धौ पत्यावैश्वर्य इत्यादिनिर्देशाः सङ्गच्छन्ते । यदि तूच्चारणार्थानां विनैव शास्त्रमपगमः स्यात्तदेत्सञ्ज्ञकानामपि तद्वदेव निवृत्तिरस्तु, किन्तस्य लोप इत्यनेन ?, स्वभाववादस्योभयत्रापि समत्वात् । ध्वनितश्चेदन्तस्य लोप इत्यत्र भाष्य-इति 'दिव औ'त्सूत्रे निरूपयिष्यामः । न चैवमग्नाविष्णूऔतः स्वरितत्वापत्तिः, न च 'प्रत्ययाऽप्रत्यययो'रित्येव सिद्धे पुनरितिप्रत्ययग्रहणं कर्तव्यमिति वार्त्तिकादौपदेशिकप्रत्ययत्ववत्येव तत्प्रवृत्तिरिति वाच्यं, तस्याः परिभाषाया लक्ष्यसिद्ध्यै भाष्यकृता क्वाप्यनाश्रयणात् । स्पष्टश्चेदं तित्स्वरितमित्यत्र कैयटे । 'अङ्गस्ये'ति सूत्रे भाष्ये तु तत्प्रत्याख्यानायैकदेशिना सोक्ता न तु सिद्धान्तिनेति स्पष्टं तद्विदाम् । 'श्वान्नलोप' इति सूत्रे भाष्येपि ध्वनितस्तदभाव इति वाच्यं, 'प्रत्ययग्रहण'मित्यस्य विधानकालिकप्रत्ययत्ववद्ग्रहणमित्यर्थात् । अत एवादेशेषु दित्त्वमाश्रित्य तत्प्रत्याख्यानेन फलभेदो नेति दिक् । **अनङ् सौ**। 'सा'विति प्रथमैकवचनम्, 'असम्बुद्धा'विति पर्युदासात् । नकारादकारस्तूच्चा-

परे। 'ङिच्चे'त्यन्तादेशः॥ **अलोऽन्त्यात्पूर्व उपधा** ।१।१।६५। अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः स्यात्॥ **सर्वनामस्थाने चाऽसंबुद्धौ** ।६।४।८। नान्तस्योपधाया दीर्घः स्यादसंबुद्धौ सर्वनामस्थाने परे॥ **अपृक्त एकाऽल्प्रत्ययः** ।१।२।

---

प्रथमैकवचनं गृह्यते, न तु सप्तमीबहुवचनम्। 'सोडें'त्येव सिद्धे अनङ्विधानमन्यतोऽपि स्यादिति ज्ञापनार्थम्, तेन उशनसः संबुद्धावनङ् सिध्यतीति प्राञ्चः। यद्यपि 'सोर्डे'त्युक्ते 'ऋदुशन-' इत्युत्तरसूत्रेणापि डा स्यात्। ततश्च 'उशने'त्यत्र 'सर्वनामस्थाने चासंबुद्धौ' इति दीर्घः स्यात्। 'पुरुदंसे'त्यत्र तु 'सान्तमहतः' इति दीर्घः स्यात्, तथापि संज्ञापूर्वकविधेरनित्यत्वादङ्गवृत्तपरिभाषया वा तत्समाधेयमिति तेषामाशयः।

**अलोऽन्त्यात्पूर्व।** 'अल' इति पञ्चमी 'अन्त्या'दित्यनेन विशेष्यत इत्याह- **अन्त्यादल इति।** अलः किम्?। 'शिष्टः' शिष्टवा'नित्यादौवन्त्यात्सङ्घातात्पूर्वस्य शकारस्य मा भूत्। सत्यां हीत्संज्ञायां 'शास इदङ्हलोः' इति शस्येत्त्वं स्यात्। नन्वेवमप्यन्त्यादलः पूर्वस्य सङ्घातस्योपधासंज्ञायां 'शिष्ट'इत्यादौ शकारविशिष्टस्याकारस्य इत्त्वं स्यादित्यतिप्रसङ्गदोषस्तदवस्थ एवेति चेदुच्यते-यथा हि लोके 'अमीषां ब्राह्मणानामन्त्यात्पूर्व आनीयता'मित्युक्ते यथाजातीयकोऽन्त्यस्तथाजातीयकोऽन्त्यात्पूर्व आनीयते, तथाऽत्राप्यन्त्योऽलात्मक इति तत्पूर्वोऽप्यलेव गृह्यते। तदेतदाह-**पूर्वो वर्ण इति।** अत्र 'अचोऽन्त्यादि टी'त्यत्रेव 'अल' इति निर्धारणे षष्ठीत्यपि सुवचमिति केचिदाहुः, अलां मध्ये योऽन्त्यस्तस्मात्पूर्वो वर्ण उपधासंज्ञः स्या'दिति व्याख्याया अपि संभवदुक्तिकत्वात्। **सर्वनामस्थाने।** 'नोपधायाः' इति सूत्रं 'ढ्रलोपे'इति सूत्राद्दीर्घग्रहणं चानुवर्तते इत्याशयेनाह-**नान्तस्येत्यादि। अपृक्त एकाल्।** असहायवाच्यत्रैकशब्दः सङ्ख्यावाची वा। न च सङ्ख्यावाचित्वे 'अभैत्सी'दित्यत्र हलन्तात्परस्य सिचोऽपृक्तत्वाल्लोपः स्यादिति वाच्यं, विभक्तिसाहचर्याद्विभक्तेरेव लोप इति व्याख्यानात्। एकालिति किम्?। जागृविः। 'वेरपृक्तस्ये'ति लोपो न। 'अ'लित्यनेनैकत्वे लब्धे इदमेवैकग्रहणं वर्णग्रहणे जातिग्रहणं ज्ञापयतीति। फलं तु दम्भितुमिच्छति धिप्सतीत्यत्र सनो 'हलन्ताच्चे'ति कित्त्वम्। तत्र हल्ग्रहणस्य व्यक्तिपरत्वे योऽत्रैकः

---

रणार्थ इत्सञ्ज्ञकः। **अलोऽन्त्यात्।** अव्यवधिमतो: साजात्यादाह-**पूर्वो वर्ण इति।** अत एव 'शिष्ट' इत्यादौ 'शे'ति समुदायस्य 'शास इ'दितीत्वं न। पृथग्यन्तोऽल्ग्रहणाच्च शस्य न।

**सर्वनामस्थाने।** 'नोपधाया' इति 'ढ्रलोप' इत्यतो 'दीर्घ' इति चानुवर्तते। **अपृक्त।** 'अपृक्त' इति पुंस्त्वमविवक्षितम्। अत एवाऽपृक्तं हलिति सङ्गच्छते। अपृक्तप्रदेशेषु हल्ग्रहणेनैव

४१। एकाऽल्प्रत्ययो यः सोऽपृक्तसंज्ञः स्यात्। **हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्** ।६।१।६८। हलन्तात्परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परं 'सुतिसी'त्येतदपृक्तं हल्लुप्यते। हल्ङ्याब्भ्यः किम् ?। ग्रामणीः। दीर्घात्किम् ?। निष्कौशाम्बिः। अतिखट्वः। सुतिसीति किम् ?। अभैत्सीत्। तिपा सहचरितस्य सिपो ग्रहणात्सिचो

---

समीपवर्ती हल्नकारः ततः परः सन् न, यस्माच्च परः सन् भकारान्नासाविकः समीप इति कित्त्वं न स्यात्। ततश्च नलोपो न स्यादित्यभ्युपगम्य 'निपात एकाजना'ङित्यत्र एकाज्ग्रहणं त्यक्तुं शक्यमित्यवोचाम ॥ **हल्ङ्याब्भ्यो** । 'दीर्घा'दित्येतन्ङ्यापोरेव विशेषणं न तु हलोऽसंभवादित्याह–**दीर्घौ याविति। परमिति।** न त्विदं विहितविशेषणं, प्रमाणाभावात्, 'या' 'सा' 'के'त्यादावव्याप्तेश्च। न च तत्र हलन्ताद्विहितत्वेन निर्वाहः, 'यः' 'स' इत्यादावतिव्याप्तेः। 'कर्ता' 'सखे'-त्यादावव्याप्तेश्च। यद्यपि त्यदाद्यत्वविधौ 'विभक्ता'वित्यस्य विषयसप्तमीत्वे स्वीकृते 'या' 'से'त्यादौ नोक्तदोषः, सुविभक्तेराबन्ताद्विहितत्वस्य संभवात्। तथा अनङ्विधौ सावित्यस्य विषयसप्तमीत्वे 'कर्ता' 'सखे'त्यादावपि न दोषः, हलन्ताद्विहितस्य सोः सम्भवात्तथापि 'बहुश्रेयसी'त्यत्राव्याप्तिप्रसङ्ग इति भावः। **हलिति।** तस्य सुतिसीत्येवंरूपत्वमेकदेशविकृतन्यायेन बोध्यम्। **लुप्यत इति।** यद्यपीह 'लोपो व्योर्वली'त्यतो 'लोप' इत्यनुवर्तते, तच्च तत्र भावसाधनं, तथापीह कर्मसाधनं, 'ह'लिति प्रथमान्तेन सामानाधिकरण्यादिति भावः। **निष्कौशाम्बिः। अतिखट्व इति।** प्रादिसमासे 'गोस्त्रियो'रिति ह्रस्वः। नन्विह समस्तस्य ङ्याबन्तत्वं नास्ति, न च स्त्रीप्रत्यये तदादिनियमो नास्तीति वाच्यम्, अनुपर्जने हि तथा, इह तूपसर्जनत्वात्तदादिनियमोऽस्त्येव। अन्यथा 'अतिकारीषगन्ध्यापुत्र' इत्यत्र ष्यङन्तपूर्वपदलक्षणसंप्रसारणप्रसङ्गात्। सत्यम्। तथाप्युत्तरपदस्य ङ्याबन्तत्वेन सोस्ततः परत्वानपायाद्दीर्घग्रहणाऽभावे सुलोपः स्यादेव ? नहीदं ङ्याब्ग्रहणं विहितविशेषणमित्यधुनैवोक्तम्। स्यादेतत्। गङ्गामात्मन इच्छति गङ्गीयति। ततः क्विपि अल्लोपे यलोपे च 'गङ्गीः'। इह ईकारस्य स्थानिवद्भावेनाप्त्वा-

---

सिद्धे सञ्ज्ञाविधानमदृष्टार्थम्। **हल्ङ्याप**। 'सुतिसी'ति पृथक् पदम्। **हलन्तादिति।** सुतिसीनां प्रत्ययत्वेनोपस्थितस्य 'यस्मात्स विहितस्तदादि'रित्यस्य विशेष्यत्वेन तदन्तलाभ इति भावः। एवं ङ्यावंशे द्वेधा तदुपस्थित्या ङ्याबन्तान्तादित्यर्थो द्रष्टव्यः। **हल्ङ्याब्भ्यः किमिति।** 'राम' इत्यादौ दीर्घान्तत्वाभावान्न दोष इति प्रश्नः। 'दीर्घात्किं निष्कौशाम्बिरतिखट्व' इत्यारभ्य 'संयोगान्तलोपस्यासिद्धत्वा'दित्यन्तोऽपपाठः, मनोरमायां दर्शनात्। **सखेति।** यद्यप्यत्रैव 'सख्युरसम्बुद्धा'विति लेख उचितस्तथापि नान्तलक्षणदीर्घेणैव सिद्धेरत उपधाया इत्यपेक्षया नित्यत्वेन तस्यैवौचित्याच्चात्र नोक्तम्।

ग्रहणं नास्ति । अपृक्तं किम् ? । बिभर्ति । हल्किम् ? । बिभेद । प्रथमहल्किम् ? । राजा । नलोपो न स्यात्संयोगान्तलोपस्याऽसिद्धत्वात् । सखा । हे सखे ॥

---

दीर्घत्वाच्चाऽतिव्याप्तिः । न चाऽल्लोपस्य स्थानिवत्त्वात्सोराप: परत्वं नेति शङ्क्यम् । 'क्वौ लुप्तं न स्थानिव'दिति निषेधादिति चेन्मैवम्, ङी-ई आ-आबिति प्रश्लिष्य दीर्घग्रहणस्य प्रत्याख्यातत्वेन प्रकृते आकाररूपस्य आपोऽभावादुक्तातिप्रसङ्गाभावात् । निष्कौशाम्बी-यतेः क्विपि तु 'निष्कौशाम्बी'ति भवत्येव, ईकाररूपङीबन्तत्वेन सुलोपप्रवृत्तेः । **अपृक्त-मिति किं विभर्तीति** । इदं च प्रत्युदाहरणं चिन्त्यं, विशिष्टस्याऽहल्त्वात् । 'सुतिसीनां ह'लिति क्लिष्टं व्याख्यायाऽतिप्रसङ्गापादनस्यानुचितत्वात् । यत्तु व्याचख्युः-'सुरां सुनोतीति सुरासुत्, तमाचष्टे सुरासयति, ततः क्विप्–सुराः । सुरासौ । सुरासः । इह सुनोतेरवयवस्य सस्य लोपं व्यावर्तयितुमपृक्तग्रहण'मिति । तदपि चिन्त्यम् । परस्परसाहचर्येण सुतिसीनां विभक्तीनामेव ग्रहणात् । अन्यथा सिचो लोपापत्तेरुक्तत्वात् । प्रत्ययाऽप्रत्यययोः प्रत्यय-स्यैव ग्रहणाच्च । यत्तु 'तित्स्वरित'मिति सूत्रे कैयटेनोक्तं–'न क्वचिदियं परिभाषा भाष्य-वार्तिककाराभ्यामाश्रिते'ति, तद्भ्रमसात् । 'अङ्गस्ये'ति सूत्रे भाष्यादौ तस्याः पठित-त्वात्, स्वयमपि तत्र व्याख्यातत्वाच्च । **संयोगान्तलोपस्यासिद्धत्वादिति** ।

ननु संयोगान्तलोपो नाऽसिद्धः 'न ङिसंबुद्ध्यो'रिति सूत्रे संबुद्धिग्रहणाज्ज्ञापकात् । न चैवं 'गोमा'नित्यादावपि नलोपापत्तिः, ज्ञापकस्य विशेषविषयत्वात् । यत्र हि नकार-विभक्त्योरानन्तर्यं तत्रैव सिद्धत्वं, व्याख्यानात् । यत्त्वाहुः–'हे ब्रह्मन्निति नपुंसकार्थ-त्वान्नैतज्ज्ञापक'मिति, तन्न, लुका लुप्ते प्रत्ययलक्षणाऽभावात् । 'संबुद्धौ वा नपुंसकानां'-मित्यस्यावश्यकत्वाच्च । संबुद्धिग्रहणस्य नपुंसकविषयत्वाऽसंभवेनोक्तज्ञापकस्य सुस्थत्वात् । तस्मान्नलोपो न प्रयोजनमिति चेदिह तर्हि 'अभिनोऽत्रे'त्यत्र रोरुत्वे न स्यात् । सिपि 'दश्वे'ति रुत्वे विभक्तिसकारस्य संयोगान्तलोपे तस्याऽसिद्ध-त्वात् । तथा 'अबिभर्भवान्' 'अजागर्भवा'नित्यत्र तिलोपो न स्यात् । 'रात्सस्ये'ति नियमात् । तदुक्तम्–'संयोगान्तस्य लोपे हिं नलोपादिर्न सिध्यति । रात्तु तेनैव लोपः स्या-द्धलस्तस्माद्विधीयते' इति । नलोपादिरित्यादिशब्देनोत्त्वं सङ्गृह्यते । अत्रेदमवधेयम्–ङ्याब्ग्रहणं सोरेव विशेषणं न तु तिस्योः, व्याख्यानात्, तेन मालेवाचरत्–अमालात् । गङ्गेवाचरत्–अगङ्गादित्यत्र नातिप्रसङ्गः । तथा च 'हलन्तात्परं सुतिसीत्येतदपृक्तं हल्लु-प्यते, दीर्घौ यौ ङ्यापौ तदन्तात्परं 'सु' इत्येतदपृक्तं हल्लुप्यते' इति वाक्यार्थोऽत्र पर्य-वसन्नः । यत्तु व्याचख्युः–ङ्याब्भ्यां तिस्योरसंभव एवेति, तन्न 'ङ्यन्तादसंभव' इति

**सख्युरसंबुद्धौ** ।७।१।९२। सख्युरङ्गात्परं संबुद्धिवर्जं सर्वनामस्थानं णित्कार्यकृत्स्यात्॥ **अचो ञ्णिति** ।७।२।११५। ञिति णिति च परेऽजन्ताङ्गस्य वृद्धिः स्यात्। सखायौ । सखायः । सखायम् । सखायौ । घिसंज्ञाऽभावान्न तत्कार्यम् । सख्या । सख्ये ॥ **ख्यत्यात्परस्य** ।६।१।११२। खि-ति-शब्दाभ्यां खी-ती-शब्दाभ्यां कृतयणा-

---

सत्यम् । आवन्तात्तु आचारक्विबन्तात्ङस्तिप्सिपौ स्त एव । 'अगङ्गात्' 'अगङ्गा' इति यथा। न च शपा व्यवधानम्, एकादेशस्य पूर्वान्तत्वेन ग्रहणात् । न च स्थानिवद्भावः, अपूर्वविधित्वात् । अन्ये त्वाहुः—ङ्याब्ग्रहणमसंभवादेव तिस्योर्विशेषणं न भवतीति यदुक्तं तत्सम्यगेव । न च अगङ्गादगङ्गा इत्यत्र संभवोऽस्तीत्युक्तमिति वाच्यं, तत्र स्थानिभूतस्य शपः पूर्वस्मान्निमित्तभूतादापः परयोस्तिस्योर्लोपे कर्तव्ये स्थानिवद्भावेन शपा व्यवधानात्तिस्योर्लोपस्याऽप्रसक्तेः । न च फलाभावात्पञ्चमीसमासपक्षो न स्वीक्रियत इत्यपि वाच्यं, तत्प्रयोजनस्य प्रागेव प्रदर्शितत्वादिति । **सखेति ।** समानं ख्यायते जनैरिति 'सखा' । 'ङिच्च' 'यलोप' इति चानुवर्तमाने 'समाने ख्यः स चोदात्तः' इति ख्या इत्यस्मादिण्,समानशब्दस्योदात्तः, सभावश्च । न चेह सुविभक्तिसंनियोगेन सखिशब्दस्यानङि कृते संनिपातपरिभाषया 'हल्ङ्या'विति सुलोपो न भवतीति शङ्क्यम्, 'स्वतन्त्रः कर्ते'त्यादिनिर्देशेनानङो नकारमाश्रित्य सुलोपे कर्तव्ये तत्परिभाषाया अप्रवृत्तेः ।

**सख्युरसंबुद्धौ** । इह 'इतोऽत्सर्वनामस्थाने' इत्यतः 'सर्वनामस्थाने'इत्यनुवर्तते, तदसंबुद्धावित्यनेन विशेष्यते । 'गोतो णि'दिति सूत्राण्णिदित्यनुवृत्तं तत्सामानाधिकरण्येन सप्तम्याः प्रथमा कल्प्यत इत्याह—**संबुद्धिवर्जं सर्वनामस्थानमिति ।** 'सख्युरसंबुद्धि' रित्येव सूत्रयितुं युक्तमिति मनोरमायां स्थितम् । ननु 'सखे'त्यत्रोपधादीर्घं बाधित्वा परत्वाद्'त उपधायां' इति वृद्ध्या भाव्यं सोर्णित्त्वादिति चेदत्राहुः—कृताऽकृतप्रसङ्गित्वमात्रेणापि नित्यत्वस्वीकारात्, अन्तरङ्गत्वाच्च 'सखे'त्यत्र वृद्धिं बाधित्वा 'सर्वनामस्थाने चासंबुद्धौ' इत्युपधादीर्घेणैव भवितव्यम्, 'सख्युरसंबुद्धा'विति णिद्वद्भावमुपजीव्याऽत्र प्रवर्तमानस्य 'अत उपधायाः'इत्यस्य बहिरङ्गत्वादिति। **अचो ञ्णिति ।** 'मृजेर्वृद्धि'रित्यतो 'वृद्धि'रित्यनुवर्तते, 'अङ्गस्ये'ति चानुवृत्तमचा विशेष्यते, विशेषणेन तदन्तविधिरित्याशयेन व्याचष्टे—**अजन्ताङ्गस्येति** ॥

**ख्यत्यात्** । पञ्चमीनिर्देशादेव 'परस्ये'ति लब्धे 'परस्ये'ति ग्रहणमेकः पूर्वपरयो-

---

**अचो ञ्णि** । 'मृजेर्वृद्धि'रित्यतो 'वृद्धि'रित्यनुवर्ततेऽङ्गस्येति चाधिकृतन्तदाह—**अङ्गस्य-वृद्धिरिति** । स्यादिति । उच्चारणार्थोऽकारेण कृतयणः प्रयोगस्थस्यानुकरणादविशेषणो-

देशाभ्यां परस्य ङसिङसोरत उत्स्यात् । सख्युः । सख्युः॥ **औत्** ।७।३।११८। इदुद्भ्यां परस्य ङेरौत्स्यात् । उकारानुवृत्तिरुत्तरार्था । सख्यौ । शेषं हरिवत् ॥

शोभनः सखा सुखसा । सुसखायौ । सुसखायः । अनङ्णिद्वद्भावयोराङ्गत्वात्तदन्तेऽपि प्रवृत्तिः । समुदायस्य सखिरूपत्वाभावादसखीति निषेधाऽप्रवृत्तेर्घिसंज्ञा।

रिति निवृत्तमिह तु नाधिक्रियते इति ध्वननार्थम् । ख्यश्च त्यश्चेति समाहारद्वन्द्वे ख्यत्य, तत्र खिखीशब्दयोः कृतयणादेशयोरनुकरणं 'ख्य' इति । एवं तितीशब्दयोस्त्येति । उभयत्राप्यकार उच्चारणार्थो न तु मुख्यापत्यादिशब्दैकदेशानुकरणमिदं, 'सख्युर्यः', 'पत्युर्नः', सङ्ख्यायाः संवत्सरसङ्ख्यस्य च', 'आपत्यस्य चे'त्यादिनिर्देशादित्यभिप्रेत्याह—**खितिशब्दाभ्यामिति** । एवं च यत्र यणप्रवृत्तिः तत्रैवोत्त्वं न त्वतिसखेरित्यादौ । न चैवं यणा निर्देशस्योक्तप्रयोजनत्वाद्ध्रस्वान्तयोरेव ग्रहणं स्यान्न तु दीर्घान्तयोरिति शङ्क्यम् । निर्देशस्य ह्रस्वदीर्घसाधारणत्वाच्छास्त्रस्य बहुविषयत्वसंभवे तत्सङ्कोचस्याऽन्याय्यत्वाच्चेति भावः । **औत्** । एतच्च सूत्रं नदीसंज्ञकेषु 'इदुद्भ्या'मिति पूर्वसूत्रेण बाध्यते । घिसंज्ञकेषु 'अच्च घे'रिति उत्तरसूत्रेण । तस्मात्संज्ञाद्वयशून्योऽस्य विषयः । न च तादृश उकारोऽस्तीत्यत आह—**उकारानुवृत्तिरिति** । प्राचा तु 'घिनदीसंज्ञावर्जिताभ्यामिदुद्भ्यां परस्ये'त्युक्तम् । तदसत् । तादृशस्योकारस्याऽप्रसिद्धेः ।

**सुसखेति** । प्रादिसमासे 'राजाहः सखिभ्यः' इति टचो 'न पूजना'दिति निषेधः । 'शेषो घ्यसखी' इत्यत्राऽसखीति नायं प्रसज्यप्रतिषेधः, असमर्थसमासादिदोषापत्तेः, किं तु पर्युदास एवेति 'सुसखी'त्यस्य सखिशब्दभिन्नत्वाद्घिसंज्ञा स्यादेव । न च समुदायस्य सखिशब्दभिन्नत्वेऽपि सखिशब्दान्तभिन्नत्वं नेति कथमसखीति निषेधाऽप्रवृत्तिरिति शङ्क्यम् । विशेष्याऽसंनिधानादसखीत्यत्र 'येन विधिस्तदन्तस्ये'त्यस्याप्रवृत्तेः । तदेतत्सकलमभिप्रेत्याह—**समुदायस्येत्यादि** । एवमतिसखेत्यत्रापि समासान्तनिषेधादिकं

भयोर्ग्रहणमित्याह—**खितीत्यादि** । ङस्यादिपरस्तादृशः खिखीतितीशब्दप्रकृतिक एव सम्भवतीति भावः । **सुसखेति** । 'न पूजना'दिति निषेधाद्राजाहःसखिभ्य इति टज् न । **समुदायस्येति** । 'असखी'त्यस्य सखिभिन्नावयवाविति वर्णसञ्ज्ञापक्षेऽर्थः । अत्र पक्षे पर्युदासेन तद्भिन्नप्रातिपदिकान्त्येवर्णादेरेव ग्रहणात्कृतं सख्येति वाक्ये न दोषः । सिद्धान्तिसम्मते तदन्तसञ्ज्ञापक्षे सखिभिन्नावित्यर्थः । पर्युदस्यमानसमर्पकसखिशब्दे तदन्तग्रहणन्तु न, विशेष्यासन्निधानादिति भावः । एतत्सर्वं **हरदत्तानुरोधेन** । 'यस्येति चे'ति सूत्रभाष्यात्तु सखिशब्दस्य तदवयवे लक्षणया सख्यवयवभिन्नयोरिदुतोरित्यर्थः । यथा 'अत्वसन्तस्ये'ति सूत्रेऽधातोरित्येतद्घटकधातुपदस्य 'पिण्डग्रू' इत्यादिसिद्ध्यर्थं धात्ववयवे लक्षणा आकरे दृश्यते । तदन्तसंज्ञापक्षेऽप्यसखीति त्योरेव विशेषणन्ततस्तदन्तविधिः,

सुसखिना। सुसखये। ङसिङसोर्गुणे कृते कृतयणादेशत्वाभावा'त्ख्यत्या'दित्युत्त्वं न। सुसखेः। सुसखावित्यादि।

एवमतिशयितः सखा अतिसखा। परमः सखा यस्येति विग्रहे—परमसखा। परमसखायावित्यादि।

गौणत्वेऽप्यनङ्णित्त्वे प्रवर्तेते। सखीमतिक्रान्तोऽतिसखिः। लिङ्गविशिष्टपरिभाषाया अनित्यत्वान्न टच्। हरिवत्। इहाऽनङ्णित्त्वे न भवतः। 'गोस्त्रियो'रिति ह्रस्वत्वेन सखिशब्दस्य लाक्षणिकत्वात्। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणात्। **पतिः समास एव**।१।४।८। पतिशब्दः समास एव घिसंज्ञः स्यात्।

---

बोध्यम्। **गौणत्वेऽपीति**। 'अतिदध्रे'त्यादावस्थ्याद्यनङ्ङिति भावः। तथा च 'येन विधि'रिति सूत्रे 'परमसखाया'विति बहुव्रीहिः, तत्पुरुषे हि टचा भाव्यमिति कैयटः। तथा 'द्वितीया श्रिते'ति सूत्रे 'सोमसखे'ति प्रतीकमुपादाय बहुव्रीहित्वान्न समासान्त इति स एवाह। 'अनुद्युक्षो वरुण इन्द्रसखा', 'अग्ने याहि मरुत्सखा', 'तीव्रं सोमं पिबति गोसखाय'मित्यादिप्रयोगाश्चैवमेव सङ्गच्छन्ते। तत्र तु बहुव्रीहिप्रयुक्तस्य पूर्वपदप्रकृतिस्वरस्य दर्शनेन गौणत्वात्। एतेन घिसंज्ञासूत्रे शोभनः सखा अस्य सुसखिरित्युदाहरन्तौ हरदत्तन्यासकारौ तदनुगामिनश्चान्ये उपेक्ष्याः। **अनित्यत्वादिति**। 'शक्तिलाङ्गलाङ्कुशे'-ति वार्तिके घटघटीग्रहणमत्र लिङ्गम्। **पतिः समास एव**। एवकार इष्टतोऽवधारणार्थः। अन्यथा हि 'समासे पतिरेवे'ति नियमः संभाव्येत, ततश्च 'महाकविने'-त्यादिप्रयोगो न सिध्येत्। 'अनल्विधौ', 'धात्वादे'रित्यादिज्ञापकानुसरणे तु प्रतिपत्ति-

---

'उतश्च प्रत्यया'दितिवत्। ततश्च सख्यवयवभिन्नेवर्णाद्यन्तमित्यर्थः। तदन्तविधिश्च शेषपदार्थविशेषणतया, एवञ्च प्रकृते नैव घिसञ्ज्ञेति लभ्यते। तत्र हि भाष्ये—'इवर्णस्य ईति किमुदाहरणम्?, अतिसखेरागच्छति, यद्यत्र लोपो न स्यात्तदा कृतदीर्घस्य पूर्वान्तवद्भावेन सखिशब्दत्वादतिदेशविषये प्रतिपदोक्तपरिभाषया अप्रवृत्त्योपसर्जनह्रस्वत्वे कृतेऽपि घिसञ्ज्ञा न स्यात्। लोपे तु लक्षणप्रतिपदोक्तपरिभाषया न दोष इत्युक्तं। भवद्रीत्या हि विशिष्टस्य सखिभिन्नत्वेन घिसञ्ज्ञा निर्बाधैवेति तदसङ्गतिः स्पष्टैव। न च लोपेऽपि लिङ्गविशिष्टपरिभाषया दोषः, सखिशब्दस्य तदवयवपरत्वेन प्रातिपदिकग्रहणाऽभावात्। प्रातिपदिकत्ववदुपस्थापकपदोपादानं हि प्रातिपदिकग्रहणं। ख्यत्यात्सूत्रे 'किमर्थं विकृतनिर्देशो, न सखिपतिभ्यामित्येवोच्येतातिसखेरित्यत्र मा भू'दिति भाष्ये ङ्यन्तप्रकृतिक एवायं, विहितविशेषणानाश्रयणेनैव प्रतिपदोक्तपरिभाषानाश्रयणेनैवैतद्भाष्यं प्रवृत्तमिति न तद्विरोध इत्यलम्।

**पतिः समा**। एवकार इष्टतोऽवधारणार्थः। स्मृतिपुराणेषु 'पतये' 'सखिने'त्यादिव्याकरणाऽनिष्पन्नत्वेनाऽसाध्वेव। त्रिशङ्क्वाद्ययाज्ययाजनादाविव तपोमाहात्म्येनाऽसाधुप्रयोगेऽपि ऋषीणां

पत्या । पत्ये । पत्युः । पत्युः । पत्यौ । शेषं हरिवत् । समासे तु—भूपतिना । भूपतये ॥ कतिशब्दो नित्यं बहुवचनान्तः ।

**बहुगणवतुडति सङ्ख्या** ।१।१।२३। एते सङ्ख्यासंज्ञाः स्युः ॥

---

गौरवं स्यादिति भावः । **पत्येत्यादि** । नन्वेवं 'शेषो घ्यसखिपती' इत्येवोच्यतां, किमनेन 'पतिः समास एवे'ति सूत्रेणेति चेन्न; समुदायस्य पतिरूपत्वाभावेन बहुच्पूर्वकपतिशब्दस्यापि घिसंज्ञा स्यात् । ततश्च 'सुसखिने'त्यादिवद्बहुपतिनेत्यादि प्रसज्येत, इष्यते तु 'बहुपत्ये'त्यादि । नापि 'सखिपती समास एवे'त्येवसूत्र्यतामिति शङ्क्यम्, 'बहुपत्ये'त्यादिवद्बहुसख्येत्याद्यापत्तेः, इष्यते तु 'बहुसखिने'त्यादि । अथ कथं 'सीतायाः पतये नमः' इति, 'नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ' इति पराशरश्च । अत्राहुः—पतिरित्याख्यातः पतिः । 'तत्करोति तदाचष्टे' इति णिचि टिलोपे 'अच इः' इत्यौणादिक इप्रत्यये 'णेरनिटी'ति णिलोपे च निष्पन्नोऽयं पतिशब्दः 'पतिः समास एव' इत्यत्र न गृह्यते, लाक्षणिकत्वादिति । एतेन 'कृष्णस्य सखिरर्जुनः' इति भारतम्, 'सखिना वानरेन्द्रेणे'ति रामायणं च व्याख्यातम् । **कतिशब्द इति** । का सङ्ख्या येषां ते कति । 'किमः सङ्ख्यापरिमाणे डति च' इति डतौ डित्त्वाट्टिलोपः । **बहुगणवतु** । बहुगणौ प्रातिपदिके सङ्ख्यावाचके गृह्यते न तु सङ्घवैपुल्यवाचके अपि, सङ्ख्यायते अनयेत्यन्वर्थसंज्ञाविधानात् । अतएव डतिरपि 'किमः सङ्ख्यापरिमाणे डति चे'ति विहितस्तद्धित एव गृह्यते, 'वतु'साहचर्याच्च, न तु 'पातेर्डतिः' । यद्यपि संज्ञाविधौ

---

दोषाभावात् । याज्ञे कर्मण्येवाऽसाधुप्रयोगे दोषाच्च । अस्माकमपि स्मृतिपुराणाध्ययनविधिबलात्तेषान्तपोबलाच्च यज्ञमध्येपि तदन्तर्गततत्पाठे दोषाऽभावः । स्वातन्त्र्येणेदृशं प्रयुञ्जाना अस्मदादयः प्रत्यवयन्त्येव । अत एव नदीसंज्ञासूत्रे भाष्ये 'छन्दोवत्कवयः कुर्वन्ती'त्युक्त्वा 'न लोपेष्टिरस्ती'त्युक्तम् । 'यू स्त्र्याख्या'विति सूत्रे हरदत्तग्रन्थे स्पष्टतरञ्चैतत् । 'समास' इत्युक्तेर्बहुच्पूर्वे न घित्वम् । अत एव 'पतिर्वृत्तावेवे'ति नासूत्रि । वर्णसञ्ज्ञापक्षे पत्यवयवेकार इत्यर्थः । तदन्तसञ्ज्ञापक्षे पत्यवयवेकारान्त इत्यर्थः । सूत्रे पतिशब्दश्च तदवयवेकारे लाक्षणिकः । एतेन 'शेषो घ्यसखिपती', 'पतिसखा समास एवे'ति वा सूत्र्यतामित्यपास्तम् । 'यस्येति चे'ति सूत्रस्थभाष्यरीत्या 'सुपतिना' 'सुसख्ये'त्यादीष्टासिद्धया तथान्यासस्य कर्त्तुमशक्यत्वादिति स्पष्टमेवेति दिक् । **नित्यं बहुवचनान्त इति** । 'किमः सङ्ख्यापरिमाण'इत्यनेन किंशब्दाद्बहुत्वसङ्ख्यावच्छिन्नसङ्ख्येयविषयप्रश्नएव डतिरिति भाष्ये स्पष्टत्वादितिभावः ।

**बहुगण** । सङ्ख्याप्रदेशेष्वेतत्संज्ञाकरणज्ञानरूपप्रकरणसत्त्वेपि तन्मूलकृत्रिमाऽकृत्रिमन्यायस्य न प्रवृत्तिः, 'कर्त्तरि कर्मे'त्यादाविव । अत एव 'सङ्ख्याया अतिशदन्तायाः' इति शदन्तपर्युदासः सङ्गच्छते, न हि शदन्ता कृत्रिमा सङ्ख्यास्ति । तस्मात्सङ्ख्याप्रदेशेषूभयगतिः । किं च लोकप्रसिद्धमहासंज्ञाकरणेन प्रदेशेषु लोकप्रसिद्धयर्थस्याप्यवगतिरिति स्पष्टं भाष्ये । अत एव 'पञ्चकृत्व' इत्यादिसिद्धिः ।

**डति च** ।१।१।२५। डत्यन्ता सङ्ख्या षट्संज्ञा स्यात् ।

**प्रत्ययस्य लुक्श्लुलुपः** ।१।१।६१। लुक्श्लुलुप्शब्दैः कृतं प्रत्ययाऽदर्शनं

---

प्रत्ययग्रहणे तदन्तग्रहणं नास्ति तथाहि वतुडत्योः केवलयोः संज्ञाविधौ फलाभावाद-न्वर्थतावलाच्च तदन्तयोरेव संज्ञा प्रवर्तते। सानुबन्धनिर्देशस्तु 'ब्राह्मणवद्वसति'रित्यादावतिप्रसङ्गशङ्कां निराकर्तुमित्याहुः । न चैवं सङ्ख्याकार्येषु कृत्वसुजादिषु कृत्रिमसङ्ख्याया एव ग्रहणं स्यान्न त्वकृत्रिमाया इति 'पञ्चकृत्व'इत्यादि न सिध्येत्, कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययादिति वाच्यम्; 'सङ्ख्याया अतिशदन्तायाः क'न्नित्यत्रातिशदन्त-पर्युदासवलेन सङ्ख्याकार्येषु कृत्रिमाकृत्रिमन्यायाऽप्रवृत्तेः । नन्वेवं भूरिशब्दात्कृत्वसुच्प्रत्यय प्रसङ्ग इति चेदत्राहुः-'अनियतसङ्ख्यावाचिनां चेत्सङ्ख्याकार्यं स्यात्तर्हि' 'बहुगणयोरेवे'त्येवंभूतनियमफलकसङ्ख्याविज्ञानान्नास्त्यतिप्रसङ्ग इति ।

**डति च**। 'ष्णान्ता ष'डित्यतः 'ष'डित्यनुवर्तते। 'सङ्ख्ये'ति च प्रकृतं 'डती'त्यनेन विशेष्यते तदाह–**डत्यन्ता सङ्ख्येति** । सङ्ख्येति किम् ? । पतयः ॥

**प्रत्ययस्य लुक्श्लुलुपः**। 'अदर्शनं लोपः' इत्यतोऽनुवृत्तस्यादर्शनस्यानेकसंज्ञा-

---

एतन्न्यायोपयोगस्त्वभ्यासाम्रेडितादिसञ्ज्ञाविषये द्रष्टव्यः । सूत्रे बहुगणग्रहणन्तु तयोर्नियतविषयपरिच्छेदहेतुत्वाभावेनाऽसङ्ख्यात्वात् । बहुत्वादि हि त्र्यादिसङ्ख्याव्यापको धर्मविशेषः । अत एव भाष्ये 'एतत्सूत्रमतिदेशार्थं यदयमसङ्ख्यां सङ्ख्येत्याहे'त्युक्तम् । यत्तु भाष्ये 'एकादिकया चापि सङ्ख्यायते' इत्युक्तं, तस्यायमर्थः–बह्वादिकयापि स्वव्याप्यत्रित्वादिसङ्ख्यया सङ्ख्यायते । कतिशब्दोपि सङ्ख्यानकरणीभूतार्थविषयप्रश्नार्थकतया सङ्ख्यानकरणम्। एवं वत्वन्तेष्वूह्यम्। यद्वा 'चापि'शब्दो वाक्यालङ्कारे । एकादिकया सङ्ख्यायते सापि प्रदेशेषु यथा गृह्येतेति लोकप्रसिद्धमहासञ्ज्ञाकरणमिति तदर्थः । एतेनार्थान्तरवाचित्वे सति बहुत्ववाचिनश्चेत्सङ्ख्याकार्यन्तर्हि बहुगणयोरेवेति नियमार्थं तत्, तेन भूर्यादीनां न, तेषां वैपुल्याद्यर्थान्तरवाचित्वात् । **वैपुल्यं**–विशालता । विशेष्यविशेषणदलाभ्यामबहुत्ववाचिन एकशब्दस्य बह्वर्थमात्रवाचिनां त्र्यादीश्च न व्यावृत्तिः । यद्वा–'अनियतसङ्ख्यावाचिनाञ्चेद्बहुगणयोरेवे'ति नियमः । अनन्तशब्दवदनन्तवाचिशतशब्दस्य सङ्ख्याकार्याभाव इष्ट एवेत्यपास्तम् । सङ्घवैपुल्यवाचकयोर्नेह ग्रहणं, परस्परसाहचर्येण त्र्यादिसङ्ख्याव्यापकधर्मवाचिनोरेव ग्रहणात् । 'वतु' इति सानुबन्धनिर्देशो 'ब्राह्मणव'दित्यादिव्यावृत्त्यर्थः। डतिस्तद्धित एव, वतुसाहचर्यादित्यलम् ।

'ष्णान्ते'त्यतः 'ष'डिति वर्त्तते, 'सङ्ख्ये'ति च प्रकृतं, तदाह–**डत्यन्तेति** । अत एव 'षट्कती'ति डडनुवादेन शुग्विहितः । अत एव सञ्ज्ञाविधावपि प्रत्ययग्रहणे तदन्तग्रहणम् । सङ्ख्येति किम् ? । पतयः ॥

**प्रत्ययस्य** । अनेकसञ्ज्ञाकरणादावृत्त्या विभक्तिविपरिणामेन च तद्भावितसंज्ञाश्रयणमतो न [illegible] तेन 'हन्तो'त्यादौ 'श्ना'विति द्वित्वं न, तदाह–**लुक्श्लुलुप्शब्दैरिति** । 'अदर्शनं लोप'

क्रमात्तत्तत्संज्ञं स्यात्। **षड्भ्यो लुक्** ।७।१।२२। षड्भ्यः परयोर्जश्शसोर्लुक्स्यात् ॥

**प्रत्ययलोपे प्रत्ययलक्षणम्** ।१।१।६२। प्रत्यये लुप्तेऽपि तदाश्रितं

---

करणसामर्थ्यात्तत्राद्याश्रित्य तद्भावितसंज्ञा इह विज्ञायन्ते, तेन संज्ञासङ्करोऽत्र न भवति, तदेतदाह–**लुक्श्लुलुप्शब्दैरित्यादि**। सति तु संज्ञासङ्करे 'हन्ती'त्यत्र शब्लुकि 'श्लौ' इति द्वित्वं स्यात्। 'जुहोती'त्यत्र श्लौ सति 'उतो वृद्धिर्लुकि हली'ति वृद्धिः स्यात्। न च तत्र 'अभ्यस्तस्य ने'त्यनुवृत्तेर्योयोति नोनोतीत्यादाविव वृद्धिर्न भविष्यतीति वाच्यं, संज्ञासङ्करपक्षे तदनुवृत्त्यसंभवात्, अन्यथा सूत्रस्य निर्विषयत्वापत्तेः। न च 'यौती'त्यादिरवकाशः, संज्ञासङ्करे तत्रापि द्वित्वस्य दुर्वारत्वादिति भावः। 'फले लुक्' 'जुहोत्यादिभ्यः श्लुः' 'जनपदे लु'बित्यादिविधिप्रदेशेषु सूत्रशाटकवद्भाविसंज्ञाविज्ञानान्नान्योन्याश्रयः ॥

**षड्भ्यो लुक्**। 'सर्वनाम्नः स्मै' इतिवत् 'षषो लु'गिति वक्तव्ये बहुवचननिर्देशोऽत्रार्थप्राधान्यसूचनार्थः, कृत्रिमाकृत्रिमन्यायेन स्वरूपनिराससिद्धेः। तेन 'षडर्थगतसङ्ख्याभिधायिनोरेव जश्शसोर्लु'गित्यर्थपर्यवसानात्प्रियपञ्चान इत्यादौ नातिप्रसङ्गः।

'जश्शसोः शि'रित्यतोऽनुवर्तनादाह–**जश्शसोर्लुक्स्यादिति**। **प्रत्ययलोपे**। प्रत्ययविशेषविहिता अपि लुगादिसंज्ञाः लोपसंज्ञां न बाधन्ते। एकसंज्ञाधिकारादन्यत्र संज्ञानां बाध्यबाधकभावानङ्गीकारादिति भावः। स्थानिवत्सूत्रेण सिद्धे नियमार्थमिदं

---

इत्यतोऽदर्शनमित्यनुवर्त्तते। प्रदेशेषु भाविसञ्ज्ञाविज्ञानान्नान्योन्याश्रयः। एकसञ्ज्ञाप्रकरणादन्यदेशस्थत्वेन लोपसञ्ज्ञया आसां समावेशः। तेन प्रत्ययलक्षणसिद्धिः। **षड्भ्यो**। 'जश्शसोः शि'रित्यतो 'जश्शसो'रिति वर्त्तते। 'षड्भ्य' इति विहितविशेषणन्तेन गौणे न। 'परमपञ्चे'त्यादौ तु विशिष्टस्यापि सङ्ख्याप्रकारकसङ्ख्येयविशेष्यकबोधजनकत्वेन सङ्ख्यावाचितया षट्त्वमस्त्येवेति न दोषः। स्पष्टञ्चेदं 'षट्प्रधान एष समास' इत्यादिना सर्वादिसूत्रे भाष्ये। कैयटस्य तु प्रमाद इत्यन्यत्र निरूपितम् ॥

**प्रत्ययलोपे**। 'प्रत्ययस्ये'त्यनुवृत्त्या सिद्धे आद्यप्रत्ययग्रहणमवयवलोपे मा भूत। तेनाग्नीयेत्यादौ नानुनासिकलोप इति स्पष्टं भाष्ये। इदमेव प्रत्ययग्रहणं ज्ञापकमवयवेपि प्रत्ययत्वव्यवहारस्य। एवञ्चादेशप्रत्यययोरिदुदुपधस्येत्यनयोर्लक्षणादि नाश्रयणीयं, 'सात्पदाद्यो'रिति च चरितार्थम् ॥

स्थानिवत्सूत्रेण सिद्धे इदं सूत्रं नियमार्थमिति भाष्यम्। 'प्रत्ययस्यासाधारणं रूपं यत्राश्रीयते तत्रैवे'ति। न चैवं 'दाधर्त्ती'ति सूत्रे 'तेतिक्ते' इति किं निपात्यते ?, आत्मनेपदं, नैतदस्ति, 'अनुदात्तङित' इत्येव सिद्धं। नियमार्थं तर्हि भविष्यत्यन्त्रैव यङ्लुगन्तस्य नान्यत्र बेभिदीती'त्युक्तम्, अस्य नियमत्वे तेनात्मनेपदं दुर्लभं, ङित्त्वस्य प्रत्ययाऽप्रत्ययसाधारणत्वादिति वाच्यम्, आत्मनेपदमित्यस्यैव सिद्धान्त्युक्तित्वात्। 'ततो विध्यर्थमिद'मिति वार्त्तिकानुसारिणा 'ऽनुदात्तङित इत्येव सिद्ध'मिति

कार्यं स्यात् । इति 'जसि चे'ति गुणे प्राप्ते—। **न लुमताङ्गस्य** ।१।१।६३। लुक् श्लु लुप्—एते लुमन्तः । लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्यं न स्यात् । कृति ।

---

सूत्रं, 'प्रत्ययस्याऽसाधारणं रूपं यत्र प्रयोजकं, तदेव कार्यं प्रत्ययलोपे सति भवति न तु प्रत्ययाऽप्रत्ययसाधारण'मिति । तेन शोभना दृषदो यस्य सुदृषत्प्रासाद इत्यत्र 'नञ्सुभ्या'मित्यन्तोदात्ततां बाधित्वा 'सोर्मनसी अलोमोषसी' इत्युत्तरपदाद्युदात्तत्वम्, 'अत्वसन्तस्ये'ति दीर्घश्च न भवति । यद्वा,—यत्र प्रत्ययः प्राधान्येनाश्रीयते तत्रालिवधावपि विध्यर्थसिद्धम् । तेन 'अतृणे'डित्यत्र हलादौ पिति सार्वधातुके विहित इम् लुप्तेऽपि तस्मिन्भवति । 'वर्णाश्रये नास्ति प्रत्ययलक्षण'मिति तु वर्णप्राधान्यविषयकम्, तेन गवे हितं 'गोहित'मित्यत्राऽवादेशो न । यद्यपीदं पक्षद्वयमाकरारूढं, तथापि नियमपक्ष एव प्रबल इति यङ्लुगन्ते मनोरमायां स्थितम् । स्यादेतत्—सूत्रस्यास्याऽवश्यकत्वेऽपि 'प्रत्ययलोपे तल्लक्षण'मित्येव सूत्र्यतां किमनेन द्वितीयप्रत्ययग्रहणेन ? । अत्राहुः—'प्रत्ययस्याऽसाधारणं रूपं यत्रे'त्यादिलाभार्थं द्वितीयप्रत्ययग्रहणमिति ॥

**न लुमताङ्गस्य** । लुमतेति किम् ? । कार्यते हार्यते । अत्र 'णेरनिटि'इति णिलोपेऽपि णिजपेक्षा वृद्धिर्भवत्येव । अङ्गस्येति किम् ? । 'पञ्च' 'सप्त' 'कती'त्यादौ प्रत्ययान्तकार्यं

---

शङ्किते तदनुसार्येकदेशिन एव तत्समाधानमित्यदोषादित्यन्यत्र विस्तरः । 'प्रत्ययलोपे प्रत्ययव'दिति सिद्धे लक्षणग्रहणं प्रत्ययनिमित्तकमेव यथा स्यान्न तु प्रत्ययस्थानिकमित्यर्थलाभार्थं । तेन 'नखभिन्न' इत्यादावैसादिकं नेत्येके । अतिदेशेनाहार्यतद्बुद्धिसम्पादनेप्युच्चारणप्रसङ्गरूपषष्ठ्यर्थाभावान्नैसादीति तद्व्यर्थमित्यपरे । **कार्यमिति** । प्राधान्यात्कार्यातिदेशोऽयमिति भावः । 'इहापि 'परिवी'रिति शास्त्रपरविप्रतिषेधेन परत्वाद्दीर्घत्वं भविष्यती'ति भाष्येण तृज्वत्सूत्रे शास्त्रकार्यातिदेशयोरैक्यकथनेन चातिदिश्यमानकार्याणामुत्पत्तिदेश एव देश इत्यङ्गीकारात्परिवीरित्यत्र तुग्दीर्घौ पर्यायेण न, किं तु दीर्घ एव परत्वात् । अन्यथाऽनेनैवोभयोर्विधानात्परत्वाभावेन पर्यायो दुर्वार इति बोध्यं, तदाह—**जसि चेति गुणे प्राप्ते इति** । 'जसि चे'ति विहितेऽनेन गुणे प्राप्त इत्यर्थः । **न लुमता** । 'लु'शब्द'-युक्ता लुमन्तस्तदाह—**लुगित्यादि** । **अङ्गकार्यमिति** । लुप्तप्रत्यये परतो यः पूर्वस्तत्प्रकृतिभूतो लब्धाङ्गसञ्ज्ञकस्तदुद्देश्यकं यत्कार्यमाङ्गमनाङ्गं वेत्यर्थः । तेन 'पञ्चे'त्यादौ पदसंज्ञा भवति । राजपुरुषादौ भसञ्ज्ञा च न । अङ्गसञ्ज्ञा तु यथोद्देश्यत्वात्प्रत्ययसत्ताकाले जाता तिष्ठत्येव । तत्काले कार्याभावादप्रवृत्तावपि प्रत्ययलक्षणेन सा । तस्या लब्धाङ्गसञ्ज्ञककार्यत्वाभावेन निषेधाऽप्रवृत्तेः । स्पष्टंचेदं 'युवोरनाकौ' इत्यत्र कैयटे । 'न लुमते'त्यस्याऽनित्यत्वादङ्गसञ्ज्ञायामप्रवृत्तिरिति तत्त्वमिति कश्चित् । अत एव पञ्चभिः क्रोष्टृभिः क्रीतं कुलमिति 'तद्धितार्थ'इति समासे ठकोऽध्यर्धेति लुकि 'लुक्तद्धिते'ति क्रोष्ट्रप्रत्ययलुकि 'पञ्चक्रोष्टृ' इत्यत्र तृज्वत्त्वम् । तदुक्तं भाष्ये—'तृज्व'दिति सूत्रे 'न चापरं निमित्तमाश्रीयते, किं तर्हि ?, अङ्गस्य क्रोष्टुस्तृज्वदिति, अङ्गसञ्ज्ञा च भवति प्रत्ययलक्षणेने'ति

कति । कतिभिः । कतिभ्यः । कतिभ्यः । कतीनाम् । कतिपु । युष्मदस्मत्षट्संज्ञकास्त्रिपु सरूपाः । त्रिशब्दो नित्यं बहुवचनान्तः । त्रयः । त्रीन् । त्रिभिः । त्रिभ्यः । त्रिभ्यः । **त्रेस्त्रयः** ।७।१।५३। त्रिशब्दस्य त्रयादेशः स्यादामि । त्रयाणाम् ।

---

'सुप्तिङन्तम्–' इति पदसंज्ञा यथा स्यात् । **अस्मादिति** । प्राचा त्वव्ययास्मदिति पठितं, तत्र अव्ययेत्युपेक्षितम्, 'सदृशं त्रिपु लिङ्गेपु'इति श्रुतेर्लिङ्गत्रयाद्यभावपरत्वेन अव्ययानामलिङ्गत्वात् । अव्ययीभावस्य तु वचनात्क्लीवत्वेऽपि लिङ्गान्तराभावाच्च । **त्रिशब्द इति** । 'तरतेर्ड्रिः' । डित्त्वाट्टिलोपः । **त्रेस्त्रयः** । 'त्रे'रिति षष्ठी न तु पञ्चमी । 'त्रय' इत्यदन्तं न तु सान्तं, 'निजां त्रयाणा'मिति निर्देशादित्यभिप्रेत्याह–**त्रिशब्दस्य त्रयादेश इति** । ननु 'निजां त्रयाणा'मिति निपातनादेव त्रयादेशे सिद्धे किमनेन सूत्रेणेति चेन्मैवम् । 'अबाधकान्यपि निपातनानि भवन्ती'त्यनेन ज्ञापनात् । तेन 'पुरातन'मिति सिध्यति । अन्यथा 'पुराणप्रोक्तेपु–'इति निपातनादेतद्बाध्येत । 'त्रेरयङि'त्येव न सूत्रितम् । तत्करोति आचष्टे वेत्यर्थे 'तत्करोति' इत्यादिना णिचि ततः क्विपि 'प्रकृत्यैकाजि'ति प्रकृतिभावाट्टिलोपाभावे 'ह्रस्वस्य पिती'ति तुकि 'त्रित्' । ततो बहुत्वविवक्षायामामि कृते त्रेरयङि 'त्रयाणा'मिति रूपाऽसिद्धेः । न च 'वार्णादाङ्गं

---

न चोरदत्त्ववत्तृज्वत्त्वेपि परनिमित्ताश्रयणमिति 'पञ्चक्रोष्टृ' इत्यस्याऽसिद्धिरिति वाच्यम्, 'उर'दित्यत्र शब्दतः परस्य निमित्तत्वानाश्रयणेपि अङ्गसञ्ज्ञाद्वारोरदत्त्वस्यापि परनिमित्तकत्वेन स्थानिवत्त्वप्रवृत्तिरित्येव 'लिट्यभ्यासस्ये'ति सूत्रस्थभाष्याशयात् । नियमतः परवुद्धेः पूर्ववृत्तितया परनिमित्तत्वात् । अत एव चर्करीत्यजर्घा इत्यादौ तत्प्रवृत्तिः । अचिश्नुइत्यादावजादिप्रत्यय इत्यर्थस्तु 'अङ्गस्ये'ति पष्ठ्या 'निमित्ते' इत्यध्याहारेण तस्य विशेष्यतया यथाकथञ्चिदुपपाद्यः । आकडाराधिकारस्थेपु कार्यकालत्वस्याऽभावाच्च । वस्तुतः कार्यकालपक्षेऽपि क्रोष्टुशब्दः प्रत्ययेऽङ्गसञ्ज्ञो भवत्यङ्गसञ्ज्ञकस्य च तस्य तृज्वत्त्वं स्त्रियामित्येवार्थः । 'उर'दित्यादौ तु गतिरुक्तैव । पदैकवाक्यतयान्वयस्तु सञ्ज्ञासूत्राणां दुर्लभ इत्यन्यत्र निरूपितम् । एतेन 'उर'दित्यादौ तु आवृत्त्याऽत्वं प्रति निमित्ततापि, वव्रश्चेति लक्ष्यानुरोधात्, न तथा प्रकृते, लक्ष्यानुरोधादेवेति तदाशयः । चर्करीत्यजर्घा इत्यादौ तु 'न लुमते'ति निषेधानित्यत्वादत्त्वप्रवृत्तिस्तपो इत्यादौ गुणवत् । अङ्गाक्षिप्तप्रत्ययनिमित्तं लुकि भवत्येवेति तु ब्रुवे हितं ब्रूहितमित्यादावुवङापत्त्या चिन्त्यमित्यपास्तम् । **त्रिपु सरूपा इति** । 'ङे प्रथमयो'रिति सूत्रे 'युष्मा'नित्यादौ 'तस्माच्छसो न' इत्युपन्यासपरेण भाष्येण 'स्वमोर्नपुंसका'दिति सूत्रे शिग्रीनुमादिभिर्युष्मदाद्यादेशानां विप्रतिषेधपरेण वार्त्तिकेन तद्भाष्येण च 'न पुडि'ति निषेधेन च लिङ्गसत्ताबोधनेपि लिङ्गबोधकप्रत्ययानुत्पत्त्या रूपे न विशेष इत्यर्थः । 'साम आक'मिति सूत्रस्थस्याऽलिङ्गे युष्मदस्मदी इति भाष्यस्य पदान्तरसन्निधानं विना लिङ्गविशेषो युष्मदस्मच्छब्दमात्रान्न प्रतीयत इत्यर्थ इति दिक् । **त्रेस्त्रयः** । अयं न सान्तो, 'निजान्त्रयाणा'मिति निर्देशात् । त्रेरयङ न कृतोऽयङ्यी-

परमत्रयाणाम् । 'गौणत्वे तु ने'ति केचित् । प्रियत्रीणाम् । वस्तुतस्तु प्रियत्रयाणाम् । त्रिषु । द्विशब्दो नित्यं द्विवचनान्तः । **त्यदादीनामः**।७।२।१०२ । एषामकारोऽन्तादेशः स्याद्विभक्तौ । ॐ **द्विपर्यन्तानामेवेष्टिः** । द्वौ २ । द्वाभ्याम् ३ । द्वयोः २ । द्विपर्यन्तानां किम् ?। भवान् । भवन्तौ । भवन्तः । संज्ञायामुपसर्जनत्वे च नात्वम्, सर्वाद्यन्तर्गणकार्यत्वात् । द्विर्नाम कश्चित्-द्विः । द्वी । द्वावतिक्रान्तोऽतिद्विः । हरिवत् । प्राधान्ये तु 'परमद्वावित्यादि ॥ औडुलोमिः । औडुलोमी । बहुवचने तूडुलोमाः । ॐ **लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः** । बाह्वादीञोऽपवादः ।

---

बलीयः'इति तुकः प्रागेवायं स्यादिति शङ्क्यम्, युगपत्प्रवृत्तावेवाऽऽङ्गस्य बलीयस्त्वात् ।

**केचिदिति** । 'त्रेः संबन्धिन्यामी'ति विज्ञानाद्गौणत्वेऽपि त्रयादेशो न भवतीति तेषामाशयः । **वस्तुतस्त्विति** । अर्थप्राधान्यबोधकस्य बहुवचनस्याभावाद्गौणत्वेऽपि त्रयादेशो न्याय्यः, प्रियास्थ्नेत्यादावस्थ्याद्यनङ्वदिति भावः । **त्यदादीनामः** । 'अष्टन आ विभक्तौ' इत्यतोऽनुवर्तनादाह–**विभक्ताविति** । विभक्ताविति किम् ?। तद् । यद् । सोर्लुका लुप्तत्वात्प्रत्ययलक्षणं न । **द्विपर्यन्तानां किमिति** । युष्मदस्मच्छब्दयोरिष्ट्यभावेऽपि दोषो नास्ति, आत्वयत्वलोपैर्विशेषविहितैरत्वस्य बाधनात् । तथा किंशब्देऽपि न दोषः, किमः कादेशस्य विशिष्य विधानादिति प्रश्नः ।

**भवानिति** । भवत्–सु इति स्थिते तकारस्थाने अत्वे कृते 'अतो गुणे' इति पररूपे 'उगिदचाम्–' इति नुमि सति 'सर्वनामस्थाने' इत्यनेन दीर्घे सुलोपे नलोपे च सति 'भवा' इति रूपं स्यादिति भावः । **भवन्ताविति** । पूर्ववत्तकारस्याऽत्वे पररूपे नुमि दीर्घे 'भवाना'विति रूपं स्यादिति भावः । उडूनीव लोमानि यस्य तस्यापत्यमौडुलोमिः । **इञोऽपवाद इति** । तथा च बहुत्वे अकारान्तोऽयमुडुलोमशब्दः

---

त्यादाविवोच्चारणार्थत्वशङ्कावारणाय । **केचिदिति** । 'आमि सर्वनाम्न' इति साहचर्यादिति भावः । **वस्तुतस्त्विति** । साहचर्यस्यासार्वत्रिकत्वात्सूत्रान्तरस्थतदाश्रयणे दृढतरप्रमाणाभावाच्चेति भावः । न च गौणमुख्यन्यायेनात्र नेति वाच्यम्, अप्रसिद्धत्वगौणलाक्षणिकत्वान्यतररूपगौणत्वाभावात् । अत एवोपसर्जनानां सर्वनामत्वनिषेध आरब्धो वार्त्तिककृता । इतरविशेषणतामात्रेण तत्त्वाभावात्, पदकार्यत्र तत्प्रवृत्तेश्चेत्यन्यत्र विस्तरः । **द्विशब्दो नित्यन्द्विवचनान्त इति** । सङ्ख्यापरत्वेऽपीत्यर्थः । अत एव 'करय द्वित्वे' इत्यर्थे 'कस्य द्वयो'रिति भाष्ये बहुष्विति सूत्रे प्रयुक्तम् ।

**त्यद्वादी** ॥ 'अष्टन' इत्यतो 'विभक्ता'वित्यनुवर्त्तते । तत्फलं 'तत्कुलम्' । सोर्लुक्यत्वं न । **इष्टिरिति** । भाष्यकारस्येति भावः । **द्विपर्यन्तानां किमिति** । युष्मदस्मदोरात्वयत्वलोपैर्बाधात्किमः कादेशविधानाच्च प्रश्नः । **भवान्भवन्तावि**त्यभ्युच्चयाय ।

औडुलोमिम्। औडुलोमी। उडुलोमान्॥ **इतीदन्ताः**॥ 'वातप्रमी'रित्युणादिसूत्रेण माङ ईप्रत्ययः, स च कित्। वातं प्रमिमीते वातप्रमीः। 'दीर्घाज्जसि च।' वातप्रम्यः। हे वातप्रमीः। 'अमि पूर्वः'। वातप्रमीम्। वातप्रम्यौ। वातप्रमीन्। वातप्रम्या। वातप्रमीभ्याम् ३। वातप्रम्ये। वातप्रम्यः २। वातप्रम्योः २। वातप्रम्याम्। दीर्घत्वान्न नुट्। ङौ तु सवर्णदीर्घः। वातप्रमी। वातप्रमीषु। एवं ययीपप्यादयः। यान्त्यनेनेति ययीर्मार्गः। पाति लोकमिति पपीः सूर्यः। 'यापोः किद्द्वे चे'ति ईप्रत्ययः। क्विबन्तवातप्रमीशब्दस्य तु अमि शसि ङौ च विशेषः,–वातप्रम्यम्। वातप्रम्यः। वातप्रम्यि। 'एरनेकाचः'इति वक्ष्यमाणो यण् प्रधीवत्। बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी। दीर्घङ्यन्तत्वाद्धल्ङ्याबिति सुलोपः। **यू स्त्र्याख्यौ नदी**।१।४।३।

---

स औडुलोमिशब्दादन्य एव, तस्य च इकारान्तेषु व्युत्पादनं प्रासङ्गिकमिति बोध्यम्॥ **इति इदन्ताः**। **किदिति**। तेन 'आतो लोप इटि चे'त्यालोप इति भावः।

**क्विबन्तवातप्रमीति**। माङ्धातोः क्विपि 'ईत्त्वमवकारादौ'इति निषेधादीत्त्वं नेति शङ्कायां मीनातेरेव क्विब्बोध्यः। यद्वा ईप्रत्ययान्तवातप्रमीशब्दादाचारक्विबन्तात्कर्तरि क्विब्बोध्यः। **श्रेयस्य इति**। 'प्रशस्यस्य श्रः' इतीयसुनि श्रादेशः। 'उगितश्चे'ति ङीप्। **बहुश्रेयसीति**। 'स्त्रियाः पुंवत्–' इति पुंवद्भावः। 'ईयसश्चे'ति न कप्। नाऽप्युपसर्जनह्रस्वः 'ईयसो बहुव्रीहेर्ने'ति निषेधात्। **यू स्त्र्याख्यौ**। ईश्च ऊश्च यू। व्याख्यानाद्दीर्घयोरेव ग्रहणम्। अविभक्तिकोऽयं निर्देश इत्येके। 'दीर्घाज्जसि चे'ति निषेधस्य 'वा छन्दसी'ति पाक्षिकत्वात् 'प्रथमयोः पूर्वसवर्णः' इति दीर्घ इत्यन्ये। इह 'प्रत्ययस्यैव ग्रहण'मिति परिभाषा नोपतिष्ठते। 'नेयङुवङ्स्थानावस्त्री'ति निषेधाल्लिङ्गात्। तेन 'प्रध्यै' 'प्रध्य' इत्यादौ नदीकार्यं स्यादेव। स्त्रियमा-

---

**ङौ तु सवर्णदीर्घ इति**। इदं सम्भावनामात्रेण, एषां ङौ 'ईदूतौ च सप्तम्यर्थे' इति सूत्रस्थभाष्यप्रामाण्येनाऽनभिधानात्।

**क्विबन्तवातेति**। 'ईत्त्वमवकारादा'विति वार्त्तिकस्य 'पावान' इत्यादीनां वनिपा साधनरूपस्य तत्प्रत्याख्यानभाष्यस्य च फलैक्यायेदृशेभ्यः क्विपोऽनभिधानमावश्यकमिति। धीवरी पिवरीत्यादि 'ध्याप्योः संप्रसारणञ्च' 'क्विप्' 'कनिप्' चेनेत्यर्थकाज्जुनसनखनां सञ्झलोर्घुमास्थागापेति सूत्रभाष्यपर्यालोचनया सिद्धाद्वार्त्तिकात्सिद्धम्। धोर्ध्यायतेर्दधातेर्वेति'क्विब्वचो'ति वार्तिकस्थभाष्ये 'दधातेर्वे'त्युक्तिरेकदेशिनः। 'शंस्था' इत्यत्र विजेवेति न दोषः। 'मीङ् माने' इतोकारान्तात्क्विबित्येके।

**वातप्रमीर्निःश्रृङ्गो मृगाकृतिर्जन्तुविशेषः**।

**बहुश्रेयसीति**। 'ईयसो बहुव्रीहेर्ने'ति निषेधाद्नोपसर्जनह्रस्वः। **यू स्त्र्या**। दीर्घयोरेव ग्रहणं

ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः। **॥ प्रथमलिङ्गग्रहणं च।** पूर्वं स्त्र्याख्यस्योपसर्जनत्वेऽपि नदीत्वं वक्तव्य मित्यर्थः। **अम्बार्थनद्योर्ह्रस्वः** ।७।३।१०७। अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात्संबुद्धौ। हे बहुश्रेयसि। शसि—बहुश्रेयसीन्।

---

चक्षाते स्त्र्याख्यौ। मूलविभुजादित्वात्कः। 'चक्षिङः ख्याञ्'। 'आतो लोप इटि चे'त्यालोपः। **ईदूदन्ताविति।** इह 'वर्णयोरेव संज्ञे'त्यपि पक्षोऽस्ति। 'आच्छीनद्योः—' इति सूत्रस्वरसात्। तयोः स्त्र्याख्यत्वं तु ङ्यादिषु स्वतः, तन्त्रीर्लक्ष्मीरित्यादौ तु स्त्रीवाचकवर्णसमुदाये घटकत्वेन प्रवेशात्। तेन नद्यन्तादिव्यवहारो न विरुध्यते। एवं 'शेषो घ्यसखी'त्यत्रापि 'इवर्णोवर्णयोरेव घिसंज्ञे'ति पक्षोऽप्यस्तीति बोध्यम्। तेन 'घ्यन्ताजाद्यन्तयोर्घ्यन्तं पर'मिति व्यवहारः सङ्गच्छते। वर्णसंज्ञापक्षे 'असखी'त्यस्य सखिभिन्नस्यावयव इत्यर्थो न तु 'सखिशब्दावयवं वर्जयित्वे'ति। तेन समुदायस्य सखिशब्दभिन्नत्वादतिसखिनेत्यादि निर्बाधमित्यवधेयम्। 'स्त्रिया'मित्येव वक्तव्ये आख्याग्रहणं नित्यस्त्रीत्वलाभार्थमित्याशयेनाह—**नित्यस्त्रीलिङ्गाविति।** यू किम्?, मात्रे। स्त्र्याख्याविति किम्?, ग्रामण्ये। **पूर्वमिति।** वृत्तेः प्रागित्यर्थः। संज्ञायां यथोद्देशप्रवृत्तौ न्यायसिद्धमिदं, कार्यकालपक्षे तु वाचनिकमित्याहुः। वर्णसंज्ञापक्षाश्रयेणाह—**नद्यन्तानामिति। हे बहुश्रेयसीति।** अत्र ह्रस्वविधानसामर्थ्याद्गुणो न प्रवर्तते। अन्यथा 'अम्बार्थनद्योर्गुण' इत्येव ब्रूयात्। न च लाघवाऽभावः शङ्क्यः, ह्रस्वग्रहणे

---

व्याख्यानात्। 'वा छन्दसी'ति पूर्वसवर्णदीर्घः। यू किम्? मात्रे। 'आणनद्या' इति न। स्त्रियमाचक्षाते स्त्र्याख्यौ, मूलविभुजादित्वात्कः। 'स्त्र्याख्या'वित्युपस्थितस्त्रीवाचकशब्दस्य विशेष्यत्वात्तदन्तविधिरित्याह—**ईदूदन्ताविति।** 'आच्छीनद्यो'रित्यादौ नदीशब्दस्य तदवयवे लक्षणा बोध्या। 'आख्या'ग्रहणान्नित्यत्वलाभः। तदाह—**नित्यस्त्रीलिङ्गाविति।** तत्फलन्तु ग्रामण्यादेर्व्यावृत्तिः। नित्यस्त्रीत्वञ्च प्रवृत्तिनिमित्तैक्ये लिङ्गान्तरविशिष्टार्थानभिधायकत्वं। ङयन्तकुमार्यादीनां क्वचि निर्वृत्तेन त्रिलिङ्गेन समानाकारतया नित्यस्त्रीत्वाभाववारणाय **प्रवृत्तिनिमित्तैक्ये** इति। नन्वेवं बहुश्रेयसीशब्दस्य नदीत्वं न स्यादत आह—**प्रथमेति।** अर्थान्तरसङ्क्रमात्पूर्वं विद्यमानं नित्यस्त्रीत्वमादाय तस्याऽर्थान्तरसङ्क्रमेऽपि नदीत्वं वक्तव्यमित्यर्थः। यथोद्देशे पूर्वप्रवृत्तसञ्ज्ञामादायैव कार्यं। कार्यकालपक्षेपि 'कुमारी'त्यादौ प्रकृतिभूतकुमारीशब्दस्य नित्यस्त्रीत्वेन वृत्तावपि विशेषणतया नित्यस्त्रीलिङ्गरूपार्थबोधकत्वेन नदीसञ्ज्ञा। समासे तु स्पष्टैव तदवयवस्य तत्प्राप्तिः। तन्मात्रबोधकत्वनिवेशे, प्राधान्येन तद्बोधकत्वनिवेशे वा न मानम्। तदुक्तं भाष्ये—'अवयवस्त्रीविषयत्वात्सिद्धम्। अवयवोऽत्र स्त्रीविषयस्तदाश्रया नदीसञ्ज्ञा भविष्यती'ति। आकडारस्थसञ्ज्ञानां कार्यकालत्वाभावात्। अन्यथा तत्तद्विध्येकवाक्यतापन्नयोः कथं बाध्यबाधकभावः स्यादिति बोध्यमित्यपि केचित्। **हे बहुश्रेयसीति।** ह्रस्वे कृते गुणस्तु न, प्रक्रियालाघवाय 'अम्बार्थानां ह्रस्वः', 'ह्रस्वनद्योर्गुण' इत्येव वाच्ये ह्रस्वविधानसामर्थ्यात्।

**आण्नद्याः** ।७।३।११२। नद्यन्तात्परेषां ङितामाडागमः स्यात् ।

**आटश्च** ।६।१।९०। आटोऽचि परे वृद्धिरेकादेशः स्यात् । बहुश्रेयस्यै । बहुश्रेयस्याः २ । नद्यन्तात्परत्वान्नुट् । बहुश्रेयसीनाम् ॥

**ङेराम्नद्याम्नीभ्यः** ।७।३।११६। नद्यन्तादाबन्तान्नीशब्दाच्च ङेराम् स्यात् । इह परत्वादाटा नुड्बाध्यते । बहुश्रेयस्याम् । शेषमीप्रत्ययान्तवातप्रमीवत् । अङ्यन्त-

---

मात्राधिक्यात्, 'ह्रस्वस्य गुणः' इत्युत्तरसूत्रे गुणग्रहणत्यागेन सुतरां लाघवसंभवाच्च । अन्ये तु कृतेऽपि ह्रस्वे यदि गुण इष्टः स्यात्तर्हि 'अम्बार्थानां ह्रस्वः' इत्युक्त्वा 'नदीह्रस्वयोर्गुणः' इत्येव ब्रूयादित्याहुः । तत्र पदलाघवाभावेऽपि प्रक्रियालाघवमस्ति, परन्तु 'जसि चे'त्यत्र 'ह्रस्वस्ये'त्येकदेशानुवृत्तौ क्लेशोऽस्तीति बोध्यम् । **आण्नद्याः** । 'अण्नद्याः' इत्येव सुवचम्, विधानसामर्थ्यात् 'अतो गुणे' इत्यस्याऽप्रवृत्तौ यथायथं वृद्धिसवर्णदीर्घाभ्यां 'बहुश्रेयस्यै' 'बहुश्रेयस्या' इत्यादिरूपसिद्धेः । ननु 'परत्वादाटा नुड् बाध्यते' इत्युत्तरग्रन्थपर्यालोचनया ङेरामि कृते तस्य नुडागमनिवारणार्थमड्विधेरावश्यकत्वात्सामर्थ्यमुपक्षीणमिति चेत्, एवं तर्हि 'ह्रस्वनद्यापः' इत्यनन्तरं 'ङेर्नें'त्येव सूत्र्यतामामीत्यनुवृत्त्या 'ङेरामो नुण्णे'त्यर्थलाभात् । तस्मात् 'अण्नद्याः'इति विधानसामर्थ्यात् 'अतो गुणे' इति न प्रवर्तत इति दिक् । **आटश्च** । यद्यपि इह ङयि 'वृद्धिरेची'त्येव सिद्धं, ङसिङसोर्ङेरामि च सवर्णदीर्घेण, तथाप्यैन्दिददित्याद्यर्थं सूत्रमिहापि न्याय्यत्वादुपन्यस्तम् । 'अजादीनामटा सिद्धम्' 'आडजादीनाम्'इति सूत्रं मास्तु इति वदतो वार्तिककारस्य मतेतु 'अटश्चे'त्येव सूत्रमिति बोध्यम् । **ङेराम्** । 'ङे'रिति सप्तम्येकवचनस्य ग्रहणं, 'समानाधिकरणे स्त्रिया' मित्यादिनिर्देशात् । **आटा नुड्बाध्यत इति** । आटि

---

'जसि चे'त्यत्रैकदेशे स्वरितत्वप्रतिज्ञया ह्रस्वपदस्यैवानुवृत्तिरिति भाष्ये स्पष्टम् । अम्बार्थानामपि गुणस्तु वक्तुमशक्यः, 'अनः क्लीबजले शोके मातृस्यन्दनयोरपी'ति रभसाद्युक्त्याऽनःशब्दस्याम्बार्थत्वेन गुणापत्तेः । ह्रस्वग्रहणे त्वच इत्युपस्थित्याऽजन्ताऽम्बार्थग्रहणान्न दोषः । तस्य नपुंसकत्वेपि 'हे वारे' इतिवत्पक्षे गुणः स्यादेव । गुणश्रुत्येकपरिभाषोपस्थितौ त्वम्बेत्यादावप्यनापत्तिः । अयं ह्रस्वोऽनन्तरस्येतिन्यायाद्ध्रस्वस्य गुण इत्यस्यैव बाधकस्तेन 'मात'रित्यत्र 'ऋतो ङी'ति गुणो भवत्येवेति दिक् ।

**आटश्च** । न माङ्योग'इति सूत्रस्थभाष्योक्ते'ऽटश्चे'ति न्यासे तु 'वृद्धिरेची'ति बोध्यम् । अत्राऽड् तु वक्तुमशक्यः,'अस्वपोऽहस'न्नित्यत्र वृद्धिवारणायाटश्चेत्यत्र धातावित्यपकर्षेण वृद्ध्यनापत्तेः। 'वृद्धिरेची'त्यस्य तु पररूपं बाधकमिति बोध्यम् । **ङेराम्** । ङेरिति सप्तम्येकवचनं, व्याख्यानात् । **इह परत्वादिति** । सकृद्गतिन्यायाश्रयणादिति भावः । स्पष्टश्चेदं 'ह्रस्वनद्याप'इत्यत्र भाष्ये । यद्यपीहाऽऽडपवादो नद्याम्, सर्वथाऽनवकाशत्वात् । 'अपवादो नुग्दीर्घत्वस्ये'ति 'दीर्घोऽकित' इति सूत्रभाष्ये उक्तत्वेनागमादेशयोरपि तत्त्वसत्त्वात् । तथापि [illegible] । अत एव

त्वान्न सुलोपः । अतिलक्ष्मीः । शेषं बहुश्रेयसीवत् । कुमारीमिच्छन् कुमारीवाचरन्वा ब्राह्मणः कुमारी । क्यजन्तादाचारक्विबन्ताद्वा कर्तरि क्विप् । 'हल्ङ्या'बिति सुलोपः ।

**अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** ।६।४।७७। श्नुप्रत्ययान्तस्येवर्णोवर्णान्तधातोर्भ्रू इत्यस्य चाङ्गस्येयङुवङौ स्तोऽजादौ प्रत्यये परे । 'ङिच्चे'त्यन्तादेशः । आन्तरतम्यादेरियङ्, ओरुवङ् । इतीयङि प्राप्ते— ॥

---

कृते तु पुनर्न प्रवर्तते । 'सकृद्गतौ' इति न्यायाश्रयणादिति भावः । **न सुलोप इति** । 'लक्षेर्मुट् चे'त्यौणादिक ईप्रत्ययान्तो लक्ष्मीशब्द इत्युपसर्जनह्रस्वोऽपि नेति बोध्यम् ।

**कुमारीति** । यद्यपि क्विबर्थं प्रति ङ्यन्तस्योपसर्जनत्वाद्ध्रस्वत्वं प्राप्तं, तथापि 'गोस्त्रियोः' इत्यत्र कृत्रिमोपसर्जनत्वं गृह्यते न त्वप्रधानरूपमिति नात्र ह्रस्वः प्रवर्तते । अतएव हरीतक्याः फलानि हरीतक्य इत्यत्रापि ह्रस्वो न भवति । 'लुक्तद्धितलुकी'त्यत्र त्वप्रधानरूपमुपसर्जनमेव गृह्यते, न तु कृत्रिमोपसर्जनमसम्भवादिति वक्ष्यामः ॥

**अचिश्नु** । 'भ्रमेश्च डूः' इति डूप्रत्ययान्तत्वाद्भ्रूशब्दस्य धातोः पृथग्ग्रहणम् । अन्ये त्वाहुः—'गमः क्वौ' इत्यत्र 'ऊङ् च गमादीनामितिवक्तव्य'मिति वार्तिकादनुनासिकलोपे ऊङादेशे च कृते निष्पन्नोऽयं भ्रूशब्दः । तथा च धातुग्रहणेनैव सिद्धे भ्रूग्रहणं निरर्थकमिति । 'इण' इति वक्तव्ये 'य्वो'रिति गुरुनिर्देश 'इण्प्रत्याहारः परेणैव णकारेण गृह्यत' इति ज्ञापनार्थः । इह 'य्वो'रिति धातोरेव विशेषणं, न तु श्नुभ्रुवोरव्यभिचारादित्याशयेनाह—**इवर्णोवर्णान्तधातोरिति** । 'श्नुधातुभ्रुवामिवर्णोवर्णयो'रिति व्याख्याने तु इयङुवङोर्ङित्त्वं व्यर्थं स्याद्वैयधिकरण्यं च प्रसज्येतेति भावः । ननु सामानाधिकरण्यपक्षेऽपि ङित्त्वं व्यर्थं, 'निर्दिश्यमानस्यादेशा भवन्ती'ति इवर्णोवर्णान्तधातोः सर्वादेशत्वनिवृत्तिसंभवादिति चेन्न; श्नुभ्रुवोरपि निर्दिश्यमानत्वेन सर्वादेशत्वप्रसङ्गात् । 'इ उ इत्यष्टादशानां संज्ञे'त्युक्तत्वाद्यथासङ्ख्यमिह न प्रवर्तते, इत्याह—**आन्तरतम्यादिति** । स्थानत इति भावः । य्वोः किम् ? । चक्रतुः । चक्रुः । अचीति किम् ? । आप्नुयात् ।

---

'न गणेरीत्त्वमपवादत्वाद्धलादिः शेषं बाधते, किं तर्हि ?, अनवकाशत्वा'दिति 'गुणो यङ्लुको'रिति सूत्रभाष्येउक्तम् । 'पादः प'दिति सूत्रस्थं 'शब्दान्तरप्राप्त्याऽनित्ययोराडामोःपरत्वादा'मिति भाष्यं त्वेकदेश्युक्तिरिति बोध्यम् । **अङ्यन्तत्वादिति** । 'लक्षेर्मुट् चे'त्यौणादिकेप्रत्ययान्तत्वादिति भावः ।

**कुमारीति** । ह्रस्वविधायके शास्त्रीयोपसर्जनग्रहणाद्गोस्त्रियोरिति ह्रस्वो न । **अचि श्नु** । भ्रूशब्दोऽव्युत्पन्नं प्रातिपदिकं, भ्रमेर्डूप्रत्ययान्तो वा । इह 'य्वो'रिति धातोः समानाधिकरणं विशेषणन्तदाह—**इवर्णोवर्णान्तधातोरिति** । **इत्यस्येति** । इत्यन्तस्येत्यर्थः । तेन 'सुभ्रुवा'विति सिद्धम् । **आन्तरेति** । स्थानत इति भावः । य्वोरिति किम् ? । वव्रे । अचि किम् ? । युयात् । **इतीयङीति** ।

**एरनेकाचोऽसंयोगपूर्वस्य** ।६।४।८२। धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण्स्यादजादौ प्रत्यये परे। इति यण्। कुमार्यौ। कुमार्यः। हे कुमारि। अमि शसि च–कुमार्यम्। कुमार्यः। कुमार्यै। कुमार्याः २। कुमारीणाम्। कुमार्याम्॥ प्रधीः। प्रध्यौ २। प्रध्यः। प्रध्यम्।

---

जुहुयात्। **एरनेकाचः**। 'इणो यण्' इत्यतो यणिति वर्तते। 'अचि श्नुधातु–' इति सूत्रादिह धातुरेवानुवर्तते, न तु श्नुभ्रुवौ, तयोरिवर्णाऽसंभवात्। धातुग्रहणं चावृत्त्योभयोर्विशेषणं संयोगस्याङ्गस्य चेति व्याचष्टे–**धात्ववयवसंयोगेत्यादि**। तत्र धातुना संयोगस्य विशेषणादिह यण्–, उन्न्यौ। उन्न्यः। 'हरी' 'हरी'नित्यादि सिद्ध्यर्थं धातुना अङ्गं विशेष्यते। अन्यथा 'प्रध्यं' 'प्रध्य' इत्यादाविव पूर्वरूपं पूर्वसवर्णदीर्घं च बाधित्वा यण्स्याद्धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तत्वादङ्गस्य।

**प्रधीरिति**। प्रध्यायतीति प्रधीः। 'ध्यायतेः संप्रसारणं चे'ति क्विपि संप्रसारणे पूर्वरूपे च कृते 'हलः' इति दीर्घः। यदा तु 'प्रकृष्टा धीर्बुद्धिर्यस्ये'ति विगृह्यते तदा धीशब्दस्य नित्यस्त्रीत्वात् 'प्रथमलिङ्गग्रहणं चे'ति नित्यस्त्रीलिङ्गातिदेशे यथासंभवं नदीकार्यं बोध्यम्। 'प्रथमलिङ्गग्रहणं चे'ति वार्तिकस्य प्रथमलिङ्गं गृहीत्वा 'यू स्त्र्याख्यौ'इत्यनेन नदीत्वं वक्तव्यमित्यर्थात्। एरनेकाच इति यण्विषयत्वेन 'नेयङुवङ्–' इति निषेधस्याऽप्रवृत्तेश्चेत्येके। अन्ये त्वाहुः—एवं तर्हि यथोद्देशप्रवृत्तौ न्यायसिद्धमिति मनोरमाग्रन्थो विरुध्येत। यथोद्देशपक्षेऽपि प्रधीशब्दाद्यर्थतया वचनस्यावश्यकत्वात्। मूले हि 'उपसर्जनत्वेऽपि नदीत्वं वक्तव्य'मित्युक्तं, न तु नित्यस्त्रीत्वमिति। तस्मा'त्प्रथमलिङ्गग्रहण'मित्यनेन लिङ्गप्रयुक्तं यन्नदीत्वं वृत्तेः प्राक् स्थितं तदिहाऽतिदिश्यते। धीशब्दे तु 'नेयङुवङ्–' इति निषेधेन नदीत्वाभावान्नास्त्येव प्रधीशब्दे नदीत्वातिदेश इति। 'ङिति ह्रस्वश्चे'ति वैकल्पिकनदीत्वमपीह नातिदिश्यते। 'प्रथम-

---

'सुधी'शब्दे यण्निषेधारम्भादत्र प्रकरणे 'धातोः स्वरूपग्रहणे' इति परिभाषाया अप्रवृत्तिरिति भावः॥

**एरनेकाचो। धात्ववयवयंयोगपूर्वो न भवतीति**। धात्ववयवसंयोगपूर्वभिन्न इत्यर्थः। तद्भिन्नश्च धात्ववयवपूर्व एवेति 'उदियाा'वित्यादौ न दोषः। 'असंयोगा'दित्येव धात्ववयवसंयोगभिन्नात्परस्येत्यर्थेन सिद्धे पूर्वग्रहणं स्पष्टार्थम्। एः किम्?, असंयोगपूर्वग्रहणमिवर्णविशेषणं यथा स्यादङ्गविशेषणं मा भूदिति। तेन 'यवक्रिया'वित्यादौ नातिप्रसङ्गः। 'लुलुवतु'रित्यादौ तु नातिप्रसङ्गः, 'ओः सुपी'ति नियमात्। विपरीतनियमस्तु न। सुधीशब्देऽचि सुपि यण्निषेधारम्भात्।

**कुमार्याविति**। अन्तर्वर्तिविभक्त्या पदत्वाच्छाकलं त्वत्र न, 'नः क्ये' इति निषेधात्।

**प्रधीरिति**। 'प्रकृष्टं ध्यायती'ति विग्रहे नित्यस्त्रीत्वाभावान्न नदीत्वं। प्रकृष्टा धीर्यस्येति विग्रहे तु नदीत्वम्।

प्रध्यः । उन्नयतीत्युन्नीः । धातुना संयोगस्य विशेषणादिह स्यादेव यण्,—उन्न्यौ । उन्न्यः । हे उन्नीः । उन्न्यम् । ङेराम्,—उन्न्याम् । एवं ग्रामणीः । अनेकाचः किम् ? । नीः । नियौ । नियः । अमि शसि च परत्वादियङ्,—नियम् । नियः । ङेराम्—नियाम् । असंयोगपूर्वस्य किम् ? । सुश्रियौ । यवक्रियौ । ❀ **गतिकारकेतरपूर्वपदस्य यण्नेष्यते** । शुद्धधियौ । परमधियौ । कथं तर्हि दुर्धियो वृश्चिकभियेत्यादि ?। उच्यते—दुःस्थिता धीर्येषामिति विग्रहे 'दु'रित्यस्य धीशब्दं प्रति गतित्वमेव नास्ति । यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाः । वृश्चिकशब्दस्य बुद्धिकृत-

---

लिङ्ग'तिं वचनं यथोद्देशे न्यायसिद्धमिति ग्रन्थानुरोधेन वृत्तेः प्रागवस्थायामवयवत्वेनाभिमतेऽपि विद्यमानाया एव नदीसंज्ञायाः समुदाये अभ्युपेयत्वात् । न च प्रकृष्टा धीर्यस्य तस्मै प्रध्ये प्रध्य इत्यादौ प्रथमान्तधीशब्दस्य ङिति परे प्रवर्तमाना नदीसंज्ञाऽस्तीति दिक् । **उन्नीरिति** । 'सत्सूद्विषे'त्यादिना क्विप् । **ङेरामिति** । आङ्त्वान्नीशब्दान्तादपि ङेराम्भवतीति भावः । **ग्रामणीरिति** । ग्रामं नयतीति ग्रामणीः । 'अग्रग्रामाभ्यां नयते'रितिणत्वम् । **नीरिति** । नयतीति नीः । क्विप् । **गतिकारकेतरेति** । 'गतिकारकपूर्वस्यैव यणिष्यते'इति तु नोक्तम्, कुमारीमिच्छन् ब्राह्मणः कुमारी, कुमार्यौ कुमार्य इत्यत्र यणभावप्रसङ्गात् । **शुद्धधियाविति** । यदा तु शुद्धं ब्रह्म ध्यायतीति विगृह्यते तदा भवत्येव यण् । शुद्धध्यौ । शुद्धध्यः । एवमग्रेऽपि । **कथं तर्हीति** । गतिकारकेतरपूर्वपदत्वमिह नास्तीति यणैव भाव्यमिति प्रश्नः । 'दुर्धिय'इत्यत्र 'प्रादिभ्यो धातुजस्ये'ति वार्तिकेन उत्तरपदलोपो बोध्य इत्याशयेनाह—**दुःस्थिता धीर्येषामिति** । **वृश्चिकशब्दस्येति** । भाष्यकृता हि बुद्धिपरिकल्पितमपायमाश्रित्य 'भीत्रा-

---

**ग्रामणीरिति** । 'अग्रग्रामाभ्यां नयते'रिति णत्वम् । 'गतिकारकपूर्वस्यैवे'ति भाष्ये पठ्यते, स च नियमः, तेन गतिकारकपूर्वभिन्नस्य नेति फलति । तद्भिन्नञ्च तत्सदृशं सपूर्वपदमेव, तेन 'निन्यतु'रित्यादौ यण्, तदाह—**गतिकारकेतरेति** । यत्त्वत्र गतिसमासो नित्याधिकारस्थ एव प्रतिपदोक्तत्वाद्गृह्यते इति, तन्न, भाष्ये पूर्वपदग्रहणाभावेन समासोपस्थितेरभावेन विशिष्टरूपोपादानविषयप्रतिपदोक्तपरिभाषाया अप्रवृत्तेः । अत एव नदीसञ्ज्ञासूत्रस्थः 'प्रकृष्टा धीर्यस्या' इति विग्रहाभिप्रायेण प्रवृत्तः 'प्रध्यै ब्राह्मण्यै' इति भाष्यप्रयोगः सङ्गच्छते । **शुद्धधियाविति** । शुद्धा धीर्यस्येति विग्रहः । शुद्धं ध्यायतीति विग्रहे यणेव । आद्ये सत्त्वभूतार्थकधीशब्दार्थविशेषणत्वाच्छुद्धत्वस्य कथमपि न कारकत्वमिति भावः । **कथन्तर्हीति** । दुर्ध्यायन्तीति, दुष्टा धीर्ध्यानं येषामिति, वृश्चिकाद्भीरिति विग्रहाभिप्रायेण प्रश्नः । **दुःस्थितेति** । दुःशब्दोपात्तदुष्टत्वस्य स्थितिक्रियाविशेषणत्वमिति भावः । 'प्रकृष्टा धी'रित्यादौ प्रकर्षः प्रशब्दार्थो धीशब्दोपात्तधात्वर्थे विशेषणमिति यणभवत्येव । **[illegible]येति** । या

मपादानत्वं नेह विवक्षितम्। वृश्चिकसंबन्धिनी भीर्वृश्चिकभीरित्युत्तरपदलोपो वा।

**न भूसुधियोः** ।६।४।८५। एतयोर्यण्न स्यादचि सुपि। सुधियौ। सुधियः। इत्यादि। सखायमिच्छति सखीयति। ततः क्विप्। अल्लोपयलोपौ। अल्लोपस्य स्थानिवत्त्वाद्यणि प्राप्ते-। ॐ **क्वौ लुप्तं न स्थानिवत्**। एकदेशविकृतस्यानन्यतया-

---

र्थाना'मिति सूत्रं प्रत्याख्यातं। ततश्च सम्बन्धमात्रविवक्षायां षष्ठ्येवेति नास्त्यत्र कारक-पूर्वत्वमिति भावः। **वृश्चिकसंबन्धिनी भीरिति**। एवं च भययोगाभावाद्वृश्चिकस्य नापादानकारकत्वमिति सूत्रमतेऽपि न दोष इति भावः। 'ओः सुपी'त्यतः 'सुपी'-त्यनुवर्तनादाह-**अचि सुपीति**। सुपि किम्?। सुध्युपास्यः। वस्तुतस्तु सुपीत्यननुवृत्ता-वपि न क्षतिः, 'अनन्तरस्ये'ति न्यायेन 'एरनेकाचः' इति 'ओःसुपी'ति च सूत्रद्वयेन प्रापि-तस्यैव यणो 'न भूसुधियो'रिति निषेधाभ्युपगमात्। **स्थानिवत्त्वाद्यणि प्राप्त इति**। 'एरनेकाचः-' इत्यनेन। न चान्तर्वर्तिनीं विभक्तिमाश्रित्य सखिशब्दस्य पदत्वात् 'न पदान्ते'ति निषेधेन अल्लोपो न स्थानिवदिति वाच्यम्, 'नः क्ये' इति नियमेन क्यचि नान्तस्यैव पदत्वादत आह-**क्वौ लुप्तमिति**। 'नपुंसके भावे क्तः'। क्वौ लोप इत्यर्थः। इदं सर्वं कुमारीमिच्छन् कुमारीत्यत्रापि बोध्यम्। 'क्वौ लुप्त'मित्येत-त्काचित्कं, 'क्वौ विधिं प्रति न स्थानिव'दित्यभ्युपगमात्। अन्यथा 'बेभिदि ब्राह्मणकुला-नी'ति हलन्तनपुंसके वक्ष्यमाणं न सङ्गच्छेत। बेभिद्यतेः क्विपि अल्लोपे यलोपे च क्वौ लुप्तत्वेनाऽल्लोपस्य स्थानिवत्त्वाभावे झलन्तलक्षणनुम्प्रसङ्गात्। 'क्वौ विधिं प्रति न स्थानि-व'दित्यस्योदाहरणं तु-लवमाचक्षाणो लौः। अत्र णिचि यष्टिलोपः यश्च क्वौ णिलोपः

---

चासौ क्रियेत्यर्थः। **तं प्रति**-तद्वाचकं प्रति। यद्वा-यस्य धातोर्वाच्यया क्रियया युक्ता इत्यर्थः।

**नेहेति**। ततश्च संबन्धसामान्यषष्ठ्यैव समासः। 'भीत्रार्थाना'मिति हेतुत्वप्रकारकबोधे तृतीया-बाधनार्थं। विभक्तिप्रकरणे तु न कृतं, कारकत्वप्रयुक्तकार्यौनापत्तेरिति भावः। किं च हेतुत्वाऽविवक्षायां संबन्धत्वेन विवक्षया पष्ठी सूत्रारम्भेऽपीत्यपि बोध्यम्। अभ्युच्चयेनाह-**वृश्चिकसंबन्धिनीति**। अत्र पूर्वपदान्तर्गतोत्तरपदलोपः शाकपार्थिवादित्वात्। **न भू**। 'अनन्तरस्ये'तिन्यायेनैरनेकाच ओः सुपी-त्यनयोरेव निषेधः। 'सुपी'ति वाऽनुवर्त्तते, तदाह-**सुपीति**। **अल्लोपयलोपाविति**। 'अतो लोपः', 'लोपो व्योर्वली'त्याभ्यामिति भावः। यलोपे निषेधादल्लोपो न स्थानिवत्। वेरपृक्तलोपात्पूर्वं वलिलोप इष्यते स्थानिवत्त्वादिति। एवञ्च यणादेशे यलोपे 'सख्' इति स्यादिति भावः। अन्तर्वर्त्तिविभक्त्या पदत्वान्न पदान्तेति निषेधस्तु न स्थानिवत्त्वस्य, 'नः क्ये' इति सामान्यापेक्षनियमेनास्याऽपदत्वात्। परपदस्थाऽजादेशस्यैव तेन स्थानिवत्त्वनिषेधाच्च। क्विबपेक्षक्यच्संबन्धियलोपस्य यणि बहिरङ्गासिद्ध-त्वन्तु न, असिद्धत्वात्। **क्वौ लुप्तमिति**। भावे क्तः। लोप इत्यर्थः। गोमत्यतेरप्रत्यये गोमानिति

ऽनङ्णित्त्वे । सखा । सखायौ । सखायः । हे सखीः । अमि पूर्वरूपात्परत्वाद्यणि प्राप्ते

तदुभयं 'छ्वोः शू'डिति वकारस्य क्विनिमित्ते ऊठि कर्तव्ये न स्थानिवत् । 'एत्येधत्यूठ्सु'इति वृद्धिः । अत्रेदमवधेयम्,–'न पदान्ते'ति सूत्रे 'क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसङ्ख्यान'मिति वार्तिकमस्ति तदेकदेशानुवादोऽयं 'क्वौ लुप्त'मित्यादीति ।

'लुका लुप्ते न स्थानिव'दित्यादीनामप्युदाहरणान्यत्रोच्यन्ते। पञ्चभिः पट्वीभिः क्रीतः पञ्चपटुः । 'आर्हात्–' इति ठक्, तस्य 'अध्यर्धपूर्वे'ति लुक्, 'लुक्तद्धितलुकी'ति ङीषो लुक्। तस्य लुका लुप्तत्वेन स्थानिवत्त्वाभावादत्र यणादेशो न भवति । न च ङीषो लुकः परनिमित्तकत्वाभावात्स्थानिवत्त्वं न भवेदिति शङ्क्यम् । ङीषो लुकं प्रति स्थानिद्वारा तद्धितलुकः परत्वस्वीकारात् । यद्वा बुद्धिपरिकल्पितं पौर्वापर्यमभावेऽप्यस्तीति नास्त्यत्राऽनुपपत्तिः । न च अढे तद्धिते विवक्षिते 'भस्याढे'इति पुंवद्भावादुक्तनिषेधं विनैवेष्टसिद्धिरित्यपि शङ्क्यम्, 'यत्र भाविभत्वं तत्रैव पुंवद्भावः, इह तु लुकि भत्वाभावात्कुतः पुंवद्भाव' इति कैयटेनोक्तत्वात् । तथा पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्रः । 'सास्य देवते'त्यण् । 'द्विगोर्लुगनपत्ये'इति लुक् । ततो ङीषो लुकि तस्य स्थानिवत्त्वाभावान्ङीषा संनियुक्त आनङ्न श्रूयते । पुंवद्भावस्यात्राऽऽशङ्कापि नास्ति, इन्द्रे इन्द्रत्वमिन्द्राण्यामिन्द्रस्त्रीत्वमिति प्रवृत्तिनिमित्तभेदे भाषितपुंस्कत्वस्यानभ्युपगमात् । ये तु 'न पदान्ते'ति सूत्रे 'वर–ई' इति ईकारप्रश्लेषं कुर्वन्ति तेषामिह लुग्ग्रहणं न कार्यम् । 'उपधात्वे कर्तव्ये न स्थानिवत्' । तेन परिखाशब्दाच्चातुरर्थिके अणि कृते 'वृद्धादकेकान्ते'त्यादिना पारिखशब्दात्खोपधलक्षणे छप्रत्यये 'पारिखीयः' सिध्यति । अन्यथा उपधासंज्ञायाः पूर्वविधित्वेन तस्यां कर्तव्यायामालोपः स्थानिवत्स्यात् । नन्वेवं 'पटयती'त्यादौ वृद्धिः स्यादिति चेन्न; यत्रोपधासंज्ञामुपजीव्य प्रत्ययो विहितस्तत्रैवायं निषेध इति भाष्ये स्थितत्वात् । तत्र चङ्परनिर्ह्रासग्रहणमेव ज्ञापकम् । 'चङ्परो यो ह्रस्वः स चङ्परनिर्ह्रासस्तत्र न स्थानिवत्' । वादितवन्तं प्रयोजितवान् अवीवदद्वीणां परिवादकेन । अत्र प्रथमणिलोपस्य स्थानिवत्त्वादाकारोऽनुपधेति 'णौ चङी'-इत्युपधाह्रस्वो न प्राप्नोति । णिसामान्यग्रहणादेतत्सिद्धमिति चेत्, तर्ह्यन्यदुदाहर्तव्यं,-वारि आख्यदवीवरत् । न च 'अग्लोपी'ति निषेधः शङ्क्यः, परत्वाद्वृद्धौ सत्यां टिलोप इत्यभ्युपगमेनाऽग्लोपित्वाभावात् । अतएव 'मुण्डमिश्रे'ति सूत्रे हलिकल्योर्हलकलीत्यदन्तनिपातनं सार्थकम् । 'कुत्वे न स्थानिवत्' । अर्चयतेरर्कः । 'कृदा-

भाष्योक्तेरस्याप्यर्थस्य क्वचिदङ्गीकारः । 'क्वौ विधिं प्रति ने'त्येव तु सर्वसम्मतस्तर्कः विस्तरः ।

ततोऽपि परत्वात् 'सख्युरसंबुद्धा'विति प्रवर्त्तते । सखायम् । सखायौ । शसि यण्-सख्यः । सह खेन वर्तत इति सखः । तमिच्छतीति सखीः । सुखमिच्छतीति सुखीः । सुतमिच्छतीति सुतीः । सख्यौ । सुख्यौ । सुत्यौ । 'ख्यत्या'दिति दीर्घस्यापि ग्रहणादुकारः । सख्युः । सुख्युः । सुत्युः । लूनमिच्छतीति लूनीः । क्षाममिच्छतीति क्षामीः । प्रस्तीममिच्छतीति प्रस्तीमीः । एषां ङसिङसोर्यण् । नत्वमत्वयोरसिद्धत्वात् 'ख्यत्या'दित्युत्वम् । लून्युः । क्षाम्युः । प्रस्तीम्युः । शुष्कीयतेः क्विप् । शुष्कीः । [पक्वीः ।] इयङ् । शुष्कियौ । शुष्कियः । ङसिङसोः-शुष्किय इत्यादि । **इतीदन्ताः ॥**

शंभुर्हरिवत् । एवं विष्णुवायुभान्वादयः । **तृज्वत्क्रोष्टुः** ।७।१।९५।

धारार्चिकलिभ्यः' इति कः । पाचयतेः पाक्तिः । इह 'चोः कु'रिति कुत्वे णिलोपो न स्थानिवत् । वार्तिकेऽस्मिन् क्विचङ्परनिर्ह्रासोपधानां ग्रहणमावश्यकं, लुक ईकारप्रश्लेषेण गतार्थत्वात्, कुत्वस्य पूर्वत्रासिद्धीयत्वाच्चेत्यवधेयम् । 'चजो'रिति कुत्वे चोदाहरणमन्वेषणीयम् । **सख इति** । 'तेन सहेती'ति बहुव्रीहौ 'वोपसर्जनस्ये'ति सभावः । **सखीरित्यादि** । 'सुप आत्मनः क्यच्' । 'क्यचि च'इतीत्त्वम् । **दीर्घस्यापीति** । एतदर्थं कृतयणादेश इति भावः । ननु अतिसखेर्भूपतेरिति गुणविषयं व्यावर्तयितुं यणा निर्देश इति चेदस्त्वेवं, तथापि दीर्घे प्रवृत्तिः कैन वार्यताम् ? । न हि ह्रस्वे यणा भाव्यं न दीर्घेष्वित्यत्र प्रमाणमस्ति । सौत्रस्य विकृतिनिर्देशस्याऽव्याप्त्यतिव्याप्त्युभयवारकत्वे सारवत्त्वलाभेन तथैवौचित्याद्भाष्यारूढत्वाच्च । **लूनमिति** । 'ल्वादिभ्यः' इति निष्ठातस्य नः । **क्षाममिति** । 'क्षायो मः' इति मः । **प्रस्तीममिति** । 'प्रस्त्योऽन्यतरस्याम्' इति मः । 'स्त्यः प्रपूर्वस्ये' इति संप्रसारणम् ।

**शुष्कीरिति** । 'शुषः कः' इति निष्ठातस्य कः । **पक्वीरिति** । 'पचो वः' इति वः । **इयङिति** । संयोगपूर्वत्वादिवर्णस्य यण्नेति भावः । **इतीदन्ताः । हरिवदिति** । तद्वत्साध्य इत्यर्थः । **तृज्वत्क्रोष्टुः** । 'क्रुश आह्वाने रोदने च' । 'असिसितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्' इति तुन्प्रत्यये क्रोष्टुशब्दः । तृचि तु क्रोष्टृशब्दः । द्वावपि श्रृगालवचनौ । तत्राऽविशेषेण द्वयोः प्रयोगे प्राप्ते 'सर्वनामस्थाने स्त्रियां च तृजन्त एव । तृतीयादावच्युभयम् । अन्यत्र तुन्नन्त एवे'ति नियमार्थं त्रिसूत्री

**अनङिति** । 'अभिव्यक्तपदार्था ये'इति न्यायस्तु गौणमुख्यन्यायवत्पदकार्यविषय एवेति भावः । **दीर्घस्यापीति** । प्रयोगस्थयकारान्तानुकरणं, सूत्रेऽकारश्चोच्चारणार्थ इति भावः । **लूनीरित्यादि** । 'ल्वादिभ्यः,' 'क्षायो मः,' 'प्रस्त्योन्यतरस्या'मिति नत्वमत्वे । 'शुषः कः,' 'पचो व' इति कत्ववत्वे ।

क्रोष्टुशब्दस्तृजन्तवद्रूपं लभतेऽसंबुद्धौ सर्वनामस्थाने परे। क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः। **ऋतो ङिसर्वनामस्थानयोः** ।७।३।११०।

---

आरभ्यते। 'क्रोष्टु'रिति तुन्नन्तात्प्रथमा। तृज्व'दिति तृतीयान्ताद्वतिः। निमित्तव्यपदेश-तादात्म्यशास्त्रकार्यरूपविषयत्वेनातिदेशस्यानेकविधत्वेऽपिप्राधान्यादिह रूपमेवातिदिश्यते इत्याह-**तृजन्तवद्रूपमिति**। तच्च न पचादेर्यस्य कस्यचित्किंतु क्रुशेरेव, उपस्थितत्वादर्थान्त आन्तर्याच्चेत्यभिप्रेत्य फलितमाह–**क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्द इति**। निमित्ता-तिदेशो यथा–चिकीर्षति। चिकीर्षते। अत्र सन्नन्तस्य 'पूर्ववत्सनः' इत्यनेन ञित्त्वाति-देशे कर्तृगामिनि क्रियाफले आत्मनेपदं सिध्यति। ननु कार्यातिदेशेनाप्येतद्गतार्थमिति चेदत्राहुः–निमित्तप्रतिसन्धानपूर्वकत्वात्तस्येति निमित्तातिदेशः पृथगुक्त इति। व्यपदेशा-तिदेशो यथा–'आद्यन्तवदेकस्मि'न्नित्यनेन 'कर्तव्य'मित्यादौ सावकाशः प्रत्ययाद्युदात्तत्व-फलक आदित्वव्यपदेश औपगवादावतिदिश्यते। तादात्म्यातिदेशो यथा–'सुबामन्त्रिते पराङ्गवत्स्वरे' इत्यनेन 'द्रवत्पाणी शुभस्पती' इत्यत्र शुभशब्दस्य पराङ्गवत्त्वे सति षाष्ठिकेन 'आमन्त्रितस्ये'त्यनेन शकारादुकारस्याद्युदात्तत्वं सिध्यति। शास्त्रातिदेशो यथा–'कालेभ्यो भवव'दित्यनेन कालवाचिभ्यः 'तत्र भवः' इत्यधिकारे यच्छास्त्रं तत् 'सास्य देवते'त्यर्थेऽतिदिश्यते। तेन 'मासिकं' 'प्रावृषेण्य'मित्यत्र यथाविहितं 'कालाट्ठञ्' 'प्रावृष एण्यः' इति सिध्यदि। कार्यातिदेशे तु–इह प्रकृतिप्रत्ययादीनां साङ्कर्यं स्यात्। कार्यातिदेशो यथा–'गोतो णित्'। गौः गावौ गावः। अत्र णित्कार्यं वृद्धिरतिदिश्यते, प्राधान्यात्। केचित्तु निमित्तातिदेशे 'गोतो णि'दित्युदाहरन्ति, तन्मते कार्यातिदेशस्य 'कर्मवत्कर्मणा', 'स्थानिवदादेशः–' इत्याद्युदाहर्तव्यम्। रूपातिदेशो यथा—वतण्डी चासौ वृन्दारिका च वातण्ड्यवृन्दारिका। अत्र वतण्डीशब्दे 'पुंवत्कर्म-धारये'त्यनेन पुंवाचकवातण्ड्यशब्दरूपमतिदिश्यते। इह मनोरमायामतिदेशस्य षड्विध-त्वमुक्तम्। अन्ये तु—'कार्यरूपनिमित्तार्थशास्त्रतादात्म्यशब्दिताः।

व्यपदेशश्च सप्तैतानतिदेशान्प्रचक्षते ॥'

—इति सप्तविधत्वमाहुः। अर्थातिदेशस्योदाहरणं तु गार्गी च गार्ग्यायणौ च गर्गाः। अत्र 'स्त्री पुंवच्चे'त्यनेन गोत्रप्रत्ययान्तस्त्रीवाचकस्य 'वृद्धो यूने'त्येकशेषे सति स्त्र्यर्थस्य पुमर्थोऽतिदिश्यते। तेन स्त्रियामपत्यकृतबहुत्वे 'यञञोश्चे'ति लुक् सिध्यति। **ऋतो**

---

व्याख्यानात्प्राधान्याच्च रूपातिदेशोऽयमित्याह–**क्रोष्टृशब्द इति**। तच्चोदात्तऋकारविशिष्टम-तिदिश्यते, 'तृज्व'दिति चकारोच्चारणात्। तेन 'क्रोष्ट्रे'त्यादावुदात्तयण इति स्वरसिद्धिर्बोध्या। पक्षादेस्तु

ङौ सर्वनामस्थाने च परे ऋदन्ताङ्गस्य गुणः स्यात्। इति प्राप्ते। **ऋदुशनस्पुरुदंसोऽनेहसां च** ।७।१।९४। ऋदन्तानामुशनसादीनां चाऽनङ् स्यादसंबुद्धौ सौ परे॥ **अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम्** ।६।४।११। अबादीनामुपधाया दीर्घः स्यादसंबुद्धौ सर्वनामस्थाने परे। नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम्। ['उणादिनिष्पन्नानां तृन्तृजन्तानां चेद्भवति तर्हि नप्त्रादीनामेव']। तेन पितृभ्रातृप्रभृतीनां न। उद्गातृशब्दस्य तु भवत्येव। 'समर्थ'सूत्रे 'उद्गातार' इति भाष्यप्रयोगात्। क्रोष्टा। क्रोष्टारौ। क्रोष्टारः। क्रोष्टारम्। क्रोष्टारौ। क्रोष्टॄन्॥ **विभाषा**

---

ङि। 'कृ' 'तृ' एतयोरनुकरणे ॠकारान्ते गुणवारणाय तपरकरणमिति बोध्यम्। **अप्तृन्।** 'तुरिष्ठेमेयस्स्वि'तिवत्तृ इत्येव सिद्धे तृन्तृचोर्भेदेनोपादानं 'क्वचित्सामान्योक्तावपि विशेष एव गृह्यते' इति ज्ञापनार्थम्। तेन 'न कोपधायाः' इत्यत्र सामान्योक्तावपि वुतद्धितयोरेव को गृह्यते, न कमात्रम्। तेन यदग्रे वक्ष्यति 'कोपधप्रतिषेधे तद्धितवुग्रहण'मिति, तदुपपन्नं भवतीत्येके। अन्ये त्वाहुः-'अप्तृ'-इत्येव वक्तव्ये 'तृन्' 'तृ'जिति भेदेनोपादानामर्वणस्तृव्यावृत्तये। यद्यप्यर्थवत्परिभाषया तन्निवृत्तिः सिध्यति, तथापि तस्याः परिभाषाया अनित्यत्वज्ञापनाय तयोः पृथगुपादानम्। तेन 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ती'ति सिद्धमिति। व्युत्पत्तिपक्षे तृन्नन्तत्वात्तृजन्तत्वाद्वा सिद्धे नप्त्रादिग्रहणं व्यर्थमित्यत आह–**नियमार्थमिति।** औणादिकानामन्येषां संज्ञाशब्दानां मा भूदित्येतदर्थमित्यर्थः। धातृशब्दस्त्वौणादिकः संज्ञाशब्दो न भवतीति तत्र दीर्घो भवत्येव। धातारौ। धातारः। अव्युत्पत्तिपक्षे तु नप्त्रादिग्रहणं विध्यर्थमिति पितृभ्रातृप्रभृतीनां दीर्घशङ्कैव नास्तीति बोध्यम्। **तेनेति।** पितरौ। पितरः। भ्रातरौ। भ्रातरः इत्यादौ दीर्घो नेत्यर्थः।

**क्रोष्टेति।** अनङ्। हल्ङ्याब्भ्यादिलोपात्परत्वादुपधादीर्घः। स च 'सर्वनामस्थानेचे'-

---

नातिदेशः, अर्थत आन्तर्याभावात्। इदं सूत्रं, 'स्त्रियाचे'ति च प्रयोगनियमफलकमिति बोध्यम्॥

**अप्तृन्।** ननु व्युत्पत्तिपक्षे तृन्नन्तत्वात्तृजन्तत्वाद्वा दीर्घे सिद्धे नप्त्रादिग्रहणं व्यर्थमत आह–**नियमार्थमिति।** 'अन्येषामुणादिव्युत्पन्नानां सञ्ज्ञाशब्दानां ने'ति। नेष्ट्रादयोऽप्युणादय एवेति भावः। तेषां 'तृ'न्निति सूत्रस्थवार्तिकेन व्युत्पादनात्–**नप्त्रादी**त्यादिग्रहणेन प्रशास्तृशब्दस्यैव ग्रहणमित्यन्ये। अव्युत्पत्तिपक्षे तु विध्यर्थमेवेति बोध्यम्। **भाष्यप्रयोगादिति।** एवञ्चोणादिष्वस्य व्युत्पादनमप्रामाणिकमिति भावः। पङ्कजादिवद्योगरूढोऽयम्। ये त्वौणादिकत्वमेवास्य स्वीकृत्य भाष्यप्रयोगादेवं दीर्घत्वमिच्छन्ति तेऽमान्याः। भाष्यकृताऽन्यप्रयोगस्योदाहरणत्वेन दानेप्यस्य भाष्यप्रयोगत्वाभावात्। 'ण्वुल्तृचा'विति भाष्ये तु–तृचश्चकारो व्यर्थः। न चाप्तृन्तृजित्यादौ विशेषणार्थः। 'तृ' इत्येव सिद्धेः।

**तृतीयादिष्वचि** ।७।१।९७। अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत् । क्रोष्ट्रा । क्रोष्ट्रे । **ऋत उत्** ।६।१।१११। ऋदन्तान्ङसिङसोरति परे उकार एकादेशः स्यात् । रप-रत्वम् । **रात्सस्य** ।८।२।२४। रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य । रेफस्य

---

त्यनेन यद्यपि लभ्यते, तथापि परत्वात् 'अमृ'न्नित्येव न्याय्यः । कृतेऽप्यनङि
एकदेशविकृतस्यानन्यत्वेन तृच्त्वात् । अन्यथा गुणे कृतेऽपि 'क्रोष्टारा'वित्यादौ दीर्घो
न स्यादिति भावः । **विभाषा तृ** । 'यस्मिन्विधिस्तदादौ–' इति तदादिविधिरित्याह–
**अजादिष्विति** । **ऋत उत्** । ऋकाराकारयोरेकादेशे सति ह्रस्व एव उकारः स्यान्न तु
दीर्घ इत्येतदर्थकेन तपरकरणेन भाव्यमानोऽण्कचित्सवर्णान्गृह्णातीति ज्ञाप्यते, तेन यवल-
परे हकारे मस्य विधीयमाना यवला अनुनासिका भवन्ति । **रात्सस्य** । 'संयोगान्तस्य
लोपः' इत्यनेनैव सिद्धे नियमार्थमिदमित्याह–**सस्यैवेति** । **नान्यस्येति** । 'ऊर्क्' 'परि-

---

न च 'तृ' इत्युच्यमाने 'मातरौ' 'पितरा'वित्यादौ प्राप्नोति, तत्र हि तृप्रत्ययो निरनुबन्धक इति
वाच्यम्; नप्तृग्रहणस्य 'योनिसंबन्धवाचिनाचेदस्यैव नान्येषां योनिसंबन्धवाचिना'मिति नियमादित्युक्तम् ।
नेष्टृत्वष्टृक्षत्तृहोतृपोतृणान्तृन्नन्तत्वस्य प्रशास्तुस्तृजन्तत्वस्य 'तृ'न्निति सूत्रे भाष्यवार्त्तिकयोरुक्तत्वेन
तेषाङ्ग्रहणं प्रपञ्चार्थमेव । एवञ्च यथान्यासे नियमफलं चिन्त्यम् । **क्रोष्टेति** । अनङि 'सर्वनाम-
स्थाने चे'ति दीर्घः, प्रथमोपस्थितत्वात् । 'क्रोष्टारा'वित्याद्यर्थन्तु तल्लेखः । यद्वा–विशेषविहितत्वाच्छी-
घ्रोपस्थितिकत्वेन स एव न्याय्यः । **विभाषा तृ** । अयमपि नियम एव–'तृतीयादावच्येवोभय'मिति ।
तेन भ्यामादौ शसि 'क्रोष्टुपुत्र' इत्यादौ च न दोषः । सर्वत्र विशिष्टाऽभावस्य सुलभत्वात् । 'तृज्वत्क्रो-
ष्टुः' 'स्त्रियाञ्चे'त्याभ्यां सर्वनामस्थाने स्त्रियाञ्च तृजन्तरूपविधानेन तयोः प्रयोगनियमार्थत्वं फलति ।
एतेन 'तृज्वत्सर्वनामस्थान एवे'ति नियमादिदं विध्यर्थमिति परास्तम् । न चैवमपि 'क्रोष्टू'नित्याद्यस-
ङ्गतम्, अन्यत्र तृजन्तस्यैव प्रयोगेणाप्युक्तनियमस्य चारितार्थ्यादिति वाच्यं, 'तृज्वत्क्रोष्टु'रिति योगविभा-
गस्यैवं सति वैयर्थ्यापत्तेः । न च 'तद्धितेष्वचामादेरिको गुणवृद्धौ' इतिसूत्रयोः 'क्रौष्ट्रः' 'क्रोष्ट्रीया' इति
भाष्यप्रयोगासङ्गतिरिति वाच्यम्, ऋकारान्तस्यैव ऋपित्वा चकत्वेनाऽदोषात् । इदं सूत्रत्रयन्तु शृगालवाचि
क्रोष्टुक्रोष्टृशब्दयोर्व्यवस्थार्थमित्यवधेयम् । तदुक्तं भाष्ये 'तृज्वद्भावविषये एतत्तृजन्तं मृगवाची'ति । 'तृती-
याद्यजादिविभक्तिषु तृजन्तन्तुन्नन्तञ्च मृगवाची'ति च । अनेन हि अन्यत्र तुन्नन्तमेवेत्यपि सूचितमिति दिक् ॥
**ऋत उत्** । तपरत्वं भाव्यमानस्यापि क्वचित्सवर्णग्राहकताज्ञापनद्वाराऽऽन्तर्यतो द्विमात्रनिवृत्त्य-
र्थम् । तेनाऽमू इत्यादिसिद्धिरिति 'छो'रिति सूत्रे कैयटः । यत्तु 'तपरत्वं ढ्लोपइति दीर्घबाधनार्थ'-
मिति, तन्न; **सुपत्रवाजिता बाणा ज्वलिता इव पन्नगाः । नैर्ऋतोरस्यभासन्त सवितू-
रश्मयो यथे**'ति रामायणप्रयोगविरोधात् । 'उरण्पर' इति सूत्रेऽण्ग्रहणाभावे 'ऊरपर' इति भाष्य-
प्रयोगविरोधाच्च । **सस्यैवेति** । संयोगान्तलोपेन सिद्धे नियमार्थम् । तेन 'ऊ'र्गित्यादौ नेति भावः ।
विपरीतनियमस्तु न, 'पुमान्स्त्रिये'ति निर्देशात् । इत्युदन्ताः ॥

विसर्गः । क्रोष्टुः । आमि परत्वात्तृज्वद्भावे प्राप्ते-॥ ॐ **नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन** ॥ क्रोष्टूनाम् । क्रोष्टरि । क्रोष्ट्रोः । पक्षे हलादौ च शंभुवत् ॥ **इत्युदन्ताः** ॥हूहूः । हूह्वौ । हूह्वः । हूहूम् । हूह्वौ । हूहूनित्यादि । अतिचमूशब्दे तु नदीकार्यं विशेषः । हे अतिचमु । अतिचम्वै । अतिचम्वाः । अतिचम्वाः । अतिचमूनाम् । अतिचम्वाम् । खलपूः । **ओः सुपि** ।६।४।८३। धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्याऽनेकाचोऽङ्गस्य यण् स्यादजादौ सुपि ॥ ॐ **गतिकारकेतरपूर्वपदस्य यण्नेष्यते** ॥ खलप्वौ । खलप्व इत्यादि । एवं सुल्वादयः । अनेकाचः किम् ? । लूः । लुवौ । लुवः । धात्ववयवेति किम् ? । उल्लूः । उल्ल्वौ । उल्ल्वः । असंयोगपूर्वस्य किम् ? । कटप्रुवौ । कटप्रुवः । गतीत्यादि किम् ? । परमलुवौ । सुपि किम् ? । लुलुवतुः ॥ स्वभूः । 'न भूसुधियोः' । स्वभुवौ । स्वभुवः ।

---

मार्ट्' इत्यादौ रेफात्संयोगान्तस्य लोपो नेत्यर्थः । 'रादेव सस्ये'ति विपरीतनियमोऽत्र न भवति । उरःप्रभृतिषु कृतसंयोगान्तलोपस्य 'पुमा'नित्यस्य दर्शनात् । **परत्वादिति** । न च नुट् नित्य इति वाच्यम्, तृज्वद्भावे कृते संनिपातपरिभाषया नुटो दुर्लभत्वादिति भावः । **नुमचिरेति** । 'वारीणां' 'तिसृणां' 'क्रोष्टूना'मिति क्रमेणोदाहरणानि । ननु रेण स्वविषये प्राप्तं सर्वं बाध्यं, बाध्यसामान्यचिन्ताश्रयणात्, अत एव 'गुणदीर्घोत्वानामपवाद' इति वक्ष्यति । तथा चाऽविशेषान्नुडप्यनेन बाध्यत इति कथमिह विप्रतिषेधः, उत्सर्गापवादयोस्तदयोगादिति चेत्; अत्राहुः-अतएव तदंशे विप्रतिषेधं दूषयित्वा 'न तिसृचतसृ' इतिज्ञापकान्नुडिति भाष्यकृतोक्तम् । एवंच 'नुम्तृज्वद्भावाभ्या'मित्येव सुवचमिति । **इत्युदन्ताः** ॥

**हूहूरिति** । गन्धर्वविशेषवाचकमव्युत्पन्नं प्रातिपदिकमिदम् । **हूह्वाविति** । 'दीर्घाज्जसि चे'ति पूर्वसवर्णदीर्घनिषेधे सति 'इक' इति यण् । **अतिचमूशब्दे त्विति** । 'प्रथमलिङ्गग्रहणं चे'त्युक्तेः । तथा च 'एवमतिचम्वादय' इति प्राचोक्तं नादर्तव्यमिति भावः । **खलपूरिति** । खलं पुनातीति पूञः क्विप् । **ओः सुपि** । 'इणो यण्' इत्यतो यण्, 'एरनेकाचः' इति सूत्रं च सर्वमनुवर्तते इवर्णवर्जम्, 'ओ'रित्युकारस्य कार्यिणो निर्देशात् । 'अचि श्नुधा'त्विति सूत्राद्धातुः 'एरनेकाचः' इत्यत्रैव

---

'एरनेकाच' इति सूत्रमेरितिपदरहितं सानुवृत्ताऽऽवृत्तविशेषणं सवार्त्तिकमनुवर्ततइत्याह-**धात्ववयवेत्यादि** । **गतीति** च । 'सकृल्वा'वित्यत्र क्रियाविशेषणत्वेन कर्मत्वाचग् । 'न भूसुधियो'रिति

**वर्षाभ्वश्च** ।६।४।८४। अस्योवर्णस्य यण् स्यादचि सुपि । वर्षाभ्वौ । वर्षाभ्वः । दृम्भतीति दृम्भूः । 'अन्दूदृम्भूजम्बूकफेल्लूकर्कन्धूदिधिषू'रित्युणादिसूत्रेण व्युत्पादितः । दृम्भ्वौ । दृम्भ्वः । दृम्भूम् । दृम्भ्वौ । दृम्भून् । शेषं हूहूवत् । 'दृ'न्निति नान्ते हिंसार्थेऽव्यये भुवः क्विप् । दृन्भूः ॥ ❀ **दृन्करपुनःपूर्वस्य भुवो यण्वक्तव्यः** । दृन्भ्वौ । दृन्भ्व इत्यादि खलपूवत् । करभ्वौ । करभ्वः । दीर्घपाठे तु कर एव कारः । स्वार्थिकः प्रज्ञाद्यण् । कारभ्वौ । कारभ्वः । पुनर्भूर्यौगिकः पुंसि । पुनर्भ्वावित्यादि ।

संबध्यत इत्याशयेन व्याचष्टे—**धात्ववयवसंयोगेत्यादि** । **वर्षाभ्वौ वर्षाभ्व इति** । अत्र 'इको यणची'ति यणं बाधित्वा 'प्रथमयो'रिति पूर्वसवर्णदीर्घः प्राप्तः, तस्य 'दीर्घाज्जसि चे'ति निषेधे पुनरपि यणादेशप्रसक्तौ 'अचि श्नुधातुभ्रुवाम्' इत्युवङ्, तं च बाधित्वा 'ओः सुपी'ति यण्, तस्य 'न भूसुधियो'रिति निषेधे पुनरुवङादेशस्य प्रसक्तौ 'वर्षाभ्वश्चे'ति यणिति बोध्यम् । एवमन्यत्राप्युत्सर्गापवादविधय ऊह्याः । 'भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः' इत्यमरः । 'भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान्' इति यादवः । **दृम्भतीति** । 'दृम्भी ग्रन्थे' तुदादिः । दृम्भूर्ग्रन्थकर्ता । कथक इत्यन्ये । **व्युत्पादित इति** । ऊप्रत्ययो नुमागमश्चात्र निपात्यत इत्यर्थः । दशपादीवृत्तौ तु 'दर्भणं दृम्भूः । नुमागमोऽनुस्वारश्च निपात्यते' इत्युक्तम् । अयमूकारो न धातोरिति उवङोऽप्रसङ्गात् 'इको यणची'ति यण्, स च 'अमि पूर्वः' इत्यनेन बाध्यत इत्याशयेनाह—**दृम्भूमिति** । शसि 'दीर्घाज्जसि चे'ति निषेधाऽप्रवृत्त्या पूर्वसवर्णदीर्घेणापि बाध्यत इत्याह—**दृम्भूनिति** । **दृन्नितीति** । इदं च श्रीपतिमतम् । माधवेन तु 'अन्दूदृम्भू–'इत्यादिसूत्रेण दृढशब्दे उपपदे भुवः कूप्रत्ययः, उपपदस्य दृन्नादेशश्च निपात्यते' इत्युक्तम् । **दृन्भूरिति** । तरुः । सर्पजातिभेद इत्येके । कपिरित्यन्ये । **वक्तव्य इति** । 'वर्षाभ्वश्चे'ति चकारस्यानुक्तसमुच्चयार्थत्वादिति भावः । एवञ्च 'ओः सुपि' इति प्राप्तस्य यणो 'न भूसुधियो'रिति निषेधे 'वर्षादृन्करपुनः पूर्वस्य भुवः' इत्येतद्विध्यर्थमिति स्थितम् । अत्र नव्याः–'वर्षादृन्करे'त्यस्य नियमार्थतां स्वीकृत्य 'न भूसुधियो'रित्यत्र भूग्रहणं त्यक्तुं शक्यमिति, तन्न, 'दृन्करपुनःपूर्वस्य चेद्भवे'दिति विपरीतनियमापत्तेः । तथाच 'पुनर्भ्वौ' 'वर्षाभ्वौ' इत्यादि न सिद्ध्येदिति । **दीर्घपाठ इति** । 'दृन्कारे'ति पाठे इत्यर्थः । एवंच ह्रस्वपाठे कारपूर्वस्योवङेव, दीर्घपाठे तु करपूर्वस्योवङिति

निषेधे प्राप्ते आह—**वर्षाभ्वश्चेति** । 'वर्षाभूर्दर्दुरे पुमान्' । **स्वार्थिक इति** । स्वस्याः प्रकृतेरर्थः स्वार्थः, तत्र भव इत्यर्थेऽध्यात्मादित्वाट्ठञ् । द्वारादिषु स्वग्रामस्वाध्यायशब्दयोः पाठेन 'स्वशब्दादे-

दृग्भू-काराभूशब्दौ स्वयंभूवत् । इत्यूदन्ताः ॥

धाता । हे धातः । धातारौ । धातारः । ✽ ऋवर्णान्नस्य णत्वं वाच्यम् ॥ धातॄणामित्यादि । एवं नप्त्रादयः । उद्गातारौ । पिता । व्युत्पत्तिपक्षे नप्त्रादिग्रहणस्य नियमार्थत्वान्न दीर्घः । पितरौ । पितरः । पितरम् । पितरौ । शेषं धातृवत् । एवं जामातृभ्रात्रादयः ॥

ना । नरौ । नरः । हे नः । नृ च ।६।४।६। 'नृ' इत्येतस्य नामि वा दीर्घः स्यात् । नॄणाम् । नृणाम् ॥ इति ऋदन्ताः ॥

'कॄ' 'तॄ' अनयोरनुकरणे 'प्रकृतिवदनुकरण'मिति वैकल्पिकातिदेशा-

---

विवेकः । 'पुनर्भूर्दिधिषूरूढा द्वि'रित्यमरोक्तेः पुनर्भूशब्दो नित्यस्त्रीलिङ्गः । तथा च स्त्रीलिङ्गप्रकरण एव वक्तुमुचितो न त्वत्रेत्याशङ्कायामाह—**यौगिकः पुंसीति** । 'पुनर्भवतीति पुनर्भू'रिति क्रियाशब्दः पुंलिङ्गेऽप्यस्तीत्यर्थः । **स्वयंभूवदिति** । प्राचा तु 'दृग्भू''काराभू'शब्दौ वर्षाभूवदुदाहृतौ तदुपेक्ष्यमिति भावः ॥ **इत्यूदन्ताः** ।

**धातेति** । दधातीति धाता अब्जयोनिः । डुधाञस्तृच् तृन् वा । अनङ्दीर्घसुलोपनलोपाः । **व्युत्पत्तिपक्ष इति** । अव्युत्पत्तिपक्षे दीर्घशङ्कैव नास्ति, अवादिष्वपठनादिति भावः । **नेति** । 'नयतेर्डिच्चे'ति ऋप्रत्ययान्तो 'नृ'शब्दः । अनङादि प्राग्वत् ।

**नृ च** । इह 'छन्दस्युभयथे'ति सूत्रादुभयथेत्यनुवर्तत इत्यभिप्रेत्याह—**वा दीर्घः स्यादिति** । केचित्त्विह 'छन्दसी'त्यप्यनुवर्तयन्ति, तेषां हि 'चिन्ताजर्जरचेतसां बत नृणां का नाम शान्तेः कथा', 'नृणामेको गम्यस्त्वमसी'त्यादिप्रयोगा न सङ्गच्छेरन् । किञ्च 'छन्दस्युभयथे'ति पूर्वसूत्रेणैव 'नृणां' 'नॄणा'मिति सिद्धे 'नृ चे'ति सूत्रस्य वैयर्थ्यं स्यात् । यदपि पूर्वसूत्रे 'तिसृचतसृ' इत्यनुवर्तयन्ति, तदप्ययुक्तम् । अविशेषेण विकल्पदर्शनात् । तथाच 'धाता धातृणा'मिति मन्त्रे तैत्तिरीयैर्ह्रस्वः पठ्यते, बह्वृचैस्तु दीर्घ इति दिक् । **इत्यृदन्ताः** । **प्रकृतिवदनुकरणमित्यादि** । 'यत्तदेतेभ्यः

---

श्वेदेतयोरेवे'ति नियमार्थकेनैजागमो न । 'पुनर्भू'शब्दस्य रूढस्य नित्यस्त्रीत्वादाह—**यौगिक इति** ।

वर्णैकदेशानां वर्णग्रहणेनाऽग्रहणे रेफाभावादाह—**ऋवर्णादिति** । **व्युत्पत्तिपक्षे इति** । अव्युत्पत्तिपक्षेऽवादिष्वपाठाद्दीर्घशङ्कैव नेति भावः । व्युत्पत्तिपक्षे निरनुबन्धकतृप्रत्ययान्ता एवेति ण्वुल्तृचाविति सूत्रस्थभाष्यस्वरसः । **इत्यृदन्ताः** ।

**वैकल्पिकेति** । 'यत्तदेतेभ्य' इत्यत्र त्यदाद्यत्वकरणादतिदेशस्य, 'क्षिय' इत्यादौ धात्वनुकरणे विभक्तिकरणेन वैकल्पिकत्वस्य च ज्ञापनादिति भावः । 'अनुकरणस्यानुकार्यशब्दस्वरूपमात्रमर्थ' इति प्रातिपदिकत्वम् । अनुकार्यंचानुकरणाद्भिन्नमेवेति 'मतौ छ' इति सूत्रे भाष्ये स्पष्टम् । ईषदानुपूर्वीव्यत्ययेपि

दित्त्वे रपरत्वम् । कीः । किरौ । किरः । तीः । तिरौ । तिरः,–इत्यादि गीर्वत् । इत्वाभावपक्षे तु 'ऋदुशन'सिति 'ऋतो ङी'ति च तपरकरणादनङ्गुणौ न ।

कॄः । क्रौ । क्रः । कॄम् । क्रौ । कॄन् । क्रा । क्रे । इत्यादि । इत्यॄदन्ताः ॥

गम्लृ शक्लृ अनयोरनुकरणेऽनङ् । गमा । शका । गुणविषये तु लपरत्वम् । गमलौ । गमलः । गमलम् । गमलौ । गमॄन् । गम्ला । गम्ले । ङसिङसोस्तु

---

परिमाणे'इति निर्देशोऽत्र लिङ्गम् । भवति हि तत्र त्यदाद्यत्वकरणादनुकरणस्य प्रकृतिवत्त्वमेकशेषाभावदर्शनाच्च वैकल्पिकत्वमिति । **इत्वे रपरत्वमिति** । 'ॠत इद्धातोः' इतीत्वे 'उरण्रपरः' इति रपरत्वम् । **कीरिति** । कॄधातुरित्यर्थः । एवं–**तीरिति** । 'तॄ' धातुः । **इत्यादीति** । 'ऋत उ'दिति तपरकरणान्ङसिङसोरत उदादेशो न । क्रः । दीर्घान्तत्वादामो न नुट् । क्राम् । ङौ तु 'क्रि' इत्यादि । **इत्यॄदन्ताः** ॥

**अनङिति** । ऋऌवर्णयोः सावर्ण्यात् 'ऋदुशन'इति सूत्रप्रवृत्तेः । **गुणविषय इति** । 'ऋतो ङी'ति गुणविषये । **गमॄनिति** । ऌवर्णस्य दीर्घाभावात् 'प्रथमयो'रिति यः पूर्वसवर्णदीर्घः स ऌकाराऽकारयोः स्थाने ॠकार एव भवति । नन्वत्र ऌकारद्वयगर्भो ॡकारो दीर्घोऽस्त्विति चेत्, अत्राहुः–'प्रथमयोः पूर्वसवर्णः' इत्यस्याऽकः प्रथमाद्वितीययोरचि पूर्वस्य सवर्णो यो दीर्घः स पूर्वपरयोः स्थाने भवतीत्यर्थाद्दॢवर्णयोर्वचनेन सावर्ण्यसद्भावाद्दॄकार एव ऌकाराऽकारयोः स्थाने भवति न तु ऌकारद्वयगर्भो दीर्घः, तस्य ईषत्स्पृष्टप्रयत्नत्वात्प्रयत्नभेदेन ऌकारसावर्ण्याभावादिति । एवं च 'होतॄ'नित्यादौ रेफद्वयगर्भो दीर्घ ऋकाराऽकारयोः स्थाने

---

वाचकसादृश्यादर्थोपस्थापकत्वमित्यत्र कैयटे, 'प्राग्दीव्यतो'णित्यत्र भाष्ये च स्पष्टम् । अत एव 'किर' इत्यादितः कॄधातुरिति बोधः । 'भू सत्ताया'मित्यादौ त्वित एव निर्देशात्कदाचिदनुकरणाद्विभक्त्यभावोपि, स च सूत्रेष्वेवेति प्रामाणिकाः । 'गवित्ययमाहे'ति–वान्तस्यैवानुकरणम् । अनुकार्यस्वरूपभङ्गभिया च न क्लोपः, 'झलाञ'शित्यादौ जश्त्वाभाववदित्याहुः । **इत्त्वे इति** । 'किरश्च पञ्चभ्य' इति निर्देशादधातुप्रत्ययेपि तत्प्रवृत्तिरिति भावः । **कीरिति** । कॄधातुरित्यर्थः । **गुणो नेति** । 'ऋत उ'दित्युत्वमप्यत एव न । अत एव 'ग्रो यङी'ति सूत्रनिर्देशः सङ्गच्छते । इत्यॄदन्ताः ।

**अनङिति** । ऋऌवर्णयोः सावर्ण्यादिति भावः । **गमॄनिति** । ऌवर्णस्य दीर्घाभावादॄवर्ण एवेति भावः । ननु तुल्यास्यसूत्रे भाष्यकृता 'ऋति ऋ वे'त्यादिविधेययो रेफद्वयगर्भलद्वयगर्भयोरच्त्व दीर्घत्वाङ्गीकारेणाऽत्र द्विलकार ईषत्स्पृष्टो दुर्वारः, आमि च तथा 'धातॄणा'मित्यत्र रेफद्वयगर्भोपीति चेन्न; 'अकः सवर्णे'इति सूत्रे उक्तोत्तरत्वात् । **गम्लेति** । यत्तु लण्सूत्रे 'उरण्रपर' इत्यत्राऽजिति वक्तव्येऽण्ग्रहणसामर्थ्येनाण्पूर्वेणैवेत्युक्तं भाष्ये । ऌकारस्य यणि हि तत्र लपरत्वार्थं परेणाण्ग्रहणं स्यादिति सामर्थ्योक्तिरसङ्गता, ऋकारस्य यणि तु 'रोरी'ति लोपेन न विशेष इति तत्र, अकाराद्यो हल्रूपाऽणि

'ऋत उ'दित्युत्त्वे लपरत्वे संयोगान्तस्य लोपः। गमुल्। शकुलित्यादि॥

इति ऌदन्ताः॥ सेः। सयौ। सयः।

---

न भवत्येवेति बोध्यम्। **इत्यादीति**। गम्लृभ्याम्। गम्लृभिः। गम्लृभ्यः। आमि तु 'गमॄणा'मिति केचित्। वस्तुतस्तु ऌकारस्थाने ऌकारद्वयगर्भेणैव दीर्घेण भवितव्यं, स्थानत आन्तर्यस्य बलीयस्त्वात्। 'होतॄणा'मित्यत्र तु ॠकार एव भवति, स्थानप्रयत्नोभयसाम्यात्। स्यादेतत्—रेफद्वययुक्तस्य लकारद्वययुक्तस्य चेषत्स्पृष्टप्रयत्नत्वात्प्रयत्नभेदेन ऋऌवर्णाभ्यां सावर्ण्याभावेनाच्त्वाभावात् 'ऊकालोऽ'जित्यादिना दीर्घसंज्ञा नास्तीति कथमत्र लकारद्वयगर्भेण भवितव्यम्, 'ऋति ऋ वा' 'ऌति ऌ वे'ति वार्तिकप्रत्याख्यानं वा कथं सङ्गच्छताम्?, 'अकः सवर्णे' इत्यनेन इष्टरूपाणामसिद्धेः। अत्राहुः—उभयोरप्यच्त्वसिद्धये वर्णसमाम्नाये 'ऋऌक्'सूत्रोत्तरं पाठः कर्तव्यः, तेन सर्वेष्टसिद्धिः। न च दीर्घत्वसिद्धावपि विवृतप्रयत्नसाम्यात् 'होतृऋकार' इत्यत्र ऋकारो दीर्घ एव स्यात्, न तु रेफद्वययुक्तो दीर्घ इति शङ्क्यम्, ऋकारद्वयस्थाने रेफद्वयवतः साम्येन कदाचित्तस्यापि प्रवृत्तेः। 'होतृऌकार' इत्यत्र ऌकारेण आन्तर्यात्कदाचिल्लकारद्वययुक्तः कदाचिदृकारेण आन्तर्यादृकारश्च भवति। परं तु वार्तिकमते 'होतृऋकार' इत्यत्र रेफद्वयगर्भो न भवति, प्रत्याख्यानपक्षे तु कदाचिद्भवतीति वैषम्यमस्ति, तत्रेष्टापत्तिर्वा, प्रत्याख्यानस्य प्रौढिवादमात्रता वा अभ्युपगन्तव्येति। अत्रेदं बोध्यम्—'अकः सवर्णे'इति सूत्रस्थभाष्ये 'ऋति ऋ वा' 'ऌति ऌ वे'त्येतन्न प्रत्याख्यातम्, 'तुल्यास्ये'ति सूत्रस्थभाष्ये तु तस्य प्रत्याख्यानेऽपि फलभेदे तदयोगात्। स्वीकृते तु तस्मिन्नकोऽकीत्येव सुवचमिति ग्रन्थोऽनुपपन्न एव। यदि तु 'ऋति ऋ वे'ति वार्तिकम्, 'उर्ऋत्' इति 'ऋ वे'ति पठ्यते, तदा वार्तिकयोः सवर्ण इति पदानुवृत्त्यनपेक्षणात्सुवचमेवाऽकोकीति। प्रकृतमनुसरामः,—ङौ तु 'ऋतो ङि—'इति गुणो लपरः। गमलि। गम्लोः। गम्लृषु। एवं शकृशब्देऽप्यूह्यम्। **इति ऌदन्ताः**।

**सेरिति**। अस्यापत्यमिः कामः, अस्य स्त्री ई लक्ष्मीः। तेन तया वा सह वर्तत इति विग्रहे 'तेन सहेति तुल्ययोगे' इति बहुव्रीहौ 'वोपसर्जनस्ये'ति सहस्य सभावे

---

'रोरी'ति प्रवृत्त्या फलाभावेनाऽप्रवृत्त्या तत्साहचाट्टकारांशेपि हल्रूपाऽण्यप्रवृत्तिरित्याशयात्। वस्तुत ईदृशानामभिधाने दृढं मानं चिन्त्यम्। **इति ऌदन्ताः**।

**सेरिति**। इमा सहेत्यर्थः। 'बाधकमन्येति' ... लिङ्गाद्यन्वय-

स्मृतेः । स्मृतयौ । स्मृतयः । इत्येदन्ताः ॥

'आद्गुणः' । **सय इति** । ननु 'से' इत्येकारस्य अन्तवद्भावेन पदान्तत्वादयादेशं बाधित्वा जसि परतः 'एङः पदान्ता'दिति पूर्वरूपमेकादेशः स्यात्, तथाच 'से'रित्येव रूपं स्यान्न तु 'सय' इति चेदत्र केचित्–एवं तर्हि 'थासः से' 'ईशः से' इति विहितादेशस्यानुकरणशब्दोऽयमस्तु, तत्र हि जसि परतोऽयादेशस्य निर्बाधत्वादिति ।

**स्मृतेरिति** । ई कामः स्मृतो येन सः, ई लक्ष्मीः स्मृता येनेति वा विग्रहः । 'निष्ठे'ति स्मृतशब्दस्य पूर्वनिपातः । **स्मृतय इति** । नन्वत्र पूर्वोक्तरीत्या'एङः पदान्तादती'ति पूर्वरूपेण भाव्यं न त्वयादेशेन, न ह्यत्रानुकरणशब्दत्वकल्पनमौचित्यं लभत इति चेदत्र नव्याः–'उत्तरपदत्वे चाऽपदादिविधौ प्रतिषेधः' इति प्रत्ययलक्षणप्रतिषेधा'देङः पदान्तादती'त्यस्याऽप्रवृत्तिः । किंच 'स्वादिष्वसर्वनामस्थाने' 'यचि भ'मित्यत्र भाष्यकृता 'स्वादिषु पूर्वं पदसंज्ञं भवती'ति व्याख्याय ततो'ऽसर्वनामस्थाने यची'ति छित्त्वा नञं च क्रियया संबध्य 'यजादौ सर्वनामस्थाने परतः पूर्वं पदसंज्ञं न भवतीति व्याख्यातम् । ततश्चानेन 'सुप्तिङन्त'मिति 'स्वादि'ष्विति च द्विविधापि संज्ञा निषिध्यत इति पूर्वान्तत्वप्रयुक्ता पदान्ततेह दुर्लभेति 'स्मृतय'इति रूपं निर्बाधमेव । तथा 'सय' इत्यत्र 'इना सहे'त्यादिव्युत्पत्तिपक्षेऽपि नानुपपत्तिः । न चैकादेशस्य पूर्वान्तत्वेनाव्ययत्वात्सुपो लुक् स्यादिति शङ्क्यम्, अव्ययसंज्ञाया अन्वर्थत्वेनोपसर्जने तदभावात् । न चैवमपि 'सह इ'इति स्थितेऽन्तरङ्गत्वाद्गुणे कृते सहशब्दस्य सादेश एव न स्यात्, एकादेशस्य परादिवद्भावे सहशब्दाभावात्पूर्वान्तत्वे तूत्तरपदत्वाभावात् । उभयत आश्रयणे ऽन्तादिवद्भावनिषेधाच्च । अस्तु वा सहशब्दस्य सभावः, तथापि 'स'इत्यदन्तमेव रूपं स्यान्न तु 'से 'इत्येदन्तमिति शङ्क्यम्, 'नेन्द्रस्य परस्ये'त्युत्तरपदवृद्धिप्रतिषेधेन 'पूर्वोत्तरपदयोः प्रथमं कार्यं भवति ततः एकादेशः' इति सामान्यज्ञापनादित्याहुः ॥

र्थप्रतिपादकत्वादव्ययमिति महासञ्ज्ञयाऽस्यानव्ययत्वान्न विभक्तिलुक् । सादेशात्पूर्वमाद्गुणस्तु न, 'नेन्द्रस्ये'ति ज्ञापकेन पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमेकादेशाप्रवृत्तेः । न च 'नान्तः पाद'मिति सूत्रस्थे 'न चैङः पदान्तात्परो रुरस्ती'ति भाष्येण विरोधात्सावीदृशानां प्रयोगोऽनुचितः, सावपि पदत्वसत्त्वादिति वाच्यम्, योगविभागसिद्धस्य सौ पदत्वस्य क्वाचित्कत्वेनाऽदोषात् । सावप्रयोग एवेत्यन्ये ।

**सय इति** । न चास्यान्तर्वर्त्तिविभक्त्या पदत्वादेङः पदान्तादित्यादि दुर्वारमिति वाच्यं, भाष्ये स्वादिष्वितियोगं विभज्य स्वादिषु पूर्वं पदमित्यर्थः। ततः–'असर्वनामस्थाने यचि'। सुबन्तमित्यनुवर्त्तते। 'अयची'ति प्रसज्यप्रतिषेधः । तेन यजादौ सर्वनामस्थाने पूर्वं पदं न, मध्ये चेत्सुबन्तन्तदपि पदं नेति व्याख्यानेनाऽदोषात् । आतिदेशिकस्याप्ययं निषेध इति स्पष्टमेव [illegible] पदादिविधा विति प्रति-

**गोतो णित्** ।७।१।९०। गोशब्दात्परं सर्वनामस्थानं णित्कार्यकृत्स्यात् । गौः । गावौ । गावः । **औतोऽम्शसोः** ।६।१।९३। 'आ-ओत' इति च्छेदः । ओकारादम्शसोरचि परे आकार एकादेशः स्यात् । शसा साहचर्यात्सुबेव अम्गृह्यते । नेह-अचिनवम् । असुनवम् । गाम् । गावौ । गाः । गवा । गवे । गोः । गोः । इत्यादि ॥ **ॐओतो णिदिति वाच्यम्** । ॐ **विहितविशेषणं च** । तेन सुद्यौः । सुद्यावौ । सुद्यावः । 'ओकारान्ताद्विहितं सर्वनामस्थान'मिति व्याख्यानान्नेह,—हे भानो । हे भानवः । उः-शंभुः स्मृतो येन सः-स्मृतौः । स्मृतावौ । स्मृतावः । स्मृताम् । स्मृतावौ । स्मृताः-इत्यादि ॥ **इत्योदन्ताः** ॥ **रायो हलि** ।७।२।८५।

---

**गोतो णित्** । 'इतोऽत्सर्वनामस्थाने' इत्यतोऽनुवृत्तं सप्तम्यन्तं सर्वनामस्थानग्रहणं प्रथमया विपरिणम्यते,'णि'दित्यनेन सामानाधिकरण्यात्तदाह-**सर्वनामस्थानमिति** । **णित्कार्यकृत्स्यादिति** । णिति परे पूर्वस्य यत्कार्यं तत्करोतीत्यर्थः । **गौरित्यादि** । 'चित्रगु'रित्यत्र तु न भवति 'ओत'इति वक्ष्यमाणत्वात् । 'तद्धितो यः शस् स ओकारान्तान्न संभवती'त्याशयेनाह-**शसा साहचर्यादिति** । 'सुपी'त्यनुवर्तनाच्चेत्यपि काशिकायामुक्तम् । कैयटस्तु 'तद्धितोऽपि शसस्तीति कथमिह साहचर्यादमः सुप्त्व'मित्याशङ्क्य, 'अचीत्यधिकारादजादिः शस् सुबेव संभवति, न तु तद्धित' इत्याह । **अचिनवमिति** । चिनोतेर्लङादेशस्य मिपः 'तस्थस्थमिपाम्-'इत्यम् । **ओतो णिदिति वाच्यमिति** । 'गोत'इत्यपहाय 'ओत'इति वाच्यमित्यर्थः । एवंच 'गा'मित्यत्र परत्वाद्वृद्धिः स्यादिति शङ्काया अनवकाशः, निरवकाशतया आत्वेन वृद्धेरेव बाधनात् । **इत्योदन्ताः** ॥

**रायो हलि** । 'अष्टन आ विभक्तौ' इत्यत 'आ' इति 'विभक्ता'विति च वर्तते ।

---

पेधाच्च । 'उत्तरपदस्य तद्घटितस्य वा पदत्वे कर्त्तव्येऽन्तर्वर्त्तिविभक्तेः प्रत्ययलक्षणं ने'ति तदर्थोऽतो न योगविभागमूलकप्रत्याख्यानेन फलभेद इति केचित् । 'इतोऽ'दित्यतोऽनुवृत्तं 'सर्वनामस्थाने' इति प्रथमया विपरिणम्यते, 'णि'दित्यनेन सामानाधिकरण्यादित्याह-**सर्वनामस्थानमिति** । तत्र णित्कार्यस्याऽसंभवाण्णिति यत्कार्यन्तदतिदिश्यते । **शसेति** । 'अची'त्यधिकारात्तद्धितशसो न ग्रहणमिति भावः । **गामिति** । परत्वादत्र वृद्धिस्तु न, अनवकाशत्वेनाऽऽत्वस्यापवादत्वात् । तदाह-**ओतो णिदिति** । सूत्रे तपरकरणेन गस्याऽविवक्षितत्वमिति भावः । तेन 'चित्रगु'रित्यादौ न दोषः । अन्यथाऽङ्गाधिकारे तदन्तविधेः सत्त्वेन स्थानिवत्त्वेन गोन्तत्वाद्दोषः स्यादेव । मम त्वोकारान्तत्वाऽभावादल्विधौ स्थानिवत्त्वाभावाच्च न दोषः । **परे तु**-'गोतो णि'दिति सूत्रे भाष्ये तपरत्वं प्रत्याख्यातम् । 'चित्रगु'रित्यादौ तु न दोषः । गोः पूर्वत्वणित्त्वात्त्वस्वरेषु स्थानिवत्त्वप्रतिषेधात् । 'हे चित्रगो'इत्यादौ तु लाक्षणिकत्वान्न दोष इति-अत्रैव सूत्रे भाष्ये स्पष्टम् । 'द्योः सर्वनामस्थाने णित्त्वं वक्तव्य'मिति 'औतोऽ'मित्यत्र भाष्ये उक्तमित्याहुः । **सुद्यौरिति** । अत्र द्योशब्दस्य ... हिरुदाहृतः ।

रैशब्दस्याऽऽकारोऽन्तादेशः स्याद्धलि विभक्तौ । अचि आयादेशः । राः । रायौ । रायः । रायम् । रायौ । रायः । राया । राभ्यामित्यादि । **इत्यैदन्ताः** ॥ ग्लौः । ग्लावौ । ग्लावः । ग्लावम् । ग्लावौ । ग्लावः । इत्यादि । 'औतोऽम्शसो'रितीह न प्रवर्तते, 'ऐऔ'जिति सूत्रेण ओदौतोः सावर्ण्याऽभावज्ञापनात् ॥ **इत्यौदन्ताः** ॥

**॥ इत्यजन्तपुंलिङ्गप्रकरणम् । ॥**

---

तदाह—**आकारोऽन्तादेश इति** । 'अर्थरैविभवा अपी'त्यमरः । 'रायिश्छान्दसः' इति भाष्यम्; तच्च क्यजन्तस्य रैशब्दस्य छान्दसत्वपरं न तु केवलस्यापीति 'वान्तो यी'ति सूत्रे कैयटः । स एव केवलोपिच्छान्दस इति पक्षान्तरमप्याह । **इत्यैदन्ताः** ।

**ग्लौरिति** । 'ग्लौर्मृगाङ्कः कलानिधि'रित्यमरः । एवं जनानवतीति 'जनौः' । 'ज्वरत्वरे'त्यूठ् । 'एत्येधत्यूठ्'स्विति वृद्धिः । अच्यावादेशः । 'जनावौ' 'जनाव' इत्यादि । **न प्रवर्तत इति** । हे ग्लौरित्यत्र संबुद्धिलोपः, 'ग्लाव' इत्यत्र 'ङसिङसोश्चे'ति पूर्वरूपं च न प्रवर्तत इत्यपि बोध्यम् । **सावर्ण्याभावज्ञापनादिति** । सति तु सावर्ण्ये एचश्चतुर्विंशतेः संज्ञा भवन्तीति 'वृद्धिरादै'जित्येतद्वृद्धिरादेजिति पठितुं शक्यत्वादैऔजिसूत्रं व्यर्थं सत्सावर्ण्याभावं ज्ञापयति । अतएव 'एदैतोरोदौतोश्च न मिथः सावर्ण्यम्, ऐऔ'जिति सूत्रारम्भसामर्थ्या'दित्याद्यणुदित्सवर्णस्येति सूत्र एवोक्तमिति भावः । नन्वैऔजिति सूत्राऽभावे 'न य्वाभ्या'मिति सूत्रे 'ताभ्यामै'जिति प्रत्याहारोऽयं न सिध्येत्, 'पूर्वौ तु ताभ्यामे'जित्युक्ते तु विधीयमानस्य सवर्णाऽग्राहकतया 'वैयाकरणः' सौवश्व' इत्यादावेदोतावेवागमौ स्तो न त्वैदौतौ । ततश्च वैयर्थ्याभावादैऔजिति सूत्रं सावर्ण्याभावं न ज्ञापयतीति चेन्मैवं, 'पूर्वौ तु ताभ्यामै औ' इति पठनेनापि इष्टसिद्धेस्तत्सूत्रवैयर्थ्यस्य तदवस्थत्वात् । स्थितस्य गतिप्रदर्शनमिदम् । वस्तुतस्तु 'एओ'ङिति सूत्रारम्भसामर्थ्यादित्युक्ते तु 'ताभ्यामै'जित्यत्रानुपपत्तिर्नास्त्येव । न च 'एओ'ङिति सूत्राभावे 'अदेङ्गुणः' 'एङि पररूपम्,' 'एङः पदान्तादति' इत्यादावेङ्प्रत्याहारः

---

**विहितमिति** । यदि तु वर्णग्रहणेपि प्रतिपदोक्तपरिभाषा प्रवर्तते तदा व्यर्थोयं यत्नः । **स्मृतौरिति** । स्मृत उर्येनेत्यर्थः । यत्त्व'यवायावादिष्वेकादेश उदात्तेनोदात्त इत्यस्य सिद्धत्वं वक्तव्यं तत्स्थानिकायादीनामस्वरितत्वाये'ति वार्तिकव्याख्यावसरे'ऽवादेशे नास्त्युदाहरण'मिति 'स्वरितो वे'ति सूत्रस्थभाष्यविरोधः । प्रकृते पूर्वपदप्रकृतिस्वरेण स्मृतस्यान्तोदात्तत्वे शेषनिघातेन उशब्दस्यानुदात्तत्वात्तदेकादेशस्यैकादेश उदात्तेनेत्युदात्तत्वे 'स्मृतवे'त्यादौ तदुदाहरणसंभवादिति, तन्न; तृतीयादिष्वनभिधानेपि अन्यत्र तत्सत्त्वे बाधकाभावात् । न च 'गोत' इति सूत्रे 'द्योश्च वृद्धिर्वक्तव्ये'ति वार्तिके द्योशब्दस्यैवोपादानादन्यौकारान्ताभाव इति वाच्यम्; उपलक्षणतया व्याख्यानेनाऽदोषात् । [illegible] न क्षतिरि

# अथाऽजन्तस्त्रीलिङ्गप्रकरणम्।

रमा। **औङ आपः** ।७।१।१८। आबन्तादङ्गात्परस्यौङः शी स्यात्। 'औ'ङित्यौ-

---

कथं सिध्येदिति वाच्यं, सति तु सावर्ण्ये 'अदेङ्गुणः' 'एचि पररूपम्' 'एचः पदान्तादती'ति पठितुं शक्यत्वादतिप्रसङ्गस्य 'ए'ज्ग्रहणेऽपि तुल्यत्वात्। न चैवमप्येचां चतुर्णां क्रमादयाद्यादेशसिद्ध्यर्थम् 'एओङ्' 'ऐऔ'जिति सूत्रद्वयमप्यावश्यकमिति वाच्यं; 'स्थानेऽन्तरतमः' इत्यनेनैव एचां क्रमादयादयः सिध्यन्तीति प्रागेवास्माभिरुपपादितत्वाच्च। यदा हि 'स्वराणामूष्मणां चैवे'त्यादिप्रागुक्तशिक्षावचनानुरोधादेङौ विवृततरौ, ऐचौ विवृततमौ' इत्यभ्युपगम्यते, तदा त्वेदौतोरोदौतोश्च मिथः सावर्ण्यप्रसक्तिरेव नास्तीति 'ऐऔ'जिति 'एओ'ङिति वा सूत्रं नोक्तज्ञापकमिति ज्ञेयम्। केचित्तु विवृततरयोरेङोर्विवृततमत्वाभावेऽपि विवृततरे विवृततमे च विवृतत्वस्य सत्त्वात्तदादाय तुल्यप्रयत्नत्वमेङैचोश्चास्तीति सावर्ण्यप्रसक्तावुक्तज्ञापकाश्रयणं सम्यगेवेत्याहुः। तदपरे न क्षमन्ते। तथाहि सति 'इको गुणवृद्धी' इति सूत्रस्थशब्दकौस्तुभग्रन्थेन सह विरोधप्रसङ्गात्। तत्र हि–'स्वराणामूष्मणां चे'त्यादिशिक्षानुरोधा'च्चेता' 'नेते'त्यादौ गुणाऽप्रवृत्तिः स्यात्। विवृततरत्वरूपवैलक्षण्यस्य सत्त्वादिति न शङ्क्यं, विधेर्निर्विषयत्वापत्तेः। 'जयः करणम्' 'धान्यानां भवने' इत्यादिनिर्देशैरिकारादिषु गुणप्रवृत्त्यनुमानाच्चे'ति प्रकारान्तरेण समाहितम्। तदुक्तरीत्या तुल्यप्रयत्नवत्त्वे तु 'चेता' 'नेते'त्यादौ गुणाऽप्रवृत्तिशङ्का निरालम्बनैव स्यात्। तस्मादीषद्विवृतभेदेन स्वराणामूष्मणामिव विवृततरविवृततमभेदेन सावर्ण्याभावोऽत्र सुवच इति दिक्। **इत्यजन्ताः पुँल्लिङ्गाः।**

**अथाऽजन्ताः स्त्रीलिङ्गाः। रमेति।** रमते इति रमा। 'रमु क्रीडायाम्' इत्यस्मात्पचाद्यपि टाप्। लिङ्गविशिष्टपरिभाषया स्वादयः। हल्ङ्यादिलोपः। न चात्राबन्तत्वादेव स्वाद्युत्पत्तिरस्तु, प्रत्ययान्तस्याऽप्रातिपदिकत्वेऽपि ङ्याप्पोः पृथग्ग्रहणादिति वाच्यं, ङ्याब्ग्रहणस्यान्यार्थतायाः प्रागेवोक्तत्वात्प्रत्याख्यातत्वाच्च तद्ग्रहणस्य। **शी स्या-**

---

त्याहुः। **रायो हलि।** 'अष्टन आ'इत्यत 'आ विभक्ता'वित्यनुवर्त्तते। ॐइत्यजन्ताः पुंलिङ्गाः ॐ॥

**अथाजन्ताः स्त्रीलिङ्गाः। रमेति।** रमयतेः पचाद्यच्। टाप्। एकादेशस्य पूर्वान्तवत्त्वेन प्रातिपदिकत्वात्स्वादयः। 'वाचे'त्यादौ तु लिङ्गविशिष्टपरिभाषया तत्त्वात्ते। 'आप'इति षष्ठ्यन्तेन सामानाधिकरण्यादङ्गस्येति पञ्चम्या विपरिणम्यते, विशेषणेन तदन्तविधिरित्याह—**आबन्तादिति।**

'जसः शी'त्यत्र 'औ'... **रमे इति।** 'रमे'ति लोपे न अभवात्। **सम्बुद्धौ च।** 'बहु-

कारविभक्तेः संज्ञा । रमे । रमाः । **संबुद्धौ च** ।७।३।१०६। आप एकारः स्यात्संबुद्धौ । 'एङ्ह्रस्वा'दिति संबुद्धिलोपः । हे रमे । हे रमे । हे रमाः । रमाम् । रमे । रमाः । स्त्रीत्वान्नत्वाऽभावः ॥ **आङि चापः** ।७।३।१०५। आङि ओसि च परे आबन्तस्याङ्गस्य एकारः स्यात् । रमया । रमाभ्याम् । रमाभिः । **याडापः** ।७।३।११३। आपः परस्य ङिद्वचनस्य याडागमः स्यात् । 'वृद्धिरेचि' । रमायै । सवर्णदीर्घः । रमायाः २ । रमयोः । रमाणाम् । रमायाम् । रमयोः । रमासु । एवं दुर्गादयः ।

---

दिति । 'जसः शी'त्यतः 'शी'त्यनुवर्तत इति भावः । **संबुद्धौ च** । 'बहुवचने झल्येत्' 'आङि चापः' इत्यत 'एत्' 'आप' इति चानुवर्तते, तदाह–**आप एकारः स्यादिति** । **एङ्ह्रस्वादिति** । न चात्र हल्ङ्यादिनैव सुलोपोऽस्तु, प्रत्ययलक्षणन्यायेन 'संबुद्धौ चे'त्येत्वस्यापि प्रवृत्तिसंभवादिति शङ्क्यं, परत्वात्प्रतिपदोक्तत्वाच्च एत्त्वे कृते हल्ङ्यादिलोपस्याऽप्रवृत्तेः, स्थानिवद्भावादाप्त्वेऽप्याकाररूपत्वाभावात् । 'आ-आ'-बित्याकारं प्रश्लिष्य दीर्घग्रहणस्य प्रत्याख्यानात् । 'एङ्ह्रस्वा'दिति लोपस्यैव परत्वेन न्याय्यत्वाच्चेति भावः । **आङि** । चकारेण 'ओसि चे'ति प्रकृतं परामृश्यत इत्याह–**ओसि च पर इति** । **रमाभिरिति** । नन्विह एकादेशस्य पूर्वान्तत्वेन ग्रहणादतो भिस ऐसित्यैस्प्राप्नोति । न च तपरत्वसामर्थ्यान्नैवमिति वाच्यम्, अकृतैकादेशे 'विश्वपाभि'रित्यादौ कृतार्थत्वादिति चेन्मैवम्, अल्विधौ 'अन्तादिवच्चे'त्यस्याऽप्रवृत्तेः ।

**याडापः** । 'घेर्ङिती'त्यतोऽनुवृत्तं 'ङिती'ति सप्तम्यन्तमाप इति पञ्चम्यनुरोधेन षष्ठ्या विपरिणम्यत इत्याह–**ङिद्वचनस्येति** । अत्र 'सुपि चे'त्यतः 'सुपी'त्यनुवर्तनात्सुप एव याट् । तेन अपित्सार्वधातुकस्य ङित्त्वेऽपि मालेवाचरतो'मालात'इत्यादौ तसादेर्न भवति । एतच्च 'अचः परस्मि'न्नित्यत्र पूर्वस्य विधिः पूर्वविधिरिति षष्ठीसमासपक्षाभ्युपगमेनोक्तम् । पञ्चमीसमासपक्षाभ्युगमे तु शपः स्थानिवत्त्वेन व्यवधानात् 'मालात' इत्यादौ याटः प्रसङ्ग एव नास्तीत्याहुः । 'य'डित्येव वक्तव्ये दीर्घोच्चारणं स्पष्टप्रतिपत्त्यर्थम् । न च 'अतो गुणे' इति पररूपापत्तिः, अकारोच्चारणसामर्थ्यादेव तद्बाधात् । **वृद्धिरेचीति** । प्राचा तु 'आटश्चे'त्युपन्यस्तं तदुपेक्षितम् । याट्स्याटोष्टकारस्य समुदायानुबन्धत्वेनेह आटोऽ-

---

वचने झली'त्यत 'ए'दिति 'आङि चाप'इत्यत 'आप' इति चानुवर्त्तते । **एङ्ह्रस्वादिति** । संबुद्धौ प्रतिपदोक्तत्वेन शीघ्रोपस्थितिकतया हल्ङ्यादिलोपात्प्रथममेत्त्वेऽनेन सम्बुद्धिलोप इति भावः । संनिपातपरिभाषा त्वनित्यत्वान्नाऽत्र प्रवर्त्तते । **आङि च** । चेन प्रकृतमोसीति परामृश्यते, 'घेर्ङिती'त्यतोऽनुवृत्तं 'ङिती'त्याप इति पञ्चम्या षष्ठ्या विपरिणम्यत इत्याह–**ङिद्वचनस्येति** ।

**सर्वनाम्नः स्याड्ढ्रस्वश्च** ।७।३।११४। आबन्तात्सर्वनाम्नः परस्य ङितः स्याट् स्यादापश्च ह्रस्वः। याटोऽपवादः। सर्वस्यै। सर्वस्याः। सर्वस्याः। एकादेशस्य पूर्वान्तत्वेन ग्रहणादामि सर्वनाम्न इति सुट्। सर्वासाम्। सर्वस्याम्। सर्वयोः। सर्वासु। एवं विश्वादय आबन्ताः। **विभाषा दिक्समासे बहुव्रीहौ** ।१।१।२८। अत्र सर्वनामता वा स्यात्। उत्तरपूर्वस्यै। उत्तरपूर्वायै। 'दिङ्नामान्यन्तराले' इति प्रतिपदोक्तस्य दिक्समासस्य ग्रहणान्नेह—योत्तरा सा पूर्वा यस्या उन्मुग्धायास्तस्यै उत्तरपूर्वायै। 'बहुव्रीहि'ग्रहणं स्पष्टार्थम्। अन्तरस्यै शालायै। बाह्यायै इत्यर्थः। 'अपुरी'त्युक्तेर्नेह। अन्तरायै नगर्यै। **विभाषा द्वितीयातृतीयाभ्याम्** ।७।३।११५। आभ्यां ङितः स्याट् स्याद्वाऽऽपश्च ह्रस्वः। इदं सूत्रं त्यक्तुं शक्यम्। तीयस्य

---

भावात्। **सर्वनाम्नः स्याट्**। दीर्घोच्चारणं प्रागवत्स्पष्टप्रतिपत्त्यर्थम्। आबन्तस्य सर्वादिगणे पाठाभावात्सर्वनामत्वं नेत्याशङ्क्याह—**एकादेशस्य पूर्वान्तत्वेनेति**। **विभाषा दिक्समासे**। गौणत्वादप्राप्ते विभाषेयं, न तु 'न बहुव्रीहा'विति निषेधे प्राप्ते इति भ्रमितव्यम्। तस्याऽलौकिकप्रक्रियावाक्यान्तर्गतसर्वादिविषयत्वादस्य च समासविषयत्वात्। **स्पष्टार्थमिति**। प्रतिपदोक्तदिक्समासविधायके 'दिङ्नामानी'ति सूत्रे 'शेषो बहुव्रीहि'रित्यतो'बहुव्रीहि'रित्यधिकारादिति भावः। **त्यक्तुं शक्यमिति**। न चाबन्तस्य द्वितीयादिशब्दस्य तीयप्रत्ययान्तत्वाभावाद्विभाषा द्वितीयेति सूत्रमावश्यकमिति

---

**सर्वनाम्नः स्या**। आबन्तात्परस्य सर्वनाम्नो विहितस्येत्यर्थः। तेन 'मासपूर्वायै'इति सिद्धम्। अत्र ह्रस्वो न स्याटः, तस्य विधेयत्वेनोद्देश्यत्वाऽसम्भवात्। नापि ङिद्वचनस्य, व्याख्यानात्, अत आपो ह्रस्व इत्याह—**आपश्चेति**। आबन्तस्य गणे पाठाभावेन सर्वनामत्वाभावादाह—**एकादेशस्येति**। **ग्रहणादिति**। सर्वनामशब्देनेत्यर्थः। न चैवमप्याबन्तत्वाभावः, एकादेशनिष्पन्नस्याप्त्वाश्रयात्, अत एव 'खट्वे'त्यादौ परादिवद्भावेनाप्त्वमाश्रित्याबन्तादिति सोऽपि उक्तः, परादिवद्भावेन तत्त्वं तु न कस्यचिदुभयत आश्रयणेन्तादिवत्त्वाभावादिति वाच्यम्, उभयत आश्रयणे तदभावस्य भाष्ये एकदेश्युक्तत्वेऽपि सिद्धान्तिसंमतत्वाभावात्। एतच्च तिङन्ते 'इण्'धातौ वक्ष्यामः। **परेतु** लिङ्गविशिष्टपरिभाषयाऽऽबन्तस्य सर्वनामत्वम्। आबन्तत्वन्तु परादिवद्भावेनेत्याहुः। **सर्वस्यामिति**। इह परत्वात्स्याटि कृते सकृद्गतिन्यायात्सुण्न। **प्रतिपदोक्तस्येति**। दिक्शब्दमुच्चार्य विहितत्वादस्य तत्त्वम्। **योत्तरेति**। 'अनेकमन्यपदार्थे'इति बहुव्रीहिः। 'सर्वनाम्नो वृत्तिमात्रे'इति मात्रग्रहणात्संप्रत्यसर्वनामत्वेपि पुंवत्त्वम्। **योत्तरेति**। यत्तच्छब्दाभ्यामुद्देश्यविधेयत्वप्रतीत्या योत्तरात्वप्रकारकज्ञानविशेष्या सा प्रसिद्धपूर्वा यस्या इत्यर्थेनोत्तरापदस्य गुणवाचकत्वात्पूर्वनिपात इत्यन्यत्र विस्तरः। **स्पष्टार्थमिति**। 'दिङ्नामानी'त्यस्य बहुव्रीह्यधिकारे सत्त्वादिति भावः। **अन्तरायै नगर्यै इति**। 'अपुरी'त्यस्य पूःशब्दार्थस्य

ङित्सूपसङ्ख्यानात् । द्वितीयस्यै । द्वितीयायै । द्वितीयस्याः । द्वितीयायाः । द्वितीयस्याम् । द्वितीयायाम् । शेषं रमावत् । एवं तृतीया ॥

'अम्बार्थनद्योर्ह्रस्वः' । हे अम्ब । हे अक्क । हे अल्ल । ❀ **असंयुक्ता ये डलकास्तद्वतां ह्रस्वो न** । हे अम्बाडे । हे अम्बाले । हे अम्बिके ॥

जरा । जरसौ । शीभावात्परत्वाज्जरस् । आमि नुटः परत्वाज्जरस् । जरसामित्यादि । पक्षे हलादौ च रमावत् । इह पूर्वविप्रतिषेधेन शीभावं कृत्वा संनिपातपरिभाषाया अनित्यतां चाश्रित्य 'जरसी' इति केचिदाहुस्तन्निर्मूलम् । यद्यपि जरसादेशस्य स्थानिवद्भावेनाबन्ततामाश्रित्य 'औङ आपः' 'आङि चापः' 'याडापो'

---

शक्यम्, एकादेशस्य पूर्वान्तत्वेन ग्रहणादावन्तस्यापि तीयप्रत्ययान्तत्वा'त्तीयस्ये'ति पुंनपुंसकार्थमवश्यं वक्तव्येनाऽनेनैव सिद्धौ 'विभाषा द्वितीये'ति सूत्रं न कर्तव्यमिति भावः। **अम्बार्थनद्योर्ह्रस्वः** । अत्र 'अम्बार्थं द्व्यक्षरं यदी'ति वचनात्द्व्यच्कस्यैवाम्बार्थस्य ह्रस्वो भवति नान्येषामित्याशयेन फलितमाह—**असंयुक्ता ये डलका इत्यादि** । **जरेति** । 'जॄष् वयोहाना'वित्यस्मात्षिद्भिदादिभ्य इत्यङि 'ऋदृशोऽङी'ति गुणे कृते टाप् । **शीभावात्परत्वाज्जरसित्यादि** । ननु 'औङ आपः' 'ह्रस्वनद्यापो नु'-डित्यपेक्षया 'जराया'इति सूत्रस्य परत्वादस्त्वेवं, परन्तु 'आङि चापः' 'याडापः' 'ङेरा'मिति विषयो जरसादेशं बाधित्वा परत्वात्स्युरिति चेदत्राहुः,—'आङि चापः' इत्येकारादेशे कृतेऽप्येकदेशविकृतन्यायेन 'जरायाः' इति जरसादेशप्रसक्त्या नित्यत्वादेकारादेशं बाधित्वा जरसादेश एव भवति । न चैकारादेशोऽपि नित्य एव, जरसादेशे कृतेऽपि स्थानिवत्त्वेनाबन्तत्वादाङि चाप इति प्रवृत्तेरिति वाच्यम्, 'आकाररूपस्यैवापः सर्वत्र ग्रहणा'दित्यनुपदमेव वक्ष्यमाणत्वात्तदप्रवृत्तेः । 'याडापः'इति याडागमं तु जरसादेशोऽन्तरङ्गत्वाद्बाधते । आकाररूपापः परस्य ङितः सुपो विहितस्य याटो बह्वाश्रयत्वेन बहिरङ्गत्वात् । ङेराममपि जरसादेशो नित्यत्वाद्बाधते । न चाकाररूपाबन्ता-

---

अविशेष्यत्वे इत्यर्थ इति भावः । अत्र मानमन्वेष्यम् । **हे अम्बेति** । ह्रस्वे कृते 'संबुद्धौ चे'त्येत्वं न, आ-आविति प्रश्लेषात् । 'द्व्यक्षरं यदी'ति पठित्वा 'द्व्यच्काम्बार्थकस्यैव ह्रस्व'इति नियममाश्रित्य 'डलकवतां ह्रस्वो ने'त्यस्य भाष्ये प्रत्याख्यानात्फलाऽभेदाय सामान्यतोपि वार्त्तिकमसंयुक्तविषयमित्याशयेनाह—**असंयुक्ता इति** । 'द्व्यक्षरं यदी'त्यस्याङ्गत्वाद् द्व्यक्षराम्बार्थकान्तस्यैव ह्रस्व इति नियमशरीराङ्गदम्बेत्यादौ ह्रस्वो भवत्येव । **यद्यपि जरसादेशस्येति** । एत्वैत्वशीनुड्याडामां नित्यत्वात्पूर्वमेपुकृतेपु क्वचिदजादित्वाभावात्क चित्सन्निपातपरिभाषया जरसोऽनापत्तिरिति भावः । यद्यपि याडामोर्जरसपेक्षया परत्वात्तयोः कृतयोरायेऽजादित्वविघातादल्ले संनिपात ... ततो जरसः आमिः, एवमेत्वेपि,

'ह्रस्वनद्यापो' 'ङेरा'मिति पञ्चापि विधयः प्राप्ताः । एवं नस्निश्पृत्सु। तथाप्यनलिव्धावित्युक्तेर्न भवन्ति। 'आ–आ'विति प्रश्लिष्य आकाररूपस्यैवाऽऽपः सर्वत्र ग्रहणात्। एवं हल्ङ्यादिसूत्रेऽपि आ-आप् ङी-ई इति प्रश्लेपादतिखट्वो निष्कौशाम्बिरित्यादिसिद्धेर्दीर्घग्रहणं प्रत्याख्येयम् । नचैवमप्यतिखट्वायेत्यत्र स्वाश्रयमाकारत्वं स्थानिवद्भावेनाप्त्वं चाश्रित्य याट् स्यादिति वाच्यम्, आबन्तं यदङ्गं ततः परस्य याड्विधानात् । उपसर्जनस्त्रीप्रत्यये तदादिनियमात् । 'पद्दन्' इति नासिकाया नस् । नसः ।

---

तपरस्य ङेरामि कृते संनिपातपरिभाषया जरसादेशस्याप्रवृत्तेर्न तस्य नित्यतेति वाच्यम्, रूपमालायां 'जरसी'इत्युक्तत्वादिष्टानुरोधेनोक्तपरिभाषाया अनित्यत्वाभ्युपगमे बाधकाभावादिति । **स्वाश्रयमिति।** यत्रादिसुबाश्रयं, तन्निमित्तकमित्यर्थः। यत्रादिसुप एव याडागमापादनात्स्वशब्देन तत्परामृश्यते । **स्थानिवद्भावेनेति**। न चैवं लाक्षणिकत्वात्कथमिह याट् स्यादिति वाच्यम्, अतिदेशविषये लक्षणप्रतिपदोक्तपरिभाषायाः प्रवृत्तावतिदेशस्य वैयर्थ्यापत्तेः । अतो व्याचष्टे–**आबन्तं यदङ्गमिति** । 'यस्मात्प्रत्ययविधिस्तदादेस्तदन्तस्य ग्रहण'मिति नियमादतिखट्वेति यदङ्गं तदाबन्तं न भवति, यच्चाबन्तं 'खट्वे'ति, तदङ्गं न भवतीति नात्र याडागमप्रसक्तिरिति भावः ।

अत्र नव्याः–'प्रत्ययग्रहणे तदन्तग्रहण'मित्याब्ग्रहणेनाबन्तं गृह्यते । आबन्तस्याङ्गविशेषणे त्वाबन्तान्तग्रहणादतिखट्वायेत्यत्रोक्तदोषतादवस्थ्यमिति यद्युच्यते, तर्ह्यङ्गेनाबन्तं विशेष्यताम्–'अङ्गसंज्ञकं यदाबन्त'मिति, तथा च नोक्तातिप्रसङ्गशङ्कालेश

---

तथापि तत्र प्रक्षेपफलं दर्शयितुमाह–**एवमिति** । अत्र यद्वक्तव्यन्तन्निर्जरशब्दे उक्तम् । **स्वाश्रयमिति । स्वं**–श्रूयमाण आकारः । **स्थानिवद्भावेनाप्त्वमिति** । न च 'ङ्याब्ग्रहणेऽदीर्घ आदेशो न स्थानिव'दिति ह्रस्वे आप्त्वस्य विच्छेदात्कथं दीर्घे स्थानिवत्त्वेन तल्लाभः ?। 'ङ्याप्स्थानिको दीर्घभिन्न आदेशो न स्थानिव'दिति तदर्थ इति वाच्यं, 'याडापः,' 'औङ आपः' 'आङि चापो,' 'ङेराम्नद्याप्,' 'हल्ङ्या'बित्येतेष्वाकारप्रश्लेपमाश्रित्य स्थानिवत्त्वनिषेधप्रत्याख्यातृभाष्यनये तच्छङ्कासत्त्वेनाऽदोपात् । अत्र यत्रोदाहरणे सूत्रभाष्यवार्त्तिकानां फलभेद आपतति तेपामनभिधानम् । यथा'तिखट्वस्य–अः अतिखट्वाः'इत्यादेः। वक्ष्यमाणरीत्या दीर्घात्पूर्वं फलाभावेन स्थानिवत्त्वाऽप्रवृत्तौ फलभेदस्यैवाभावश्च । यत्त्वाकारान्तरं प्रश्लिष्याकाररूप एव यो न कदाचिद्रूपान्तरं प्राप्त इत्यर्थ इति, तन्न, मानाभावात् । भाष्ये तस्यानुक्तेश्च । **आबन्तं यदङ्गमिति** । 'प्रत्ययग्रहणे'इति परिभाषयाऽतिखट्वस्य नाबन्तत्वं, यच्चाबन्तं खट्वेति न तदङ्गमिति भावः । न चानयाऽऽबन्तग्रहणे तेनाङ्गविशेषणादाबन्तान्तं यदङ्गमित्यर्थादतिखट्वायेत्यादौ दोषस्तदवस्थ इति वाच्यम्, अङ्गस्य विशेषणत्वात् । एतेन–'श्रुतमाकारमादाय स्मृतमनुबन्धमादाय आप्त्वानुसन्धानात्स्यादेव या'डित्यपास्तम् । तस्य लाक्षणिकत्वाच्च । ननु स्त्रीप्रत्यये

नसा । नोभ्यामित्यादि । पक्षे सुटि च रमावत् । निशाया निश् । निशः । निशा ॥

**व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** ।८।२।३६। व्रश्चादीनां सप्तानां छशान्तयोश्च षकारोऽन्तादेशः स्याज्झलि पदान्ते च । षस्य जश्त्वेन

---

इत्याहुः । स्त्रीप्रत्यये तदादिनियमो नेत्याशङ्क्याह—**उपसर्जनेति** ।

अयं भावः–'स्त्रीप्रत्यये चानुपसर्जने ने'त्यनुपसर्जनस्त्रीप्रत्यये तदादिनियमप्रतिषेधो वक्ष्यते न तूपसर्जनेऽपि । अतएव परमकारीषगन्धीपुत्रवदतिकारीषगन्ध्यापुत्र इत्यत्र 'ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे'इति संप्रसारणं न भवति । अतिकारीषगन्ध्यस्य हि ष्यङन्तत्वाभावात् । न च 'बहुश्रेयसी'त्यत्र 'श्रेयसी'त्युत्तरभागस्य

---

वाचनिकस्तदादिविधिनिषेधो भाष्ये पठितस्तत्कथमस्य तत्र प्राप्तिरत आह–**उपसर्जनेति** । 'स्त्रीप्रत्यये चानुपसर्जनेने'ति वचनस्यैव भाष्ये पाठादिति भावः । अत्रोपसर्ज्जनत्वं लौकिकमेव; स्त्रीप्रत्यये शास्त्रीयोपसर्जनत्वासंभवात् । यद्यपि स्त्रीप्रत्ययान्ते शास्त्रीयोपसर्जनत्वमस्ति तथापि न तेन 'प्रत्ययग्रहणे' इति तदादिनियमप्रसक्तिः । एतत्सर्वं **व्याख्यादर्शा**द्यनुरोधेन । **परे** त्वस्याकारस्य लाक्षणिकत्वान्नात्र याट् । वर्णग्रहणेपि तत्प्रवृत्ते**रो**दित्यादौ भाष्ये स्पष्टत्वात् । न च 'खट्वायै'इत्यत्र याडनापत्तिः, सूत्रन्तु 'निशायै' इत्यादौ चरितार्थमिति वाच्यं; यस्य रूपस्य लक्षणप्रवृत्तिं विना न संभवस्तस्यैव लाक्षणिकस्य तत्परिभाषाविषयत्वात् । न चेह तथा, एकादेशतः प्रागपि तद्रूपसत्त्वात् । 'पदाङ्गाधिकारे' इति वार्त्तिकेनाऽङ्गस्य विशेष्यताया एवौचित्यबोधनाच्च । अत एवा'ऽऽबन्तान्तं यदङ्ग'मित्यर्थाभिप्रायेणाऽ'तिखट्वाये'त्येतत्सिद्धये'ऽतिखट्व ए' इति स्थिते प्रवृत्तं 'ङ्याब्ग्रहणेऽदीर्घ'इति वार्त्तिकं व्याख्याय श्रुताऽऽकारस्मृतानुबन्धाभ्यामाप्त्वेनाशङ्कां कृत्वा लाक्षणिकत्वेन समाधायाऽऽकारप्रश्लेषेण तत्प्रत्याख्याने एतत्परिहारायोपायान्तराऽकथनं भाष्ये । **किञ्चाऽङ्ग**स्य विशेषणत्वे वार्त्तिकस्य तत्प्रत्याख्यानायाऽऽकारप्रश्लेषस्य च वैयर्थ्यं स्पष्टमेव । **किञ्च** 'खट्वाया अर्द्धेऽर्द्धखट्वाया'मित्यादौ याडनापत्तिः । **किञ्चाऽऽ**कारप्रश्लेषपक्षेऽपि 'दीर्घोत्तरं स्वाश्रयाकारत्वं स्थानिवद्भावेनाप्त्व'मिति शङ्काऽयुक्तैव, दीर्घात्पूर्वं स्थानिवत्त्वस्य फलाभावादप्रवृत्तौ स्थानिन्याप्त्वबुद्धेरभावात्तदादेशे दीर्घे तदारोपस्य दुर्लभत्वात् । परंपरया कार्यमादाय स्थानिवत्त्वप्रवृत्तौ मानाभावात् । 'याडाप'इति सूत्रे भाष्येऽपि–'अतिखट्वायै'त्यत्र स्थानिवत्त्वात्प्राप्तस्य याटः प्रतिषेधो वक्तव्यः, न वक्तव्यो, 'ङ्याब्ग्रहणेऽदीर्घ'इति स्थानिवत्त्वनिषेधात् । न च दीर्घत्वे 'आवसौ भूतपूर्व' इति याट् प्राप्नोति, लाक्षणिकत्वान्न । स्थानिवत्त्वे तु तत्सामर्थ्यान्नैतत्परिभाषाप्रवृत्ति'रित्युक्तम् । यद्यपि स्थानिवत्सूत्र-याडाप इति सूत्रस्थभाष्याभ्यां हल्ङ्याप्सूत्रयाडाप इतिसूत्रयोरेव प्रश्लेषो लभ्यते तथापि–भाष्यमुपलक्षणम्, इतरसूत्रविषयोदाहरणानभिधानं वेत्यनयोर्युक्तं सुधीभिर्विचार्य्यमित्याहुः ।

**व्रश्च** । अत्र राजिसाहचर्याद्भ्राजिः फणादिरेव, तेनान्यस्य 'विभ्रा'गित्येवेत्याहुः । छशौ वर्णौ, ताभ्यां शब्दरूपं विशेष्यमादाय तदन्तग्रहणमित्याह–**छशान्तयोरिति** । 'छशयो'रित्युक्तेपि न क्षतिरिति चिन्त्यम् । 'पदस्ये'ति तु 'पृष्ट'मित्यादिसिद्धये व्यधिकरणमेव । **अन्तादेश इति** । 'अलोन्त्य-

डकारः। निड्भ्याम्। निड्भिः। सुपि 'डः सी'ति पक्षे धुट्। चर्त्वम्। तस्याऽसिद्धत्वाच्चयो द्वितीया इति टतयोष्ठथौ न। 'न पदान्ताट्टो'रिति ष्टुत्वं न। निट्त्सु। निट्सु। **षढोः कः सि** ।८।२।४१। षस्य ढस्य च कः स्यात्सकारे परे। इति तु न भवति। जश्त्वं प्रत्यसिद्धत्वात्। केचित्तु 'व्रश्चा'दिसूत्रे 'दादेर्धातो'रिति सूत्राद्धातोरित्यनुवर्तयन्ति। तन्मते जश्त्वेन जकारे–निज्भ्याम्। निज्भिः। जश्त्वम्। श्चुत्वम्। चर्त्वम्। निच्शु। 'चोः कु'रिति कुत्वं तु न भवति। जश्त्वस्याऽसिद्धत्वात्॥ ॐ **मांसपृतनासानूनां मांस्पृत्स्नवो वाच्याः शसादौ वा॥** पृतः। पृता। पृद्भ्याम्। पक्षे सुटि च रमावत्। गोपा विश्वपावत्। मतिः प्रायेण हरिवत्। स्त्रीत्वान्नत्वाऽभावः। मतीः। नात्वं न–मत्या॥

**ङिति ह्रस्वश्च** ।१।४।६। इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ

---

ण्यन्तत्वाद्यथा हल्ङ्यादिलोपः प्रवर्तते तथा तत्राप्युत्तरभागस्य ष्यङन्तत्वात्संप्रसारणं स्यादेवेति शङ्क्यं, पूर्वपदस्य ष्यङन्तस्य पुत्रपत्योरुत्तरपदयोः संप्रसारणमिति 'ष्यङः संप्रसारण'मित्यत्रैव वक्ष्यमाणत्वात्। **टतयोष्ठथौ नेति**। धुडभावे टस्य ठो न, धुट्पक्षे तु तस्य थो नेति विवेकः। **न भवतीति**। जश्त्वात्प्राक् षस्य कुत्वं न भवतीत्यर्थः। **केचित्त्विति**। परिशिष्टकारादयः। **निच्शु इति**। अत्र 'शश्छोटी'-ति पक्षे छत्वं बोध्यम्। **मांसपृतनेति**। पृतना–सेना। **नात्वं नेति**। 'अस्त्रिया'-मिति पर्युदासादिति भावः। **ङिति ह्रस्वश्च**। 'वामी'ति सूत्राद्वेत्यनुवर्तते। अप्राप्त-

---

स्ये'ति वचनात्। अत्र 'झलो झलि'त्यतो 'झली'ति 'पदस्ये'ति 'स्को'रित्यतो 'ऽन्ते'इति चानुवर्तते। छ्वोः। 'शू'डित्यत्र 'क्ङिती'त्यनुवृतेः 'प्रष्टे'त्यादौ शादेशाभावादशान्तत्वेन षत्वाऽप्राप्तौ छग्रहणम्। अत्रापि सतुङ्निर्देशो बोद्धव्यः। **तस्यासिद्धत्वादिति**। 'चयो द्वितीया'इत्यस्य 'नादिन्ये'ति सूत्रे भाष्ये पाठादिति भावः। **टतयोरिति**। धुडभावे टस्य, धुटि तस्येत्यर्थः। **नभवतीति**। जश्त्वात्प्राक्पस्य नेत्यर्थः। जश्त्वे तु प्राप्तिरेव नेति बोद्धव्यम्। **केचित्त्विति**। 'एकाच' इत्युत्तरसूत्रेऽनुवृत्त्यो मध्येपि संवन्ध एवोचित इति भावः। **जश्त्वेनेति**। यत्तु 'जश्झशी'तिनिर्देशाच्चस्य न जश्त्वमिति, तन्न, अविकृतस्वरूपप्रतिपादने तात्पर्यादयस्मयादित्वेन भत्वाच्च तत्र तदप्राप्तौ न्यायसिद्धायां ज्ञापकत्वाऽयोगात्। 'उपदेशे'जित्यादिनिर्देशैः कुत्वाद्यनापत्तेश्च। अत्र मते भाष्यानुग्रहो विचार्यः। मांसपृतने'त्यस्य 'पद्दन्'इति सूत्रे उपसङ्ख्यातत्वादाह–**शसादौ वेति**। **स्त्रीत्वादिति**। पुंस्त्वाभावा'दित्यर्थः। **नात्वं नेति**। 'स्त्रांत्वा'दित्यनुकृष्यते। अत एव 'पुंस्त्वाभावान्नत्वाऽभाव'इति नोक्तम्। न हि पुंस्त्वाऽभावो नाभावे प्रतिबन्धकः, नपुंसकेपि तदङ्गीकारात्॥

**ङिति ह्र**। अत्र वाक्यद्वयम्। आद्ये 'यू' इति 'य्वाख्याविति' 'अस्त्री'ति 'इयङुवङ्स्थाना'विति,

ह्रस्वौ चेवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति परे। 'आण्नद्याः'। मत्यै। मतये। मत्याः। मत्याः। मतेः। मतेः। नदीत्वपक्षे 'औ'दिति ङेरौत्त्वे प्राप्ते—।

विभाषेयम्। ह्रस्वयोरप्राप्तावितरयोस्तु 'नेयङुवङ्स्थाना'विति निषेधप्राप्तावारम्भसामर्थ्यात्। इहे'यङुवङ्स्थानौ' 'स्त्रीशब्दभिन्नौ' 'नित्यस्त्रीलिङ्गा'विति त्रीणि ईदूतोर्विशेषणानि, ह्रस्वयोस्तु 'स्त्रिया'मित्येव विशेषणं, नतु नित्यस्त्रीत्वपर्यन्तम्, अन्यथा इष्वशनिप्रभृतीनामुभयलिङ्गानां पटुमृदुप्रभृतीनां सर्वलिङ्गानां च स्त्रीत्वेऽपि नदीत्वं न स्यात्। कैयटमते हि तेषां नित्यस्त्रीत्वाभावात्, ह्रस्वांशे नित्यग्रहणव्यावर्त्याऽलाभाच्च। अतएवाख्याग्रहणं विहाय स्त्रीशब्दमात्रं निष्कृष्य संबध्यते, तदेतदाह–**ह्रस्वौ च इउवर्णौ स्त्रियामिति। औत्त्वे प्राप्ते इति।** 'ङेरा'मित्यपेक्षया परत्वादिति भावः।

**वेति** चानुवर्त्तते। अन्ये 'यू' इति 'वे'ति स्त्रीवाचकावित्येतन्मात्रार्थकं 'स्त्र्याख्या'विति च। तत्र ह्रस्वयोरप्राप्ते दीर्घयोस्तु 'नेय'ङिति निषेधादप्राप्ते विभाषा। इष्वादिष्वप्राप्तिमाशङ्क्य 'ङिति ह्रस्वश्चे'त्यत्र नित्यस्त्रीलिङ्गावित्येवंविधो नियमो नाश्रीयते'इति कैयटस्तु ह्रस्वांशमात्रविषय इत्याशयेनाह,–**नित्यस्त्रीलिङ्गाविति।** अत एवास्य दीर्घांशे निषेधविकल्पकत्वं भाष्ये उक्तं 'यू स्त्र्याख्या'विति सूत्रे। तत्फलं 'कटप्रुवे ब्राह्मण्यै'इति। लिङ्गान्तरविशिष्टार्थाभिधायकत्वेन तत्त्वाभावात्। **परे** त्वत्र विकल्पो भवत्येव, 'आख्या'ग्रहणरहितस्यैवाऽत्र संबन्धात्। यद्वा 'स्त्र्याख्या'वित्येतदेव स्त्रीवाचकावित्येतन्मात्रार्थकमत्र, शब्दाधिकारात्। तच्च ङिदाक्षिप्ताङ्गस्य विशेषणम्। अत एव 'प्रथमलिङ्गग्रहणं चे'त्यस्यात्राऽप्रवृत्त्यन्वाख्यायके'ह्रस्वौ चेयङुवङ्स्थानौ च प्रवृत्तौ च प्राक्च प्रवृत्तेः स्त्रीवचनावेव नदीसञ्ज्ञौ भवतो न तु पुंवाचकाविति वक्तव्य'मिति वार्त्तिके'अतिशकट्यै ब्राह्मण्यै' क मा भूत् 'अतिशकटये ब्राह्मणाय'।'अतिश्रियै ब्राह्मण्यै' श्रियै ब्राह्मण्यै, क माभूत्, अतिश्रिये ब्राह्मणाय श्रिये ब्राह्मणाये'ति यूस्त्र्याख्याविति सूत्रशेषे भाष्ये उक्तम्। एवञ्चास्य निषेधविकल्पकत्वमसंभवि, समुदायस्य केनापि प्राप्त्यभावात्। अवयवस्य प्राप्तावपि तस्याऽनेन विकल्पाऽभावात्। ङिदाक्षिप्ताङ्गस्यैवाऽनेन विकल्पात्। एतच्च 'प्रवृत्तौ स्त्रीवचना'वित्यनेन सूचितम्। अत एवाऽत्र वाक्यद्वयेपि विधिविकल्प एव दर्शितः। एवञ्चा'ऽत्र नियमो नाश्रीयत'इति कैयटो वाक्यद्वयपर एवोचितः। उपक्रमे निषेधपरतया व्याख्यानन्तु 'स्त्र्याख्या'वित्यस्य नित्यस्त्रीत्वार्थकत्वमजानत एकदेशिनो 'यू इति ह्रस्वयोर्ग्रहण'मिति पक्षोपपादने उक्तिभूतमिति तन्नादरणीयम्। यत्तु दीर्घवाक्ये स्त्र्याख्याविति ईदूतोस्तदन्तस्य वा विशेषणं, पुनरङ्गेन तदन्तविधिः, अङ्गस्य च केवलस्त्रीत्वं विशेषणम्। एवं ह्रस्वघटितवाक्येपि 'स्त्रिया'मित्येतन्मात्रमुभयोर्विशेषणमिति, तत्तु चिन्त्यम्। भाष्यात्तदलाभात्। 'नेयङुव'ङित्यत्र तु नेयङाद्याक्षिप्ताङ्गविशेषणं स्त्रीत्वम्, तदाक्षिप्तस्येयङादिविशेषणताया एवौचित्यात्। 'यस्याङ्गस्येयुवा'विति भाष्योक्तेः 'स्त्र्याख्या'वित्यस्य नित्यस्त्रीलिङ्गावित्यर्थकस्य 'यू'इत्यनेनैव क्लृप्तसंबन्धत्वाच्च। अत एवाऽतिश्रिये ब्राह्मणायेत्यत्रानेन निषेधादवयवनदीत्वप्रयुक्तमपि नदीकार्यं न। ननु यथा–'खरकुट्यै ब्राह्मणाये'त्यादौ लुबन्तस्य त्रिलिङ्गत्वेपि प्रथमलिङ्गग्रहणान्नित्यनदीत्वं भवतीति भाष्ये उक्तम्। 'यथा ब्राह्मणान्पश्ये'त्यादौ युक्तवद्भावेन [illegible] प्रयुक्तकार्या-

**इदुद्भ्याम्** ।७।३।११७। नदीसंज्ञकाभ्यामिदुद्भ्यां परस्य ङेराम् स्यात् । पक्षे 'अच्च घेः' । मत्याम् । मतौ । एवं श्रुतिस्मृत्यादयः ॥

**त्रिचतुरोः स्त्रियां तिसृचतसृ** ।७।२।९९। स्त्रीलिङ्गयोरेतयोरेतावादेशौ स्तो विभक्तौ परतः । **अचि र ऋतः** ।७।२।१००। 'तिसृ' 'चतसृ' एतयोर्ऋकारस्य रेफादेशः स्यादचि । गुणदीर्घोत्वानामपवादः । तिस्रः । तिस्रः । आमि 'नुमचिरे'ति

---

प्राचा तु 'औ'दिति सूत्रे 'इदुद्भ्याम्' 'अच्च घे'रिति पूर्वोत्तरसूत्रद्वयबललभ्यार्थमुपादाय घिनदीसंज्ञावर्जिताभ्यामिति व्याख्यातम् । 'इदुद्भ्या'मिति सूत्रं च नोपन्यस्तमित्यसमञ्जसमेतत् । **त्रिचतुरोः**। 'अष्टन आ विभक्तौ' वित्यतोऽनुवर्तनादाह–**विभक्तौ परत इति** । 'विभक्तौ किम् ? त्रिभार्य चतुर्भार्य' इति केचित् । तन्मन्दम् । 'स्त्रियाः पुंव'दिति पुंवद्भावेनापीष्टसिद्धेः । किंतु प्रियादौ परतः पुंवद्भावो नेति 'त्रिप्रिय' इत्याद्युदाहर्तव्यमिति नव्याः । **गुणदीर्घोत्वानामिति** । 'तिस्रतिष्ठन्ती'त्यत्र 'ऋतो ङी'ति गुणस्य

---

भावस्याप्यतिदेशान्न नत्वम् । स्पष्टञ्चेदं 'तस्माच्छस' इति सूत्रे भाष्यकैयटयोः । यद्वाऽतिदेशेन प्रकृतिलिङ्गप्रयुक्तेन कार्यातिदेशेन तद्विरुद्धस्वाश्रयकार्याऽप्रवृत्तिः । स्पष्टञ्चेदं 'स्त्रिया'मिति सूत्रे भाष्ये । युक्तवद्भावादिप्रत्याख्यानेपि यथा दारादिशब्दैः पुंस्त्वेन स्त्रीरूपार्थस्य भानं, तथा प्रकृते स्त्रीत्वेन पुंसो भानमिति न नत्वम् । 'पुंस्त्वे वाच्ये नत्व'मित्यर्थात् । नचैवं 'खरकुट्यै' इत्यत्रापि युक्तवद्भावेन नित्यस्त्रीत्वात्सूत्रेणैव सिद्धमिति वाच्यं, 'रूयाख्या'वित्यस्य 'स्त्रीत्वविशिष्टमेव य आहे'त्यर्थात् । न चायं तथा, स्त्रीत्वेन रूपेण वस्तुतः पुंस्त्वविशिष्टस्याऽभिधानात् । यद्यपि पदार्थमात्रे शास्त्रीयलिङ्गत्रयमस्ति तथापि व्यक्तिवस्तुपदार्थादिपदबोद्धव्यत्वकाले तत्तल्लिङ्गोपजननेपि स्त्रीपदादिबोद्धव्यत्वदशायान्तत्सत्त्वे मानाऽभावात् । प्रकृते तु 'ब्राह्मणाये'त्यादिविशेष्यदर्शनेन तत्सत्तानुमानात् । स्पष्टञ्चेदं भाष्यकैयटयोः । एवं श्रीशब्दात्कनि लुपि 'श्रिये ब्राह्मणाये'त्यादौ विकल्पापत्तिः, युक्तवद्भावेन स्त्रियामङ्गस्य वर्तनात् । अत्र सूत्रे नित्यस्त्रीत्वाऽनिवेशाच्चेति चेन्न, सत्यभिधाने इष्टापत्तेः । भाष्ये दृश्यमानं 'श्रिये ब्राह्मणाये'त्यादि तु क्यजन्तात्क्विपि बोद्धव्यम् । विपरीतं नित्यस्त्रीत्वनिवेशवादिनो लुवन्त'श्रिये ब्राह्मणाये'त्यादौ तदनापत्तिर्दोष इत्याहुः । यू किम् ? । मात्रे । यद्यपि 'यू'इति दीर्घपरं तथापि विभक्तिविपरिणामेन 'य्वोर्ह्रस्वा'वित्यन्वयो बोद्धव्यः । एतत्सर्वं 'वामी'त्यत्रापि बोद्धव्यम् । 'इदुद्भ्यामौदच्च घे'रिति सूत्रं योगविभागेन व्याचष्टे–**इदुद्भ्याम्** । अनदीसंज्ञकेषु अच्च घेरौदित्याभ्यां बाधात्, 'ङेरा'मिति सूत्रान्नदीग्रहणानुवृत्तेर्वाह–**नदीसञ्ज्ञकाभ्यामिति** । **मत्यामिति** । सन्निपातपरिभाषाया अनित्यत्वाद्यण् । **त्रिचतुरोः** । 'अष्टन आ'इत्यतो 'विभक्ता'विति वर्तते । तत्फलं–त्रिभार्यः । तृतीयान्तेन समासः । **भार्यः**–भरणीयः । **अचि र** । अलोन्त्यपरिभाषयैव सिद्धे 'ऋत' इत्यनुवर्तमान'तिसृचतसृ' इत्यस्य षष्ठ्यन्तत्वकल्पनाय । अन्यथा 'त्रिचतुरो'रित्यस्यैवानुवृत्त्यापत्तौ रादेशेन तिसृचतस्रोर्बाधापत्तिरिति दिक् । **नुमचिरेति** । अत्राऽचिरांशे 'न तिसृ'ति निषेधो मूलम् । एतेन स्त्रीत्व-

नुट्। **न तिसृचतसृ** ।६।४।४। एतयोर्नामि दीर्घो न स्यात्। तिसृणाम्। तिसृषु। 'स्त्रिया'मिति त्रिचतुरोर्विशेषणान्नेह,—प्रियास्त्रयस्त्रीणि वा यस्याः सा प्रियत्रिर्मतिवत्। आमि तु 'प्रियत्रयाणा'मिति विशेषः। प्रियास्तिस्रो यस्य स इति विग्रहे तु—प्रिय-

रत्वमपवादः। 'तिस्रः पश्ये'त्यत्र तु 'प्रथमयो'रिति पूर्वसवर्णदीर्घस्यापवादः। 'प्रियतिस्र आगतः' 'प्रियतिस्रःस्व'मित्यत्र 'ऋत उ'दित्युत्त्वस्येति विवेकः। यद्यपि मध्येऽपवादन्यायेन दीर्घोत्त्वयोरेव रत्वमपवादः स्यान्न तु 'ऋतो ङी'ति गुणस्य, तथापि बाध्यसामान्यचिन्तामाश्रित्य स्वविषये प्राप्तं सर्वमेवेह बाध्यत इति भावः। **त्रिचतुरोर्विशेषणादिति।** श्रुतत्वाद्धि 'त्रिचतुरो'रित्यस्यैव 'स्त्रिया'मिति विशेषणं नाङ्गस्येति भावः। **प्रियतिसेति।** 'प्रिया जस् त्रि जस्' इति स्थिते 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते' इत्यकृत एव तिस्रादेशे सुपो लुकि कृते समासाद्या विभक्तिस्तस्यां परतस्तिस्रादेशः। 'स्त्रियाः पुंव'दिति प्रियाशब्दस्य पुंवद्भावः। 'ऋदुशन' इत्यनङ्। यद्यपि इह जहत्स्वार्थावृत्तिपक्षे त्रिशब्दस्य निरर्थकत्वेन स्त्रीवाचित्वं दुर्लभं, तथापि भूतपूर्वगत्या स्त्रियां वृत्तिर्बोध्या। 'उत्तरपदार्थप्रधानस्तत्पुरुष' इत्यादिसिद्धान्तप्रवादस्यैवमेव निर्वाह्यत्वात्। 'अजहत्स्वार्था वृत्ति'रिति पक्षे तु 'स्त्रीनिष्ठसङ्ख्यासमर्पकयोस्त्रिचतुरो'रिति विवक्षितोऽर्थः, तेन प्रियास्त्रयस्त्रीणि वा यस्याः सा 'प्रियत्रि'रित्यत्र प्रियत्रिशब्दस्य स्त्रियां वृत्तित्वेऽपि न तिस्रादेशप्रसङ्गः, 'प्रत्ययोत्तरपदयोश्चे'त्येतत्सूत्रगतभाष्यग्रन्थ सन्दर्भाश्चोक्तव्याख्याने प्रमाणम्। **अनित्यत्वादिति।** 'इकोऽची'त्यज्ग्रहणमिह लिङ्गम्। तथाहि—भ्याम्भिसादिषु सत्यपि नुमि 'नलोपः प्रातिपदिकान्तस्ये'ति तल्लोपसंभवादचीति व्यर्थम्। न च 'न ङिसंबुद्ध्यो' रिति निषेधात्सम्बुद्धौ लोपो न संभवतीति तत्रानिष्टवारणायाऽचीत्यावश्यकमिति वाच्यं, संबुद्धिश्च लुका लुप्तेति सुमः प्राप्तेरेव तत्र दुर्लभत्वात्। 'न लुमते'ति निषेधस्याऽनित्यतां विना तत्र प्रत्ययलक्षणाऽप्रवृत्तेः। नाप्युत्तरार्थं तदिति वाच्यम्, उत्तरत्रैव कर्तव्ये तत्राऽचीति स्वर-

रूपार्थविशेषविभक्तिसञ्ज्ञानिमित्ततिस्राद्यपेक्षया नुडन्तरङ्ग इत्यपास्तम्। अतो निषेधादेशाऽर्थसंज्ञाकृतबहिरङ्गत्वानाश्रयणम्। अन्यथाऽऽमिति प्रत्ययविशेषापेक्षत्वेपि संज्ञार्थविशेषानपेक्षत्वेनान्तरङ्गत्वात्रयादेशे तदसङ्गतिः स्पष्टैव। वस्तुतः स्वरूपेणोपादाने न बहिरङ्गत्वं, किं तु केनचिद्विशेषधर्मेणोपादान एवेति विशेषापेक्षस्य बहिरङ्गत्वमेव नेति च 'रुद'धातौ निरूपयिष्यामः। तृज्वत्सूत्रे भाष्ये तु—'न तिसृ'तिज्ञापकाद्रादेशो नुड्विषये न, पूर्वविप्रतिषेधेन तु न सिद्ध्यति, अपवादविषये विप्रतिषेधाऽप्रवृत्तेः। रादेशस्य सर्वापवादत्वा'दित्युक्तम्। **त्रिचतुरोर्विशेषणादिति।** 'स्त्रीनिष्ठसङ्ख्यायां वर्त्तमानयो'रित्यर्थ इति भावः। **नेहेति।** त्रिशब्दस्य पुंनपुंसकवृत्तित्वेपि समुदायस्य स्त्रियां वृत्तेरङ्गविशेषणत्वे आदेशः स्यादिति भावः। **आमि त्विति।** त्रयाम् षष्ठीबहुवचन-

तिसा । प्रियतिस्रौ । प्रियतिस्रः । प्रियतिस्रमित्यादि । प्रियास्तिस्रो यस्य तत्कुलं प्रियत्रि । स्वमोर्लुका लुप्तत्वेन प्रत्ययलक्षणाऽभावान्न तिस्रादेशः । 'न लुमते'ति निषेधस्याऽनित्यत्वात्पक्षे—'प्रियतिसृ' ॥ ॐ **रादेशात्पूर्वविप्रतिषेधेन नुम्** ॥ प्रियतिसृणी । प्रियतिसृणि । तृतीयादिषु वक्ष्यमाणपुंवद्भावविकल्पात्पर्यायेण नुम्नभावौ । प्रियतिस्रा । प्रियतिसृणेत्यादि ॥ द्वेरत्वे सत्याप् । द्वे । द्वे । द्वाभ्याम् । द्वाभ्याम् । द्वाभ्याम् । द्वयोः । द्वयोः ॥ गौरी । गौर्यौ । गौर्यः । नदीकार्यम्—हे गौरि । गौर्यै इत्यादि । एवं वाणीनद्यादयः ॥ **प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणा-**दनङि णिद्वद्भावे च प्राप्ते—॥ ॐ **विभक्तौ लिङ्गविशिष्टाऽग्रहणम्** ॥ सखी । सख्यौ । सख्य इत्यादि गौरीवत् । अङ्यन्तत्वान्न सुलोपः,—लक्ष्मीः । शेषं गौरीवत् । एवं तरीतन्त्र्यादयः ॥

---

णस्य वैयर्थ्यात् । 'न लुमते'ति निषेधस्याऽनित्यत्वे तु संबुद्धौ प्रत्ययलक्षणेन प्राप्तं नुमं वारयितुं तदिति भवत्येवाऽज्ग्रहणं लिङ्गम् । न चेदमनित्यत्वं संबुद्धिगुणमात्रविषयकमित्यभिनिवेष्टव्यं, लक्ष्यानुरोधेनाऽन्यत्रापि क्वचित्तदभ्युपगमे बाधकाभावात् । अतएव 'प्रियतिसृ' 'प्रियत्री'ति रूपद्वयमपि कैयटेन स्वीकृतम् । **रादेशादिति** । तत्र 'प्रियतिसृणी', प्रियतिसृणी'ति भाष्यं मानम् । **इत्यादीति** । प्रियतिस्रे । प्रियतिसृणे । प्रियतिस्रः । प्रियतिसृणः । आमि रादेशं बाधित्वा पूर्वविप्रतिषेधेन नुम्, तं च बाधित्वा पूर्वविप्रतिषेधेन नुट् । प्रियतिसृणाम् । **द्वेरत्वे सत्याविति** । विभक्तिसंनिपातकृतमपि त्यदाद्यत्वं टापो निमित्तं, 'न यासयो'रिति निर्देशेन संनिपातपरिभाषाया अनित्यत्वादिति भावः । **अङ्यन्तत्वादिति** । केचिदिह 'कृदिकारा'दिति पाक्षिकं ङीषमिच्छन्ति तन्मते तु सुलोपः पक्षे स्यादेव । अतएव 'वातप्रमी' 'श्री' 'लक्ष्मी'तिपक्षे ङ्यन्ताः सुसाधव इति रक्षितः । 'लक्ष्मीर्लक्ष्मी हरिप्रिये'ति द्विरूपकोशश्च । **स्त्री इति** । स्याय-

---

मेव, अर्थाधिकारादतो न ङेरामि त्रयादेश इति बोध्यम् । **प्रियतिसेति** । अङ्गविशेषणत्वे त्वत्राव्याप्तिः स्यादिति भावः । 'प्रिया जस् त्रि ज'सिति स्थितेऽन्तरङ्गानपी'तिन्यायेन विभक्तिलुकि पुनः सुपि तदन्तविधिना निर्दिश्यमानपरिभाषया त्रिशब्दस्यादेशः । ततो 'नद्यृतश्चे'ति कप्तु न. समासार्थाऽलौकिकवाक्ये ऋकारान्तोत्तरपदत्वाभावात् । 'ऋदुशने'त्यनङ् । **प्रियतिसृणी इत्यादि** । अत्र नुमः परत्वात्तिस्रादेशे पुनः प्रसङ्गविज्ञानेन नुम्,'न ति'सृति ज्ञापकेन सामान्यत 'आगमविषये रादेशो ने'ति ज्ञाप्यते । 'प्रत्ययोत्तरे'ति सूत्रे चेमौ भाष्ये प्रयोगौ । **द्वेरत्वे इति** । बहिरङ्गाऽसिद्धत्वन्तु 'न यासयो'रिति निर्देशेनाऽनित्यत्वान्न प्रवर्त्तते । **विभक्ताविति** । 'युवोरनाका'वित्यत्र भाष्ये पाठात्, ङ्याप्सूत्रे तत्परिभाषादोषेषु पाठाच्च । **सखीति** । 'सख्यशिश्वी'ति ङीप् । 'यस्येतिचे'तीकारलोपः । **लक्ष्मीरिति** ।

स्त्री । हे स्त्रि । **स्त्रियाः** ।६।४।७९। स्त्रीशब्दस्येयङ् स्यादजादौ प्रत्यये परे । स्त्रियौ । स्त्रियः ॥ **वाऽम्शसोः** ।६।४।८०। अमि शसि च स्त्रिया इयङ्वा स्यात् । स्त्रियम् । स्त्रीम् । स्त्रियौ । स्त्रियः । स्त्रीः । स्त्रिया । स्त्रियै । स्त्रियाः । स्त्रियाः । स्त्रियोः । परत्वान्नुट् । स्त्रीणाम् । स्त्रियाम् । स्त्रियोः । स्त्रीषु ॥

स्त्रियमतिक्रान्तोऽतिस्त्रिः । अतिस्त्रियौ ।

**गुणनाभावौत्वनुड्भिः परत्वात्पुंसि वाध्यते ।**

**क्लीबे नुमा च स्त्रीशब्दस्येयङित्यवधार्यताम्** ॥ 'जसि च' । अतिस्त्रयः । हे अतिस्त्रे ! । हे अतिस्त्रियौ । हे अतिस्त्रयः । 'वाम्शसोः' । अतिस्त्रियम् । अतिस्त्रिम् । अतिस्त्रियौ । अतिस्त्रियः । अतिस्त्रीन् । अतिस्त्रिणा । 'घेर्ङिति' । अतिस्त्रये । अतिस्त्रेः । अतिस्त्रेः । अतिस्त्रियोः । अतिस्त्रियोः । अतिस्त्रीणाम् । 'अच्च घेः' । अतिस्त्रौ । '**ओस्यौकारे च नित्यं स्यादम्शसोस्तु विभाषया ।**

**इयादेशोऽचि नान्यत्र स्त्रियाः पुंस्युपसर्जने** ॥' क्लीबे तु नुम् । अतिस्त्रि । अतिस्त्रिणी । अतिस्त्रीणि । अतिस्त्रिणा । अतिस्त्रिणे । ङेप्रभृतावजादौ वक्ष्यमाणपुंवद्भावात्पक्षे प्राग्वद्रूपम् । अतिस्त्रये । अतिस्त्रिणः । अतिस्त्रिणः । अतिस्त्रेः । अतिस्त्रेः । अतिस्त्रिणोः । अतिस्त्रिणोः । अतिस्त्रियोः । अतिस्त्रियोरित्यादि । स्त्रियां तु प्रायेण पुंवत् । शसि अतिस्त्रीः । अतिस्त्रिया । 'ङिति ह्रस्वश्च' ति ह्रस्वान्तत्वप्रयुक्तो विकल्पः ।

---

तोऽस्यां शुक्रशोणिते इति 'स्त्री' । 'स्त्यायतेर्ड्रट्' । 'लोपो व्योर्' रिति यलोपः । टित्त्वान्ङीप् । ङ्यन्तत्वात्सुलोपः । **परत्वादिति** । 'स्त्रियाः' इतीयङपेक्षया । **इयादेशोऽचि नान्यत्रेति** । अजादौ य इयादेशो विहितः स उपसर्जनत्वे पुंसि विद्यमानस्य स्त्रीशब्दस्य

---

'ऋदिकारा'दिति ङीपि 'लक्ष्मी'त्यपि । **स्त्रीति** । 'स्त्यायतोऽस्यां शुक्रशोणिते इति स्त्री । स्त्यायतेर्ड्रट् । टिलोपयलोपौ । टित्वान्ङीप् । **स्त्रिया इति** । **इयङिति** । स्त्रीशब्दस्येकारान्तत्वादियङेवानुवर्तते इति भावः । **गुणनेति** । 'जसि चे' ति गुणः । 'आङो ना', 'अच्च घेः', 'ह्रस्वनद्याप' इत्येतैरित्यर्थः । **बाध्यतइति** । 'स्त्रीशब्दस्येय' ङित्यनेनान्वयः । **नुम्**—इकोचीति । पूर्वकारिकोक्तैर्बाधे सति यत्फलितं तदाह—**ओस्याविति** । अजादौ य इयादेशो विहितः स उपसर्जने पुंसि विद्यमानस्य **स्त्रियाः**—स्त्रीशब्दस्यौसादिषु चतुर्ष्वेव न त्वन्यत्र, गुणादिभिर्बाधादिति भावः । **पुंवद्भावादिति** । 'तृतीयादिषु भाषितपुंस्क' मित्यनेनेति भावः ।

ननु ह्रस्ववाक्येऽप्यस्त्रीत्यस्य संबन्धेन स्त्रीशब्दावयवभिन्नह्रस्वेवर्णान्तादित्यर्थेन कथमत्र प्राप्तिरत आह—**अस्त्रीति** । तत्र बीजमाह—**तत्संबद्धस्यैवेति** । प्रसज्यप्रतिषेधस्तु न, वाक्यभेदाद्यापत्तेः । नन्वियङुवङ्स्थानावित्यनेनापि ह्रस्वस्य निषेधः किं नेत्यत आह—**दीर्घस्यायमिति** । तत्र ह्रस्वपदाभावादिति भावः । श्रयन्त्येतामिति—**श्रीः** । 'क्विब्वची' त्यादिना 'वा' गित्यनेन कर्मणि क्विब्दीर्घौ । अङ्यन्तत्वान्न

'अस्त्री'ति तु 'इयङुवङ्स्थाना'वित्यस्यैव पर्युदासः । तत्संबद्धस्यैवानुवृत्तेर्दीर्घस्यायं निषेधो नतु ह्रस्वस्य । अतिस्त्रियै । अतिस्त्रये । अतिस्त्रियाः । अतिस्त्रियाः । अतिस्त्रेः । अतिस्त्रेः । अतिस्त्रीणाम् । अतिस्त्रियाम् । अतिस्त्रौ ॥

श्रीः । श्रियौ । श्रियः । **नेयङुवङ्स्थानावस्त्री** ।१।४।४। इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तो नतु स्त्री । हे श्रीः ! । श्रियै । श्रिये । श्रियाः । श्रियाः । **वामि** ।१।४।५। इयङुवङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्तो

---

ओसादिषु चतुर्ष्वेव, न त्वन्यत्र, गुणनाभावादिभिः पूर्वोक्तैर्बाधितत्वादित्यर्थः ।

**इयङुवङ्स्थानावित्यस्यैवेति** ।'यू स्त्र्याख्यौ' वित्यनुवर्तनादियङुवङ्स्थानाविति ईदूतोर्विशेषणम् । तेन इयङुवङ्स्थानावीदूतावेवाऽस्त्रीति पर्युदस्तौ न तु ह्रस्वावितिभावः।

**श्रीरिति** ।'क्विब्वचिप्रच्छी'त्यादिना क्विब्दीर्घौ । ङ्यन्तत्वाभावान्न सुलोपः। **नेयङुवङ्स्थानावस्त्री** । तिष्ठतो ययोरिति 'स्थानौ' । अधिकरणे ल्युट् । इयङुवङोः स्थानाविति षष्ठीसमासः । तथाच फलितार्थमाह-**इयङुवङोः स्थितिर्ययोरिति** । स्थानग्रहणं किम् ?। प्रकृष्टा धीः-प्रधीः । हे प्रधि ! । अत्र 'एरनेकाच' इति यणा इयङो बाधनान्नेयङुवङ्स्थानाविति निषेधो न प्रवर्तते । 'यत्रेयङुवङौ निष्पद्येते तत्रैव नदीसंज्ञाया निषेधः। यत्र त्वपवादेन बाध्येते तत्र न निषेध' इत्येतदर्थं हि 'स्थान'ग्रहणं कृतम् । अन्यथा 'नेयङुवङो'रित्येव ब्रूयात् । 'इयङुवङोर्निमित्तभूतौ यू नदीसंज्ञकौ ने'त्यर्थलाभात् । अस्त्रीति किम् ?। हे स्त्रि । **वामि** । 'यू स्त्र्याख्यौ नदी' 'नेयङुवङ्स्थानावस्त्री'त्यनुवर्तनादाह-**इयङुवङ्स्थानावित्यादिना** । यद्यपि 'ने'ति प्रकृतो निषेधोऽनेन विकल्प्यते, तथापि निषेधविकल्पे विधिविकल्प एव फलतीति स एव सूत्रार्थ

---

सुलोपः । **नेयङु** । ङद्वयोच्चारणं स्पष्टार्थम् । 'स्थान'शब्दो भावल्युडन्तः । इयङुवङोः स्थानं स्थितिर्ययोरिति बहुव्रीहिः । सा च बाधकाऽविषये एव । तेन प्रकृष्टा धीः प्रधीः,'प्रध्यै' इत्यादौ न निषेधः । सा चोपलक्षणं व्याख्यानात् । तेन 'हे श्री'रित्यादौ निषेधसिद्धिः, 'श्रिया'वित्यादौ तत्स्थितिसत्त्वात् । यत्र नदीकार्याश्रयेऽङ्गे बाधकाबाधितेयङादिस्थितिः क्वचिद्दृष्टा तस्य तदवयवस्य च निषेध इति फलितम् । अत एव प्रकृष्टा धीर्यस्या यस्य वा 'प्रधी'रित्यत्रावयवधीशब्दस्य नदीत्वं भवत्येव । तदुक्तं भाष्ये-'अवयवस्त्रीविषयत्वात्सिद्धमिति चेदियङुवङ्स्थानप्रतिषेधे यण्स्थानयोरपि य्वोः प्रतिषेधः प्राप्नोति, अवयवस्येयङुवङ्स्थानत्वात्-आध्यै प्रध्यै । सिद्धन्त्वङ्गरूपग्रहणात् । यस्याङ्गस्येयुवौ भवतस्तस्येदं ग्रहणम्, न चैतस्याङ्गस्येयङुवङौ भवत'इति। **श्रियै इति** । 'ङिति ह्रस्वश्चे'ति विकल्पः। **वामि** । 'आमी'ति च्छेदः।

**प्रधीत्वस्येति** । प्रकृष्टं ध्यायतीत्यर्थकस्येत्यर्थः । **वृत्तिकारादीनामिति** । अयं

नतु स्त्री । श्रीणाम् । श्रियाम् । श्रियाम् । श्रियि । प्रधीशब्दस्य तु वृत्तिकारादीनां मते लक्ष्मीवद्रूपम् । 'पदान्तरं विनापि स्त्रियां वर्तमानत्वं नित्यस्त्रीत्व'मिति स्वीकारात् । 'लिङ्गान्तरानभिधायकत्वं त'दिति कैयटमते तु पुंवद्रूपम् । 'प्रकृष्टा धी'रिति विग्रहे तु लक्ष्मीवत् । अमि शसि च-प्रध्यं प्रध्य इति विशेषः । सुष्ठु धीर्यस्याः, सुष्ठु ध्यायति वेति विग्रहे तु वृत्तिमते सुधीः श्रीवत् । मतान्तरे पुंवत् । 'सुष्ठु धी'रितिविग्रहे तु श्रीवदेव । ग्रामणीः पुंवत् । ग्रामनयनस्योत्सर्गतः पुंधर्मतया पदान्तरं

---

उचित इत्याशयेनाह—**वा नदीसंज्ञौ स्त इति** । 'ङिति ह्रस्वश्चे'ति सूत्रेऽप्येवमेव ॥

**प्रधीशब्दस्य त्विति** । 'एरनेकाच'इति यणा इयङो बाधनात् 'नेयङुवङ्स्थाना'विति निषेधोऽत्र न प्रवर्तते । यत्र त्वपवादेनेयङुवङौ बाध्येते तत्र निषेध इत्याशयेन व्याचष्टे—**लक्ष्मीवद्रूपमिति** । 'अमि शसि च विशेष' इत्यनुपदमेव वक्ष्यति । **पुंवद्रूपमिति** । अयं च मतभेदः 'प्रकृष्टा धीर्यस्याः''प्रकर्षेण वा ध्यायती'ति विग्रहे बोध्यः । **लक्ष्मीवदिति** । 'मतद्वयेऽपी'ति शेषः । **सुष्ठु धीर्यस्या इति** । नन्वस्मिन्विग्रहे कैयटमते सुधीशब्दस्य नित्यस्त्रीत्वाभावेऽपि धीशब्दस्य नित्यस्त्रीत्वा'त्प्रथमलिङ्गग्रहणं चे'ति सुधीशब्दः श्रीवदेव भवति, नतु पुंवदिति चेदत्राहुः—'नेयङुवङ्स्थानावस्त्री'ति धीशब्दे नदीसंज्ञानिषेधात्सुधीशब्दे 'प्रथमलिङ्गग्रहणं चे'त्यस्याऽप्रवृत्तिः, तथाच'वृत्तिमते'इति ग्रन्थः स्वरसतः सङ्गच्छते इति। **मतान्तर इति** । 'लिङ्गान्तरानभिधायकत्वं त'दिति कैयटमते इत्यर्थः । **श्रीवदेवेति** । बुद्धिवाचकधीशब्दस्य नित्य-

---

भावः—भाष्ये 'आध्यै' 'प्रध्यै' इत्यादावियङ्स्थानत्वान्निषेधमाशङ्क्य यत्र नदीकार्याश्रयेऽङ्ग इत्युक्तरीत्या समाहितम् । न च बहुव्रीहिः, कपापत्तेः, किं तु प्रकृष्टं ध्यायतीत्याद्यर्थकं तत् । तत्र कैयटोक्तनित्यस्त्रीत्वाभावेन नदीत्वाप्रसक्त्या भाष्यासङ्गतिः, अत स्त्रीविषयावेव यौ यू नित्यमित्यत्र भाष्ये एवकारो भिन्नक्रमः । नित्यमेव यौ यू स्त्रीविषयावित्यर्थः । 'नित्यमेवे'त्यस्य पदान्तरं विनापीत्यर्थः । खलपूकटप्रग्रामणी(त्यादी)नां क्रियाशब्दतया पुंसि मुख्या वृत्तिः । पुंसः खल्वयमुचितो धर्मः शक्तत्वाद्भयरहितत्वाच्च । अतस्तेषां न पदान्तरं विना स्त्रीवृत्तित्वम् । ध्यानादि तु स्त्रीपुंससाधारणमिति । अत्राऽरुचिबीजन्तु सूत्रभाष्याद्यक्षरैरीदृशनित्यस्त्रीत्वाऽलाभः । भाष्योदाहरणे बहुव्रीहिरेव । कप्तु न, ऋकारसाहचर्येण यस्य वृत्तेः प्राङ्नदीत्वं तदुत्तरपदके एव तत्प्रवृत्तेः । धीशब्दस्येयङ्स्थानत्वेन प्राङ्नदीत्वनिषेधात् । गतिपूर्वकत्वाद्यणपि सुलभः । **आध्यै इति** । 'चिन्त्यमेतत्, क्रियाशब्दत्वेन नित्यस्त्रीत्वाभावा'दिति कैयटस्तु चिन्त्य एवेति दिक् । **लक्ष्मीवदिति** । 'स्त्रिया'मिति शेषः । **पुंवद्रूपमिति** । उक्तविग्रहे नित्यस्त्रीत्वाभावात्पुंसीव स्त्रियामप्यनदीत्वादिति भावः । **प्रकृष्टा धीरिति विग्रहे इति** । ईदृशपदघटितविग्रहे इत्यर्थः । तेन कर्मधारये बहुव्रीहौ च सर्वलिङ्गेपि मतद्वयेऽपि लक्ष्मीवत् । 'प्रथमलिङ्गग्रहणं चे'त्यवयवधीशब्दस्य नदीत्वात् ... निषेधाभावात् ... इति भावः । **विशेष इति** ।

विना स्त्रियामप्रवृत्तेः । एवं खलपत्रनादेरपि पुंधर्मत्वमौत्सर्गिकं बोध्यम् ॥ धेनुर्मतिवत् । **स्त्रियां च** ।७।१।९६। स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते ॥

**ऋन्नेभ्यो ङीप्** ।४।१।५। ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप्स्यात् । क्रोष्ट्री । क्रोष्ट्र्यौ । क्रोष्ट्र्यः । 'वधू'र्गौरीवत् । 'भ्रूः' श्रीवत् । हे सुभ्रूः । कथं तर्हि—'हा पितः क्वासि हे सुभ्रु' इति भट्टिः । प्रमाद एवायमिति बहवः । खलपूः पुंवत् । पुनर्भूः ।

---

स्त्रीत्वान्मतद्वयेऽपि श्रीवदेवेत्यर्थः ।

**स्त्रियां च** । असर्वनामस्थानार्थमयमारम्भः । 'तृज्वत्क्रोष्टु'रिति वर्तते । तद्वदेवात्रापि रूपाऽतिदेशः । 'स्त्रिया'मित्यर्थग्रहणं, तदाह–**स्त्रीवाची क्रोष्टुशब्द इत्यादि** । एवं च पञ्चभिः क्रोष्ट्रीभिः क्रीतैं रथैः पञ्चक्रोष्टृरथैरित्यत्रापि तृज्वद्भावः सिध्यति । ये तु 'स्त्रिया'मिति स्त्रीप्रत्यये इति व्याचक्षते, ङीषर्थं च क्रोष्टुशब्दं गौरादिषु पठन्ति तेषामिह तृज्वद्भावो न सिध्येत् । 'तेन क्रीत'मिति ठको'ऽध्यर्धपूर्वे'ति लुका लुप्तत्वाल्लुक्तद्धितलुकीति ङीषो लुकि स्त्रीप्रत्ययपरत्वाऽभावात् ।

**ऋन्नेभ्यो** । ऋत्-ऋकारः, नो नकारः । प्रयोगापेक्षं बहुलम् । प्रातिपदिकविशेषणात्तदन्तविधिः । 'स्त्रिया'मिति चाधिक्रियते, तदाह–**ऋदन्तेभ्य इत्यादि** । **क्रोष्ट्रीति** । 'स्त्रियां च'त्येतस्याङ्गत्वादङ्गेन प्रत्ययस्याक्षेपाद्विभक्तौ परत एवेह तृज्वद्भावस्ततो ङीबिति बोध्यम् । **भ्रूरिति** । भ्रमतीति भ्रूः । 'भ्रमेश्च डूः' इति भ्रमतेर्डूप्रत्ययः । डित्त्वाट्टिलोपः ।

**हे सुभ्रूरिति** । डूप्रत्ययस्याऽस्त्रीप्रत्ययत्वाद्भ्वोस्त्रियोरिति ह्रस्वो न भवति । 'नेयङुवङ्स्थाना'विति नदीसंज्ञानिषेधात्संबुद्धिह्रस्वोऽपि नेति भावः । ह्रस्वोऽत्रानुपपन्न इत्याक्षिपति–**कथं तर्हीति** । 'विमानना सुभ्रु पितुर्गृहे कुतः' इति कालिदासप्रयोगोऽप्यनु-

---

लक्ष्मीशब्दापेक्षयेत्यर्थः। **श्रीवदिति** । 'स्त्रिया'मिति शेषः । विशिष्टस्यापीयङ्स्थानत्वेन ङिदामोर्विकल्पस्याऽन्यत्र निषेधस्य च प्राप्तेरिति भावः । पुंसि त्वीदृशबहुव्रीहावपि न नदीत्वं, 'नेय'ङित्यवयवस्य निषेधात्समुदायस्याऽप्राप्तेश्च । **पुंवदिति** । 'सुष्ठु ध्यायतीति विग्रहे' इति शेषः । तस्य नित्यस्त्रीत्वाभावेन पुंसीव स्त्रियामप्यनदीत्वादिति भावः । **इति विग्रहे त्विति** । ईदृशपदघटितविग्रहके स्त्रीलिङ्गबहुव्रीहौ कर्मधारये चेत्यर्थः । तत्र बहुव्रीहाववयवस्य 'नेय'ङिति निषेधः । ङिति तु समुदायस्य विकल्प इति बोध्यम् । **स्त्रियाञ्च** । अत्राऽसंबुद्धौ सर्वनामस्थान इति न सम्बध्यते, आरम्भसामर्थ्यात् । **ऋन्नेभ्य इति** । तदन्तशब्दानां बहुत्वाद्बहुवचनं । प्रातिपदिकविशेषणत्वात्तदन्तविधिः। 'स्त्रिया'मिति चाधिकारः ।

**क्वासि हे सुभ्रु इति** । रावणेन सीतापहारोत्तरं रामविलापोऽयम् । विधिना त्वयाऽपि हा पितस्त्याजितः 'हे सुभ्रु क्वासी'त्येवं स बहु विललापेत्यर्थः। 'नेय'ङित्यनेनावयवस्य समुदायस्य च नदीत्वनिषेधात्प्रश्नः । **प्रमाद इति** । विरहपीडितत्वेनानवधानलक्षणोऽत्र प्रमादः । स च विरहपोपकत्वा-

'दृन्करे'ति यणा उवङो बाधना'न्नेयङुव'ङिति निषेधो न । हे पुनर्भु ! । पुनर्भ्वम् । पुनर्भ्वौ । पुनर्भ्वः । **एकाजुत्तरपदे णः ।८।४।१२।** एकाजुत्तरपदं यस्य तस्मिन् समासे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य नित्यं णत्वं स्यात् । आरम्भसामर्थ्यान्नित्यत्वे सिद्धे पुनर्णग्रहणं स्पष्टार्थम् । यणं बाधित्वा परत्वान्नुट् । पुनर्भूणाम् । वर्षाभूः । भेकजातौ नित्यस्त्रीत्वाभावाद्धे वर्षाभूः कैयटमते । मतान्तरे तु हे वर्षाभु । पुनर्नवायां तु हे वर्षाभु । 'भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमानि'ति यादवः । वर्षाभ्वौ । वर्षाभ्वः । स्वयंभूः पुंवत् ॥ **न षट्स्वस्रादिभ्यः ।४।१।१०।** षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च ङीप्टापौ न स्तः ॥ **स्वसा**

---

पपन्न इति बोध्यम् । **बहव इति ।** केचित्तु–'नेयङुव'ङिति सूत्रे 'वामी'त्यतो वाग्रहणमपकृष्य व्यवस्थितविभाषां चाश्रित्य समादधिरे । तदसत् । तथा सतीह'न'ग्रहणं 'वामी'त्युत्तरसूत्रं च व्यर्थं स्यात्, 'वेयङुवङ्स्थानौ' इत्येव वक्तुं शक्यत्वात् । अन्ये तु–'सामान्ये नपुंसक'मिति कथंचित्समादधुः ॥

**एकाच ।** एकोऽच् यस्मिंस्तदेकाच् । तदुत्तरपदं यस्य स 'एकाजुत्तरपद'इति बहुव्रीहिगर्भो बहुव्रीहिः । उत्तरपदशब्दः समासावयवे रूढस्तेनाक्षिप्तः समासोऽनेन विशेष्यत इत्याह—**तस्मिन्समास इति ।** 'रषाभ्यां नो णः' इत्यतो 'ण' इत्यनुवर्तमानेऽपि णग्रहणमिह नित्यार्थमावश्यकमित्याशङ्क्याह—**आरम्भसामर्थ्यादिति ।** 'प्रातिपदिकान्तनुम्विभक्तिषु चे'ति विकल्पेन (णत्व)सिद्धावेतदारम्भसामर्थ्यादित्यर्थः ।

**स्वयंभूः पुंवदिति ।** मतद्वयेऽपि नदीसंज्ञाया अभावान्ङिति ह्रस्वश्चेत्यादि न प्रवर्तत इति भावः । **न षट्स्वस्रादिभ्यः ।** 'स्त्रियां यदुक्तं तन्न भवती'ति व्याख्यानादनन्तरो ङीविव व्यवहितष्टावपि निषिध्यत इत्याशयेनाह–**ङीप्टापौ नेति ।** स्वस्रादीनां ङीप्प्राप्तः । षट्संज्ञकानां तूभौ ॥

---

त्कान्ये गुणः । **एकाजुत्तर ।** एकोऽच्यस्मिन् तादृशमुत्तरपदं यस्येति सूत्रे बहुव्रीहिगर्भो बहुव्रीहिः । 'उत्तरपदे' इत्यनेनास्य वाक्यस्य समासपदघटितवाक्यैकदेशत्वानुमानात्समासो विशेष्य इत्याह–**तस्मिन्समासे इति । आरम्भेति ।** 'प्रातिपदिकान्ते'त्यनेन विकल्पेन णत्वे सिद्धे इत्यर्थः । **पुनरिति ।** णग्रहणेऽनुवर्त्तमाने इत्यर्थः । **यणमिति ।** 'दृन्करे'ति यणमित्यर्थः । **भेकजाताविति ।** 'शिली गण्डूपदी भेकी वर्षाभ्वी कमठी डुलि'रित्यमरादस्य बाह्वादित्वेन वा ङीपिति भावः । **अन्ये** त्वस्य गौरादिपाठान्नित्यमेव ङीष् । 'भेक्यां पुनर्नवायां स्त्री'ति यादवस्य 'सुतः पुत्रः स्त्रियान्त्वमी आहुर्दुहितर'मितिवन्नित्यङ्यन्तत्वेप्युपपत्तेरित्याहुः । 'गौरादित्वादिकल्पने मानाभावात् । 'अमरे 'वर्षाभूः कमठी डुलि'रित्येक पाठ इति **सुबोधिनीकार'** इति [illegible] मूलं बोध्यम् । **ङीप्टापौ न**

तिस्रश्चतस्रश्च ननान्दा दुहिता तथा। याता मातेति सप्तैते स्वस्रादय उदाहृताः॥ 'अप्तृ'न्निति दीर्घः। स्वसा। स्वसारौ। स्वसारः। माता पितृवत्। शसि मातॄः। द्यौर्गोवत्। राः पुंवत्। नौर्ग्लौवत्॥॥इत्यजन्तस्त्रीलिङ्गप्रकरणम्॥

## अथाजन्तनपुंसकलिङ्गप्रकरणम्।

**अतोऽम्** ।७।१।२४। अतोऽङ्गात्क्लीबात्स्वमोरम्स्यात्। 'अमि पूर्वः'। ज्ञानम्।

---

**स्वसा तिस्र इति**। 'न तिसृचतसृ'इति नामि दीर्घत्वप्रतिषेधाज्ज्ञापकादेव ङीब-भावे सिद्धे स्वस्रादिषु तिसृचतसृशब्दपाठो न कर्तव्य इति 'कृन्मेजन्तः' इति सूत्रे कैयटः। **स्वसेति**। 'सावसेर्ऋन्'। 'ऋदुशन' इत्यनङ्। 'ननान्दा तु स्वसा पत्युः'। 'भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्'। **द्यौर्गोवदिति**। 'गमेर्डोः' बाहुलकाद्द्युतेरपि। डित्त्वाट्टिलोपः। 'ओतो णि'दिति णिद्वद्भावाद्वृद्धिः। **राः पुंवदिति**। यद्यपि पुंलिङ्ग एवा-यम्, 'अर्थरैविभवा अपि' इत्यमरोक्तेः। भिन्नलिङ्गानां न द्वन्द्व इति तेन परिभाषितत्वात्, तथापि 'रात्येनं राः। स्त्रीत्येके'इति क्षीरस्वामिना स्त्रीलिङ्गताया अप्यभ्युपगमादेवमुक्तम्। **नौर्ग्लौवदिति**। 'ग्लानुदिभ्यां डौः'। डित्वाट्टिलोपः। 'स्त्रियां नौस्तरणिस्तरि'-रित्यमरः॥॥ **इत्यजन्तस्त्रीलिङ्गप्रकरणम्**॥॥

**अथाजन्ता नपुंसकलिङ्गाः। अतोऽम्**। 'अत'इत्येतदधिकृतस्याऽङ्गस्य विशेषणं, 'स्वमोर्नपुंसका'दिति चानुवर्तत इत्याशयेनाह-**अतोऽङ्गादित्यादि**। अदन्तादङ्गादित्यर्थः। **स्वमोरिति**। अमोऽम्विधानं 'स्वमोर्नपुंसका'दिति प्राप्तस्य लुको बाधनार्थम्। **अम्स्यादिति**। यद्यपि 'म्' इत्येव छित्त्वा सोर्मे

---

स्त इति। 'स्त्रियां यत्प्राप्नोति तन्ने'ति व्याख्यानादिति भावः। स्वस्रादिषु मातृशब्दस्य ननान्द्रादि-साहचर्यात्प्रसिद्धत्वाच्च ससम्बन्धिकजननीवाचकस्यैव ग्रहणम्। सन्निपातपरिभाषयैव तिसृचतस्रो-र्ङीबभावे सिद्धे तदनित्यत्वज्ञापनार्थन्तयोर्ग्रहणमिति केचित्। 'स्वस्रादिषु तिसृचतस्रोः पाठोऽनार्ष' इति कृन्मेजन्तसूत्रस्थभाष्यस्वरसः॥ **इत्यजन्ताः स्त्रीलिङ्गाः**।॥

**अथाजन्ता नपुंसकलिङ्गाः। अतोऽम्। 'अत'** इत्येतदधिकृतस्याङ्गस्य विशेषणम्। 'स्वमो-र्नपुंसका'दिति चानुवर्त्तते। अम् लुग्बाधको 'येननाप्राप्त'इति न्यायात्। 'अ'मिति च्छेदो न तु 'म्' इति। 'ज्ञान'मित्यादौ 'सुपि चे'ति दीर्घापत्तेः। सन्निपातपरिभाषया दीर्घवारणे तु 'हे ज्ञाने'त्यादौ संबुद्धिलोपस्याऽनापत्तिः। 'म्'निमित्तस्य प्रकृतिप्रत्ययसन्निपातस्य प्रत्ययलोपेन विनाशात्। अत एवैङ्ह्रस्वादिति सूत्रे'ज्ञाने'त्यादौ मलोपाय 'कतर'दित्यादौ लोपाऽभावाय चाऽङ्गाक्षेपव्यधिकर-णान्वयहल्पदानुवृत्तय आस्थिता भाष्ये-न तु 'म्'इतिच्छेद उक्त इत्यलं भाष्यविरुद्धकल्पनयेति दिक्। 'जसः शी' 'औङआप'इत्याभ्यां शी, औङ'इति चानुवर्त्तते। तदाह--**क्लीबादित्यादि**।

'एङ् ह्रस्वा'दिति हल्मात्रलोपः । हे ज्ञान । **नपुंसकाच्च** ।७।१।१९। क्लीबात्परस्यौङः शी स्यात् । भसंज्ञायाम् । **यस्येति च** ।६।४।१८४। भस्येवर्णावर्णयोर्लोपः स्यादीकारे तद्धिते च परे । इत्यकारलोपे प्राप्ते–। ❀ **औङः श्यां प्रतिषेधो वाच्यः** ॥ ज्ञाने । **जश्शसोः शिः** ।७।१।२०। क्लीबादनयोः शिः स्यात् ॥ **शि सर्वनामस्थानम्** ।१।१।४२। 'शि' इत्येतदुक्तसंज्ञं स्यात् ॥ **नपुंसकस्य झलचः** ।७।१।७२।

---

कृते संनिपातपरिभाषया 'सुपि चे'ति दीर्घत्वाऽप्रसक्त्या 'ज्ञान'मिति रूपं सिध्यति । द्वितीयैकवचने तु 'आदेः परस्ये'त्यकारस्य मकारे कृतेऽन्त्यस्य मस्य संयोगान्तलोपे सिद्धमिष्टम्, तथापि 'संयोगान्तलोपो झलः' इत्यभिप्रायेणेदं व्याख्यातम् ।

यत्त्वाहुः–'अ'मिति पदच्छेदाऽकरणे 'अतिजरस'मिति न सिध्येदिति, तद्भ्रमसात् । सोरमि कृते संनिपातपरिभाषया जरसादेशस्याऽप्रवृत्त्या 'अतिजरस'मिति रूपस्यैवेष्यमाणत्वात् । द्वितीयैकवचने तु 'अतोऽ'मिति बाधित्वा परत्वाज्जरसि कृते संनिपातपरिभाषया लुकोऽप्रवृत्तावतिजरसमिति रूपसिद्धेश्चेति दिक् । **ज्ञानमिति** । ज्ञप्तिर्ज्ञानम् । ल्युडन्तः । 'युवोरनाकौ' । 'कृत्तद्धिते'ति प्रातिपदिकत्वात्स्वाद्युत्पत्तिः । **हल्मात्रेति** । 'हे ज्ञान सु' इति स्थिते संबुद्धिलोपात्परत्वादमादेशे कृते अमि पूर्वत्वे च तस्याऽन्तवद्भावाद्ध्रस्वान्तमङ्गं भवतीति ततः परस्य संबुद्धिसंबन्धिनो मकारस्य लोप इत्यर्थः ॥

**नपुंसकाच्च** । 'जसः शी' 'औङ आपः' इत्यतः 'शी' 'औङ' इति चानुवर्तेत इत्यभिप्रेत्याह–**क्लीबात्परस्येत्यादिना** । **भसंज्ञायामिति** । 'सुडनपुंसकस्ये'ति पर्युदासेनाऽसर्वनामस्थानत्वादौङि 'यचि भ'मिति प्रवर्तत इति भावः । **यस्येति** । इश्च अश्च यं, तस्य–यस्य । तदाह–**इवर्णावर्णयोरिति** । 'ईति चे'ति चकारेण 'नस्तद्धिते' इत्यतस्तद्धितोऽनुकृष्यते, तदाह–**ईकारे तद्धिते चेति** । **औङः श्यामिति** । विभक्त्यपेक्षया स्त्रीलिङ्गनिर्देशः । नेदं वचनं कर्तव्यम् । 'विभाषा ङिश्यो'रित्यतः 'श्या'मिति प्रकृतं, 'न संयोगात्' इत्यतो 'ने'ति च, तत्रापि सबन्धमात्रं कर्तव्यं, यस्य ईकारे तद्धिते च लोपो भवति, श्यां नेत्याकरः । **जश्शसोः** । जसा साहचर्यादिह सुबेव शस् गृह्यते । तेनेह न–कुण्डशो ददाति । **शि सर्वनामस्थानम्** । महासंज्ञाकरणं पूर्वाचार्यानुरोधेन । **नपुंसकस्य** । 'इदितो नुम् धातो'रित्यतो नुमनुवर्तते ।

---

**यस्येति च** । इश्चाऽश्च यं, तस्येत्यर्थो व्याख्यानात् । 'भस्ये'त्यधिकारः । चेन 'नस्तद्धित'इत्यतस्तद्धित इत्यनुकृष्यते । तदाह–**भस्येत्यादि** । भस्येति किम् ?। गार्गरूप्यम् । **औङः श्यामिति** । इत एव निर्देशादस्य [illegible] 'औङ' इति [illegible], सर्व इत्यस्य भाधिकारेण सिद्धेः ।

झलन्तस्याऽजन्तस्य च क्लीबस्य नुमागमः स्यात्सर्वनामस्थाने परे। उपधादीर्घः। ज्ञानानि। पुनस्तद्वत्। शेषं रामवत्। एवं धनवनफलादयः॥

**अद्ड्डतरादिभ्यः पञ्चभ्यः** ।७।१।२५। एभ्यः क्लीबेभ्यः स्वमोरद्डादेशः स्यात्॥ **टेः** ।६।४।१४३। डिति परे भस्य टेर्लोपः स्यात्। 'वावसाने'॥ कतरत्। कतरद्। कतरे। कतराणि। भस्येति किम्?, पञ्चमः। टेर्लुप्तत्वात् 'प्रथमयो'रिति पूर्वसवर्णदीर्घः, 'एङ्ह्रस्वा'दिति संबुद्धिलोपश्च न भवति। हे कतरत्। पुनस्तद्वत्।

---

'उगिदचा'मित्यतः 'सर्वनामस्थाने'इति च। 'अङ्गस्ये'ति चाधिकृतम्। तथाच झलज्भ्यां नपुंसकमङ्गं विशेष्यते, विशेषणेन च तदन्तविधिर्भवतीत्याह–**झलन्तस्येत्यादि। अद्ड्डतरादिभ्यः**। पञ्चभ्य इति किम्?, नेमं तिष्ठति। नेमं पश्य। डतरादयो 'डतरडतमेतरान्यान्यतरे'ति सर्वादिषु पठिताः। **अद्डादेशः स्यादिति।** जिघृक्षितादेशस्वरूपप्रतिपादनाय ष्टुत्वं न कृतम्। **टेः**। 'ति विंशते'रित्यतो 'डिती'त्यनुवर्तते, 'भस्ये'ति चाधिकृतं, तदाह–**डिति परे भस्येति**। भस्य किम्?, पञ्चमः। अत्र डटो मडागमे भत्वाऽभावाट्टिलोपो न भवति। किंतु पदत्वान्नलोप एव। अद्डो डित्करणस्य प्रयोजनमाह–**टेर्लुप्तत्वादित्यादि**। ननु पूर्वसवर्णदीर्घाभावाय

---

**जश्शसोः**। शसत्र लुबेव, व्याख्यानात्। **नपुंसकस्य**। 'इदितो नु'मिति 'सर्वनामस्थाने'इति चानुवर्तते। 'अङ्गस्ये'ति च प्रकृतम्। तच्च झलज्भ्यां विशेष्यते। 'नपुंसकस्ये'ति गृह्यमाणस्याभावादङ्गस्यैव विशेषणम्। 'अस्थिदधी'त्यादौ तु गृह्यमाणस्यैव, प्रकरणाच्छ्रुतेर्बलवत्त्वात्। अत एव 'त्रिचतुरो'रित्यत्र 'स्त्रिया'मिति तयोरेव विशेषणमित्याकरः। **उपधादीर्घ इति**। 'सर्वनामस्थाने चासंबुद्धा'वित्यनेनेति भावः। **शेषमिति**। कर्मणि घञ्। 'घञबपः पुंसी'ति प्रायोवादः, 'सम्बन्धमनुवर्तिष्यते' इतिभाष्यप्रयोगात्। **अद्ड्ड**। द्डेति पाठः। दस्य ष्टुत्वं डस्य संयोगान्तलोपश्चादेशस्वरूपभङ्गभिया न कृत इति कैयटः। **पञ्चभ्य इति**–अधिकव्यवच्छेदाय, अस्य सर्वाद्यन्तर्गणत्वात्। **परे तु** 'डतरादिभ्य' इति विरुद्धविभक्तिपञ्चम्यन्तत्वादङ्गस्येत्यनेनान्वयानर्हमिति 'डतरादिभ्यो विहितयोः स्वमोरङ्गसंज्ञानिमित्तयोरित्यर्थ' इति भाष्ये सर्वादिसूत्रे स्पष्टम्। एवञ्च 'परमकतरं कुल'मित्यादौ नाद्ड्। यत्तु कैयटेनाऽर्थद्वारकं विधानमाश्रयितव्यम्, तेन 'परमकतर'दित्युक्तं, तन्न; तस्य यदि 'डतराद्यर्थगतसङ्ख्याऽभिधायिन' इत्यर्थस्तदा पञ्चम्यन्तात्तादृशार्थप्रतीत्यसंभवः। यदि षष्ठ्यर्थे पञ्चमी तदा 'विरुद्धविभक्तित्वा'दिति भाष्यासङ्गतिर्विधानस्य सर्वथानाश्रयणेनाऽ**र्थद्वारकं विधान**मिति तद्ग्रन्थासङ्गतिश्च। न चैतदर्थं उपसर्जनप्रतिषेधारम्भो व्यर्थः स्यादिति वाच्यं, तत्प्रत्याख्यानायैवैतद्भाष्यप्रवृत्तेः। परमकतरादिव्यावृत्तयेऽवश्याश्रयणीयविहितविशेषणेनैवातिकतरादिव्यावृत्तौ स व्यर्थ इति तदाशयः। 'त्यदादीनाम' इत्यत्र षष्ठ्यन्तत्वात्त्यदादीनामित्यर्थद्वारकं विभक्तिविशेषणमस्थिदधीत्यादावङ्गं तथा तद्विशेषणं, व्याख्यानादित्यपि तत्रैव भाष्ये स्पष्टमित्याहुः। डित्त्वफलमाह–टेः। 'तिविंशते'रित्यतो 'डिती'ति वर्तते।

शेपं पुंवत् । कतमत् । अन्यत् । अन्यतरत् । इतरत् । अन्यतमशब्दस्य तु 'अन्यतम'मित्येव ॥ ॐ **एकतरात्प्रतिषेधो वक्तव्यः** ॥ एकतरम् ॥ सोरमादेशे कृते संनिपातपरिभापया न जरस् । अजरम् । अजरसी । अजरे । परत्वाज्जरसि कृते झलन्तत्वान्नुम् ॥ **सान्तमहतः संयोगस्य** ।६।४।१०। सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घः स्यादसंबुद्धौ सर्वनामस्थाने परे । अजरांसि । अजराणि । अमि लुकोऽपवादमम्भावं बाधित्वा परत्वाज्जरस् । ततः संनिपातपरिभापया न लुक् । अजरसम् । अजरम् । अजरसी । अजरे । अजरांसि । अजराणि । शेपं पुंवत् । 'पद्दन्'—इति हृदयोदकास्यानां हृद्-उदन्-आसन् । हृन्दि । हृदा । हृद्भ्यामित्यादि । उदानि । उद्ना । उदभ्यामित्यादि । आसानि । आस्ना ।

---

दादेश एव क्रियतां किमदूडादेशेनेत्याशङ्क्याह—**एङ्ह्रस्वादित्यादि** । दादेशे तु 'हे कतरे'ति स्यादिति भावः । **अन्यतमशब्दस्य त्विति** । एवंच 'सामान्यादिष्वन्यतमत्तमः' इत्यादिप्रयोगाः प्रामादिका एवेति भावः । **अजरमिति** । अविद्यमाना जरा यस्य तत् । 'गोस्त्रियो'रित्युपसर्जनह्रस्वे 'अतोऽम्' । **परत्वादिति** । 'अजर शि'इति स्थिते यद्यपि जरसादेशात्प्रागेव 'नपुंसकस्य झलचः' इत्यजन्तलक्षणो नुमागमः स्यात्स चाङ्गभक्तोऽङ्गमेव न व्यवदध्यात् । अवयवस्य तु जराशब्दस्य व्यवधायक एवेति निर्दिश्यमानस्यादेशो विधीयमानो न प्राप्नोति, तथापि 'यस्मादन्त्यादचः परस्तस्यैवान्तावयवो मित्स्या'दिति स्वमते त्ववयवावयवः समुदायस्याप्यवयव इत्यभ्युपगमेन कथंचिज्जरसादेशे जातेऽपि सान्तत्वाभावात् 'सान्तमहतः' इति दीर्घो न स्यादिति भावः । **सान्तमहतः** । अत्र 'नोपधायाः' 'सर्वनामस्थाने चासंबुद्धा'-वित्यनुवर्तते । 'सान्ते'ति लुप्तषष्ठीकं 'संयोगान्तस्ये'त्यनेन समानाधिकरणमिति व्याचष्टे—**सान्तसंयोगस्येत्यादि** । **तस्योपधाया इति** । तत्पूर्वस्येत्यर्थः । **अमि लुकोऽपवादमित्यादि** । एतेन 'स्वमोरमादेशे कृते वा जर'सिति प्राचो ग्रन्थः

---

'भस्ये'तिचाधिकृतम् । **पञ्चम इति** । डटो मटि भत्वाऽभाव इति भावः । **अन्यतमस्येति** । डतरादिष्वपाठादिति भावः । **एकतरमिति** । 'एकाच्च प्राचा'मिति डतरच् । एकतमस्य त्वेकतमदित्येव ।

**परत्वादिति** । 'नुमपेक्षये'ति शेपः । शब्दान्तरप्राप्त्या झलन्ताजन्तलक्षणभेदाच्च नुमप्यनित्य इति भावः । केचित्तु शिभावात्परत्वाज्जरसि ततः शौ झलन्तत्वान्नुमित्यर्थमाहुः । अत्र यद्वक्तव्यं तन्निर्जरशब्दे उक्तम् । **सान्तमहतः** । 'सान्ते'ति लुप्तषष्ठीकं पृथक् पदं 'संयोगस्ये'त्यनेन समानाधिकरणम् । 'नोपधायाः','सर्वनामस्थाने चासंबुद्धा'वित्यनुवर्त्तते, तदाह—**सान्तसंयोगस्येत्यादि** । उपधाग्रहणञ्च पूर्वत्वमात्रोपलक्षणम्, ... सर्वनामस्थाने इति सान्तसंयोगस्य विशेषणम् ।

आसभ्यामित्यादि । मांसि । मांसा । मान्भ्यामित्यादि । वस्तुतस्तु 'प्रभृति' ग्रहणं प्रकारार्थमित्युक्तम् । अतएव भाष्ये 'मांस्पचन्या उखाया' इत्युदाहृतम् । अयस्मयादित्वेन भत्वात्संयोगान्तलोपो न । 'पद्दन्न' इत्यत्र हि 'छन्दसी' त्यनुवर्तितं वृत्तौ, तथापि 'अपो भी' त्यत्र 'मासश्छन्दसी' ति वार्तिके छन्दोग्रहणसामर्थ्याल्लोकेऽपि क्वचिदिति कैयटोक्तरीत्या प्रयोगमनुसृत्य पदादयः प्रयोक्तव्या इति बोध्यम् ॥ **ह्रस्वो नपुंसके प्रातिपदिकस्य** ।१।२।४७। क्लीबे प्रातिपदिकस्याऽजन्तस्य ह्रस्वः स्यात् । श्रीपम् ।

---

प्रत्युक्तः । **मांस्पचन्या इति** । पच्यतेऽस्यामिति पचनी । 'करणाधिकरणयोश्चे' ति ल्युट् । टित्त्वान्ङीप् । मांसस्य पचनी मांस्पचनी । अत्र ङसो लुका लुप्तत्वात्प्रत्ययलक्षणं नेति प्रभृतिग्रहणस्य प्रकारार्थत्वं विना मांसशब्दस्य 'मां' सित्यादेशो न सिध्येदिति भावः । ननु पृषोदरादिसूत्रे 'मांसस्य पचि युड्घञो' रिति वक्ष्यमाणत्वादन्तलोपेनाप्येतद्रूपं सिद्धमिति चेत् , अत्राहुः—'पृषोदरादीनि यथोपदिष्ट' मित्यस्योत्तरपदाधिकारस्थत्वाल्ल्युडन्तं यदुत्तरपदं 'मांसपचन' मित्यादि तत्रैवान्तलोपः स्यात् । अत्र हि ङीबन्तमुत्तरपदं न तु ल्युडन्तमिति नास्त्येवान्तलोप इति । **मासश्छन्दसीति** । 'मास्शब्दस्य तकारः स्याद्भादौ प्रत्यये छन्दसी' ति वार्तिकार्थः । 'माद्भिः शरद्भिः दुरोदरं तवे' त्युदाहरणम् । **ह्रस्वो नपुंसके** । इह ह्रस्वश्रुत्योपस्थितेनाऽच इत्यनेन प्रातिपदिकविशेषणात्तदन्तविधिरित्याह—**अजन्तस्येति** । प्रातिपदिकस्याच इति वैयधिकरण्येन व्याख्यायां तु 'सुवाग्ब्राह्मणकुल' मित्यत्रातिप्रसङ्गः स्यात् । एतच्च 'अचश्चे' ति सूत्र एवास्माभिः स्पष्टीकृतम् । प्रातिपदिकस्येति किम् ? । काण्डे । कुड्ये । **ज्ञानवदिति** । 'श्रीपाणी' त्यादौ 'एकाजुत्तरपदे' इति णत्वं तु विशेषः । 'श्रीपेणे' त्यत्रापीनादेशेन सहाद्गुणे कृते एकादेशस्य पूर्वान्तत्वेन ग्रहणात् 'अचः परस्मि' न्निति सूत्रे पूर्वस्माद्विधिः

---

अत एव 'हंसशिरांसी' त्यादौ न दोषः। यद्वा 'ऽनन्त्यविकारेऽनन्त्यसदेशस्ये' ति न दोषः । **मांस्पचन्या इति** । मांसस्य पचनीत्यर्थः । 'मांसस्य पचियुड्घञो' रित्यप्येतत्सिद्धार्थानुवाद एव । शब्दत्वेन च सादृश्यं, 'न लुमते' त्यस्य च नित्यत्वमित्यभिमानः । **वृत्ताविति** । भाष्यस्वरसस्त्वननुवृत्ताविति भावः । **मासश्छन्दसीति** । 'मासस्तकारः स्याद्भादौ प्रत्यये छन्दसी' त्यर्थः । 'माद्भिः शरद्भिर्दुरोदरं तवे त्युदाहरणम् ॥

**ह्रस्वो नपुंसके**। 'क्लीबवदर्थे वर्त्तमानस्याजन्तस्ये' त्येव सामर्थ्यात्प्रातिपदिकलाभे 'प्रातिपदिकस्ये' त्येतत्सत्त्वप्रधानस्येत्यर्थकम् । तेन 'काण्डे' इत्यादावन्तवद्भावेन प्रातिपदिकत्वेपि न ह्रस्वः । विभक्त्यर्थस्य संसर्गत्वेपि प्रकृत्यर्थापेक्षया प्राधान्यमस्त्येव । प्रथमाया अपि 'अन्याभिहितशक्तिरर्थ' इति तत्रापि तत्संसर्गको बोध इति तस्याः प्राधान्यम् । 'काण्डे तिष्ठत' इत्यादावाख्यातार्थकर्तुः कर्तृ-

ज्ञानवत्। श्रीपाय। अत्र संनिपातपरिभाषया 'आतो धातो'रित्याकारलोपो न ॥

**स्वमोर्नपुंसकात्**।७।१।२३। क्लीबादङ्गात्स्वमोर्लुक् स्यात्। वारि ॥ **इकोऽचि विभक्तौ**।७।१।७३। इगन्तस्य क्लीबस्य नुमागमः स्यादचि विभक्तौ। वारिणी। वारीणि। 'न लुमते'ति निषेधस्याऽनित्यत्वात्पक्षे संबुद्धिनिमित्तो गुणः। हे वारे। हे वारि। 'आङो ना'। वारिणा। 'घेर्ङिती'ति गुणे प्राप्ते–॥ ❀ **वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम्पूर्वविप्रतिषेधेन**। वारिणे। वारिणः २। वारिणोः। 'नुमचिरे'-ति नुट्। 'नामी'ति दीर्घः। वारीणाम्। वारिणि। वारिणोः। हलादौ हरिवत् ॥

**तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य**।७।१।७४। प्रवृत्तिनिमित्तैक्ये

---

पूर्वविधिरिति पञ्चमीसमासपक्षाश्रयेण स्थानिवत्त्वाद्वा एकाजुत्तरपदत्वमस्तीति स्यादेव णत्वम्। **संनिपातेति**। अवर्णमाश्रित्य कृतो यादेशः कथमवर्णलोपे निमित्तं स्यात्। न च 'सुपि चे'ति दीर्घार्थं संनिपातपरिभाषाया अनित्यत्वाभ्युपगम आवश्यक एवेति वाच्यम्, 'कष्टाये'ति निर्देशेन दीर्घविधौ अनित्यत्वाभ्युपगमेऽप्यवर्णलोपे कार्ये तदनभ्युपगमात्। कृतेऽपि दीर्घे ह्रस्वव्यक्त्यपायेऽप्यत्वजातेरनपायादिति दिक्। एतेन 'श्रीपशब्दान्ङयि श्रीप्ये'ति केषांचिद्व्याख्यानं परास्तम्। **स्वमोर्नपुंसकात्**। अयं लुक् पूर्वविप्रतिषेधेन त्यदाद्यत्वस्य, किमः कादेशस्य च बाधकः। परत्वाद्धि त्यदाद्यत्वे 'तदोः–' इति सत्वे अोरम्भावे च 'सं कुल'मिति स्यात्। इष्यते तु 'तत्कुल'मिति।

**इकोऽचि**। विभक्तौ किम् ?, मधु मद्यं तस्येदं माधवम्। अत्र नुमि सति टिलोपः स्यात्। **वृद्ध्यौत्वेति**। 'अतिसखिनी'त्यत्र 'सख्युरसंबुद्धा'विति णिद्वद्भावाद्वृद्धिः प्राप्ता, 'वारिणी'त्यत्र तु 'अच्च घे'रित्यौत्त्वम्। 'प्रियक्रोष्ट्रूनी'त्यादौ तृज्वद्भावः प्राप्तः ॥

ननु नुम्नुटोः को विशेषस्तत्राह–**नामीति दीर्घ इति**। नुमस्त्वङ्गभक्तत्वात्तस्मिन्सति दीर्घो न स्यादिति भावः। **तृतीयादिषु**। यद्यत्र भाषितः पुमान् येन शब्देन स

---

क्रियाभावेन क्रियायामन्वये तद्भिन्नप्रथमान्तार्थस्यापि तेन संबन्धेनान्वयात्तस्य प्राधान्यं। स्पष्टं चेदं भाष्ये। **ज्ञानवदिति**। दीर्घान्तत्वप्रयुक्तो न कश्चिद्विशेष इति भावः। 'श्रीपाणी'त्यादावेकाजुत्तरपदेति णत्वं भवत्येवेति बोध्यम् ॥

**इकोचि**। 'सुपी'ति वक्तव्ये 'विभक्ता'विति चिन्त्यप्रयोजनम्। विभक्तौ किम् ?, मधुन इदं माधवम्। **हेवारे हेवारीति**। अत एवैकोचीति सूत्रस्थ'मिह किंचित्रपो'इति, 'एङ्ह्रस्वा'दिति सूत्रस्थं 'हे त्रपु' इति च भाष्यं सङ्गच्छते। **वृद्ध्यौत्वेति**। वृद्ध्यादीनां क्रमेण 'गावौ' 'हरौ' 'क्रोष्ट्रा' 'हरये' इत्यवकाशः। नुमो 'वारिणी' इति ॥

**तृतीयादिषु**। भाषितः पुमान्येन शब्देनेत्यर्थे पीलुरादेर्विषयः ... पुमान्यस्मि-

भाषितपुंस्कमिगन्तं क्लीबं पुंवद्वा स्याट्टादावचि । अनादये । अनादिने । इत्यादि । शेषं वारिवत् ॥ पीलुर्वृक्षस्तत्फलं पीलु, तस्मै पीलुने । अत्र न पुंवत्, प्रवृत्तिनिमित्तभेदात् ॥

**अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः।७।१।७५।** एषामनङ् स्याट्टादावचि स चोदात्तः। 'अल्लोपोऽनः'। दध्ना । दध्ने । दध्नः। दध्नः। दध्नोः। दध्नोः। दध्नि । दधनि । शेषं वारिवत् ।

---

भाषितपुंस्कः शब्द इति विज्ञायेत तदा 'पीलुने' इत्यादावतिप्रसङ्गः स्यात्, अतो व्याचष्टे-**प्रवृत्तिनिमित्तैक्ये इति** । अयं भावः-भाषितः पुमान् यस्मिन् अर्थे तद्भाषितपुंस्कं प्रवृत्तिनिमित्तं, तदस्यास्तीति अर्श आदित्वादच् । तेनैकस्मिन् प्रवृत्तिनिमित्ते भाषितपुंस्कं यच्छब्दस्वरूपं तल्लभ्यत इति । 'इकोऽचि विभक्तौ'त्यतो'ऽची'-त्यनुवर्तनादाह-**टादावचीति** । इगन्तं किम् ?, सोमपेन कुलेन । अचि किम् ?, ग्रामणिभ्याङ्कुलाभ्याम् । टादौ किम् ?, अनादिनी । अनादीनि । **तत्फलमिति** । पीलोः फलं पीलु । 'फले लु'गिति ओरञो लुक् । **प्रवृत्तिनिमित्तभेदादिति** । पीलुशब्दस्य हि वृक्षत्वव्याप्यजातिर्वृक्षे प्रवृत्तिनिमित्तम्, फले तु फलत्वव्याप्यजातिर्वृक्षविशेषप्रभवत्वं वा । उभयथापि पुंनपुंसकयोर्नैकं प्रवृत्तिनिमित्तमिति भावः । **अस्थिदधि** । 'इकोऽची'-ति नुमि प्राप्ते विधिरयम्, नकारादकार उच्चारणार्थः । ङकारस्त्वन्तादेशार्थः । 'नब्विषयस्याऽनिसन्तस्ये'ति फिट्सूत्रेणाऽस्थ्यादय एते आद्युदात्ताः। तत्राऽन्तस्यानुदात्तेकारस्य विधीयमानोऽनङ् 'स्थानेऽन्तरतमः' इत्यनुदात्तः स्यादित्युदात्त उच्यते । तच्चोदात्तत्वम'स्थनि' 'दधनि' इत्यादावल्लोपाभावपक्षे स्फुटम्, 'दध्ना' 'दध्ने' इत्यादावनङोऽकारलोपे 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्युदात्तनिवृत्तिस्वरेण विभक्त्युदात्तत्वं प्रयोजनमिति बोध्यम् । तृतीयादिष्विव्त्यनुवर्त्तते, अचीति च, तदाह-**टादावचीति** ।

---

प्रवृत्तिनिमित्तरूपेऽर्थे इति बहुव्रीहिः । भाषणक्रियया स्वकरणतयाक्षिप्तशब्दश्च क्लीबेन समानानुपूर्वीकः समानार्थश्च गृह्यते,प्रत्यासत्तेः ततोऽर्श आद्यच् , तत्फलितमाह-**प्रवृत्तिनिमित्तैक्ये इति** । 'इकोऽची'ति 'नपुंसकस्ये'ति चानुवर्त्तते । ते च तत्र षष्ठ्यन्ते अपि अत्रार्थात्प्रथमान्ते । इक इति किम् ?, श्रीपेण । टादौ किम् ?, अनादिनी । अयञ्च ह्रस्वनुमोरभावातिदेशः क्लीबत्वविशिष्टार्थवाचकस्य पुंस्त्वविशिष्टार्थवाचकत्वरूपातिदेशे क्लीवत्वरूपार्थनिवृत्तेस्तत्प्रयुक्तसर्वकार्याऽप्रवृत्तेरित्यन्यत्र विस्तरः। **अस्थिदधि** । नकारादकार उच्चारणार्थः । अनङ उदात्तस्योच्चारणेन सिद्धावुदात्तग्रहणमसति यत्ने उदात्तादिशब्दैरनुपात्तो गुणोऽविवक्षित इति ज्ञापनार्थम् । 'त्रिचतुरो'रिति सूत्रे ' तिसृचत'स्रित्यत्र द्वन्द्वप्रयुक्तेऽन्तोदात्ते कर्त्तव्ये आद्युदात्तनिपातनं विवक्षार्थम् । निपातनं नामाऽन्यादृशे प्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणम् । वधादेशेऽपि हन्त्यनुरूपेऽन्तोदात्तेऽनुदात्ते वोच्चारणीये आद्युदात्तोच्चारणं विवक्षार्थं । तदुक्तम'सति यत्ने' इति । परमास्थिशब्दादावन्तोदात्तगुणस्यापि स्थानित्वेनात्र तद्विवक्षायां न मानमिति भाष्ये स्पष्टम् ।

एवमस्थिसक्थ्यक्षि। तदन्तस्याऽप्यनङ्। अतिदध्ना। सुधि। सुधिनी। सुधीनि। हे सुधे। हे सुधि। सुधिया। सुधिना॥ प्रध्या। प्रधिना॥ मधु। मधुनी। मधूनि। हे मधो। हे मधु। एवमम्ब्वादयः॥ सानुशब्दस्य स्नुर्वा। स्नूनि। सानूनि॥ प्रिय-

टादौ किम्?। दधिनी। दधीनि। अचि किम्?। दधिभ्याम्। **तदन्तस्यापीति**। आङ्गत्वादिति भावः। **अतिदध्नेति**। दधि अतिक्रान्तेनेत्यर्थः। स्त्रियामतिदध्नेत्येव। संनिपातपरिभाषया बहिरङ्गपरिभाषया च ङीपोऽप्रवृत्तेः। प्राचा तु 'प्रियदध्ना ब्राह्मणेने'त्युक्तम्। स्त्रियां तु 'प्रियदध्न्या' 'प्रियदध्न्यै' इत्याद्यपि कैश्चिदुक्तम्। तदसत्। उरःप्रभृतिषु दधिशब्दस्य पाठाद्बहुव्रीहौ नित्यं कप्यनङः प्रसक्त्यभावात्। उक्तपरिभाषाभ्यां ङीपः प्रवृत्तेर्दूरादपास्तत्वाच्चेति दिक्॥

**सुधिनी इति**। परत्वान्नुमा इयङ्बाध्यते। **सुधियेति**। शोभनज्ञानवत्त्वं प्रवृत्तिनिमित्तं पुंनपुंसकयोरेकमेवेति भाषितपुंस्कत्वात् 'तृतीयादि'ष्विति पुंवत्पक्षे नुमभावात् 'न भूसुधियो'रिति यण्निषेधाच्चेयङ्। **प्रध्येति**। अत्रापि प्रकृष्टज्ञानवत्त्वं पुंनपुंसकयोरेकमेवेति भाषितपुंस्कत्वात्तृतीयादिष्विति पुंवत्पक्षे यण्। नपुंसकपक्षे तु नुमिति बोध्यम्। 'बह्व्यः श्रेयस्यो यस्य तद्बहुश्रेयसी कुल'मित्यत्र नपुंसकह्रस्वत्वं न, 'ईयसो बहुव्रीहेर्ने'ति ह्रस्वमात्रस्य प्रतिषेधादित्येके। अन्ये तूपसर्जनह्रस्व एव निषिध्यते, नपुंसकह्रस्वत्वं तु स्यादेव। 'बहुश्रेयसि' 'बहुश्रेयसिनी' इत्याहुः। **मध्विति**। 'मधु मद्ये पुष्परसे' 'मधुर्वसन्ते चैत्रे च'। इह पुंनपुंसकयोरेकं प्रवृत्तिनिमित्तं नास्ति, किंतु मद्यत्ववसन्तत्वादिरूपं भिन्नभिन्नमेव। तथा च भाषितपुंस्कत्वाभावान्'मधुने' 'मधुनः' 'मधुनो'रित्येव भवति, न तु 'मधवे' 'मधो'रित्यादीति दिक्। **स्नुर्वेति**। 'मांसपृतनासानूना'मिति वार्तिककारोक्त्येति भावः। 'स्नुः प्रस्थः सानुरस्त्रिया'मित्युभयलिङ्गः सानुशब्दः, तस्य नपुंसकत्वे रूपमाह—**स्नूनि सानूनीति**। पुंसि तु स्नून्। सानून्-

उदात्तत्वफलं 'दध्ने'त्यादावल्लोपे उदात्तनिवृत्तिस्वरेण विभक्त्युदात्तत्वम्, 'दधनी'त्यादौ श्रवणञ्च। ज्ञापनफलन्तु तृन्तृजन्तानां भिन्नस्वरकान्तानां 'ऋदुशने'त्यनेन तत्स्वरकानङ्सिद्धिरिति दिक्। **तदन्तेति**। आङ्गत्वादितिभावः। अत्रापि 'नपुंसकस्ये'ति संबध्यते, तेन धाञः 'आदृगमहने'ति किप्रत्यये 'दधिने'त्यादौ न। एतच्च गृह्यमाणस्यैव विशेषणम्, तेनाऽतिदध्ना ब्राह्मणेनेत्यादि सिद्धम्। **सुधियेति**। शोभनज्ञानवत्त्वरूपैकप्रवृत्तिनिमित्तत्वात्पुंवत्। **प्रधीशब्दे** प्रकृष्टज्ञानवत्त्वमेकं तत्। **मध्विति**। मकरन्दमद्यमाक्षिकवाचिनः पुंनपुंसकयोः सत्त्वात्पुंवत्त्वम्। मृद्वीकाविकारवाचिनो नित्यनपुंसकस्य तु न, स च 'मद्यं मधु न द्वयो'रित्यमरेणोक्तः। भाष्ये 'मधोस्तृप्ता' इत्यस्य लिङ्गव्यत्ययोदाहरणत्वन्तु 'माध्वी' तु न' इति लिङ्गसिद्धक्षीरवाचिनपुंसकमधुशब्दाभिप्रायेणेति दिक्। **स्नुर्वेति**। 'मांसपृत्स्नूनां

क्रोष्टु। प्रियक्रोष्टुनी। तृज्वद्भावात्पूर्वविप्रतिषेधेन नुम्। प्रियक्रोष्टूनि। टादौ पुंवत्पक्षे प्रियक्रोष्ट्रा। प्रियक्रोष्टुना। प्रियक्रोष्ट्रे। प्रियक्रोष्टवे। अन्यत्र तृज्वद्भावात्पूर्वविप्रतिषेधेन नुमेव। प्रियक्रोष्टुना। प्रियक्रोष्टुने। नुमचिरेति नुट्। प्रियक्रोष्टूनाम्॥

सुलु। सुलुनी। सुलूनि। पुनस्तद्वत्। सुल्वा। सुलुना॥ धातृ। धातृणी। धातॄणि। हे धातः। हे धातृ। धात्रा। धातृणा। एवं ज्ञातृकर्त्रादयः।

**एच इग्घ्रस्वादेशे।१।१।४८।** आदिश्यमानेषु ह्रस्वेषु एच इगेव स्यात्।

---

—इत्यादि। **सुल्वेति**। शोभनलवनकर्तृत्वं पुंनपुंसकयोरेकमेवेति भाषितपुंस्कत्वात्पुंवत्पक्षे नुमभावात् 'ओः सुपी'ति यण्। **सुलुनेति**। यणं बाधित्वा परत्वान्नुम्। **धात्रेति**। धारणपोषणकर्तृत्वं पुंनपुंसकयोरेकमेवेति पुंवत्पक्षे यण्। **एचः**। आदिश्यत इत्यादेशः, ह्रस्वश्चासावादेशश्च ह्रस्वादेशः। निर्धारणे सप्तमी, जातावेकवचनमतो व्याचष्टे—**आदिश्यमानेषु ह्रस्वेष्विति**। एचां पूर्वभागोऽकारसदृशः, उत्तरस्तु इवर्णोवर्णसदृशः, तत्रोभयान्तरतमस्य ह्रस्वस्याभावात्पर्यायेण अकारः स्यादिकारोकारौ च स्याताम्, तथाच मा कदाप्यकारो भूदिति नियमार्थेयं परिभाषेत्यभिप्रेत्याह—**इगेव स्यादिति**। आन्तरतम्यादेकारैकारयोरिकारः। ओकारौकारयोस्तूकारः। एकारान्तस्योदाहरणं तु इः स्मृतो येन सः स्मृतेः। शोभनः स्मृतेः यस्य तत् 'सुस्मृती'त्यादि। एतच्च परिभाषासूत्रमपार्थकम्। तथाच वार्तिककृतोक्तं-'सिद्धमेङः सस्थानत्वात्,' ऐचोश्चोत्तरभूय-

---

पदादिषूपसङ्ख्यान'मिति वार्त्तिकोक्तेरितिभावः। **पूर्वविप्रतिषेधेनेति**। न च नित्यत्वादेव नुम्सिद्धः किं पूर्वविप्रतिषेधेनेति वाच्यम्, तदन्ते नुमि कृतेऽपि अङ्गाधिकारे तदन्तविधेः सत्त्वेन 'यदागमा' इति न्यायेन नुम्विशिष्टस्य तद्ग्रहणेन ग्रहणात् सूत्रे षष्ठीनिर्देशाभावान्निर्दिश्यमानस्य नुमा व्यवधानमित्यस्याऽभावेन तृज्वत्त्वप्राप्तेः। सकृद्गतिन्यायान्न पुनस्तृज्वत्त्वम्। नन्वयं 'कृशक्रोष्टुने'त्यस्यैव भाष्ये उदाहरणात् 'तृतीयादिष्वचो'त्येतद्विषयक एव, अन्यथा प्रथमोपस्थितसर्वनामस्थानोदाहरणत्यागे बीजानापत्तिरिति चेन्न; उदाहरणस्य सङ्कोचकत्वे मानाभावात्। तदुक्तं 'न चोदाहरणमादरणीय'मिति। उदाहृतातिरिक्तोदाहरणाभाव इत्येवंपरतया नादरणीयमिति तदर्थ इत्याहुः॥

**सुल्वेति**। अत्र शोभनलवनकर्तृत्वं प्रवृत्तिनिमित्तम्। पुंवत्त्वे ह्रस्वाभविनाऽधित्वान्नाभावो न। नुमभावाच्च यण्। **धातृइति**। अनङ् न, 'नलुमते'ति निषेधात्। धारणादिकर्तृत्वं चाऽस्यैकं प्रवृत्तिनिमित्तम्। **हे धातरिति**। 'ह्रस्वस्य गुण' इति गुणः॥

**एच इक्**। 'आदेश'इति कर्मणि घञ्। ह्रस्वपदेन कर्मधारयः। निर्द्धारणे सप्तमी। सौत्रमेकवचनं तदाह—**आदिश्येत्यादि**। 'मध्ये'इत्यपपाठः। तद्योगे पष्ठ्या एवौचित्यात्। एचां पूर्वभागेऽवर्णसदृश उत्तरस्तु इवर्णोवर्णसदृशः, तत्रोभयान्तरतमह्रस्वाभावात्पर्यायेणाऽवर्णादेः प्राप्ताववर्णाभावार्थं दन्तदाह—**इगेवेति**। यथाप्राप्तमेव नियम्यत इति न यथासङ्ख्यं। ह्रस्व एच्तु नास्त्येव, 'एओ ङ्-

प्रद्यु । प्रद्युनी । प्रद्यूनि । प्रद्युनेत्यादि । इह न पुंवत्, यदिगन्तं 'प्रद्यु' इति, तस्य भाषितपुंस्कत्वाभावात् । एवमग्रेऽपि । प्ररि । प्ररिणी । प्ररीणि । प्ररिणा । एकदेशविकृतस्याऽनन्यत्वाद्रायो हलीत्यात्वम् । प्रराभ्याम् । प्राभिः । 'नुमचिरे'ति नुड्यात्वे 'प्रराणा'मिति माधवः । वस्तुतस्तु संनिपातपरिभाषया नुड्यात्वं न । 'नामी'ति दीर्घस्त्वारम्भसामर्थ्यात्परिभाषां बाधत इत्युक्तम् । प्ररीणाम् । सुनु । सुनुनी । सुनूनि । सुनुना । सुनुने । इत्यादि ॥ इत्यजन्तनपुंसकलिङ्गप्रकरणम् ॥

---

स्त्वा'दिति । अस्यार्थः—शब्दपरविप्रतिषेधेन एङ उत्तरभागान्तरतमौ इउवर्णाविवेति सिद्धम् । 'एचोश्चे'ति चकारो भिन्नक्रमः 'उत्तरभूयस्त्वाच्चे'ति हेतोरन्तरं बोध्यः । अर्धमात्रा अवर्णस्य, अध्यर्धमात्रा इवर्णोवर्णयोरित्युत्तरभागाधिक्यान्मल्लग्रामादिवद्भूयसा व्यपदेशेनाऽपि इकारोकारौ भविष्यत इति । **प्रद्युनेति** । ननु प्रकृष्टस्वर्गवत्त्वादिकं यत्प्रवृत्तिनिमित्तं तत्पुंनपुंसकयोः समानमिति भाषितपुंस्कत्वात् पक्षे पुंवद्भावोऽत्र स्यादेवेत्याशङ्कायामाह—**यदिगन्तमिति** । एतच्च 'रा दाने' इति धातौ 'अतिरि ब्राह्मणकुल'मिति प्रक्रम्य माधवेन स्पष्टीकृतम् । कथं तर्हि प्राचा 'प्रद्यवा' 'प्रराया' सुनावे'त्युदाहृतमिति चेदत्राहुः—प्रकृष्टस्वर्गवत्त्वादिप्रवृत्तिनिमित्तैक्यात्सुद्योशब्दो भाषितपुंस्कः, स एवेदानीमिगन्तः । तथाच प्रद्युशब्दोऽपि भाषितपुंस्क एव, एकदेशविकृतस्यानन्यत्वात् ,अतः पुंवद्भावो भवतीति । इत्थं च पुंवद्भाव एजन्तेषु क्लीबेषु माधवमते नास्ति, मतान्तरे त्वस्तीति बोध्यम् । **प्ररीति** । प्रकृष्टो रा यस्य तत् 'प्ररि'इति । शोभना नौर्यस्य तत्–'सुनु' । इति **तत्त्वबोधिन्यामजन्तनपुंसकलिङ्गप्रकरणम्** ।

---

त्यादौ दीर्घनिर्देशादिति स्पष्टं भाष्ये । न चा'ऽर्द्धमात्राऽवर्णस्याध्यर्द्धमात्रेवर्णोवर्णयो'रिति उत्तरभूयस्त्वात्तत्सदृश इगेव भविष्यतीति नार्थः सूत्रेणेति वाच्यम्; 'अद्ध्यर्द्धमात्राऽवर्णस्यार्द्धमात्रेवर्णोवर्णयो'रित्यस्यापि पक्षस्य 'प्लुतावैच' इति सूत्रे विनिगमनाविरहेण भाष्ये उक्ततया समप्रविभागपक्षस्यैव भाष्यकृत्संमतत्वादित्याहुः । **प्ररीणामिति** । न च 'रायो हली'ति विषयसप्तमीति प्रागेवात्वम्, निर्दिष्टपरिभाषाबाधे मानाभावात् ।आत्वेकृते नुडनापत्त्या हलादिविषयाभावेन पूर्वमात्वाप्रवृत्तेश्च । **केचित्तु**नुटो निमित्तस्य सन्निपातस्य दीर्घेण विनाशावश्यकत्वेन तद्विषये सन्निपातपरिभाषाया विषय एव न, 'नामी'ति दीर्घस्तु 'सुपि चे'ति दीर्घं नित्यत्वाद्बाधते इति माधवाशयमाहुः । 'ग्रामणि कुल'मित्यादौ नपुंसकह्रस्वत्वे 'ह्रस्वस्य पिती'ति तुङ्, समुदितप्रातिपदिकापेक्षह्रस्वस्य बहिरङ्गत्वेन वर्णमात्राश्रयेऽन्तरङ्गे तुकि असिद्धत्वात् । ये तु 'षत्वतुकोरसिद्ध' इति वचनान्नलोप इति सूत्रे कृति तुग्ग्रहणाच्च 'ह्रस्वस्य पिती'ति सूत्रेऽन्तरङ्गपरिभाषाया अप्रवृत्तिं वदन्ति तेषामुपजीव्यविरोधान्न तुक् । अजन्तत्वमुपजीव्य ह्रस्वप्रवृत्तेः । न चैवं सन्निपातपरिभाषा व्यर्था, तस्या अप्युपजीव्यविरोधमूलकत्वात् ।

## अथ हलन्ताः पुंलिङ्गाः ।

**हो ढः** ।८।२।३१। हस्य ढः स्याज्झलि पदान्ते च । 'हल्ङ्या'बिति सुलोपः । पदान्तत्वाद्धस्य ढः । जश्त्वचर्त्वे । लिट् । लिड् । लिहौ । लिहः । लिहम् । लिहौ । लिहः । लिहा । लिड्भ्याम् । लिट्त्सु-लिट्सु । **दादेर्धातोर्घः** ।८।२।३२। उपदेशे दादेर्धातोर्हस्य घः स्याज्झलि पदान्ते च । उपदेशे किम् ? । 'अधो'गित्यत्र यथा

---

अथ हलन्ताः पुंलिङ्गाः । **हो ढः** । 'झलो झलि' 'पदस्य' 'स्कोः संयोगाद्योरन्ते चे'त्यतो झलीति पदस्यान्त इति चानुवर्तते । तदाह—**झलीत्यादि** । झलि परतः पदान्ते वा विद्यमानस्य हस्येत्यर्थः । **लिडिति** । 'लिह आस्वादने' क्विप् । **लिट्त्स्विति** । ढस्य जश्त्वेन डः, तस्य 'खरि चे'ति चर्त्वेन टः । तस्याऽसिद्धात्वाच्चयो द्वितीया इति पक्षे टस्य ठो न । सस्य ष्टुत्वं तु न भवति, 'न पदान्ताट्टो'रिति निषेधात् ।

**लिट्स्विति** । ढस्य जश्त्वेन डकारे कृते चर्त्वस्याऽसिद्धत्वात्ततः प्रागेव 'डः सी 'ति पक्षे धुट् । तस्य चर्त्वेन तकारः, ततो डस्य चर्त्वेन टः । धुटश्चर्त्वस्याऽसिद्धत्वात्पक्षे 'चयो द्वितीया'इति तस्य थो न । ष्टुत्वं तु तकारस्य न शङ्क्यमेव, 'न पदान्ता'दिति निषेधस्याऽधुनैवोक्तत्वादिति । **दादेर्धातोर्घः** । 'धातो'रित्यावर्तते । तत्रैकमतिरिच्यमानमुपदेशकालं लक्षयतीत्याशयेनाह—**उपदेश इति** । उपदेशग्रहणस्याऽव्याप्त्यति-

---

किंच तस्या अपि स एवार्थः । अत एव सन्निपातपरिभाषादोषनिरूपणावसरे—'वर्णाश्रयः प्रत्ययो वर्णविचालस्याऽनिमित्तं स्या'दित्युक्तम् । न च 'न प्रत्ययः सन्निपातलक्षणः, अङ्गसञ्ज्ञा तद्विनिमित्तं स्या'दित्यग्रिमभाष्यविरोध इति वाच्यम् , तस्यैकदेश्युक्तित्वात् । अन्यथा 'शैव' इत्यादावपि सा लोपनिमित्तं न स्यादित्यन्यत्र निरूपितम् । 'ग्रामणिपुत्रो''ग्रामणिकुल'मित्यादौ पूर्वोत्तरपदनिमित्ते ह्रस्वे वहिरङ्गपरिभाषयाऽपि तुग्वारणं सिद्ध्यतीत्याशयेन 'कृन्मेजन्त'इति सूत्रे,'ह्रस्वस्य पितो'त्यादौ तदुपन्यास एकदेशिन इति न तद्विरोध इत्यलम् । **इति लघुशब्देन्दुशेखरेऽजन्ता नपुंसकलिङ्गाः।**

**अथ हलन्ताः पुंलिङ्गाः । हो ढः ।** 'झलो झली'त्यतो 'झली'ति 'पदस्ये'ति 'स्को'रित्यतोऽन्त इत्यनुवर्त्तते । झलि परे पूर्वस्य पदान्ते विद्यमानस्य हस्येत्यर्थः । 'ड'स्तु न विहितः, झषन्तत्वाऽभावेन भष्भावाऽप्राप्त्या 'ध्रु'डित्याद्यसिद्धेः ।

**दादेर्घा।** दादिग्रहणमौपदेशिकदादित्ववल्लक्षकं व्याख्यानादित्यभिप्रेत्य फलितार्थमाह—**उपदेशे इति।** एतच्च प्रकृतसूत्रे भाष्ये ध्वनितम् । तत्र हि घत्वस्यासिद्धत्वाड्ढत्वं प्राप्नोतीत्याशङ्क्यापवादत्वेन समाधाय 'अथवा एवं वक्ष्यामि होढोऽदादे'रिति । ततो 'धातो'रिति । दादेरिति वर्त्तते नेतिनिवृत्त'मित्युक्तम् । द्रुहेस्तु वाद्रुहेत्यनेन ढत्वस्यापि विधानात्तत्र न दोष इति तदाशयः । तत्र 'धातो'रिति सूत्रे भाष्यकृत्कृत'दादे'रित्युक्त्वा [illegible] नुरोधाच्च

स्यात्। दामलिहमात्मन इच्छति दामलिह्यति। ततः क्विपि दामलिट्। अत्र माभूत्। **एकाचो बशो भष् झषन्तस्य स्ध्वोः** ।८।२।३७। धातोरवयवो य एकाज्झषन्तस्तदवयवस्य बशः स्थाने भष् स्यात्सकारे ध्वशब्दे पदान्ते च। 'एकाचो धातो'रिति सामानाधिकरण्येनाऽन्वये तु इह न स्यात्। गर्दभमाचष्टे गर्दभयति। ततः क्विप्। णिलोपः। गर्धप्। 'झली'ति निवृत्तं, स्ध्वोर्ग्रहणसामर्थ्यात्।

---

व्याप्तिपरिहारः फलमित्याह—**अधोगित्यादिना—अत्र मा भूदित्यन्तेन। एकाचो बशो। झलीति निवृत्तमिति।** 'धुग्भ्यां' 'धुक्षि'त्यादौ 'पदान्ते'इत्येव भष्भाव-सिद्धेरिति भावः। प्राचा तु 'प्रातिपदिकस्येति 'झलि पदान्ते चे'ति व्याख्यातम्। तत्प्रामादिकमेव। 'अधोक्' 'अधोग्' इत्याद्यसिद्ध्यापत्तेः। प्रातिपदिकग्रहणस्याऽप्रकृत-त्वाच्च। ननु 'धातोरवयव'इति वैयधिकरण्येनाऽन्वये क्विवन्तस्य दुहेः 'दादे'रिति घत्वेन झषन्तत्वेऽपि भष्भावो न स्यात्, 'दु'घिति समुदायस्य यः पूर्वावयवो 'दु' इत्येकाच् तस्य झषन्तत्वाभावात्। 'उघ्'इत्युत्तरावयवे तु बशोऽभावादित्यत आह—**व्यपदेशि-**

---

पूर्वत्र निषेध्यसमर्पकेष्वेवम्। अत एव नामधातुविषये 'दामलि'डित्यादौ ढत्वघत्वाऽभावौ सिद्धौ। एवञ्च, तदेकवाक्यतयाऽपवादत्वपक्षेऽपि दादिपदस्योपदेशकालिकदादित्ववल्लक्षकतोचिता। तदन्तरं 'दादेरिति वर्त्तते'इति भाष्यस्योक्ताशयमजानतो 'घोऽदादेरित्युच्यते कथमधो'गिति शङ्कायामेकाच इति सूत्रार्थमपि प्रसङ्गान्निर्णेतुं 'धातोरवयवो यो दादि'रित्यर्थमुक्त्वा गर्दभयतेरप्रत्यये गर्द्धबित्यादौ भष्भा-वायोत्तरसूत्रे आवश्यकं वैयधिकरण्यमुक्त्वा 'दोग्धेति तु व्यपदेशिवद्भावात्सिद्ध'मिति भाष्ये उक्तम्। तत्रोत्तरार्थं वैयधिकरण्यमावश्यकमिति वदता तस्येहानावश्यकत्वं सूचितं। तेन च 'दादे'रित्यस्योक्ता-र्थकत्वं सूचितमित्यन्यत्र विस्तरः। 'धु'गित्यादिसिद्धये गो नोक्तः। 'औपदेशिकप्रायोगिकयोरौपदे-शिकस्य ग्रहण'मिति परिभाषा तु तत्रतत्रोपदेशग्रहणं कुर्वत्सूत्रविरोधेन, 'तरसमपौ घोऽत्वसन्तस्ये'त्या-दिसूत्रस्थभाष्यविरोधेन चाऽप्रामाणिकी। तत्र हि भाष्ये इदमुक्तम्—"इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते यत्रास्यैतद्रूपमिति। रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगं, तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते, कोऽसावुप-देशो नामे"ति। अनुबन्धप्रस्तावात्सानुबन्धकेष्वित्युक्तं, न्यायस्यान्यत्रापि तुल्यत्वादिति बोद्धव्यम्।

**एकाचो।** 'झष्झषन्तस्ये'तिवक्तुं युक्तं, भष्पदाऽशक्तिकल्पनेन लाघवात्। **निवृत्तमिति।** 'धुग्भ्या'-मित्यादौ पदान्तत्वादेव सिद्धिरिति भावः। **सामर्थ्यादिति।** स्ध्वोर्ग्रहणस्येतरव्यावृत्त्यर्थत्वे तु तद-नुवृत्तौ फलाऽभाव इति भावः। धातोः किं? **तद्बाडित्यादि।** ननु दुहेर्घत्वे धात्ववयवमेकाज्रूपं 'दु'इति 'उ'घिति च, तत्राद्यो न झषन्तोऽन्त्ये न बश्, 'दु'घिति तु नावयव इति कथं भष्भावोऽत आह—**व्यपदेशिवद्धिति।** विशिष्टोऽपदेशो मुख्यव्यवहारः सोऽस्यातीति **व्यपदेशी।** तेन तुल्यमित्यर्थः। इदमाद्यन्तवत्सूत्रे भाष्ये स्पष्टम्। एकाचः किम्? [illegible] किम्? [illegible]यति। झषन्तस्य

तेनेह न-धुग्धम् । दोग्धा । व्यपदेशिवद्भावेन धात्ववयवत्वाद्भष्भावः । जश्त्वचर्त्वे । धुक् । धुग् । दुहौ । दुहः । षत्वचर्त्वे । धुक्षु ॥

**वा द्रुहमुहष्णुहष्णिहाम्** ।८।२।३३। एषां हस्य वा घः स्याज्झलि पदान्ते च । पक्षे ढः । ध्रुक् । ध्रुग् । ध्रुट् । ध्रुड् । द्रुहौ । द्रुहः । ध्रुग्भ्याम् । ध्रुड्भ्याम् । ध्रुक्षु । ध्रुट्त्सु । ध्रुट्सु । एवं मुहष्णुहष्णिहाम् ॥

विश्ववाट् । विश्ववाड् । विश्ववाहौ । विश्ववाहः । विश्ववाहम् । विश्ववाहौ । **इग्यणः संप्रसारणम्** ।१।१।४५। यणः स्थाने प्रयुज्यमानो य इक्स संप्रसारणसंज्ञः स्यात् ॥

---

**वद्भावेनेति** । न च धात्ववयवो धातुरित्येव व्यपदिश्यतां, तथाच 'गर्ध'बिति सिध्येदिति वाच्यम्, अर्थवतां हि व्यपदेशिवद्भावः, न चावयवोऽर्थवानिति तस्य धातुत्वव्यपदेशाऽसंभवात् । **भष्भाव इति** । क्विपः प्राक्प्रवृत्ताया धातुसंज्ञाया निरपवादत्वेनात्रस्थितत्वात् 'दादेधातो'रिति घत्वे कृते झषन्तत्वादिति भावः । **धुगिति** । 'दुह प्रपूरणे' क्विप् । **वा द्रुह** । 'द्रुह जिघांसायाम्', 'मुह वैचित्ये', 'ष्णुह उद्गिरणे', 'ष्णिह प्रीतौ' । द्रुहेर्दादित्वान्नित्यं प्राप्ते अन्येषामप्राप्ते उभयत्र विभाषेयम् ।

ननु द्रुहादयो दिवादिष्वनेनैव क्रमेण पठ्यन्ते, तत्र 'वा द्रुहादीनाम्' इत्येवास्तु. दिवाद्यन्तर्गणस्य पुषादेरन्तर्गणो रधादिस्तदन्तर्गणो द्रुहादिरस्तु । रधादिगणसमाप्तये स्निहधातोरनन्तरं वृत्करणस्य कृतत्वेनाऽतिप्रसङ्गशङ्काया निरवकाशत्वात् । मैवम् , तथाहि सति यङ्लुकि दोध्रुग् दोध्रुडित्यादि न सिध्येत् 'निर्दिष्टं यद्गणेन चे'ति निषेधात् ॥

**इग्यणः । यणः स्थाने इति** । विधिप्रदेशेषु सूत्रशाटकवद्भाविसंज्ञाश्रयणान्नान्योन्याश्रयः । ननु यण्स्थानिकस्येकः संप्रसारणत्वे 'अदुहितरा'मित्यत्र लङो लकारस्य स्थाने उत्तमपुरुषैकवचनमिट्, तस्य यण्स्थानिकत्वेन संप्रसारणसंज्ञायां सत्यां

---

किम् ?, दास्यति । **धुगिति** । 'अत्वसन्तस्ये'ति सूत्रे 'धातो'रिति निषेधेन कारकं प्रत्यप्रधानभूतक्रियावाचकस्यापि धातुत्वादिति भावः । नच 'धातोरुच्यमानं कार्यन्तत्प्रत्यये भवती'ति परिभाषया कथमत्र घत्वादि, तत्प्रत्ययो धातुसंशब्दनेन विहितः प्रत्यय इति वाच्यम्, अस्य पदान्तनिमित्तत्वेन प्रत्ययनिमित्तत्वाऽभावात् । अत एवा'ऽप्रशा'निति चरितार्थम् , अन्यथा 'मो नो धातो'रित्यत्रापि तत्प्रवृत्तौ नत्वाऽनापत्त्या तदसङ्गतिः स्पष्टैव ॥

**वा द्रुह** । द्रुहेः प्राप्तेरन्येषामप्राप्तेरुभयत्र विभाषेयम् । **इग्यणः** । **यणः स्थाने इति** । नन्वेवमदुहितरामित्यादौ लस्योत्तमैकवचने इटि तस्य संप्रसारणत्वाद्धल इति दीर्घापत्तिः । न च यथासङ्ख्यसंबन्धाददोषः, ऋलक्सूत्रे 'लकारोपदेशः किमर्थ'मित्यादि भाष्यविरोधादिति चेन्न; विधिप्रदेशेषु 'यण इ'गित्येव सिद्धे सञ्ज्ञाविधानसामर्थ्येन तद्भावितपक्षाश्रयणान्न दोषः । 'वाक्यस्य टेः'इति पक्षे

**वाह ऊठ्** ।६।४।१३२। भस्य वाहः संप्रसारणमूठ् स्यात् । **संप्रसारणाच्च**

'हलः' इति दीर्घः स्यात् । तरपं प्रति लङन्तस्याऽङ्गत्वादिति चेत् । अत्र कैयटः— यथासङ्ख्यसंबन्धात्संप्रसारणसंज्ञाऽत्र न भवतीति । नन्वनुवादे परिभाषाणामनुपस्थानात्कथमिह यथासङ्ख्यत्वलाभः । नचैवं स्थानेयोगोऽपि न लभ्येतेति वाच्यम्, 'षष्ठी स्थानेयोगे'त्यत्रैतत्सूत्रमनुवर्त्य व्याख्यायां तल्लाभात् । अत्राहुः—तन्त्रावृत्त्याद्याश्रयणेन 'संप्रसारणस्ये'ति सूत्रे तद्भावितग्रहणाद्दुहितरामित्यत्र 'हलः' इति लङः स्थानिकस्येटः संप्रसारणस्य दीर्घो न भवति, लङ्स्थानिकस्येटः संप्रसारणशब्देनाऽभावितत्वात् । नन्वेवमप्यक्षद्युवौ अक्षद्युव इत्यादावूठः संप्रसारणसंज्ञायां 'संप्रसारणाच्चे'तिपूर्वरूपं स्यादिति चेन्न, 'संप्रसारणपूर्वत्वे समानाङ्गग्रहणं कर्तव्य'मिति वार्तिककृतोक्तत्वाद्वार्णादाङ्गस्य बलीयस्त्वाद्वा उवङेव स्यात् । अत्र नव्याः—'ष्यङः संप्रसारण'मित्यादिविधिप्रदेशेष्वेव 'यण इ'गिति पठित्वा संप्रसारणसंज्ञासूत्रं त्यक्तुं शक्यमित्याहुः ।

**वाह ऊठ्** । 'एत्येधत्यूठ्सु'इति विशेषणार्थष्ठकारो 'हलन्त्य'मितीत्संज्ञकः । अत्र 'भस्ये'त्यधिक्रियते, 'वसोः संप्रसारण'मित्यतोऽनुवृत्तं संप्रसारणमूठो विशेषणं, तेनात्र 'अलोऽन्त्यस्ये'ति न भवति, तदेतदाह—**भस्य वाह इत्यादि** । प्राचा तु 'वाहो वाशब्दस्य संप्रसारणं स्या'दित्युक्तं, तच्च फलितार्थकथनपरतया कथंचिन्नेयमित्याहुः ॥

**संप्रसारणाच्च** । 'अमि पूर्वः' इत्यतः 'पूर्व'इत्यनुवर्तते''इको यणची'त्यतोऽचीति च,

भाष्ये ' संप्रसारणस्ये'त्यादौ 'संप्रसारणजातस्य संप्रसारणेन ग्रहण'मित्युक्ततया तदेकवाक्यतयाऽत्र पक्षे तद्भावितस्य संज्ञेति भाष्ये सूचितम् । तेन 'द्युभ्या'मित्यादावपि न दीर्घप्राप्तिः । अत एव अक्षद्यूश्चाऽसावरुणश्च 'अक्षद्व्यरुण' इत्यादौ पूर्वरूपं न । समानाङ्गग्रहणन्तु भाष्ये प्रत्याख्यातम् । तथाच भाष्यम्'— 'शकहूर्थमित्यादौ पूर्वरूपाभावाय समानाङ्गग्रहणं कार्यं, न कार्यम्, असंप्रसारणत्वात् । अन्योऽयं संप्रसारणाऽसंप्रसारणयोः स्थाने एक आदिश्यते । यदि नेदं संप्रसारणं, 'हूत' इत्यत्र'हल' इति दीर्घत्वं न प्राप्नोति, 'वचनप्रामाण्याद्भविष्यती'ति । 'न संप्रसारण'इति निषेधोपि वचनप्रामाण्यात्पूर्वरूपोत्तरम् । न च 'युउ-अन्-अस्' इति स्थितेऽन्तरङ्गत्वाद्दीर्घे पूर्वरूपं न स्यादिति वाच्यम्, अन्तरङ्गपरिभाषाया अनित्यत्वेनेहाऽप्रवृत्तेः। न चैवं तत्र सवर्णदीर्घोत्तरं 'न संप्रसारणे'इति निषेधो न स्यादिति वाच्यम्, 'अचः परस्मि'न्निति स्थानिवत्त्वादिति दिक् । **वाह ऊठ्** । 'भस्ये'त्यधिकारः, 'वसोः संप्रसारण'मित्यतः 'संप्रसारण'मित्यनुवर्त्तते, तच्चोठो विशेषणम् । तेनाऽलोन्त्यस्येति न, तदाह—**भस्येत्यादि** । ह्रस्व उठ् न कृतः, वृद्ध्यनापत्तेः । वृद्धिविधावपि ह्रस्वग्रहणे 'जनौ'रित्याद्यसिद्धिः । 'छ्वोः शूडि'त्यत्रापि ह्रस्वकरणेऽक्षद्यूरित्याद्यसिद्धिः । अतद्भावितत्वेन तरयाऽसंप्रसारणत्वाद्धल इति दीर्घोऽप्राप्तेः ।

**संप्रसा०** अमि पूर्व इत्यतः पूर्व इति इको यणित्यतो चीति एकः पूर्वपरयोरिति चानुवर्त्तते

।६।१।१०८। संप्रसारणादचि परे पूर्वरूपमेकादेशः स्यात् । 'एत्येधत्यूठ्सु' । विश्वौहः । विश्वौहेत्यादि । 'छन्दस्येव ण्वि'रिति पक्षे णिजन्ताद्विच् ॥ **चतुरनडुहोरामुदात्तः** ।७।१।९८। अनयोराम् स्यात्सर्वनामस्थाने स चोदात्तः ॥ **सावनडुहः** ।७।१।८२। अस्य नुम् स्यात्सौ परे । 'आ'दित्यधिकारादवर्णात्परोऽयं नुम् ।

---

'एकः पूर्वपरयो'रिति चाधिक्रियते । तदाह—**संप्रसारणादचीत्यादिना** ।

**छन्दस्येव ण्विरिति** । 'वहश्चे'ति सूत्रे 'भजो ण्विः' 'छन्दसि सहः' इत्यतो ण्विप्रत्यस्य 'च्छन्दसी'त्यस्य चाऽनुवृत्तेरिति भावः । स्यादेतत्—'वाहः' इत्येव सूत्रमस्तु, संप्रसारणमेवाऽत्र विधीयतां, तस्य लघूपधगुणे कृते 'वृद्धिरेची'ति वृद्धौ सिद्धं 'विश्वौह' इत्यादि, किमूठ्ग्रहणेन ? । सत्यम् । एवं स्थिते क्रियमाणमूठ्ग्रहणं बहिरङ्गपरिभाषां ज्ञापयति । तस्यां हि सत्यां जातस्य बहिरङ्गस्य संप्रसारणस्याऽसिद्धत्वादन्तरङ्गो गुणो न स्यादिति भाष्ये स्थितम् । नन्वनकारान्तोपपदेऽकारान्तोपसर्गोपपदे च रूपे विशेषः स्यादिति कथमूठ्ग्रहणं ज्ञापकमिति चेत्, अत्राहुः कैयटादयः—भाष्यकारोक्तज्ञापकबलेनैव तादृशस्थले ण्विप्रत्ययाऽभावोऽनुमीयत इति । एतेन भुवं वहतीति भूवाट् । भूहः । भूहा । प्रौहः । प्रौहेत्यादिप्रयोगाः परास्ताः । **चतुरनडुहोः** । 'इतोत्सर्वनामस्थाने' इत्यतोऽनुवर्तनादाह—**सर्वनामस्थान इति** ।

**सावनडुहः** । 'आच्छीनद्यो'रित्यतो नुममनुवर्त्याह—**नुम्स्यादिति** । विशेषविहितेन यासुटा सामान्यविहितः सीयुडिव नुमा आम्बाध्यतामित्याशङ्कां निराकरोति—**अवर्णात्परोऽयमित्यादिना** । उपजीव्योपजीवकयोर्विरोधाऽभावेन बाध्यबाधकभावो

---

तदाह—**संप्रसारणादचीत्यादि** । ऊठछित्त्वमेत्येधत्योरित्यत्र विशेषणार्थम् । **छन्दस्येवेति** । 'छन्दसी'त्यनुवर्तमाने 'वहश्चे'त्यनेनेति भावः । **णिजन्ताद्विजिति** । अनेन लोके विश्ववाट्शब्दस्य साधुत्वमात्रमुच्यते न त्वस्योठ्, णिलोपस्य स्थानिवत्त्वात् । अङ्गभसंज्ञाऽऽक्षिप्तप्रत्ययेन वाहो विशेषणात् । विज्ग्रहणं क्विपोऽप्युपलक्षणम् । 'वच्यादिभ्यो विहिते किती'ति व्याख्यानस्याऽचः परस्मिन्नित्यत्र, काम्यच्सूत्रे च भाष्ये उक्तत्वेन ण्यन्तात्क्वौ संप्रसारणाऽप्राप्तेः । प्रतिपदोक्ततया क्विश्शब्दमुच्चार्य विहितविधेरेव 'क्वौ विधिं प्रति न स्थानिव'दित्यत्र ग्रहणेन णिलोपस्य स्थानिवत्त्वाच्च । तेन काम्यच्सूत्रोक्तविहितविशेषणपक्षतदितरपक्षयोर्न फलभेदः । वस्तुतो 'विभाषा पूर्वाह्णापराह्णाभ्या'मितिसूत्रे 'प्रष्ठौह आगतं प्रष्ठवाड्रूप्य'मिति भाष्ये लौकिकविग्रहवाक्ये 'प्रष्ठौह' इति प्रयोगादन्यत्रापि ण्विः । तदुक्तम्—**इति पक्षे इति** ॥

**चतुरनडु** । 'इतोत्सर्वनामस्थाने' इत्यतः 'सर्वनामस्थाने' इति वर्त्तते ॥ **सावन** । 'आच्छीनद्यो'रित्यतो नुमनुवर्तते, 'आ'देति च । तदाह—**अदित्यधीति** । **विशेषविहितेनेति** । यासुटा

अतो विशेषविहितेनाऽपि नुमा आम्न बाध्यते । अमा च नुम्न बाध्यते । सोर्लोपः । नुम्विधिसामर्थ्यात् 'वसुस्रंस्वि'ति दत्वं न । संयोगान्तलोपस्याऽसिद्धत्वान्नलोपो न । अनड्वान् ॥ **अम्संबुद्धौ** ।७।१।९९। चतुरनडुहोरम्स्यात्संबुद्धौ । आमोऽपवादः । हे अनड्वन् । अनड्वाहौ । अनड्वाहः । अनडुहा । **वसुस्रंसुध्वंस्वनडुहां दः** ।८।२।७२। सान्तवस्वन्तस्य स्रंसादेश्च दः स्यात्पदान्ते । अनडुद्भ्यामित्यादि । सान्तेति किम् ?, विद्वान् । पदान्ते इति किम् ?, स्रस्तम् । ध्वस्तम् ॥ **सहेः साडः सः**

---

नेति भावः । **अमा चेति** । 'विशेषविहितेनाऽपी'त्यनुषज्यते । 'आमा च नुम्न बाध्यते'इति केचित्पठन्ति । तस्यायमर्थः—'बह्वनड्वांही'त्यत्र परत्वादामि कृते पुनःप्रसङ्गविज्ञानात् 'नपुंसकस्य झलचः'इति नुम्भवत्येव, न तु बाध्यत इति ।

नुमो दत्वमाशङ्क्याह—**नुम्विधिसामर्थ्यादित्यादि** । विधानसामर्थ्यात्सर्वत्राऽविकृतेन नुमा भवितव्यमिति भावः । नन्वेवमनड्वांस्तत्रेत्यत्र 'नश्छवी'ति रुत्वमपि न स्यादिति चेदत्राहुर्भाष्यकाराः—'यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते, यस्य तु विधेर्निमित्तमेव नासौ बाध्यते'इति । भवति हि दत्वं प्रति नुमो विधिरनर्थकः, रुत्वं प्रति तु निमित्तमेवेति । **अनड्वानिति** । अनः शकटं वहतीति विग्रहे अनसि वहेः क्विप् । अनसो डश्च । यजादित्वात्संप्रसारणम् । अनडुह्-स् इति स्थिते-आम्नुम्सुलोपेषु कृतेषु संयोगान्तलोपेन हकारलोपः । **वसुस्रंसु** । वस्विति प्रत्ययः, तेन तदन्तं ग्राह्यम् । 'ससजुषो'रिति सूत्रात्सेत्यनुवर्तते, तच्च वसोरेव विशेषणं, न तु स्रंसुध्वंस्वोरव्यभिचारात् । नाऽप्यनडुहः, असंभवादित्यभिप्रेत्याह—**सान्तवस्वन्तस्येति** । **सहेः साडः सः** । सहेरिति किम् ?। सह डेन वर्तते सडः । यस्य नाम्नि

---

सीयुडित्रेत्यर्थः । **न बाध्यते इति** । उपजीव्यत्वादिति भावः । **अमा चेति** । 'अम्संबुद्धा'विति विशेपविहितेनाऽमेत्यर्थः । नुम उपजीवकत्वेन विरोधाऽभावात्, ततः प्राक्तस्याऽप्राप्तेश्चेति भावः । कश्चित्तु 'आमा च नुम्न बाद्धयते'इति पाठः । तत्रायमर्थः—'बह्वनड्वांही'त्यादौ 'नपुंसकस्ये'ति नुम् परत्वादामा बाद्धयेत, पुनः प्रसङ्गविज्ञानात्तु न बाद्धयत इति । **दत्वं नेति** । 'अनड्वांस्तत्रे'त्यत्र रुत्वं भवत्येव, तत्रोपदेशवैयर्थ्याभावात् । **संयोगान्तलोपस्येति** । हस्थानिकस्येत्यर्थः । एवञ्च नस्य प्रातिपदिकान्तत्वाऽभाव इति भावः । **अनड्वानिति** । अनः शकटं वहतीत्यर्थे वहेः क्विप् । अनसि, अनसो डश्च । यजादित्वात्संप्रसारणम् । ननु 'हे अनड्व'न्नित्यत्र संबुद्धिलोपेऽवश्यंप्राप्तेऽम आरम्भादमोऽपवादत्वेन तद्विपये संबुद्धिलोपानाऽपत्तिः; विपयभेदेऽप्यचिरादेशस्य नुडपवादत्वमाशङ्कितं संसमे भाष्य इति चेन्न; प्रत्ययलोपविधायकैः प्रत्ययानुत्पत्तेरेवान्वाख्यानेनाऽपवादत्वस्यैवाऽसंभवात् । ध्वनितं चेदं 'प्रत्ययलक्षण'सूत्रे भाष्यकैयटयोः । एवमेवाऽऽतमोऽ... [illegible]

।८।३।५६। साड्रूपस्य सहेः सस्य मूर्धन्यादेशः स्यात्। तुराषाट्। तुराषाड्। तुरासाहौ। तुरासाहः। तुराषाड्भ्यामित्यादि। तुरं सहत इत्यर्थे 'छन्दसि सहः' इति ण्विः। लोके तु साहयतेः क्विप्। 'अन्येषामपी'ति पूर्वपदस्य दीर्घः॥

[ इति हान्ताः। ]

**दिव औत्** ।७।१।८४। 'दि'विति प्रातिपदिकस्य औत्स्यात्सौ परे ।

---

'ड'शब्दोऽस्ति यथा 'मृड'इति। सडस्यापत्यं साडिः॥ **इति हान्ताः**॥

**दिव औत्**। तकार उच्चारणार्थः। **प्रातिपदिकस्येति**। अव्युत्पन्नस्य' 'दिवेर्डिवि'रिति न्यासोहितसूत्रेण व्युत्पन्नस्य वा ग्रहणं, न तु 'दिवु क्रीडादौ' इति धातोः, 'निरनुबन्धकग्रहणे न सानुबन्धकस्ये'ति परिभाषया। तेनाक्षद्यूरित्यादौ न भवति। न च तत्रान्तरङ्गत्वादूठेव स्यान्न तु औत्वप्रसक्तिरिति वाच्यम्, ऊठि कृतेऽप्येकदेशविकृतन्यायेन

---

इति दिक्॥ **सहेः सा**। 'अपदान्तस्य मूर्द्धन्य' इत्यधिक्रियते। **लोके त्विति**। एतेन 'तुराषाण्मेववाहन' इति व्याख्यातम्। 'नहिवृतो'त्यनेनक्विन्तसहावेव दीर्घविधानादाह–**अन्येषामपीति**॥

**दिव औत्**। ननु विधेयविषये उच्चारणार्थानामपीत्संज्ञैवोचिता, अन्यथा तान्तस्य विधानमित्यस्याऽप्यापत्तेः। ध्वनितञ्चेदमदुङ्सूत्रे भाष्ये। तत्र हि–ङित्त्वाभावेऽदादेशे पूर्वसवर्णदीर्घमाशङ्क्याऽनुनासिकोपधत्वादिति समाहितं न तूच्चारणार्थत्वादिति। किञ्च द्वितीयवर्णोच्चारणे सहायसंपादनेन चरितार्थेषु तत्रतत्र विशेषणार्थेष्विव हलन्त्यसूत्राऽप्रवृत्तौ मानाभावः। अत एव 'तस्य लोप' इति सूत्रमनुबन्धानामेकान्तत्वपक्षे 'दिव औ'दित्यादीनां सर्वादेशत्वापादनं भाष्ये कृतं। 'तित्स्वरित'मिति सूत्रे च भाष्ये 'तिति प्रत्ययग्रहणं कर्त्तव्य'मिति वार्त्तिकस्य 'द्युभ्या'मित्यादौ तदभावः फल'मित्युक्तं। दित्वमाश्रित्य च प्रत्याख्यातन्तदित्यन्यत्। किञ्चादेशेषु सर्वत्र तकाराणामुच्चारणार्थत्वेनेत्संज्ञकत्वाऽभावात्तिति प्रत्ययग्रहणं व्यर्थमेव स्यात्। तथा विधेयविषये उच्चारणार्थानामचामप्यनुनासिकत्वेनेत्संज्ञा। अत एव 'वेरपृक्तस्ये'त्यत्राऽपृक्तग्रहणाऽभावे 'दर्वि'रित्यत्र लोपमाशङ्क्य 'अनुनासिकपरस्य वेर्ग्रहण'मिति भाष्ये उक्तम्। अत एवेदितो नुमिति सूत्रे भाष्ये 'धातो'रित्यस्याऽभावे सिच इदित्त्वादभैत्सीदित्यादौ नुममाशङ्क्य सजादेशकरणेन समाहितम्, न तु सिच इकारस्योच्चारणार्थत्वादिदित्त्वाभावेन। ल्युडादावुकारस्याऽनाऽकाभ्यामेव निवृत्तिरिति न तस्येत्संज्ञा, अनुनासिकत्वाभावात्। अत एव नन्द्यादिभ्यो ल्युप्रत्यये 'नन्दने'ति टाबन्तप्रयोगो 'गाङ् लिटी'ति सूत्रे भाष्ये। 'ल्युः कर्त्तरि पुंसी'ति त्वमरस्य प्रमादः। अनुवादविषये तु हलन्त्यसूत्रभाष्योक्तरीत्या तेषां व्यवसिताऽन्त्यत्वाभावेन फलाऽभावेन चेत्संज्ञाशास्त्राऽप्रवृत्तेरुच्चारणार्थवर्णसहितसमुदायस्य तद्ग्रहिते लक्षणा। विधौ तु नोचिता सा, 'न विधौ परः शब्दार्थ' इति न्यायात्। 'णौ गमि'रित्यादीनां नुम् तु न, स्थानिवद्भावेन भाव्यातिदेशिकधातुत्वं गृहीत्वैकः सत्त्वात्। 'गमेरि'ङितिवच्च नोपधालोपः। अत एव सुबुत्पत्तिः। अन्यथा 'हनो वध लिङी'ति वत्सा न स्यात्। 'अस्तेर्भूरित्यत्रापि निर्विसर्ग एव पाठ' इति केचित्। एवञ्चाऽत्र 'तित्स्वरित'मिति स्वरितापत्तिरिति चेन्न, दिव इत्यस्यानेन संसनधर्मि-

अल्विधित्वेन स्थानिवत्त्वाऽभावाद्धल्ङ्याबिति सुलोपो न। सुद्यौः। सुदिवौ। सुदिवः। सुदिवम्। सुदिवौ॥ **दिव उत्** ।६।१।१३१। दिवोऽन्तादेश उकारः स्यात्पदान्ते। सुद्युभ्याम्। सुद्युभिः। [ **इति वान्ताः** । ]॥

चत्वारः। चतुरः। चतुर्भिः। चतुर्भ्यः। चतुर्भ्यः। **षट्चतुर्भ्यश्च** ।७।१।५५। षट्संज्ञकेभ्यश्चतुरश्च परस्याऽऽमो नुडागमः स्यात्। णत्वम्। द्वित्वम्। चतुर्ण्णाम्॥

---

'दिव औ'दित्यस्यापि प्रसक्तिसंभवादिति दिक्॥ **दिव उत्**। तपरकरणमिह 'द्युभ्या'मित्यादावुकारस्य संप्रसारणत्वात् 'हलः' इति दीर्घे प्राप्ते तन्निवारणायेत्याहुः॥**इति वान्ताः**॥

**चत्वार इति**। 'चतेरुरन्' इत्युरन्प्रत्ययान्तश्चतुर्शब्दः। ततो जसि 'चतुरनडुहो'रित्याम्। **षट्चतुर्भ्यश्च**। बहुवचननिर्देशादर्थस्य प्राधान्यं विवक्षितम्। अर्थाच्चाऽऽमः परत्वं शब्दद्वारकं, तेन तदन्तविधौ सत्यपि 'परमचतुर्णा'मित्यादावेव भवति, न तु बहुव्रीहौ। तदेतद्वक्ष्यति—'गौणत्वे तु नुण्नेष्यते' इत्यादिना।

---

णो हलः स्थाने जायमानौकारस्याऽनुदात्तत्वेनेकारस्य यण्युदात्तस्वरितयोर्यण इति स्वरितसिद्ध्या फलाऽभावात्। 'तिति प्रत्ययग्रहणं कर्त्तव्य'मिति वार्त्तिकेन तदप्राप्तेश्च। 'अन्तोदात्तं द्यौ'रिति तु द्योशब्दस्य बोद्धव्यम्। **अल्विधित्वेनेति**। 'अनल्विधा'वित्यत्र पञ्चमीसमासस्याप्याश्रयणादिति भावः। **पदान्त इति**। ('एङः) पदान्ता'दित्यनुवृत्तस्य विभक्तिविपरिणाम इति भावः। अयमुकारोऽन्तोदात्तो निपात्यते, तेन 'द्युभिरक्तुभि'रित्यादौ पठ्यमानमन्तोदात्तत्वं सिद्धम्। अत्र यथा 'हल' इति दीर्घो न तथोक्तम्। उतस्तपरत्वन्तु 'भाव्यमानोऽप्युकारः सवर्णग्राहक' इत्यर्थज्ञापनार्थमिति 'तित्स्वरित'मिति सूत्रे भाष्ये उक्तम्। 'द्युभ्या'मित्यत्रोठ् न, 'क्ङिती'त्यनुवृत्तेः। यत्त्वस्मात्तपरत्वात्कुरुतइत्यादावुदितितपरत्वाद्गुणाऽभावो यथा स्थानिवत्सूत्रे भाष्ये उक्तस्तथा प्रकृते दीर्घाभाव इति कैयटः, तदेतेन परास्तम्। दीर्घस्य बहिरङ्गतया तेन व्यावृत्तेरशक्यत्वाच्च। अत एव 'ॠत इ'दिति तपरत्वेन 'चिकीर्षती'त्यादौ 'हलि चे'ति दीर्घस्य न व्यावृत्तिः। अत एव 'घूच' इत्यादौ 'चा'विति दीर्घसिद्धिः॥

**षट्चतु**। रेफान्तस्य षट्संज्ञैव तु न कृता, 'चत्वार' इत्यत्र लुगापत्तेः। तत्र 'रो नें'त्युक्तौ तु पदलाघवाऽभावः। केचित्तु 'प'डित्यादि पदाद्यर्थंपरम्। अर्थात्परत्वञ्चाऽऽमः शब्दद्वारकं, स चाऽर्थः प्रधान एवेति न गौणेऽतिप्रसङ्ग इति, तन्न; 'शब्दद्वारक'मित्यस्य शब्दनिष्ठपरत्वाद्यवधित्वस्य परत्वस्य वाऽर्थे आरोप इत्यर्थः। एवञ्च गौणत्वात्तत्र संबन्धे तन्निरूपितसंबन्धे च न विभक्तिः। परंपरासंबन्धेनाऽन्वय इत्यपि न, प्रकृतिप्रत्ययार्थयोः साक्षात्संबन्धेन क्लृप्तस्याऽन्वयस्य भङ्गापत्तेः। अत एव 'गङ्गायां घोष' इत्यादौ गौणाधारादावधिकरणत्वादिनिमित्ता विभक्तिः स्वरितत्वप्रतिज्ञादिना भाष्ये साधिता। अत एवेदृशस्थले षष्ठ्यपि न। अत एव 'स्त्रियाः पुंव'दिति सूत्रे 'स्त्रिया इत्यर्थग्रहण'मिति पक्षे भाष्यकृतोक्तं—'भाषितपुंस्कानुपपत्तिश्च, न ह्यर्थेन पौर्वापर्यमस्ती'ति। 'दिक्शब्दयोगे'इत्यस्य दिक्शब्दार्थान्वयभूतेऽवधित्वादौ संबन्धे पञ्चमीत्यर्थः। स च संबन्धो मुख्य एव, साक्षात्संबन्ध एव न गृहीतमुचित इति दिक्। ... द्वित्वमिति।

**रोः सुपि** ।८।३।१६। सप्तमीबहुवचने परे रोरेव विसर्जनीयो नाऽन्यरेफस्य। षत्वम्। षस्य द्वित्वे प्राप्ते-॥ **शरोऽचि** ।८।४।४९। अचि परे शरो न द्वे स्तः। चतुर्षु॥ प्रियचत्वाः। हे प्रियचत्वः। प्रियचत्वारौ। प्रियचत्वारः। गौणत्वे तु नुण्नेष्यते। प्रियचतुराम्। प्राधान्ये तु स्यादेव-परमचतुर्णाम्। [ **इति रान्ताः**। ]।

---

**द्वित्वमिति**। 'अचो रहाभ्या'मित्यनेन। **रोः सुपि**। 'सुपी'ति न प्रत्याहारः, 'खरी'त्यनुवृत्तेः। तेन 'पयोभ्या'मित्यादौ विध्यर्थमेतन्न भवति। 'खरवसानयो'रित्येव सिद्धेऽयमारम्भो नियमार्थमित्याह-**रोरेवेति**। 'रोः सुप्येव विसर्जनीयः' इति विपरीतनियमस्त्विह न भवति, 'हलोऽनन्तराः संयोगः' इत्यादिनिर्देशात्। **शरोऽचि**। 'अचो रहाभ्या'मित्यतो 'द्वे'इति, 'नादिन्याक्रोशे'इत्यतो 'ने'ति चानुवर्तत इत्याह-**न द्वे स्त इति**। नन्वस्तु द्वित्वमेकस्य, 'झरो झरि सवर्णे'इति लोपे सिद्धमिष्टम्, मैवम्, लोपस्य वैकल्पिकत्वेन पक्षे द्वयोः श्रवणप्रसङ्गात्॥ प्रियाः चत्वारश्चत्वारि वा यस्य स **'प्रियचत्वाः'**। आङ्गत्वात्तदन्तस्यापि 'चतुरनडुहो'रित्याम्। **'हे प्रियचत्व'** इत्यत्र तु 'अम्संबुद्धौ'इत्यम्। **इति रान्ताः**।

---

ननु 'पूर्वत्रासिद्धीयमद्वित्वे'इति णत्वात्पूर्वमेव द्वित्वं युक्तम्, 'वाक्' 'वाक्क्' इति भाष्योदाहरणसिद्धये वर्णद्वित्वेऽपि तत्प्रवृत्तेरावश्यकत्वात्। अन्यथा चर्त्वस्याऽसिद्धत्वाद्गस्यैव द्वित्वेऽन्त्यस्य चर्त्वे पूर्वग श्रवणापत्तिः। अवसाने चर्त्वस्याऽसिद्धत्वात्खर्परत्वाभावेन तस्य चर्त्वसंभावनापि न। न च कस्य द्वित्वेऽपि अवसाने चर्त्वस्यासिद्धत्वाद्गकारे झशि परे पूर्वस्य जश्त्वे उक्तरीत्यैव चर्त्वाऽभावे गश्रवणं दुर्वारमिति वाच्यम्, 'न मु ने'इतिवत् 'पूर्वत्रासिद्धीय'मित्यस्य द्वित्वे कृतेऽपि प्रत्यासत्त्या द्वित्वाश्रयस्य कार्ये कर्त्तव्येऽसिद्धत्वं नेत्यप्यर्थ इति न दोषः। एतेन 'द्वित्वे परसवर्णत्वं सिद्धं वक्तव्यं, सँय्यन्तेत्यत्र त्रियकारकत्वार्थ'मिति वचनसामर्थ्येन वर्णद्वित्वे तदप्रवृत्ति'रित्यपास्तम्। एतदवयुत्याऽनुवादरूपत्वादिति चेन्न; 'पूर्वत्रासिद्धीय'मित्यस्य द्वित्वे कर्तव्येऽन्यदसिद्धं नेत्येवाऽर्थो न तु द्वित्वस्याऽप्यसिद्धत्वं नेति तदर्थं इति णत्वोत्तरमेव द्वित्वमिति भावः॥

**रोः सुपि**। अत्र 'खरी'त्यनुवर्त्तते, तेन सप्तमी बहुवचनमेवाऽत्र सुप्। एवञ्च 'खरवसानयो'रिति सिद्धे इतरनिवृत्तिफलक एवैष विधिरित्याह-**रोरेवेति**। विपरीतनियमस्तु न, 'हलोऽनन्तराः संयोग' इति निर्देशात्। **द्वित्वे इति**। 'अचो रहाभ्या'मित्यनेन। 'अचो रहे'त्यतो 'द्वे'इति 'नादिनी'त्यतो 'ने'ति च वर्तते, तदाह-**न द्वे स्त इति**। 'झरो झरी'ति लोपस्तु वैकल्पिकः। **प्रियचत्वा (र) इति**। आङ्गत्वात्तदन्तस्यापि 'चतुरनडुहो'रित्याम्। **गौणत्वे त्विति**। अत्र यद्वक्तव्यं तन्नामीत्यत्रोक्तम्। यत्तु'ष्णान्ते'त्यत्र सङ्ख्यापदानुवृत्तेस्तस्य च सङ्ख्याबोधकशब्दपरत्वात्प्रधानन्यायेन सङ्ख्यारूपार्थस्याऽनुपसर्जनस्यैव ग्रहणमित्याशयेन ... सङ्ख्यापदेन च सङ्ख्येयमुच्यतेऽतः सङ्ख्येयपर-

कमलं कमलां वाऽऽचक्षाणः-कमल् । कमलौ । कमलः । पत्वं कमल्षु । [ इति लान्ताः ]। **मो नो धातोः** ।८।२।४६। धातोर्मस्य नः स्यात्पदान्ते । नत्वस्यासिद्धत्वान्नलोपो न । प्रशाम्यतीति प्रशान् । प्रशामौ । प्रशामः । प्रशान्भ्यामित्यादि ॥

**किमः कः** ।७।२।१०३। किमः कः स्याद्विभक्तौ । अकच्सहितस्याप्ययमादेशः,

---

**कमलामिति** । 'कमला श्रीर्हरिप्रिये'त्यमरः। **कमलिति** । 'तत्करोति तदाचष्टे' इति णिचीष्ठवद्भावाट्टिलोपः । णिजन्तात्क्विपि 'णेरनिटी'ति णिलोपः । एवं सलिलमाचक्षाणः—'सलिल्' 'सलिलौ' 'सलिल' इत्यादि बोध्यम् । नन्वेवं तोयमाचक्षाणस्तोय् तोयौ तोय इति यान्ता अपि सुसाधाः । न च 'वेरपृक्तलोपाद्वलि लोपः पूर्वविप्रतिषेधेने'ति यलोपः शङ्क्यः, 'लोपो व्योर्वली'ति लोपे कर्तव्ये णिलोपस्य टिलोपस्य वा स्थानिवद्भावेन यकारस्य वल्परत्वाभावादिति चेन्मैवम्, 'न पदान्ते'ति सूत्रेण यलोपे स्थानिवद्भावनिषेधात् । तस्माल्लोपो व्योर्वलीति यलोपः स्यादेवेति यान्ता नोक्ताः । **इति लान्ताः** ।

**पदान्त इति** । प्राचां तु 'झली'त्यप्युक्तं, तन्निष्फलत्वादुपेक्ष्यम् । **प्रशानिति** । 'शम उपशमे' क्विप् । 'अनुनासिकस्य क्वी'ति दीर्घः । **किमः कः** । 'कायतेर्डिमि'रिति डिमिप्रत्यये निष्पन्नः किंशब्दः । **विभक्ताविति** । 'अष्टन आ विभक्ता'वित्यतो ऽनुवर्तत इति भावः । नन्वेवं 'इमः' इत्येव सूत्र्यताम् ,तेन तिमष्टिमादीनां क्विबन्तानामतिप्रसङ्गवारणाय त्यदादीनामित्यनुवर्त्य 'त्यदादीनामिमः अः स्या'दिति व्याख्यास्यते ।[तदा] द्विशब्दात्प्राक्किंशब्दस्य पाठः कर्तव्यः । 'नानर्थके' इति निषेधादारम्भसामर्थ्याच्चालोन्त्यविधिर्न भविष्यति, तत्किं कादेशेनेत्यत आह—**अकच्सहितस्यापीति** । इमोऽकारविधौ तु

---

पञ्चादौ तस्य प्राधान्यात्संज्ञा सिद्धा । यद्वा 'प'ङ्डित्यन्वर्थसंज्ञेति न गौणे सेति । तन्न,—'प्रियपञ्चा द्रौपदी'त्यत्र 'न प'ङिति डाब्निषेधाऽनापत्तेः । आकडारसूत्रे भाष्येऽस्या 'डु'सञ्ज्ञया व्यवहाराच्च । सर्वनामसंज्ञावदत्रोपसर्जनप्रतिषेधानारम्भाच्च । सर्वनामसंज्ञासूत्रस्थेन 'षड्भ्य'इति सूत्रविषयभाष्येण विरोधापत्तेश्चेत्यलम् । **कमलिति** । 'तदाचष्टे'इति णिचीष्ठवद्भावाट्टिलोपे कर्तरि क्विपि 'णेरनिटी'ति णिलोपः । वस्तुतो लण्सूत्रे 'न हि पदान्ताः परेऽणः सन्ति, ननु चायमस्ति कर्तृ हर्तृ' इति भाष्याद्भोभगो इति सूत्रे 'वृक्षङ्करोती'ति भाष्यस्यैकदेश्युक्तित्वात्, 'कमल्' 'वृक्ष'वित्यादेरनभिधानमेवोचितम् । यान्तास्तु नैव सन्ति, क्विपि 'लोपो व्यो'रिति यलोपात् । णिलोपस्य स्थानिवत्त्वन्तु न, यलोपे तन्निषेधात् । **प्रशानिति** । शाम्यतेः क्विप् । 'अनुनासिकस्ये'ति दीर्घः । अयं शान्तिसाम्यान्यतरवद्वाचकः सत्त्ववाचीति—स्वरादिपाठेऽप्यस्य नाव्ययत्वम् । साम्यवाचिन्यसत्त्वार्थके तु स पाठः सार्थक इति दिक् । **विभक्ताविति** । 'अष्टन आ' इत्यतोऽनुवृत्तेरिति भावः ।

कः। कौ। के। कम्। कौ। कान्। इत्यादि सर्ववत् ॥ **इदमो मः** ।७।२।१०८। इदमो मस्यमः स्यात्सौ परे। त्यदाद्यत्वापवादः ॥ **इदोऽय् पुंसि** ।७।२।१११। इदम इदोऽय् स्यात्सौ पुंसि। सोर्लोपः। अयम्। त्यदाद्यत्वं पररूपत्वं च। **दश्च** ।७।२।१०९। इदमो दस्य मः स्याद्विभक्तौ। इमौ। इमे। त्यदादेः सम्बोधनं नास्तीत्युत्सर्गः ॥

**अनाप्यकः** ।७।२।११२। अककारस्येदम इदोऽन्स्यादापि विभक्तौ। 'आ'विति 'टा'इत्यारभ्य सुपः पकारेण प्रत्याहारः। अनेन ॥ **हलि लोपः**।७।२।११३। अककारस्येदम इदो लोपः स्यादापि हलादौ। **'नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे'**।

**आद्यन्तवदेकस्मिन्** ।१।१।२१। एकस्मिन्क्रियमाणं कार्यमादाविवाऽन्त इव स्यात्। आभ्याम् ॥

---

साकच्कस्य 'कक' इति रूपं स्यादिति भावः। नन्वेवं गणकार्यत्वाभावादुपसर्जनेऽपि स्यात्, मैवम्, 'त्यदादीना'मित्यनुवर्त्य 'त्यदादीनां किम' इति व्याख्यानात्।

**इदमो मः**। 'इन्देः कमिर्नलोपश्च'। इदम्। 'तदोः सः सौ' इत्यतोऽनुवर्तनादाह– **सौ पर इति। इदोऽय्**। पुंसीति किम्?। इयं स्त्री। **त्यदादेः संबोधनं नास्तीति**। प्रचुरप्रयोगाऽदर्शनमेवात्र मूलम्। **उत्सर्ग इति**। तेन 'तदोः सः सा'विति सूत्रे 'अनन्त्ययोरिति किं, हे स' इति भाष्यं, 'भो अच्युत' 'भवन्नच्युते'त्यादि प्रयोगाश्च न विरुध्यन्त इति भावः। **अनाप्यकः**। 'आ'विति प्रत्याहारो न तु टाप्, विभक्ताविति विशेषणादतो व्याचष्टे–**टा इत्यारभ्य सुपः पकारेणेति। नानर्थकेऽलोन्त्यविधिरिति**। नन्वेवं 'बिभर्ति' 'पिपर्ती'त्यादौ 'भृञामित्' 'अर्तिपिपर्त्योश्चे'तीत्त्वं सर्वस्याऽभ्यासस्य स्यात्, द्वित्वाऽभावे केवलस्याऽर्थवत्त्वेऽपि द्वित्वे सति समुदायस्यैवार्थवत्त्वादित्याशङ्कायामाह–**अनभ्यासविकार इति। आद्यन्तवत्**। 'सत्यन्यस्मिन्

---

**अकच्सहितस्यापीति**। तन्मध्यपतितन्यायेन तस्यापि किंशब्दत्वात्। अङ्गानपेक्षत्वेनान्तरङ्गत्वादादेशात्पूर्वमकच्। यद्यपि निर्दिश्यमानपरिभाषया न प्राप्नोति। अत एव 'भिन्धकी'त्यत्राऽकचि धित्वन्न प्राप्नोती'ति भाष्ये पूर्वपक्षं कृत्वाऽन्तरङ्गत्वाद्धित्वेऽक'जित्याद्युक्तम्, तथापि आवृत्त्याश्रयणेन साकच्कस्यादेश इति कैयटः। **इदमो मः**। 'तदोः सस्सा'वित्यतोऽनुवृत्तेराह–**साविति। इदोय्**। 'यः सा'वित्यतः 'सा'विति वर्त्तते। **दश्च**। इह 'अष्टन' इत्यतो 'विभक्ता'वित्यनुवर्त्तते, साविदमो दस्याऽसंभवात्, तदाह–**विभक्ताविति। अनाप्यकः**। 'आपि विभक्ता'विति इदमो विशेषणं न्याय्यत्वात्। **हलादाविति**। 'आपी'ति वर्त्तते। 'हल्य'शिति वक्तुं युक्तम्। 'अक' इति पर्युदासादिदं गौणे न प्रवर्त्तते इत्याहुः। नन्विदोऽन्त्यस्य लोपः स्यादत आह– **नानर्थके इति**। इयमुपधासंज्ञासूत्रे भाष्ये स्पष्टा, फलानामन्यथोपपादनेन भाष्ये प्रत्याख्याता च। प्रत्याख्याने'ऽनापी'त्यतोऽनित्यनुवर्त्य 'हली'ति

**नेदमदसोरकोः** ।७।१।११। अककारयोरिदमदसोर्भिस ऐस्न स्यात् । एत्वम् । एभिः । अत्वम् । नित्यत्वाण्ङेः स्मै पश्चाद्धलि लोपः । अस्मै । आभ्याम् । एभ्यः । अस्मात् । आभ्याम् । एभ्यः । अस्य । अनयोः । एषाम् । अस्मिन् । अनयोः । एषु ॥

---

यस्य पूर्वो नास्ति स आदिः', 'सत्यन्यस्मिन्यस्य परो नास्ति सोऽन्तः' इति लोके प्रसिद्धं, तदुभयमेकस्मिन्नसहाये न संभवतीति तत्राद्यन्तव्यपदिष्टानि कार्याणि न स्युरतोऽयमतिदेश आरभ्यते । न च परत्वा'सुपि चे'ति दीर्घे पश्चाद्धलि लोपे सति-आभ्यामित्यादि सिध्यतीति किमत्राद्यन्तवत्सूत्रोपन्यासेनेति शङ्क्यम्, नित्यत्वाद्धलि लोप इत्यस्य दीर्घात्पूर्वमेव प्रवृत्तेः । 'एकस्मि'न्नित्युपमेये सप्तमीदर्शनात्सप्तम्यर्थ एव वति-रित्यभिप्रेत्याह-**आदाविवान्त इवेति** । आदिवत्किम् ? । औपगवः । अत्राऽण आद्युदात्तत्वं यथा स्यात् । भाष्ये त्वाद्यन्तवदित्यपनीय 'व्यपदेशिवदेकस्मि'न्निति सूत्रमूहितम् । विशिष्टोऽपदेशो व्यपदेशः-मुख्यो व्यवहारः । सोऽस्यातीति व्यपदेशी, मुख्य इति यावत् । तेन तुल्यगेकस्मिन्नसहायेऽपि कार्यं स्यादित्यर्थः । तेन 'इयाय' 'आरे'त्यादौ 'एकाचः' इति द्वित्वं सिध्यति । अन्यथा आद्यन्तोपदिष्टत्वाभावाद्द्वित्वं न स्यादिति दिक् । **नेदमदसोः** । भाष्ये तु 'इदमदसोः कात्' । नियमार्थमिदम् । 'इदमदसोः कादेव भिस ऐस् नान्यतः' इति स्थितम् । नव्यास्तु-'इदमदसोः का'दिति सूत्रिते तु 'काद्भिस ऐस् इदमदसोरेवे'ति विपरीतनियमोऽपि संभाव्येत । तथाच 'पाचकै'रित्यादि न सिध्येत् । किं तु 'इदमदसोः काद्भिस ऐस्' 'अतः' इत्येव सूत्रद्वयं सुवचमित्याहुः ॥

स्मायादेशात्परत्वादनादेशः स्यादित्याशङ्कायामाह-**नित्यत्वाण्ङेः स्मै इति** ।

---

सप्तम्याः षष्ठीं प्रकल्प्याऽन एवालोन्त्यस्येतिनलोपे पररूपे चेष्टसिद्धिर्बोद्धया । ननु दीर्घापेक्षया लोपस्य नित्यत्वात्पूर्वं लोपे 'अ-भ्या'मिति स्थितेऽङ्गस्याऽकाररूपत्वेनाऽदन्तत्वाभावाद्दीर्घो न स्यादित्यत आह-**आद्यन्तवदिति** । 'आदिरन्त्येने'ति सूत्रोक्तरीत्याद्यन्तशब्दयोर्विशिष्टशक्तत्तया तत्प्रयुक्तकार्याण्यसहाये न स्युरित्ययमारम्भः । **एकस्मिन्निति** । असहाये इत्यर्थः । तदादितदन्तयोः क्रियमाणं कार्यन्तदादौ तदन्त इवाऽसहायेपि स्यादित्यन्वयः । उपमेये सप्तमीदर्शनात्सप्तम्यन्तादिवार्थे वतिस्तदाह-**आदाविवेति** । 'एकस्मि'न्नित्युक्तेर्दरिद्रातेरिवर्णान्तलक्षणोऽत्र । आदिवत्त्वफलमौपगवेऽण आद्युदात्तत्वम् । कार्यस्य प्राधान्यादयमपि कार्यातिदेश एव, तदाह-**कार्यमिति** । नन्विद-ए इतिस्थिते स्मैभावात्परत्वादनादेशे सकृद्गताविति न्यायेन स्मैनं स्यादत आह-**नित्यत्वादिति** । स्मायादेशे तु नाऽनादेशो, हलिलोपेन बाधात् । लक्ष्यानुरोधेन बाधकाऽबाधितकृताऽकृतप्रसङ्गस्यैवाऽत्र ग्रहणात् ।

'अकोऽको'रित्यनयोः फलमाह-**ककारयोगे त्विति** । 'अव्ययसर्वनाम्ना'मित्यकचीति भावः । अनुयाङ्नवयवत्वेपि तन्मद्ध्यपतितन्यायात्तद्विशिष्टे प्राप्तिरिति बोद्धव्यम् ॥

ककारयोगे तु-अयकम् । इमकौ । इमके । इमकम् । इमकौ । इमकान् । इमकेन । इमकाभ्याम् । इमकैः ॥ **इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ** ।२।४।३२। अन्वादेशविषयस्येदमोऽनुदात्तोऽशादेशः स्यात्तृतीयादौ । अश्वचनं साकच्कार्थम् ॥ **द्वितीयाटौस्स्वेनः** ।२।४।३४। द्वितीयायां टौसोश्च परत इदमेतदोरेनादेशः स्यादन्वादेशे । किञ्चित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः । यथा'ऽनेन व्याकरणमधीतमेनं छन्दोऽध्यापये'ति । 'अनयोः पवित्रं कुलमेनयोः प्रभूतं स्व'मिति । एनम् । एनौ । एनान् । एनेन । एनयोः २॥[ **इति मान्ताः** । ]।

गणयतेर्विच् । सुगण् । सुगणौ । सुगणः । सुगण्ठ्सु । सुगण्ट्सु । सुगण्सु । क्विप् । 'अनुनासिकस्य क्विझलो'रिति दीर्घः । सुगाण् । सुगाणौ । सुगाणः । सुगा-

---

**इदमोऽन्वादेशे** । नन्विदमोऽनुदात्तमात्रविधावपि हलि लोपेन 'आभ्या'मित्यादि समीहितरूपं सिध्यति, 'एनेन' 'एनयो'रित्यत्र तु विशिष्यैनादेशो विहितः, किमनेनाश्वचनेनेत्यत आह-**साकच्कार्थमिति** । यद्यपीह शित्करणं व्यर्थम् , अकारस्याऽकारविधानसामर्थ्यादेव सर्वादेशसिद्धेः,तथाप्यनुदात्तत्वार्थमेवाऽकारविधानमित्याशङ्का स्यात्तन्निवारणाय शित्करणमित्याहुः । 'अ-अ'इति प्रश्लिष्य निर्देशे त्वनेकाल्त्वादेव सर्वादेशसिद्धेः शिद्ग्रहणं त्यक्तुं शक्यमित्याकरः । **द्वितीयाटौस्सु** । 'इदमोऽन्वादेशे' इत्यतः 'इदम' इत्यनुवर्तते, 'अन्वादेश' इति च । 'एतदस्त्रतसो'रित्यत 'एतद' इत्यपि, तदाह-**इदमेतदोरेनादेश इत्यादि** । 'अनुदात्त' इत्यनुवर्तनादेनादेशोऽनुदात्त इति ज्ञेयः । **कार्यं विधातुमिति** । अपूर्वं बोधयितुमित्यर्थः । 'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्या'दित्यत्र तु ईषदर्थादयो न विधीयन्ते किंत्वनूद्यते इति तत्रैनादेशः । एतेन 'नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापये'त्यपि व्याख्यातम् । भीरुत्वस्याऽनुवाद्यत्वेन विवक्षितत्वात् । **इति मान्ताः** ॥

---

**इदमोऽन्वा** । अनुदात्तत्वमाभ्यामित्यादावूडिदमिति 'सावेकाच' इति वा विभक्त्युदात्तत्वाभावाय, उयत्राप्यनुवृत्त्यपकर्षाभ्यामन्तोदात्तादित्यस्य संबन्धात् । एवञ्चाऽऽभ्यामित्यादि सर्वानुदात्तम् । 'एभिरग्ने प्रेपान्तदेपा'मित्यादौ तथा श्रवणात् । नन्वेवमप्यत्वे हलि लोपेनाऽऽभ्यामित्यादेरनुदात्तत्वेनैव सिद्धावश्विधानं व्यर्थमत आह-**साकच्कार्थमिति** । शित्त्वात्सर्वादेश इति भावः । संज्ञोपसर्जनयोस्तु नेदम् , 'एतदस्त्रतसो'रित्युत्तरसूत्रसाहचर्यात् । न च त्यदाद्यत्वेन सिद्धेऽकारविधानमेव साकचि सर्वादेशार्थं भविष्यति किं शित्त्वेनेति वाच्यम्, अन्याऽर्थतापत्तेः ॥

**द्वितीयाटौ** । पूर्वसूत्रादिदम इति, 'एतदस्त्रतसो'रित्यत 'एतद' इति चाऽनुवर्त्तते, 'अनुदात्त'इति च । **विधातुमिति** । विधानमत्राऽज्ञातज्ञापनमेव न तु प्रवर्त्तनाविषयत्वं, तच्चेदमेवेति नाग्रहः । स्वसु-

ण्ठ्सु । सुगाण्ट्सु । सुगाण्सु ॥ [इति णान्ताः]॥ परत्वादुपधादीर्घः । हल्ङ्यादिलोपः । ततो नलोपः । राजा ॥ **न ङिसंबुद्ध्योः** ।८।२।८। नस्य लोपो न स्यान्ङौ संबुद्धौ च । हे राजन् । ङौ तु छन्दस्युदाहरणम् । 'सुपां सुलु'गिति ङेर्लुक् । निषेधसामर्थ्यात्प्रत्ययलक्षणम् । परमे व्योमन् ॥ ❀ **ङावुत्तरपदे प्रतिषेधो वक्तव्यः** ॥ चर्मणि तिलाः—अस्य चर्मतिलः । ब्रह्मणि निष्ठा अस्य ब्रह्मनिष्ठः । राजानौ । राजानः । राजानम् । राजानौ । 'अल्लोपोऽनः' । श्चुत्वम् । न चाऽल्लोपः स्थानिवत् , पूर्वत्रासिद्धे तन्निषेधात् । नाऽपि बहिरङ्गतयाऽसिद्धः, यथोद्देशपक्षे षाष्ठीं परिभाषां प्रति श्चुत्वस्याऽसिद्धतयाऽन्तरङ्गाभावेन परिभाषाया अप्रवृत्तेः । ज्ञोर्ज्ञः । राज्ञः । राज्ञा ॥

---

**सुगाणिति** । क्विप् । न च 'अनुनासिकस्य क्वी'ति दीर्घे कर्तव्ये अल्लोपणिलोपयोः-स्थानिवद्भावः शङ्क्यः,दीर्घविधौ तन्निषेधात् । क्वौ विधिं प्रति निषेधाच्च । **इति णान्ताः** ।

**निषेधसामर्थ्यादिति** । यदा तु 'न ङिसंबुद्ध्यो'रित्यत्र षष्ठ्यन्तताामाश्रित्य 'ङ्यन्तस्य संबुद्ध्यन्तस्य च पदस्य लोपो ने'ति व्याख्यायते, तदा प्रत्ययलक्षणं सुलभमिति तदर्थं निषेधसामर्थ्यानुसरणक्लेशो न कर्तव्य इत्याहुः । पूर्वस्मादपि विधौ स्थानिवत्त्वमाशङ्क्याह—**न चेति** । **षाष्ठीं परिभाषामिति** । 'वाह ऊ'डित्यत्र ज्ञापितत्वेन

---

चेदं भाष्ये । **सुगण्ट्स्विति** । 'ङ्णो'रिति टुक् । तस्याऽसिद्धत्वान्न जश्त्वम् । **नलोप इति** । नकारलोप इत्यर्थः । न चाऽत्र प्रत्ययान्तत्वादप्रत्यय इति निषेधेन प्रातिपदिकत्वाऽभावात्कथं नलोप इति वाच्यं, पर्युदासे यथोद्देशेन सिद्धेः । न च कार्यकालपक्षे दोषः; व्यवस्थितपक्षद्वयमध्य एकतरपक्षेण लक्ष्यसिद्ध्या पक्षान्तरेण दोषदानस्य काऽप्यदृष्टत्वात् । ध्वनितश्चेदं प्रगृह्यसंज्ञाप्रकरणे भाष्ये । न च प्रसज्यप्रतिषेधे दोषः, तत्पक्षे लोपेनेव जातनिवृत्तेरपि तेन वक्तुं शक्यत्वादिति वाच्यम्, 'न ङिसंबुद्ध्यो'रिति निषेधेन प्रत्ययलक्षणेन प्रत्ययान्तत्वमादाय निषेधाऽप्रवृत्त्या दोषाऽभावात् । स्पष्टश्चेदमर्थवत्सूत्रे भाष्ये । **न ङि** । **ङौ तु च्छन्दसीति** । 'राजनी'त्यादौ भत्वान्नलोपाऽप्राप्तेः । 'राजनीवाचरती'त्यर्थेऽधिकरणाच्चेति क्यच् तु लोके नास्त्येव, अनभिधानात् । अत एव 'परमे व्योम'न्नित्यादावयस्मयादित्वाद्भत्वेन सूत्रस्थङिग्रहणप्रत्याख्यानं भाष्योक्तं सङ्गच्छतइति भावः ।

**सामर्थ्यादिति** । 'न लुमते'ति निषेधाऽनित्यत्वप्रतिपादनद्वारेत्यर्थः । एतदनित्यत्वबललब्धमेव 'वा नपुंसकाना'मिति बोद्धव्यम् । न च 'परमे व्योम'न्नित्यत्र घोषत्वाऽल्पप्राणत्वादिसादृश्येन पूर्वसवर्णे दकारे 'स्वादिष्वि'ति पूर्वस्य पदत्वात्प्राप्तनलोपनिषेधेनेदं चरितार्थमिति वाच्यम्, 'अन्तरङ्गानपी'ति न्यायेन संयोगान्तलोपस्याऽसिद्धत्वेन च पूर्वसवर्णेऽपि लुक एव प्राप्त्या प्रक्रियालाघवाय लुक एवौचित्यमित्याशयात् । स्पष्टश्चेदं भाष्ये । **ङावुत्तरपदे इति** । एतद्बललब्धमेव 'ङौ तु छन्दस्युदाहरण'-मित्युक्तम् । **न चेति** । पञ्चमीसमासेन प्राप्तिः । **षाष्ठीमिति** । 'वाह ऊ'डित्यत्र ज्ञापितत्वेन तद्देशस्थत्वादिति भावः । कार्यकालपक्षेऽपि निषेधात्प्रवृत्ति... आशुत्वात् । **ज्ञोर्ज्ञ इति** । ज्ञयोगे

**नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ।८।२।२।** सुब्विधौ स्वरविधौ संज्ञाविधौ कृतितुग्विधौ च नलोपोऽसिद्धो नान्यत्र 'राजाश्व'इत्यादौ । इत्यसिद्धत्वादात्वमेत्वमैस्त्वं च न । राजभ्याम् । राजभिः । राज्ञे । राजभ्यः । राज्ञः २ । राज्ञोः । राज्ञाम् । राज्ञि ।

तद्देशस्थत्वादिति भावः । **नलोपः सुप्स्वर।** 'पूर्वत्रासिद्ध'मित्यनेनैव सिद्धे नियमार्थोऽयमारम्भ इत्याह-**नान्यत्रेत्यादि ।** तेन 'राजाश्व'इत्यादौ सवर्णदीर्घे कर्तव्ये नलोपोऽसिद्धो न भवतीति भावः । सुब्विधिमुदाहरति-**आत्वमित्यादिना ।** सुबाश्रितो विधिः-सुब्विधिः । स्वरविधौ तु 'पञ्चार्मम्' । 'दिक्सङ्ख्ये संज्ञाया'मिति समासे नलोपे कृते अवर्णान्तं पूर्वपदं जातमिति 'अर्मे चाऽवर्णं द्व्यच्त्र्य'जिति पूर्वपदाद्युदात्तत्वं प्राप्तं नलोपस्यासिद्धत्वान्न भवति । संज्ञाविधौ 'पञ्चेत्यत्र नलोपे कृतेऽपी'त्यादिना स्त्रीप्रत्ययेषु वक्ष्यति । अन्ये तु-'दण्डिगुप्तौ' 'गुप्तदण्डिना'वित्यप्युदाहरन्ति । अत्र नलोपस्याऽसिद्धत्वाद्घिसंज्ञा नास्तीति 'द्वन्द्वे घी'ति पूर्वनिपातनियमो न भवतीत्याहुः । कृति तुग्विधौ तु वृत्रहभ्याम् । अत्र'ब्रह्मभ्रूणे'ति विहितं क्विपमाश्रित्य 'ह्रस्वस्ये'ति तुङ् । कृति तुग्विधाविति किम् ? । वृत्रहच्छत्रम् । इह स्यादेव 'छे चे'ति तुक् । यद्यपि'वृत्रहभ्या'मित्यत्र 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यनेनैव नलोपस्याऽसिद्धत्वं सिध्यति, तथाप्यस्याः परिभाषाया अनित्यत्वज्ञापनार्थं कृति तुग्ग्रहणं, तेन 'या' 'से'त्यादि सिध्यति । अन्यथा

लोकवेदसिद्धतादृग्ध्वनेर्लिपिविशेषस्य चाऽनुवादकमभियुक्तवचनं, न खिदं वर्णान्तरं, शिक्षादावपरिगणितत्वेन तत्सत्त्वे मानाऽभावात् । अत एव 'तज्ज्ञान'मित्यादौ श्चुत्वसिद्धिः । **सुब्विधाविति ।** सर्वविभक्त्यन्तावयवकः समास इति भाष्ये स्पष्टम् । 'विधि'शब्दो भावसाधनः, कर्मसाधनश्च । तत्र स्वरादिविषये भावसाधनः । सुब्विषये कर्मसाधनः । 'कृती'त्येतत्सामर्थ्यात्तुक एव विशेषणमित्याह-**कृति तुगिति।** 'पूर्वत्रासिद्ध'मित्येव सिद्धेऽन्यनिवृत्तिफलकोऽयं, तदाह-**नान्यत्रेति ।** अन्यनिवृत्तिफलकसिद्धविषयकविधित्वमेव **नियमत्वम् ।** अत एव पस्पशायां भाष्ये 'पञ्च पञ्चनखा भक्ष्या' इत्यत्र 'भक्ष्यनियमेऽभक्ष्यप्रतिषेधो गम्यते'इत्युक्तं, तदाह-**इत्यसिद्धत्वादिति।** इत्यन्यत्र विस्तरः । 'सुब्विधि'शब्देन सुप्त्वतद्व्याप्यधर्मावच्छिन्नोद्देश्यकविधेर्ग्रहणम् । एतेन 'दण्डि'ष्वित्यादौ षत्वरूपसुब्विधावप्राप्ताऽसिद्धत्वविधानार्थमिदमित्यपास्तम् । वैरूप्यापत्तेश्च। **संज्ञाविधौ**-दण्डिदत्तौ। दत्तदण्डिनौ । अत्र नलोपे दण्डिशब्दस्य घित्वे पूर्वनिपातापत्तिः । इष्यते त्वनियमः । असिद्धत्वे तु घित्वाभावात्सिद्ध्यति । न च पूर्वनिपाते नलोपो नलोपे च घित्वे पूर्वनिपात इत्ययुक्तम् । 'यस्य पूर्वपदत्वे घित्वं भावि तत्पूर्वमेव प्रयोक्तव्य'मिति सूत्रार्थान्न दोषः । न च घित्वे बहिरङ्गतया नलोपोऽसिद्ध इति वाच्यं, संज्ञाकृतबहिरङ्गत्वस्याऽनाश्रयणात् । **कृति तुग्विधौ**-वृत्रहभिः । कृतीति किम् ?, वृत्रहच्छत्रम् । अस्मादेव संज्ञाकृतं बहिर्भूतनिमित्तकसंज्ञाकृतञ्च बहिरङ्गत्वं परिभाषायां नाश्रीयते । अन्यथा 'वृत्रहभि'रित्यादौ बहिर्भूतनिमित्तकत्वाभावात् नलोपोऽसिद्धः स्यादिति तदैयर्थ्यं स्यात् ।

राजनि ॥ प्रतिदीव्यतीति प्रतिदिवा। प्रतिदिवानौ । प्रतिदिवानः। अस्य भविषये-ऽल्लोपे कृते-॥ **हलि च** ।८।२।७७। रेफवान्तस्य धातोरुपधाया इको दीर्घः स्याद्धलि। न चाऽल्लोपस्य स्थानिवत्त्वम्, दीर्घविधौ तन्निषेधात् । बहिरङ्गपरिभाषा तूक्तन्यायेन न प्रवर्तते । प्रतिदीव्नः । प्रतिदीव्नेत्यादि ॥ यज्वा । यज्वानौ । यज्वानः ।

विभक्त्याश्रयस्याऽत्वस्य बहिरङ्गत्वेनाऽसिद्धत्वाट्टाब्न स्यात्। एतच्च 'नाजानन्तर्ये बहिष्ट्व-प्रक्लृप्ति'रित्यत्र 'यत्रान्तरङ्गे बहिरङ्गे वाऽचोरानन्तर्य'मिति हरदत्तादिमतेन कैश्चिदुक्तम् । 'उत्तरकार्ये अच आनन्तर्य'मिति कैयटमते तु नाऽत्र बहिरङ्गपरिभाषा प्रवर्तते । 'या''से'-त्यत्र टाप्तु संनिपातपरिभाषामपि बाधित्वा 'न यासयो'रिति निर्देशादेव सिध्यतीति ज्ञेयम् । **प्रतिदिवेति** । 'कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः' इति कनिन् ।

**हलि च** । 'र्वोरुपधाया दीर्घ इकः' इत्यनुवर्तते, 'सिपि धातोः' इत्यतो 'धातो'रिति च, तच्च धातुग्रहणं 'र्वो'रित्यनेन विशेष्यते, विशेषणेन तदन्तविधिस्तदाह–**रेफवान्तस्य धातोरित्यादि** । रेफान्तस्य तु 'गीर्यति' 'पूर्यति''गीर्ण''पूर्ण'मित्याद्युदाहरणानि। धातोः किम् ?। रेफान्तस्य पदस्य मा भूत् । अग्निः करोति। वायुः करोति।

नन्वस्तु धातोरनुवर्तनं परंतु 'र्वो'रित्यनेन धातुर्न विशेष्यते-'रेफवान्तस्य धातो'-रिति, किं तु इग्विशेष्यते,–'रेफवान्तस्येको दीर्घः स्यात्तौ च रेफवकारौ धातोश्चेत्'। अन्त-शब्दोऽत्र समीपवाची । तथाच 'उपधायां चे'ति सूत्रं त्यक्तुं शक्यम्, अनेनैव मूर्छति-हूर्छतीत्यादिरूपसिद्धेरिति चेन्मैवम्। 'कुर्कुरीयती'त्यादावतिप्रसङ्गः स्यात् । तस्मात् 'र्वो'रित्यनेन धातुरेव विशेष्यः । एतच्चाकरे स्पष्टम् । यत्तु 'उपधायां चे'ति कैश्चिदुप-न्यस्तम्, तन्न, दिवेर्वकारस्याऽनुपधात्वात् ।

**उक्तन्यायेनेति** । यथोद्देशपक्षे षाष्ठीं परिभाषां प्रति दीर्घस्याऽसिद्धतयेत्यर्थः । **प्रतिदीव्न इति** । 'न भकुर्छुरा'मित्यत्र 'र्वो'रित्यनुवर्तनाद्रेफवान्तस्यैव भस्य निषेध इति

भाष्ये तु सन्निपातपरिभाषया 'वृत्रहभि'रित्यादौ तुकं व्यावर्त्येदं प्रत्याख्यातम् । पदत्वद्वारा लोपस्य भिस्सन्निपातनिमित्तकत्वात्। सन्निपाताऽनिमित्तकनलोपविषयाणां 'वृत्रहधन'मित्यादीनामनभिधान-मिति तदाशयः । तदभावे 'कृती'त्यपि व्यर्थमेव । न च सन्निपातपरिभाषया तुङ्मात्रव्यावृत्तौ प्राप्तायां नियमार्थं 'कृती'ति, 'कृति तुगेव न अन्यस्तु भवत्येवे'ति वाच्यं, 'वृत्रहच्छत्र'मित्यत्र नलोपस्य सन्नि-पातलक्षणत्वाऽभावादिति दिक् । **राजनीति** । 'विभाषा ङिश्यो'रित्यल्लोपविकल्पः । **प्रतिदिवेति** । कनिन्नन्तम्॥ **हलि च** । 'र्वोरुपधाया' इति सूत्रं, 'सिपि धातो'रित्यतो 'धातो'रिति चानुवर्त्तते। 'र्वो'रिति च धातोर्विशेषणम् । 'पदस्ये'ति संबध्यमानमपीक एव व्यधिकरणं विशेषणं, तद्ध्वनयन्नाह–**प्रतिदीव्न इति** । अत्र तान्तस्य भत्वाभावान्न भकुर्छुरामिति निषेधो न । धातोः किम् ? अग्निः करोति ।

**न संयोगाद्वमन्तात्** ।६।४।१३७। वकारमकारान्तसंयोगात्परस्याऽनोऽकारस्य लोपो न स्यात् । यज्वनः । यज्वना । यज्वभ्यामित्यादि । ब्रह्मणः । ब्रह्मणा । ब्रह्मभ्यामित्यादि ॥ **इन्हन्पूषार्यम्णां शौ** ।६।४।१२। एषां शावेवोपधाया दीर्घो नान्यत्र । इति निषेधे प्राप्ते-॥ **सौ च** ।६।४।१३। इन्नादीनामुपधाया दीर्घः स्यादसंबुद्धौ सौ परे । वृत्रहा । हे वृत्रहन् । 'एकाजुत्तरपदे' इति णत्वम् । वृत्रहणौ वृत्रहणः । वृत्रहणम् । वृत्रहणौ ॥

**हो हन्तेर्ञ्णिन्नेषु** ।७।३।५४। ञिति णिति च प्रत्यये नकारे च परे हन्तेर्हकारस्य

---

न दीर्घनिषेधोऽत्र शङ्क्यो, नान्तस्येह भत्वात् । **यज्वेति** । इष्टवान्यज्वा । 'सुयजोर्ङ्वनिप्' । **ब्रह्मण इति** । 'सर्वधातुभ्यो मनि'न्निति प्रक्रम्य 'बृंहेर्नोऽच्चे'ति नस्याऽत्वविधानाद्ब्रह्मन्शब्दोऽयं निष्पन्नः । **इन्हन्** । 'सर्वनामस्थाने चासंबुद्धा'वित्यनेनैव सिद्धे नियमार्थमिदं, तदाह-**शावेवोपधाया इति** । उपधादीर्घमात्रस्यायं नियमः । तेन 'वृत्रहायते'इत्यत्र 'अकृत्सार्वधातुकयो'रिति दीर्घो भवत्येव । 'वृत्रहणी'इत्यत्र 'अनुनासिकस्य क्विझलो'रिति यो दीर्घः सोऽपि नियमेन व्यावर्त्यते । उपधादीर्घमात्रापेक्षया नियमविज्ञानादिति तु मनोरमायां स्थितम् । शावेवेति नियमादीर्घस्याऽप्राप्तावाह-**सौ चेति** । 'शिस्वो'रिति वक्तव्ये योगविभाग उत्तरार्थः । **वृत्रहेति** । वृत्रं हतवान् । 'ब्रह्मभ्रूणे'ति क्विप् । **हन्तेर्हस्येति** । 'ञिति' 'णिती'त्येतद्धन्तेर्विशेषणम्, 'नकारे' इति तु 'हस्ये'ति यथासंभवं बोध्यम् । यद्वा ञिण्गिन्नाः सर्वेऽपि हस्यैव विशेषणं । ञिति णितीत्यंशे येन नाव्यवधानन्यायेन द्वाभ्यां व्यवधानं स्वीक्रियते । तेन 'घातः' 'घातक' इत्यत्र कुत्वं भवति । इह तु न भवति, हननमात्मन इच्छति हननीयति । हननीयतेर्ण्वुल्-'हननीयक' इति । एतच्च भाष्यकैयटादौ स्पष्टम् ।

---

**न संयोगा** । 'अन्त'ग्रहणं स्पष्टार्थं, संयोगस्य वमाभ्यां विशेषणेन तदन्तलाभात् । **इनहन्पूषार्यम्णां शाविति** । 'सर्वनामस्थाने चासंबुद्धा'वित्येव सिद्धे नियमोऽयमित्याह-**शावेवेति** । **उपधाया इति** । तेनाऽनुनासिकस्येत्यस्याऽपि नियम इति भावः । अत्र सर्वनामस्थानग्रहणं न संबध्यते, तेन 'वृत्रहणी' 'वृत्रघ्नः' 'वृत्रघ्नी'त्यादौ नाऽनुनासिकस्येति दीर्घः । **इति निषेध इति** । एतत्फलभूते निषेध इत्यर्थः । 'शिस्वो'रिति वक्तव्ये 'सौ चे'ति योगविभाग उत्तरार्थः । **हो हन्ते** । ञ्णिन्नकारा हस्यैव विशेषणम् । तत्र ञ्णिद्विषये येननाव्यवधानन्यायेन द्वाभ्यां व्यवाये 'घातक' इत्यादावेव न तु हननीयतेर्ण्वुल्यनेकव्यवधाने । इदं 'धातोः कार्यमुच्यमान'मितिपरिभाषया धातुसंशब्देन विहितप्रत्यय एव, तेन वृत्रहणमाचष्टे 'वृत्रहयती'त्यादौ न । ने परे तु 'वृत्रघ्न' इत्यादावेव, स्थानिवत्त्वकृतव्यवधानेऽपि श्रौताऽव्यवधानसत्त्वात्, न तु 'हतन'मित्यादौ श्रौतव्यवधाने इति स्पष्टं भाष्ये ॥

कुत्वं स्यात् ॥ **हन्तेः** ।८।४।२२। उपसर्गस्थान्निमित्तात्परस्य हन्तेर्नस्य णत्वं नान्यस्य । प्रहण्यात् । **अत्पूर्वस्य** ।८।४।२२। हन्तेरत्पूर्वस्यैव नस्य णत्वं नान्यस्य । प्रघ्नन्ति । योगविभागसामर्थ्यादनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति न्यायं बाधित्वा 'एकाजुत्तरपदे' इति णत्वमपि निवर्त्यते । नकारे परे कुत्वविधि-

---

'हन्तेरत्पूर्वस्ये'ति सूत्रं योगविभागेन व्याचष्टे—**हन्तेरिति**। प्रसङ्गादस्योदाहरणमाह—**प्रहण्यादिति**। प्रकृतोपयुक्तमंशमाह—**अत्पूर्वस्येति । एकाजुत्तरेति** । न चाऽल्लोपे कृते एकाच्त्वं नास्तीति वाच्यं, पूर्वस्मादपि विधौ स्थानिवद्भावात् । न च 'पूर्वत्राऽसिद्धे न स्थानिव'दिति वाच्यम्, 'तस्य दोषः संयोगादिलोपलत्वणत्वे'ष्वित्युक्तेः ।

**निवर्त्यते इति** । 'कुमति चे'ति णत्वमपि निवर्त्यत एवेति बोध्यम् । भाष्ये तु—'कुव्यवाये हादेशेषु प्रतिषेधो वक्तव्यः' । किं प्रयोजनम् ? । वृत्रघ्नः स्रुग्घ्नः प्राघानि । 'हन्तेरत्पूर्वस्ये'त्यत्पूर्वग्रहणं न कर्तव्यं भवति' इत्युक्तम् । एतच्च वार्तिकाशयवर्णनमात्रम्, न तु वस्तुस्थितिः । वार्तिकेन सूत्रावयवप्रत्याख्यानापेक्षया योगविभागमाश्रित्य वार्तिकार्थोपसङ्ग्रहस्यैव न्याय्यत्वादिति तु मनोरमायां स्थितम् । नन्वत्पूर्वस्येत्यत्र तपरो विवक्षितो न वा, यदि विवक्षितस्तर्हि 'बहुवृत्रहाणी'ति न सिध्येत् । यद्यविवक्षितस्तदा 'प्राघानी'ति चिण्णन्तेऽपि णत्वं स्यात्, ततश्च 'कुव्यवाये हादेशेषु प्रतिषेधः' इति वचनं स्वीकर्तव्यमेवेति किमनेन योगविभागेन ? । अत्राहुः—तपरोऽत्र विवक्षित एव । न च 'बहुवृत्रहाणी'त्यत्र णत्वाऽसिद्धिः, णत्वस्याऽन्तरङ्गत्वेन तत्कार्यं प्रति दीर्घस्याऽसिद्धत्वात् । न च त्रैपादिकेऽन्तरङ्गे षाष्ठी परिभाषा न प्रवर्तेत इति वाच्यं, कार्यकालपक्षाऽभ्युपगमात् । न चैवमन्तरङ्गं णत्वं 'प्राघानी'त्यत्रापि स्यादिति वाच्यं, 'पूर्वं धातुः साधनेन युज्यते' इति पक्षे णत्वस्य बहिरङ्गत्वात् । इष्टानुरोधेन 'पूर्वं धातुरुपसर्गेणे'ति पक्षस्यानभ्युपगमादिति । अन्ये तु—'हन्तेरत्पूर्वस्ये'त्यत्र 'उपसर्गा'दित्यस्यानुवृत्तिस्वीकाराद्योगविभागसामर्थ्येन 'भ्रूणघ्न'इत्यत्र 'एकाजुत्तरे'त्यादिना णत्वाऽभावेऽपि 'वृत्रघ्नः'

---

'वृत्रघ्न' इत्यादौ णत्ववारणाय 'हन्तेरत्पूर्वस्ये'ति विभज्य व्याचष्टे—**हन्तेरिति** । 'उपसर्गादसमासेऽपी'त्यत 'उपसर्गा'दिति वर्तते, 'रषाभ्या'मिति च । तात्स्थ्यात्ताच्छब्द्यमित्याह—**उपसर्गस्थादिति** । प्रकृतोपयुक्तमाह—**अत्पूर्वस्येति** । 'अत' इति सिद्धे पूर्वग्रहणं स्पष्टार्थम् । अत्रोपसर्गादित्यस्य निवृत्त्या णत्वमात्रस्याऽयं नियम इत्याह—**एकाजुत्तरेति । णत्वमपीति** । अपिना 'प्रातिकान्ते'त्यस्य 'कुमति चे'त्यस्य च सङ्ग्रहः । बाध्यसामान्यचिन्ताश्रयणात्सर्वबाधः । इदमत्पूर्वग्रहणं हस्थानिककवर्गाभाववद्धन्तेरुपलक्षणम् । अतो 'बहुवृत्रहाणी'त्यत्र 'प्राघानि' प्रघ्नताघ्न' इत्यत्र च

सामर्थ्याद्ल्लोपो न स्थानिवत् । वृत्रघ्नः । वृत्रघ्ना । इत्यादि । यत्तु 'वृत्रघ्न' इत्यादौ वैकल्पिकं णत्वं माधवेनोक्तं तद्भाष्यवार्तिकविरुद्धम् । एवं शार्ङ्गिन्यशस्विन्नर्यमन्पूषन् । 'यशस्वि'न्निति विन्प्रत्यये इनोऽनर्थकत्वेऽपि 'इन्ह'न्नित्यत्र ग्रहणं भवत्येव, **अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्तीति** वचनात् । अर्यम्णि । अर्यमणि । पूष्णि । पूषणि ॥

---

'स्रुघ्न'इत्यत्र णत्वं दुर्वारमिति 'कुव्यवाये'इति वार्तिकं स्वीकर्तव्यमेव । योगविभागस्याऽनन्तरस्येति न्यायबाधेनापि चरितार्थत्वादुपसर्गसंबन्धस्यापि बाधे सामर्थ्याऽभावात् । न च ब्रह्मादिषु कर्मसूपपदेषु विधीयमानः क्विप्प्रत्ययः केवलधातोरेव स्यान्न तु सोपसर्गादिति 'ब्रह्मप्रहा' 'भ्रूणप्रहे'त्यादि रूपमेव दुर्लभमिति वाच्यम्, 'आतोऽनुपसर्गे कः' इत्यत्राऽनुपसर्गे इति सामान्यापेक्षज्ञापकात्सोपसर्गाद्धन्तेरपि 'ब्रह्मभ्रूणे'ति क्विप्संभवात् । अनुपसर्गग्रहणस्य सामान्यापेक्षज्ञापकत्वे तूक्तवार्तिकमेव प्रमाणम् । तस्मात् 'हन्ते'रिति योगविभागोऽत्र निरर्थक एवेत्याहुः ॥

**माधवेनोक्तमिति** । इत्थं हि तदीयो ग्रन्थः—'भसंज्ञायामल्लोपे उत्तरपदमनचकं स्थानिवद्भावश्चाऽल्विधित्वान्ने'त्येकाजुत्तरपदत्वाभात् 'प्रातिपदिकान्तनुम्विभक्तिषु चे'ति विकल्पो भवति—'वृत्रघ्नो' 'वृत्रघ्णः' इति । **तद्भाष्येति** । किंच 'अल्विधित्वान्ने'त्यसङ्गतम् । अल्विध्यर्थमेव 'अचः परस्मि'न्नित्यस्यारम्भात् । तस्याऽप्रवृत्तौ युक्त्यन्तरस्यैव वाच्यत्वात् । 'एकाजुत्तरे'त्यस्याऽप्रवृत्तावपि 'कुमति चे'ति सूत्रस्य दुर्वारत्वात्वैकल्पिकत्वं णत्वस्याऽसङ्गतमेव । न च त्रिपाद्यामपि पूर्वं प्रत्युत्तरशास्त्रस्याऽसिद्धत्वात् 'एकाजुत्तरपदे णः' 'कुमति चे'त्यस्याऽप्रवृत्त्या 'प्रातिपदिकान्ते'ति वैकल्पिकमेव णत्वं भवतीति वाच्यं, 'न हि योगे योगोऽसिद्धः किंतु प्रकरणे प्रकरण'मिति भाष्यादौ स्पष्टत्वादिति दिक् ।**अनिनस्मन्ग्रहणानीति** । **अन्**—'राज्ञे'त्यर्थवता, 'साम्ना' इत्यनर्थकेन । **इन्**—'दण्डी'त्यर्थवता,'वाग्मी'त्यनर्थकेन। **अस्**—'सुपया' इत्यर्थवता, 'सुस्रोता' इत्यनर्थ-

---

न दोष इत्यन्यत्र विस्तरः । यत्तु कार्यकालपक्षे बहिरङ्गदीर्घाऽसिद्धत्वाद्वृत्रहाणीत्यादौ न दोषः, 'प्राघानी'त्यादौ यथोद्देश एव लक्ष्यानुरोधादिति, तन्न; तत्पक्षेपि त्रिपाद्यान्तत्परिभाषाया अप्रवृत्तेरुक्तत्वात् । 'प्रघनाघन' इत्यत्र दोषाच्च । **माधवेनोक्तमिति** । 'वृत्रघ्न' 'वृत्रघ्ण' इति रूपद्वयन्तेनोक्तम् । **तद्भाष्येति** । 'कुव्यवाये हादेशेषु प्रतिषेधो वक्तव्यः । वृत्रघ्नः स्रुघ्नः प्राघानि । हन्तेरत्पूर्वस्येत्यत्पूर्वग्रहणं न कर्तव्यं भवती'ति भाष्ये इत्यर्थः। अत्पूर्वग्रहणस्य तादृशोपलक्षितार्थत्वे मानाभाव इति तदाशयः । **अनिनिति** । तत्र मन्निति सूत्रे [illegible] तु अत्रैवानर्थकेन

**मघवा बहुलम्** ।६।४।१२८। मघवन्शब्दस्य वा 'तृ' इत्यन्तादेशः स्यात् । ऋ इत् ॥ **उगिदचां सर्वनामस्थानेऽधातोः** ।७।१।७०। अधातोरुगितो

केन । इह 'स्रुरीभ्यां तुट् चे'त्यसुनस्तुट् । **मन्**–'सुशर्मे'त्यर्थवता, 'सुप्रथिमा' इत्यनर्थकेन । एतच्च 'इणः षीध्व'मिति सूत्रेऽङ्गग्रहणेनार्थवद्ग्रहणपरिभाषाया अनित्यत्वज्ञापनात्सिद्धम् । 'वेविषीध्व'मित्यत्र षीध्वंशब्दस्य ग्रहणं माभूदिति हि तत्राऽङ्गग्रहणं कृतम् । तच्चाऽपार्थकम्, अनर्थकत्वादेव तद्ग्रहणाऽसिद्धेः । अतो ज्ञायते 'अर्थवद्ग्रहणपरिभाषा अनित्ये'ति । **मघवा बहुलम्** । 'अर्वणस्त्रसा'वित्यतस्तृ इत्यनुवर्तते, तदपेक्षा च 'मघवे'ति षष्ठ्यर्थे प्रथमा, तदाह–**मघवन्शब्दस्येति । अधातोरिति** । अधातुभूतपूर्वस्यापीत्यर्थः। अञ्चतिग्रहणं हि नियमार्थम्,–'उगितो धातोश्चेद्भवति तर्ह्यञ्चतेरेवे'ति। एवञ्च गोमानिवाचरति 'गोमा'नित्यादौ संप्रति धातुत्वेऽपि विध्यर्थमधातुग्रहणम् । एतच्च मूल एव स्फुटीभविष्यति । नन्वञ्चतिग्रहणमौपदेशिकधातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति व्याख्याय अधातुग्रहणं त्यज्यतामिति चेत् । अत्र नव्याः–नुम्मात्रविषयको नायं नियमो,–'धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति नियम्यते । तेनेह न,–उखास्रत्'इति 'उगितश्चे'ति सूत्रे वक्ष्यमाणत्वात् । ततश्च यद्यौपदेशिकधातोश्चेदुगित्कार्यमिति व्याख्यायेत तर्हि पूर्वोक्ते'गोमा'नित्यादौ स्त्रियाम् 'उगितश्चे'ति ङीप्प्रसज्येत । आचारक्विबन्तस्यौपदेशिकधातुत्वाऽभावात् । न चेष्टापत्तिः,—अधातोर्ग्रहणादेव सूत्रकृता तत्र ङीब्नेष्यत इत्यनुमानादिति दिक् । ननु नलोपिनोऽञ्चतेरेव नुमागमः स्यान्न तु पूजार्थस्य नकारवतोऽञ्चतेरित्येवमर्थम् 'अचा'मिति ग्रहणस्य सार्थकत्वात्कथमेतस्य सामान्यनियमार्थतेति चेदुच्यते–'अचा'मित्यत्र नलोपोऽविवक्षितः । तथाच पूर्वोक्तनियमार्थता भाष्यकैयटाद्युक्ता सङ्गच्छत एव । पूजार्थस्याऽञ्चतेर्नुमि सत्यपि 'नश्चापदान्तस्ये'ति सूत्रे जातिपक्षमाश्रित्य नत्वजातेरनुस्वारविधानेन समीहितरूपसिद्धेः । व्यक्तिपक्षे त्वनुस्वारस्य शर्षु पठितत्वादनुस्वारे परे नुमोऽनुस्वारे सति अनुस्वारद्वयवद्रूपमिष्यते । 'अनचि चे'ति द्वित्वेन तद्रूपस्य तवापि मते दुर्वारत्वात् । न च भवन्मते द्वित्वेनाऽनुस्वारत्रयं स्यादिति शङ्क्यम्, 'झरो झरी'ति लोपेन निवारयितुं शक्यत्वात् । लोपाऽभावपक्षे त्रयाणां श्रवणं स्यादिति चेद्भाष्यकैयटाद्युक्तनियमानुरोधेन तत्स्वीकारे बाधकाभावादिष्टानुरोधेन जातिपक्ष एवात्राश्रयणीयः ॥

तदन्तविधिर्न तत्समुदायेनेति हन्ग्रहणे प्लीहन्ग्रहणं न । **मघवा ब** । षष्ठ्यर्थे प्रथमा । 'तृ' इति च वर्तते । **ऋदिति** । तेनाऽनेकाल्त्वाभावात् सर्वादेशः । **उगिदचाम्** । अचां नियमधातोर्ग्रहणं,

नलोपिनोऽच्वतेश्च नुमागमः स्यात्सर्वनामस्थाने परे। उपधादीर्घः। मघवान्। इह दीर्घे कर्तव्ये संयोगान्तलोपस्याऽसिद्धत्वं न भवति, बहुलग्रहणात्। तथाच 'श्वन्नुक्ष'-न्निति निपातनान्मघशब्दान्मतुपा च भाषायामपि शब्दद्वयसिद्धिमाश्रित्यैतत्सूत्रं प्रत्याख्यातमाकरे॥ 'हविर्जक्षिति निःशङ्को मखेषु मघवानसा'विति भट्टिः। मघवन्तौ। मघवन्तः। हे मघवन्। मघवन्तम्। मघवन्तौ। मघवतः। मघवता। मघवद्भ्यामित्यादि।

---

नुमागमः स्यादिति। 'इदितो नुम् धातो'रित्यतो नुमनुवर्तत इति भावः। ननु 'कुर्व'न्नित्यादाविव संयोगान्तलोपस्याऽसिद्धत्वेन नान्तत्वाभावाद्दीर्घत्वं न स्यादित्याशङ्क्याह—इह दीर्घे कर्तव्य इति। बहुलग्रहणादिति। क्वचिदन्यदेवेत्यर्थकादित्यर्थः। बहूनर्थान् लातीति बहुलम्। 'आतोऽनुपसर्गे' इति कर्मण्युपपदे कः।

श्वन्नुक्षन्निति। 'श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघव'न्नित्युणादिसूत्रेणेत्यर्थः। निपातनादिति। महेर्हकारस्य घकारोऽवुगागमः कनिप्रत्ययश्चेत्यस्य त्रितयस्य निपातनादित्यर्थः। प्रत्याख्यातमाकार इति। एवंच फलभेदे त्रादेशस्य प्रत्याख्यानाऽसंभवादादेशपक्षेऽपि दीर्घो भाष्यादिसंमत एवेति बहुलग्रहणात्संयोगान्तलोपस्य नाऽसिद्धत्वमित्युक्तम्। यत्त्वाहुः—मतुप्पक्षेऽपि छान्दसत्वान्न दीर्घ इत्येव भाष्याशय इति, तन्न, मतुबन्तस्य छान्दसत्वे मानाभावादुदाहृतभट्टिप्रयोगविरोधाच्चेति दिक्। छन्दसीवनिपाविति। 'मत्वर्थे ईवनिपौ स्तः छन्दसी'ति वार्तिकार्थः। 'सुमङ्गलीरियं वधूः' 'मघवानमीमहे' इत्युदाहरिष्यति वैदिकप्रक्रि-

---

व्याख्यानात्। नलोपिन इति। अकारलोपाऽकरणपूर्वकं नलोपकरणस्य विवक्षार्थत्वादिति भावः। अत्रोगिज्झलन्त एव, व्याख्यानात्, तेन 'शमी' 'शमिना'वित्यादौ नातिप्रसङ्ग इति 'युवोरनाका'वित्यत्र भाष्ये स्पष्टम्। उपधादीर्घ इति। 'सर्वनामस्थाने चे'त्यनेन। असिद्धत्वाऽभावकल्पने मानमाह—तथा चेति। निपातनादिति। 'वनो र चे'ति सूत्रे भाष्ये तु 'मघवन्शब्दोऽव्युत्पन्नं प्रातिपदिक'मित्युक्तम्। मघशब्दादिति। धनार्थादित्यर्थः। भाषायामपीति। अपिना च्छन्दसि। 'मघवानमीमहे'इति मद्ध्योदात्तं वनिपि बोद्धयम्। आकरे इति। 'केऽणः' इति सूत्रे कैयटे इत्यर्थः। एवञ्च मतुप्यत्वसन्तस्येति दीर्घसत्त्वेन त्रादेशे तदभावे फलभेदे प्रत्याख्यानाऽसंभव इति भावः। नन्वेवमप्यन्तोदात्तस्य त्रादेशे वकाराकारस्योदात्तत्वं, मतुपि तु 'ह्रस्वनुड्भ्या'मिति प्राप्तस्य मतुबुदात्तत्वस्य 'नगोश्व'न्निति प्रतिषेधेन पित्त्वादनुदात्तत्वे घकाराकारोदात्तत्वमिति फलभेदोऽस्त्येवेति चेन्न; त्रादेशपक्षे दीर्घवद्बहुलग्रहणेन घकाराकारोदात्तत्वस्याप्यङ्गीकारात्। तत्रैव मानान्तरमाह—हविरिति। मघवानृजीषी'इत्यस्याप्युपलक्षणमिदम्। 'अर्वणस्तु मघोनश्च न शिष्यञ्छान्दसं हि तत्। 

तृत्वाऽभावे—मघवा । 'छन्दसीवनिपौ चे'ति वनिबन्तं मध्योदात्तं छन्दस्येव । अन्तोदात्तं तु लोकेऽपीति विशेषः । मघवानौ । मघवानः । सुटि राजवत् ॥

**श्वयुवमघोनामतद्धिते** ।६।४।१३३। अन्नन्तानां भसंज्ञकानामेषामतद्धिते परे संप्रसारणं स्यात् । 'संप्रसारणाच्च' । 'आद्गुणः' । मघोनः । अन्नन्तानां किम् ? । मघवतः । मघवता । स्त्रियां मघवती । अतद्धिते किम् ? । माघवनम् । मघोना ।

---

यायाम् । **अन्तोदात्तं त्विति** । यद्यपि 'श्वन्नुक्ष'न्नित्यत्र कनिन्नन्ता एते' इत्युज्ज्वलदत्तादिग्रन्थपर्यालोचनयाऽऽद्युदात्तत्वं लभ्यते, तथापि 'उक्षा समुद्रो अरुणः सुपर्णः' 'पूषा त्वेतो नयतु', 'अग्निर्मूर्धा दिवः' इत्यादौ तत्सूत्रोपात्तानामुक्षादीनामन्तोदात्तत्वस्य निर्विवादतया कनिप्रत्यय एवोचित इति भावः । **श्वयुव** । 'अल्लोपोऽनः' इत्यतो 'ऽन'इत्यपकृष्य व्याचष्टे—**अन्नन्तानामिति । अन्नन्तानां किं । मघवत इति** । यद्यपि नस्य तादेशेऽप्येकदेशविकृतस्याऽनन्यत्वादन्नन्तताऽत्रास्त्येव, तथापि विशेषणसामर्थ्याच्छ्रूयमाणनकारान्तस्यैव संप्रसारणं न त्वत्रेत्याहुः । वार्तिककृता तु 'श्वादीनां संप्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थ'मित्युक्तम् । नन्वेवमपि 'अल्लोपोऽनः' इत्यल्लोपो दुर्वार इति चेन्मैवम्, भाष्यकृता पूर्वोक्तवार्तिकमत्रानुवर्त्य 'अल्लोपोऽनः, नकारान्तस्यैवे'ति व्याख्यातत्वात् । एतच्च 'ऋत्व'गिति सूत्रे भाष्ये स्पष्टम् । एतेन 'बहुधीवरी' 'राजकीय'मित्यत्राऽप्यल्लोपाऽभावः सिद्धः । 'वनो र च' 'राज्ञः क चे'त्यादेशे कृते नकारान्तत्वाऽभावात् । **स्त्रियां मघवतीति** । (मघवती ।) मघवत्यौ । मघवत्य इत्यत्र

---

**मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनादित्यत्रत्यवार्तिकरीत्या** मघवन्शब्दस्य लोकेऽसाधुत्वं लभ्यते । तथा च तृज्वत्सूत्रे भाष्यम्—'अविशेषविहिता अपि शब्दा नियतविषया दृश्यन्ते'इति—इत्यन्यत्र विस्तरः । **छन्दस्येवेति** । न च वनिवन्तस्य संप्रसारणे 'यस्ये'ति लोपे 'मघोन' इत्यसिद्धिः, व्याश्रयत्वान्नाऽभीयासिद्धत्वं लोपे संप्रसारणस्य, नापि बहिरङ्गासिद्धत्वं, तस्या 'वाह ऊठ्'सूत्रस्थतयाऽऽभीयत्वेनाभीयान्तरङ्गस्य तद्दृष्ट्याऽसिद्धत्वेनात्र तस्या अप्रवृत्तेः । अन्तरङ्गशास्त्राश्रय एव तदाश्रय इति समानाश्रयत्वमव्याहतमिति वाच्यं; निपातितान्तोदात्तमघवन्शब्दमादाय सिद्धेः । 'एकादेश उदात्तेनोदात्त' इत्यस्य प्रवृत्त्या तत्र स्वरे विशेषाऽभावात् । छन्दस्यापाद्यरूपाभावान्नाऽनिष्टापादनम् । **अन्तोदात्तं त्विति** । कन्यन्तत्वादव्युत्पन्नत्वाद्वा तत्त्वम् । **अन्नन्तानामिति** । 'अल्लोपोऽन' इत्यतो'ऽन' इत्यपकृष्यते । तत्र नकारं प्रश्लिष्य नान्ताऽन्नन्तानामित्यर्थः । तेन 'मघवत' इत्यादौ नाऽल्लोपसंप्रसारणे । 'धीवरी'त्यादौ च नाऽल्लोपः । स्पष्टं चेदम् ऋत्विक्सूत्रे भाष्ये । **परे तु**—नकारप्रश्लेषाऽभावेऽपि न दोषः, 'अलोऽन्त्यस्ये'त्यस्य सत्त्वेनाऽनः स्थानित्वाऽभावेन स्थानिवत्सूत्रेणाऽन्नन्तत्वाऽलाभात् । '[illegible] मघवन्शब्दस्यैव स्थानित्वं नाऽनः । अर्द्धविकारे प्रत्यभिज्ञा-

मघवभ्यामित्यादि ॥ शुनः । शुना । श्वभ्यामित्यादि । युवन्शब्दे वस्योत्वे कृते-॥

**न संप्रसारणे संप्रसारणम्** ।६।१।३७। संप्रसारणे परतः पूर्वस्य यणः संप्रसारणं न स्यात् । इति यकारस्य नेत्वम् । अतएव ज्ञापकादन्त्यस्य यणः पूर्वं संप्रसारणम् । यूनः । यूना । युवभ्यामित्यादि ॥

---

लिङ्गविशिष्टपरिभाषया 'उगिदचा'मिति नुम्न शङ्क्यः, 'विभक्तौ लिङ्गविशिष्टाऽग्रहणा'-दित्याहुः । **न संप्रसारणे** । 'ह्वः संप्रसारण'मित्यतः 'संप्रसारण'मित्यनुवर्तमानेऽपि पुनः सम्प्रसारणग्रहणात्प्रदेशान्तरस्थं 'श्वयुवमघोना'मित्यपि संप्रसारणं निषिध्यते, तदाह-**इति यकारस्य नेत्वमिति** । **यून इति** । ननूकारेण व्यवधानात्कथमत्र निषेधः ?, 'विव्याध' 'विव्यथे' इत्यादावव्यवधानेऽपि निषेधस्य चरितार्थत्वात् । न च सवर्णदीर्घे कृते नास्ति व्यवधानमिति वाच्यम्, 'अचः परस्मि'न्निति स्थानिवत्त्वात् । अत्राहुः-विदेशस्थनिषेधार्थात्पुनः सम्प्रसारणग्रहणादेव व्यवधानेऽप्यत्र निषेधो भवि-

---

ऽभावान्नैकदेशविकृतन्यायावसरः। ध्वनितश्चेदं 'श्वयुवे'त्यत्र भाष्ये इत्याहुः । **मघवतीति** । पुंयोगेन स्त्रियां वृत्तावुगितश्चेति ङीप् । विभक्तौ लिङ्गविशिष्टाऽग्रहणान्नुम्न । **शुन इति** । ननु संप्रसारणे वार्णादाङ्गस्य बलीयस्त्वेन पूर्वरूपं बाधित्वाऽल्लोपोन इति लोपे 'शुने'ति सर्वानुदात्तं स्यात्, उदात्त-निवृत्तिस्वरेणाऽन्तोदात्तं वा स्यात् । पूर्वरूपेणाद्युदात्तमिष्यते । अत्र हि वकारस्थानिकोकारस्य स्नंसन-धर्महल्स्थानिकत्वेनाऽनुदात्ततया श्वन्शब्दस्यान्तोदात्ततयाऽकारस्योदात्तत्वेन तयोः स्थाने जातस्यै-कादेशस्योदात्तत्वात् । किञ्च लोपे स्थानिवत्त्वेन यण्प्रसङ्गः । 'अतः शुन' इत्यादिनिर्देशैस्तद्वा-रणे तु 'बहुश्वा' 'बहुमघवा' 'बहुयुवे'त्यत्राऽन उपधालोपिन इति ङीब्विकल्पापत्तिः । 'मघोन' इत्या-दावन्तोदात्तप्रकृतिके उदात्तनिवृत्तिस्वरापत्तिश्चेति चेन्न; वार्णपरिभाषाया अनित्यत्वेन क्वचिदप्रवृत्त्या-ऽदोषात् । श्वन्शब्दे आभीयतया संप्रसारणाऽसिद्धत्वेन 'न संयोगा'दिति निषेधाच्च । **न संप्रसारणे** । अनुवृत्त्यैव निषेध्यसमर्पके लब्धे पुनः संप्रसारणग्रहणसामर्थ्यात्तन्मात्रनिषेध इति दूरस्थस्याऽस्य, 'व्यथो लिटी'त्यस्य च निषेधः । न च व्यथिव्यद्धयादावस्य चारितार्थ्येन 'यून' इत्यादौ पूर्व-सवर्णदीर्घरूपैकादेशे तस्याचः परस्मिन्निति स्थानिवत्त्वेन संप्रसारणत्वेऽपि तेनैव स्थानिवत्त्वेनोकार-व्यवधानात्कथं निषेध इति वाच्यं; 'व्यथ' इति सूत्रे यग्रहणेनैव सिद्धया संप्रसारणग्रहणस्यैतन्निषेध-फलतयैव चारितार्थ्यस्य वक्तव्यत्वेन व्यवहितेपि प्रवृत्तेः,यूनस्तिरिति निर्देशाच्चेत्याशयेनाह—**इति यकारस्येति** । न च कार्यकालपक्षे 'इग्यण' इत्युपस्थितस्य पदैकवाक्यतयाऽन्वये निमित्तस्य यणान्वयेन येननाव्यधानन्यायेन पूर्वस्य संप्रसारणाऽप्राप्तेरिदं सूत्रं व्यर्थमिति वाच्यम्; तत्पक्षेपि सञ्ज्ञासूत्राणां वाक्यभेदेनैव संबन्धस्योक्ततया विधायकेषु 'यण' इत्यस्याऽभावात्। अत्र चेदमपि ज्ञापकं बोद्धयम् । ननु सकृत्प्रवृत्त्यैवोभयोः संप्रसारणे जाते निषेधो व्यर्थो, निमित्तत्वानुपपत्तिश्चेत्यत आह—**अत एव ज्ञापकादिति** । तदुक्तं भाष्ये—[illegible] वा सूत्र-

अर्वा। हे अर्वन्। **अर्वणस्त्रसावनञः** ।६।४।१२७। नञा रहितस्याऽर्वन्नन्तस्याङ्गऽस्य 'तृ'इत्यन्तादेशः स्यान्न तु सौ। उगित्त्वान्नुम्। अर्वन्तौ। अर्वन्तः।

---

ष्यतीत्यदोषः। न च 'व्यथो लिटी'ति विदेशस्थेन यकारस्य संप्रसारणे कृते वकारस्य तदभावाय 'न सम्प्रसारणे' इति सूत्रं प्रवर्त्य पुनः संप्रसारणग्रहणं चरितार्थमिति व्यवधाने निषेधो न भविष्यतीति शङ्क्यं, 'व्यथो लिटी'त्येतद्धलादिः शेषापवाद इत्याकरे स्पष्टत्वात्। 'उत्सर्गसदेशश्चापवाद इति परस्यैव संप्रसारणं भवति न पूर्वस्ये'ति कैयटेन व्याख्यातत्वाच्चेति।

**अर्वणस्तृ**। 'अङ्गस्ये'ति वर्तते, तच्चाऽर्वणा विशेष्यते, 'अनञ' इत्यनेनापि, तदाह-**नञा रहितस्येत्यादि**। 'असा'विति पर्युदासे विभक्तौ परत एव स्यात्, ततश्चाऽर्वतीत्यादौ न स्यादित्याशयेनाह-**न तु साविति**। न चैवमर्वप्रिय इत्यादावतिप्रसङ्गः, अङ्गेन स्वनिमित्तस्य प्रत्ययस्याऽऽक्षेपाल्लुका लुप्तत्वेनाऽत्र प्रत्ययलक्षणाभावात्। एतेन 'वाहैरलुप्यत सहस्रदृगर्वगर्वः' इति श्रीहर्षप्रयोगो व्याख्यातः। नन्वेवं 'स्थानिवदादेशः' इति सूत्रे 'धात्वङ्गकृत्तद्धिताव्ययसुप्तिङ्पदादेशाः स्थानिवत्स्यु'रिति प्राचो ग्रन्थमनूद्य-'तत्किं परिगणनमुदाहरणमात्रं वे'ति विकल्प्य, 'नान्त्यः, अव्ययस्याङ्गपदाभ्यां पृथग्ग्रहणवैयर्थ्या'दिति मनोरमायां यदुक्तं तत्कथं सङ्गच्छेत?, अव्ययस्योक्तरीत्याऽनङ्गत्वात्। न च 'न लुमते'त्यनेनाऽङ्गकार्यनिषेधेऽप्यङ्गसंज्ञाया अनिषेधान्नोक्तदोष इति वाच्यम्, प्रत्यये परतः पूर्वस्य यत्कार्यमाङ्गमनाङ्गं वा तत्सर्वं 'न लुमते'त्यनेन निषिध्यते इति 'यचोऽचि चे'ति सूत्रस्थमनोरमाग्रन्थपर्यालोचनया लुमताशब्देन लुप्तेऽङ्गसंज्ञाया अप्यस्वीकार्यत्वात्। तस्या अपि प्रत्यये परतः पूर्वस्य कार्यत्वात्। यदि तु लुका लुप्तेऽप्यङ्गत्वं स्वीक्रियते, तदायं ग्रन्थो 'यचि भं' 'वृषण्वस्वश्वयो'रित्यत्र 'वृष वर्षुकं वसु धनं यस्य वृषण्वसु, वृषा अश्वो यस्य वृषणश्व इत्युदाहृत्य भत्वादिह नलोपो न भवति, अल्लोपस्तु अनङ्गत्वान्ने'ति मूले वैदिकप्रक्रियायां वक्ष्यमाणग्रन्थेन सह विरुध्येत। न च 'अल्लोपोऽनः' इत्यत्रा'ऽङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽ'-निति व्याख्यानादल्लोपस्य तत्र प्राप्त्यभावादनाङ्गत्वादिति समाधानं व्यर्थमिति भ्रमितव्यम्, भसंज्ञयैव 'यजादिस्वादिपरो योऽ'निति व्याख्यानावद्वस्वश्वयोः परतो योऽनिति

---

प्रबन्धेनाचार्याणामभिप्रायो गम्यते, एतदेव ज्ञापयति परस्य पूर्वं भविष्यती'ति। 'लक्ष्ये लक्षणस्ये'-तिन्यायस्य तु नाऽयं विषयः; कार्याश्रयवर्णभेदेन लक्ष्यभेदात्॥

**अर्वणस्तृ। न तु साविति**। पर्युदास एव तूचितः, प्रत्ययत्वेन च सादृश्यम्। 'अनञ'

अर्वन्तम्। अर्वन्तौ। अर्वतः। अर्वता। अर्वद्भ्यामित्यादि। अनञः किम् ?, अनर्वा। यज्ववत्॥

---

व्याख्यानस्यापि लाभात्। तस्मात्पदात्पृथगित्येव वक्तव्ये अङ्गपदाभ्यामित्यङ्गग्रहणं रभसकृतमेवेति चेदत्राहुः–'न लुमते'ति सूत्रे लुमता लुप्ते तन्निमित्ताङ्गस्याङ्गसंज्ञकस्य कार्यं न स्यादिति (यदा) व्याख्यायते, तदा 'अर्वणस्तृ'इत्याद्यङ्गकार्याऽप्रवृत्तावप्यङ्गसंज्ञाया निर्बाधत्वादङ्गग्रहणं तत्रत्यं सम्यगेव। यदा त्वाङ्गमनाङ्गं वेत्यादिमनोरमाग्रन्थस्यानङ्गत्वादिति मूलग्रन्थस्य च स्वारस्यपर्यालोचनया लाघवादव्ययस्याङ्गत्वे फलाभावाच्च प्रत्यये परतः पूर्वस्य कार्यं निषिध्यते, तदा त्वविशेषेणाऽङ्गसंज्ञाया अपि निषेधादङ्गग्रहणं तत्र रभसकृतमेव। न च 'न लुमते'त्यनेनाङ्गसंज्ञानिषेधे 'युवोरनाका'विति सूत्रस्थभाष्यकैयटाभ्यां विरोधः स्यादिति वाच्यं, तयोस्तत्र प्रौढिवादेन प्रवृत्तत्वात्। तथाच 'न लुमता तस्मि'न्निति सिद्धान्तः,'प्रत्यये परतः पूर्वस्य कार्यं निषिध्यते'इति मनोरमाग्रन्थश्च स्वरसतः सङ्गच्छत इति। ननु ऋधातोर्विचि गुणे च 'अ'रिति रूपं, तस्मान्मतुपि अर्वन्तावित्यादि सेत्स्यति,'छन्दसीवनिपा'विति वनिपि वेदे 'अर्वे'ति सेत्स्यति। ऋधातोरेव 'स्नामदिपद्यर्त्ति'त्यादिना वनिपि तु लोकेऽप्यर्वेति सेत्स्यति। रूढिशब्दश्चायं, 'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः' इत्यमरकोशात्। ततश्चार्थोऽपि न भिद्यत इति किमनेन सूत्रेणेति चेदत्राहुः–नान्ततान्तयोः सर्वत्र प्रयोगे प्राप्ते सौ परे नञ्पूर्वपदे च नान्तस्य प्रयोगो भवत्यन्यत्र तु नान्तस्य प्रयोगो न भवतीति व्यवस्थार्थमिदं 'तृज्वत्क्रोष्टु'रिति त्रिसूत्रीवदिति।

यत्तु कैश्चिदुक्तम्–'अर्वन्मघवन्शब्दयोरपि भाषायामसाधुत्वमेव। 'अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत्। मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनात्' इति वार्तिकादिति। तदापाततः, वार्तिकस्य वनिवन्तमध्योदात्तपरत्वात्। छन्दस्येव वनिब्विधानात्। तथाच श्रीहर्षः–'वाहैरलुप्यत सहस्रदृगर्वगर्वः' इति प्रायुङ्क्त। **अर्वन्तौ अर्वन्त इति।** व्यपदेशिवद्भावेनाऽर्वन्नन्तत्वान्नादेशः। न च व्यपदेशिवद्भावोऽप्रातिपदिकेनेति वाच्यं,

---

इति बहुव्रीहिः, वाजमर्वत्स्विति प्रयोगात्। तत्पुरुषे ह्यनञः परस्याऽर्वण इत्यर्थेऽत्र न स्यात्। सुरत्र प्रथमैकवचनम्। **अनञः किमिति।** 'अनञ' इत्यस्य कः शब्दो व्यावर्त्य इति प्रश्नः। **उत्तरम्–अनर्वेति।** यज्वन्शब्दसदृशोऽनर्वन्शब्दो व्यावर्त्य इत्यर्थः। नन्विह निरनुनासिकोच्चारणेऽपि तपरसूत्रस्याऽणणीव विधीयमानेऽपि विध्यर्थत्वान्नरयाऽऽन्तरतम्यादनुनासिकः स्यात्,तपरसूत्रेऽप्यविधेहनुमतिया गृहमाणा ... भा–आदिति। विशेष्य-

**पथिमथ्यृभुक्षामात्** ।७।१।८५। एषामाकारोऽन्तादेशः स्यात्सौ परे । 'आ—आ'दिति प्रश्लेषेण शुद्धाया एव व्यक्तेर्विधानान्नानुनासिकः ॥ **इतोऽत्सर्वनामस्थाने** ७।१।८६। पथ्यादेरिकारस्याऽकारः स्यात्सर्वनामस्थाने परे ॥ **थो न्थः** ।७।१।८७।

तस्य प्रत्ययविधिविषयत्वात् । **पथिमथि** । 'गमेरिनि'रित्यत 'इनि'रिति 'परमे कि'दित्यतः 'कि'दित्यनुवर्तमाने 'मन्थः' इत्यनेन निष्पन्नो मथिन्शब्दः । 'पतस्थ च' चादिनिः । पथिन् । 'ऋभुक्षः स्वर्गवज्रयोः' । ततो मत्वर्थीयेनिना ऋभुक्षिन्निति बोध्यम् । ननु 'अस्थिदधी'ति सूत्रे उदात्ततया पठितेऽप्यनङीष्टसिद्धौ 'अनङुदात्तः' इत्युदात्तग्रहणं 'गुणा अभेदकाः' इति पक्षं ज्ञापयतीति निर्विवादम् । तथाच तस्मिन्पक्षे सूत्रेऽननुनासिकोच्चारणेऽप्यान्तरतम्यादनुनासिकाकारः स्यादत आह— **आआदिति** । **इतोऽत्सर्वनाम** । 'आ'दिति वर्तमाने पुनरद्वचनं किमर्थं, कृतेऽप्यद्वचने 'पन्था' इत्यत्र सवर्णदीर्घेण भाव्यमन्यत्र तूपधाया दीर्घेणेति चेन्मैवम् , 'ऋभुक्षण'मित्यत्र 'वा षपूर्वस्य निगमे' इति दीर्घविकल्पे सति पक्षे ह्रस्वश्रवणार्थमद्वचनस्यावश्यकत्वात् । **थो न्थः** । स्थान्यादेशौ द्वावप्य-

विशेषणभावेनाऽन्वयान्न सर्वादेश इति भावः । भाष्ये त्वनुनासिकविधाने प्रतिपत्तिलाघवाय तस्यैवोच्चारणे कार्ये तदनुच्चारणाच्छुद्धस्यैव विधानमित्युक्तम् । **केचित्तु** इदं सर्वं गुणा भेदका इति पक्षे । वृद्धिरादैच्सूत्रभाष्यसंमते सिद्धान्तभूते 'गुणा अभेदका' इति पक्षे जातिपक्षे च तत्प्राप्तस्यापि सवर्णग्रहणस्याऽप्रत्ययग्रहणेन निषेधेनाऽदोषात् । अत एव भाष्ये 'तपरस्तत्कालस्येति प्राप्नोती'त्युक्तम् । 'अप्रत्यय' इति च वाक्यभेदेन सर्वप्रतिषेधकम् । अण्ग्रहणस्य च तत्राऽसंबन्ध इति तदाशयः । अत एव भाष्ये 'भाव्यमानेन सवर्णानाङ्ग्रहणं ने'त्येव पठितं न त्वणेति । एतदेवाभिप्रेत्याणुदित्सूत्रेऽनया परिभाषयाऽप्रत्ययग्रहणवैयर्थ्यमाशङ्क्याऽप्रत्ययग्रहणस्य तत्परिभाषाज्ञापकत्वमुक्तम् । तेन च तस्याऽव्यापकत्वं सूचितम् । अप्रत्ययग्रहणस्य मदुक्तरीत्या व्याख्यानञ्च सूचितम् । तेन जातिग्रहणप्राप्तस्य गुणाऽभेदकत्वपक्षप्राप्तस्यानयाऽणनण्साधारण्येन निषेध इति सूचितम् । वस्तुतोऽणुदित्सूत्रस्थाऽप्रत्ययग्रहणज्ञापकत्वपरभाष्यस्यैकदेशानुमतिद्वारा परिभाषा बोद्धयत इत्यर्थः । 'प्रतीयत'इत्यस्य 'विधीयत'इत्यर्थोऽप्रसिद्ध्या कैयटोक्तव्याख्या चिन्त्या । परिभाषायां सवर्णपदेन समानजातीयो भिन्नधर्मोच्यते । तेन जशादिविधौ जत्वादिजात्याश्रयसर्वजकारादिग्रहणसिद्धिरित्याहुः । एतेन पथीयतेः क्विपि पन्था इत्यादीत्यपास्तम् । अत्र शुद्धार्थन्तदनुच्चारणस्यावश्यकत्वेन भाष्याऽसङ्गतेः । तस्मात्तदनभिधानमेवोचितम् । न च अदित्येवास्तु, नकारेकारयोरत्वे सवर्णदीर्घेण रूपसिद्धेः । पररूपन्तु न, 'पथिमथ्यृभुक्षां लोपः' 'भस्य टेः,' 'इतोत्सर्वनामस्थाने' इति न्यासेन नकाराऽश्रवणसिद्धावकारविधानसामर्थ्यादिति वाच्यं, ज्ञानगौरवपरिहारेण स्पष्टार्थमाकारोच्चारणात् । **इतोऽत्** । 'आ'दित्यनुवृत्त्यैव सिद्धेऽद्वचनं 'ऋभुक्षण'मित्यादौ

पथिमथोरस्थस्य न्थादेशः स्यात्सर्वनामस्थाने परे। पन्थाः। पन्थानौ। पन्थानः। पन्थानम्। पन्थानौ॥ **भस्य टेर्लोपः** ।७।१।८८। भसंज्ञकस्य पथ्यादेष्टेर्लोपः स्यात्। पथः। पथा। पथिभ्यामित्यादि। एवं मन्थाः। ऋभुक्षाः। स्त्रियां नान्तलक्षणे ङीपि भत्वाट्टिलोपः। सुपथी। सुमथी नगरी। अनृभुक्षी सेना। आत्वं नपुंसके न भवति, 'न लुमते'ति प्रत्ययलक्षणनिषेधात्। सुपथि वनम्॥

॥ **संबुद्धौ नपुंसकानां नलोपो वा वाच्यः**। हे सुपथिन्। हे सुपथि। 'नलोपः सुप्स्वरे'ति नलोपस्याऽसिद्धत्वाद्ध्रस्वस्य गुणो न। द्विवचने भत्वाट्टिलोपः। सुपथी। शौ सर्वनामस्थानत्वात्-सुपन्थानि। पुनरपि-सुपथि। सुपथी। सुपन्थानि। सुपथा। सुपथे। सुपथिभ्यामित्यादि॥

---

नञ्कौ। 'थेन्थः' इत्येव सिद्धे 'इतोऽत्सर्वनामस्थाने' इत्येतदृभुक्षिन्नर्थम्। त्रयाणामनुवृत्तावपि ऋभुक्षस्थो न संभवतीत्याशयेनाह-**पथिमथोरिति**। प्रसङ्गादाह-**स्त्रियामिति। नान्तलक्षण इति**। 'न पूजना'दिति निषेधात् 'ऋक्पूरब्धूरि'त्यप्रत्ययो नेति भावः। **सुपथीति**। 'इनः स्त्रिया'मिति कप् तु न कृतः, समासान्तविधेरनित्यत्वात्। 'युवोरनाका'विति सूत्रे 'सुपथी'ति भाष्याच्च। 'न पूजना'दिति निषेधस्य तु नायं विषयः' 'षचः प्राचीनेष्वेव सः'इति वक्ष्यमाणत्वात्। 'पथिमथी'त्यात्वं थो न्थश्च लिङ्गविशिष्टपरिभाषया प्राप्तं विभक्तौ लिङ्गविशिष्टाऽग्रहणान्न भवति।

अत्रेदं बोध्यम्-पन्थानमात्मन इच्छति पथीयति। ततः क्विप्। अल्लोपयलोपौ। एकदेशविकृतस्यानन्यत्वात् 'पथिमथी'त्यात्वम्। 'थो न्थः'। पन्थाः। 'इतोऽत्सर्वनामस्थाने' इत्यत्वं न भवति। 'इत'इति तपरकरणात्। 'एरनेकाचः'इति यणं बाधित्वा परत्वान्नित्यत्वाच्च-'थो न्थः'। संयोगपूर्वकत्वान्न यण्। पन्थियौ। पन्थियः। पन्थियम्। पन्थियौ। 'भस्य टेर्लोपः'।पथः। पथा। पथीभ्याम्। पथीभिरित्यादि। एवं मथीयतेः क्विपि तु-मन्थाः। मन्थियौ। मन्थियः। ऋभुक्षाः। ऋभुक्षियौ। ऋभुक्षियः। इत्यादि। एतेन 'इतोऽत्सर्वनामस्थाने'इत्यत्र स्थानिन्यादेशे च तपरकरणं मुखसुखार्थमिति

---

'वा षपूर्वस्ये'ति दीर्घविकल्पे पक्षे ह्रस्वश्रवणार्थम्। 'इत' इति 'अ'दिति च तपरत्वं मुखसुखार्थम्। 'ए'दित्युक्तौ ततो लाघवाऽभावात्। अन्यथा विधेयेपि तपरकरणात्कुरुत इत्यादौ गुणाभाववत्पन्थानावित्यादौ दीर्घाभावापत्तिरित्यन्यत्र विस्तरः। **थो न्थः**। 'थो नु'डिति नोक्तम्। इत्संज्ञाया 'आद्यन्ता'वित्यस्य चानुसन्धाने प्रक्रियागौरवात्। **भस्य टेः**। भस्य किं?, पथिभ्याम्। **संबुद्धौ नपुंसकानामिति**। इदं नलुमतेति निषेधाऽनित्यत्वमूलकमित्युक्तम्। यद्यपि भाष्ये 'वा नपुंसकानां'मि-

**ष्णान्ता षट्** ।१।१।२४। षान्ता नान्ता च सङ्ख्या षट्संज्ञा स्यात् । 'षड्भ्यो लुक्' । पञ्च । पञ्च । सङ्ख्या किम् ? । विप्रुषः । पामानः । 'शतानि' 'सहस्राणि' त्यत्र संनिपातपरिभाषया न लुक् । सर्वनामस्थानसंनिपातेन कृतस्य नुमस्तद्विघातकत्वात् । पञ्चभिः । पञ्चभ्यः । पञ्चभ्यः । 'षट्चतुर्भ्यश्चे'ति नुट् । **नोपधायाः** ।६।४।७। नान्तस्योपधाया दीर्घः स्यान्नामि परे । नलोपः । पञ्चानाम् । पञ्चसु ।

---

हरदत्तग्रन्थः प्रयुक्तः । आदेशे तपरकरणस्यानावश्यकत्वेऽपि स्थानिनि तु 'पन्थियौ' इत्यादिसिद्धये तस्यावश्यकत्वात् ।

ननु नलोपस्याऽसिद्धत्वात् 'पथिमथ्यृभुक्षाम्–'इति नस्यात्वे पन्थ्याः, मन्थ्याः, ऋभुक्ष्या इत्येव भवितव्यम्, न तु 'पन्था'इत्यादीति चेत् । अत्राहुः–नलोपस्यान्तर्वर्त्ती सुब्निमित्तम् । आत्वस्य तु बहिर्वर्त्ती सुप् । प्रत्यासत्त्या हि यत्र एक एव सुब्निमित्तभूतस्तत्रैव 'नलोपः सुप्स्वरे'ति नलोपस्यासिद्धत्वं नान्यत्रेति नात्र नकारस्यात्वं किं त्वीकारस्येति ॥

**ष्णान्ता षट्** । स्त्रीलिङ्गनिर्देशः सङ्ख्यां विशेषयितुम्, तत्सामर्थ्याच्च पूर्वत्र संज्ञापरमपि सङ्ख्याग्रहणमिह संज्ञिपरं संपद्यत इत्याशयेनाह–**सङ्ख्येति** । प्राचा तूपदेशकाले षान्ता नान्ता चेत्युक्तम्, तत् 'पञ्चेत्यत्र नलोपे कृतेऽपी'त्यादिवक्ष्यमाणस्वग्रन्थविरुद्धम् । संप्रत्यनान्तत्वेऽप्युपदेशे नान्तत्वमासीदिति किमसिद्धत्वेनेति दिक् । **संनिपातेति** । तथा चोपदेशकाले इति व्याख्यानं निष्फलमपीति भावः । यत्त्वाहुः-परिभाषाया अनित्यत्वाल्लुक् स्यादिति, तत्साहसमात्रम् । इष्टस्थलेऽप्यप्रवृत्तौ परिभाषाया अकिञ्चित्करत्वापत्तेः । यदप्याहुः–'उपदेशग्रहणमिह कुतः समागत'मित्याशङ्क्य 'ष्णान्ते-त्यन्तग्रहणसामर्थ्यादौपदेशिकत्वं लभ्यत इति । तदपि न । 'सङ्ख्ये'त्यस्याकर्षणेन संज्ञिपरत्वसंपादनेन च सामर्थ्योपक्षयात् । **नोपधायाः** । 'ने'ति लुप्तषष्ठीकं पदमङ्गस्य

---

त्येव पठितं तथापि सूत्रे ङिग्रहणस्य प्रत्याख्यातत्वेन 'हे चर्मन्, 'हे चर्मे'ति संबुद्धावेवोदाहृतत्वेन च तावन्मात्रविषयताऽस्येति भावः । **ष्णान्ता** । विशेष्यसाकाङ्क्षात्स्त्रीलिङ्गनिर्देशात्प्रकृतं 'सङ्ख्ये'त्याकृष्यते । सङ्ख्याशब्देन च सङ्ख्याप्रकारकबोधजनकाः पञ्चादयो गृह्यन्ते । सङ्ख्येतिशब्दे, बहुगणवतु-डतिषु च तदन्तत्वाऽसंभवात् । तदाह–**सङ्ख्येति** । **सन्निपातेति** । नुमो बहिरङ्गाऽसिद्धत्वं तु न, संज्ञायाः कार्यापेक्षत्वेन समत्वात् । स्पष्टञ्चेदं भाष्ये ।

**नोपधा** । नलोपस्यासिद्धत्वान्नामीति दीर्घाप्राप्तेरयमारम्भः । 'नामी'त्यस्याङ्गविशेषणतैव न्याय्या, नामः प्रत्ययत्वात्, एवं च 'पञ्चाना'मित्यादौ पकाराऽकारस्य दीर्घवारणायोपधाग्रहणम् । नेति किम् ?, चतुर्णाम् । नामि किम् ? । चर्मणाम् । **नलोप इति** । 'ध्रुवः पञ्चाना'मिति लिङ्गान्न सन्निपातपरिभाषाविरोधः ॥

परमपञ्च। परमपञ्चानाम्। गौणत्वे तु न लुङ्नुटौ। प्रियपञ्चा। प्रियपञ्चानौ। प्रियपञ्चानः। प्रियपञ्चानाम्। एवं सप्तन् नवन् दशन्॥

**अष्टन आ विभक्तौ** ।७।२।८४। अष्टन आत्वं स्याद्धलादौ विभक्तौ॥

**अष्टाभ्य औश्** ।७।१।२१। कृताऽऽकारादष्टनः परयोर्जश्शसोरौश्स्यात्।

---

विशेषणम्। नलोपस्यासिद्धत्वात् 'नामी'ति दीर्घो न प्रवर्तत इत्ययमारम्भः। **गौणत्वे त्विति**। बहुवचननिर्देशस्यार्थप्राधान्यार्थत्वादिति भावः। **प्रियपञ्चामिति**। ञद्वयमध्ये चकारः।

**अष्टन आ विभक्तौ**। सौत्रत्वादिहाऽल्लोपो न कृतः। 'कनिन्युवृषितक्षी'त्यतः 'कनि'नित्यनुवर्तमाने 'सप्यशूभ्यां तुट् चे'त्यनेन सप्तन्नष्टन्शब्दौ निष्पन्नौ। 'रायो हली'त्युत्तरसूत्राद्धलीत्यपकृष्यते, तच्च विभक्तेर्विशेषणमित्यभिप्रेत्य व्याचष्टे-**हलादाविति**। 'हली'त्यस्यानपकर्षणे लष्टानामिति न सिध्येत्। परत्वान्नित्यत्वाच्च नुटः प्रागात्वे कृते अनान्तत्वेन षट्संज्ञाऽभावान्नुटोऽप्रवृत्तेः। न च यथोद्देशपक्षेऽन्तरङ्गत्वात्प्रागेव कृता षट्संज्ञा एकदेशविकृतन्यायेन कृतात्वेऽपि सुलभेति वाच्यम्, अल्विधौ उक्तन्यायाऽयोगात्। किंच 'प्रियाष्टानौ' 'प्रियाष्टानः' 'प्रियष्ट्नः' 'प्रियाष्ट्ने'त्याद्यपि न सिध्येत्, उक्तरीत्या तत्राप्यात्वप्रवृत्तेरिति बोध्यम्।

**अष्टाभ्य औश्**। शित्त्वात्सर्वादेशः। ननु 'अनेकाल्शित्सर्वस्ये'ति सूत्रे शिद्ग्रहणं प्रत्याख्यायानेकाल्त्वादेव सर्वादेश इति सुवचम्। न च शस्येत्संज्ञायामनेकाल्त्वं नास्तीति वाच्यं, शकारोच्चारणसामर्थ्यादत्र भूतपूर्वगत्याश्रयणात्। न चैवम् 'अवर्णस्त्रसा'विति त्रादेशस्यापि सर्वादेशता स्यादिति वाच्यम्, ऋकारस्योगित्कार्यार्थत्वेन तत्र सामर्थ्योपक्षयात्। न चैवमौशित्यादौ शकारः श्रवणार्थ एव स्यादिति शङ्क्यम्, अनुशतिकादिषु 'ऐहलौकिक'मिति निर्देशेन शकारस्येत्संज्ञाभ्युपगमादितिदिक्।

---

**अष्टन आ**। 'अनण्त्वान्नानुनासिक' इति भाष्ये स्पष्टम्। जातिग्रहणेन गुणाऽभेदकत्वेन तु न सः, भाव्यमानत्वात्। 'शुद्धोच्चारणा'दिति तु नात्र वक्तुं शक्यं, 'रायो हली'त्युत्तरार्थन्तस्य चारितार्थ्यात्। प्रश्लेषेणाऽपि न निर्वाहः, वाच्यवृत्त्याऽनुनासिकव्यावृत्तेरतेनाऽलाभात्। प्रत्युत तत्रापि गुणाऽभेदकत्वादेर्दुर्वारत्वेनान्तरतम्यादनुनासिकस्यैव प्राप्तेः। प्रश्लेषस्य पर्यायेण सकलाऽकारविधानार्थत्वं स्यात्। एवमन्यत्रापि बोद्धव्यम्। 'रायो हली'त्यतो 'हली'त्यपकृष्यते। **अष्टाभ्य औश्**। 'उ'ङिति तु नोक्तम्, सकारस्योकारे 'अष्ट अ उ' इति स्थिते 'इण्ङिशीनामाद्गुणः सवर्णदीर्घत्वा'दिति न्यायेनाऽन्तरङ्गत्वात्सवर्णदीर्घे तत आद्गुणेऽष्टावित्यस्याऽसिद्ध्यापत्तेः ननु 'हली'त्यपकर्षे 'कृताकारा'दित्यनुपपन्नमत आह-**कृतात्वेति**। कृतात्वस्यैव निर्देशः [illegible] लघवाद-

'अष्टभ्य' इति वक्तव्ये कृताऽऽत्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति। वैकल्पिकं चेदमष्टन आत्वम्। 'अष्टनो दीर्घा'दितिसूत्रे दीर्घग्रहणाज्ज्ञापकात्। अष्टौ। अष्टौ। परमाष्टौ। परमाष्टौ। अष्टाभिः। अष्टाभ्यः। अष्टाभ्यः। अष्टानाम्। अष्टासु।

---

**कृताकारादिति**। ननु 'हली'त्यपकृष्यत इत्युक्तं तत्कथं कृताकारतेत्यत आह–**अष्टभ्य इतीति**। 'अष्टाभ्य'इति कृतात्वस्येदमनुकरणम्, न तु लक्षणवशसंपन्नमात्वं, तथाहि सति वक्ष्यमाणज्ञापकेन तस्य वैकल्पिकतया लाघवार्थम् 'अष्टभ्य औ'शित्येव ब्रूयादिति भावः। **इदमिति**। श्रुतमनुमितं चेत्यर्थः। **अष्टनो दीर्घादिति**। दीर्घान्तादष्टनः परा असर्वनामस्थानविभक्तिरुदात्ता स्यात्। अष्टाभिः। दीर्घात्किम्? अष्टभिः। मध्योदात्तमिदम्। 'षट्त्रिचतुर्भ्यो हलादिः' इति बाधित्वा 'झल्युपोत्तम'मित्यस्य प्रवृत्तेः। 'षट्त्रिचतुर्भ्यो या झलादिविभक्तिस्तदन्ते पदे उपोत्तममुदात्तं स्या'दिति तदर्थः। ननु 'प्रियाष्ट्ने'त्यादौ विभक्तेरुदात्तत्वनिवारणाय दीर्घग्रहणमिहावश्यकमिति कथमस्यात्वविकल्पज्ञापकतेति चेदत्राहुः–'अष्टनो दीर्घा'दित्यत्रान्तोदात्तादित्यनुवर्त्यान्तोदात्तादष्टनः परेत्यादिव्याख्यानादष्टभिरित्यादौ विभक्तेरुदात्तत्वं सिद्ध्यति। घृतादित्वेनाऽष्टनोऽन्तोदात्तत्वात्। 'प्रियाष्ट्न'इत्यादिबहुव्रीहौ तु पूर्वपदप्रकृतिस्वराभ्युपगमेनाष्टनोऽन्तोदात्तत्वाभावाद्विभक्त्युदात्तत्वं न प्रवर्तते इति दीर्घग्रहणं व्यर्थं सदुक्तार्थे ज्ञापकमेवेति। **अष्टानामिति**। 'नुटः पश्चादेव संनिपातपरिभाषाया अनित्यत्वादात्वं, न तु ततः प्रा'गिति तु मनोरमायां स्थितम्। अत्र नव्याः–संनिपातपरिभाषयाऽऽत्वाभावेऽप्यत्र न क्षतिः, 'नोपधायाः' इति दीर्घे नलोपे 'पञ्चानां''सप्ताना'मितिवद्रूपसिद्धेः। न च 'अष्टनो दीर्घा'दिति विभक्त्युदात्तत्वमात्वविधेः प्रयोजनमिति वाच्यं,

---

ष्टभ्य इत्येव वदेदिति भावः। **ज्ञापयतीति**। अयं भावः–'हली'त्यपकृष्यमाणं वाक्यभेदेन पुनर्विधानार्थं, तेनाऽष्टन इत्यस्य क्वचिदक्ष्वपि प्रवृत्तिरिति। **आत्वमिति**। आत्वमात्रमित्यर्थः।

**सूत्रे इति**। 'दीर्घान्तादष्टनः पराऽसर्वनामस्थानविभक्तिरुदात्ते'ति तदर्थः। **ज्ञापकादिति**। तद्धि 'अष्टभि'रिति ह्रस्वेऽन्तोदात्तव्यावृत्त्यर्थम्। एवञ्च ह्रस्वव्यावृत्त्यर्थं क्रियमाणं दीर्घग्रहणमात्ववैकल्पिकत्वे ज्ञापकम्। न चाऽष्टाभिरित्यत्र सावकाशस्याऽष्टन इति सूत्रस्याऽष्टभिरित्यत्र परत्वात् 'झल्युपोत्तम'मित्यनेन बाधे सकृद्गतिन्यायेन पुनरप्रवृत्तौ व्यर्थमेव तत्, न ह्यष्टाभिरित्यत्र 'झल्युपोत्त'मित्यपि प्राप्नोति, कार्यकालपक्षेऽनान्तत्वेन षट्त्वाऽभावात्, अल्विधित्वेन स्थानिवत्त्वाभावाच्चेति वाच्यम्; पुनःप्रसङ्गविज्ञानबोधनद्वाराऽप्येतद्विषये यथोद्देशपक्षस्यैवाश्रयणबोधनद्वारा वा तद्विकल्पे ज्ञापकत्वमित्याशयादित्यन्यत्र विस्तरः। **अष्टानामिति**। 'हली'त्युक्तेरादौ नुट्, तत आत्वम्। यत्तु सन्निपातपरिभाषयाऽत्र नात्वं, किन्तु 'नोपधायाः' इति दीर्घे नलोपः। अन्तोदात्तत्वन्तु 'षट्त्री'त्येव सिद्धम्। नलोपे तु

आत्वाभावे,-अष्ट । अष्ट । इत्यादि पञ्चवत् ॥ गौणत्वे त्वात्वाभावे राजवत् । शसि प्रियाष्णः । इह पूर्वस्मादपि विधावल्लोपस्य स्थानिवद्भावान्न ष्टुत्वम् । कार्यकालपक्षे बहिरङ्गस्याऽल्लोपस्याऽसिद्धत्वाद्वा । 'प्रियाष्णा'-इत्यादि । जश्शसोरनुमीयमानमात्त्वं प्राधान्य एव न तु गौणतायाम् । तेन प्रियाष्णो हलादावेव वैकल्पिकमात्त्वम् । प्रिया-

---

'षट्त्रिचतुर्भ्यो हलादि'रित्यनेनैव तत्सिद्धेरिति । **पूर्वस्मादपीति ।** न चात्र 'पूर्वत्रासिद्धीये न स्थानिवत्' इति निषेधः शङ्क्यः, 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इत्युक्तत्वादिति दिक् । **प्राधान्य एवेति ।** औश्त्वं हि लुङ्टाविव प्राधान्य एव भवति न तु गौणत्वे, 'अष्टाभ्य'इति बहुवचननिर्देशात् । अन्यथा हि कृताऽऽत्वानुकरणेऽपि एकवचनेनैव निर्दिशेत्-'अष्टा औ'शिति 'अष्ट' इति वा । एतच्च 'ष्णान्ता ष'डिति सूत्रे भाष्यकैयटयोः स्पष्टम् । तथा चौश्त्वविधौ कृतात्वनिर्देशबलेनानुमीयमानमात्वं

---

न सन्निपातपरिभाषा, नलोपस्याऽसिद्धत्वादिति, तन्न; पूर्वत्र कर्त्तव्ये नलोपाऽसिद्धत्वेपि तत्र कृतेऽसिद्धत्वे मानाभावात् । सन्निपातस्याऽशास्त्रीयत्वेन तस्य नलोपाऽसिद्धत्वेनाऽलाभाच्च । आरोपिताऽसिद्धत्वेपि वस्तुतो नलोपे तद्विघातस्य जायमानत्वेन नलोपेऽपि तस्या दुर्वारत्वाच्च । अत एव 'गव्यिता' 'नाव्यिते'त्यादौ सन्निपातपरिभाषया यलोपो न । अन्यथा 'यस्य हल' इति यलोपस्य बहिर्भूतवृज्निमित्तकत्वेन बहिरङ्गतयाऽन्तरङ्गाऽवादेशं प्रत्यसिद्धतया निमित्तविघाताऽभावः स्पष्ट एव । तस्मान्नलोपस्यापि परिभाषाऽनित्यत्वेनैव साध्यतया तस्याऽसिद्धत्वादात्वमेव युक्तन्तदनित्यत्वेन । **किञ्च** षट्संज्ञासन्निपातेन जातस्य नुट आत्वे नलोपे वा न तद्विघातकत्वं, स्थानिवद्भावेन कृताऽत्वेपि षट्त्वसत्त्वात् । कार्यकालपक्षे तत्तद्विध्येकवाक्यतापन्नपट्त्वस्य बहिरङ्गतयात्वे कृते ऽनान्तत्वेन षट्त्वाभावान्नुट् न स्यादिति 'हली'त्यपकर्षः । दीर्घग्रहणाज्ज्ञापकादाकारान्तस्य षट्संज्ञाश्रयणेऽत्र यथोद्देशस्यैवाश्रयणेनाऽन्तरङ्गत्वात्पूर्वं षट्त्वे नान्तसङ्ख्यावाचकत्वसमानाधिकरणधर्मविशेषरूपस्य षट्त्वस्य स्थान्यलधर्मत्वाभावेन स्थानिवद्भावादाकारान्ते आश्रयणे वा प्रतिपत्तिगौरवमिति बोद्धव्यम् । वृत्त्याद्यनुसारेणाह-**गौणत्वे त्वित्यादि । स्थानिवद्भावादिति ।** 'पूर्वत्रासिद्धे' इति तु 'तस्य दोष' इत्यनेन निषिद्धमिति भावः । **कार्यकालपक्षे** इत्यादि तु प्राचामनुरोधेनेत्युक्तम् । **प्राधान्य एवेति ।** बहुवचननिर्देशात् । एवञ्च गौणे औशोऽप्रवृत्तौ तज्ज्ञाप्याऽऽत्वमपि नेति भावः । **परे** तु 'ष्णान्ते'ति सूत्रे भाष्ये 'अष्टाना'मित्येतत्सिद्धये 'हली'त्यपकर्षमुक्त्वा तत्र पक्षे'प्रियाष्टौ:' 'प्रियाष्टाः इति न सिद्ध्यति' 'प्रियाष्टानौ' 'प्रियाष्टान' इति प्राप्नोति इति शङ्किते 'यथालक्षणमप्रयुक्ते' इति समाहितम् । तत्र 'यथालक्षण'मिति प्रतीकमुपादाय 'यस्य विशिष्टः प्रयोगो न स्मर्यते नापि प्रयोगनिषेधस्मृतिस्तद्यथालक्षणमनुगन्तव्यन्तदत्र मा भूदात्वमित्यर्थ' इत्येकमर्थमुक्त्वा 'नैव वा लक्षणमप्रयुक्ते प्रवर्त्तते, प्रयुक्तानामेव लक्षणेनाऽन्वाख्याना'दिति व्याख्या[ना]न्तरमुक्तम् । तत्राऽन्त्यव्याख्यानमेव ज्यायः । अप्रयुक्ते लक्षणाऽभावस्यैव योग्यता न तु लक्षणप्रवृत्तेरित्यर्थसङ्गतेः । आद्यव्याख्यायामप्रयुक्ते इति

ष्टाभ्याम् ३ । प्रियाष्टाभिः । प्रियाष्टाभ्यः २ । प्रियाष्टासु ॥ 'प्रियाष्टो राजवत्सर्वं हाहावच्चाऽपरं हलि' ॥ [ इति नान्ताः ] ॥

भष्भावः । जश्त्वचर्त्वे । भुत् । भुद् । बुधौ । बुधौ । बुधः । बुधा । भुद्भ्याम् । भुद्भ्याम् । भुद्भ्याम् । भुत्सु ॥ [ इति धान्ताः ] ॥

**ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च** ।३।२।५९। एभ्यः क्विन् स्यात् । अलाक्षणिकमपि किंचित्कार्यं निपातनाल्लभ्यते । निरुपपदाद्युजेः क्विन् । कनावितौ ॥

**कृदतिङ्** ।३।१।९३। संनिहिते धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात् ॥

---

प्राधान्य एवोचितमिति भावः । 'प्रियाष्टा'–इति प्रथमैकवचनम् । उक्तार्थं संगृह्णाति–**प्रियाष्टो राजवदिति** । **इति नान्ताः** ।

**भुदिति** । बुध्यतेः क्विप् । **इति धान्ताः** ॥

**ऋत्विग्दधृक्** । **क्रुञ्चिदिति** । ऋतावुपपदे यजेः क्विन् । धृष्णोतेर्द्वित्वमन्तोदात्तत्वं च । सृजेः कर्मणि क्विन्, अमागमश्च । दिशेः कर्मणि क्विन् । उत्पूर्वात्स्निहेः क्विन्, उपसर्गान्तलोपः, षत्वं च । अञ्चेः सुप्युपपदे क्विनित्यर्थः । **निरुपपदाद्युजेरिति** । क्रुञ्चेरप्येवम् । नलोपाऽभावस्त्वधिकः । **कनावितावित** । इकारस्तूच्चारणार्थ इति भावः । **संनिहित इति** । प्राचा तु 'तृतीये धात्वधिकारे'इत्युक्तं, तदसत्, 'धातोः कर्मणः' इति सन्विधौ धातुग्रहणस्योत्तरत्रा-

---

वाक्यशेषाऽसङ्गतिः, प्रयुक्तेऽपि लक्षणानतिक्रमात् । 'प्रयुक्तानामिदमन्वाख्यान'मित्यन्यत्र भाष्योक्तेश्च । किञ्च भाष्यकारस्य लक्ष्यैकचक्षुष्कतया इयमेव व्याख्योचिता । एकस्यैव प्रयोगस्य भाष्यफक्किकाव्याख्यानभेदेन साधुत्वाऽसाधुत्वयोरनौचित्याच्च । **न वेति** सूत्रे भाष्ये पक्षभेदेनैकस्यैव साधुत्वाऽसाधुत्वयोस्तिरस्काराच्च । अत एव हल्ङ्यादिसूत्रादावस्याऽप्रयुक्ते लक्षणाऽभाव इत्येव व्याख्याऽऽदृता कैयटेन । 'नाम्रेडितस्ये'ति सूत्रेपि कैयटः–'प्रयोगमूलत्वादस्य शास्त्रस्य प्रयोगाभावे न प्रवृत्ति'रिति । एवञ्चैषामनभिधानमेवोचितम् । अत एवा'ऽष्टाभ्य औ'शिति सूत्रे भाष्ये–विभाषा आत्वं यदयमात्वभूतस्य ग्रहणङ्करोति–'अष्टाभ्य' इति, अन्यथा 'अष्टन' इत्येव ब्रूया'दित्युक्तम् । कैयटरीत्या गौणे प्रवृत्त्यभावाय बहुवचननिर्देशस्यावश्यकतया तदसङ्गतिः स्पष्टैव । एवञ्च तत्प्रयोगविचारः सर्वोऽपि निष्फल एवेत्याहुः ।

**निरुपपदादिति** । नुमोऽसमास एव विधानेन सोपपदे 'चोः कु'रिति कुत्वेनैव सिद्धत्वेन क्विनि क्विपि च विशेषाऽभावादिति भावः । **कनाविति** । इदमुपलक्षणम्–उच्चारणार्थेकारस्यापि । ककारो गुणप्रतिषेधाद्यर्थः । नकारः 'क्विन्प्रत्ययस्ये'त्यत्र विशेषणार्थ इति भाष्ये स्पष्टम् । **सन्निहिते इति** । तत्फलन्तु णिजादीनां संज्ञाऽभावः । अतिङ् किम् ? । 'रुरुदिवे'त्यादौ 'नेड्वशि कृती'ति

वेरपृक्तस्य ।६।१।६७। अपृक्तस्य वेर्लोपः स्यात् । 'कृत्तद्धिते'ति प्रातिपदिकत्वात्स्वादयः ॥ **युजेरसमासे** ।७।१।७१। युजेः सर्वनामस्थाने नुम् स्यादसमासे । सुलोपः । 'संयोगान्तस्य लोपः' ॥ **क्विन्प्रत्ययस्य कुः** ।८।२।६२। क्विन्प्रत्ययो यस्मात्तस्य कवर्गोऽन्तादेशः स्यात्पदान्ते । नस्य कुत्वेनाऽनुनासिको ङकारः । युङ् । 'नश्चापदान्तस्ये'ति नुमोऽनुस्वारः। परसवर्णः । तस्याऽसिद्धत्वा'च्चोः कु'रिति कुत्वं न । युञ्जौ । युञ्जः । युञ्जम् । युजौ । युजः । युजा । युग्भ्यामित्यादि । असमासे किम् ? ॥ **चोः कुः** ।८।२।३०। चवर्गस्य कवर्गः स्याज्झलि पदान्ते च । इति कुत्वम् । 'क्विन्प्रत्ययस्ये'ति कुत्वस्याऽसिद्धत्वात् । सुयुक् । सुयुग् । सुयुजौ । सुयुजः । 'युजे'रिति धातुपाठपठितेकारविशिष्टस्याऽनुकरणं न त्विका निर्देशः । तेनेह न—युज्यते समाधत्ते इति युक् । 'युज समाधौ' दैवादिक आत्मनेपदी ॥ संयोगान्तलोपः । खन् । खञ्जौ । खञ्जः । इत्यादि । 'व्रश्चे'ति षत्वम् । जश्त्वचर्त्वे । राट् । राड् । राजौ । राजः । राट्सु । राट्त्सु । एवं विभ्राट् ॥ देवेट् । देवेजौ । देवेजः ।

---

नुवृत्तेरभावेनाधिकारत्रयाऽभावात् । **युजेरसमासे** । 'उगिदचा'मित्यतः 'सर्वनामस्थाने' इत्यनुवर्तते । 'इदितो नुम् धातो'रित्यतो 'नुम्'चेत्याशयेनाह—**सर्वनामस्थाने नुम्स्यादिति** । **क्विन्प्रत्ययस्य** । 'क्विनः कु'रित्युक्तेऽपि प्रत्ययग्रहणे तदन्त ग्रहणात्क्विन्नन्तस्य ग्रहणे सिद्धे प्रत्ययग्रहणं बहुव्रीहिविज्ञानार्थमित्याशयेन व्याचष्टे—**क्विन्प्रत्ययो यस्मादिति** । बहुव्रीह्याश्रयणफलं तु 'स्पृ'गित्यादि स्फुटीभविष्यति । **सुयुगिति** । सुष्ठु युनक्तीति विग्रहे 'सत्सूद्विषे'ति क्विप् । **तेनेह नेति** । नुमेत्यर्थः । क्विन्प्रत्ययस्तु स्यादेव, ऋत्वि'गित्यादिसूत्रे 'युजी'ति इका निर्देशात् । **खन्निति** । खजतीति खन् । 'खजि गतिवैकल्ये' । **एवं विभ्राडिति** । फणादिरयम् । विशेषेण भ्राजते इति विभ्राट् । देवान् यजतीति देवेट् । क्विपि यजादित्वात्संप्रसारणे आद्गुणः ।

---

निषेधो मा भूदिति । ज्ञापकेन निर्वाहस्तु व्याख्यानादरं करणमिति न्यायाननुगृहीत इति सूत्राशयः ।

**युजेर** । 'उगिदचा'मित्यतः 'सर्वनामस्थाने' इति 'इदितो नु'मित्यतो 'नु'मिति चाऽनुवर्त्तते । **क्विन्प्रत्यय** । प्रत्ययग्रहणसामर्थ्यादतद्गुणसंविज्ञानो बहुव्रीहिः । न च तदभावे वस्य कुत्वापत्तिः; तथा सति 'क्विनो ध' इत्येव वदेत् । 'नशेर्वे'त्यत्र धातुवृत्त्याप्यदोषादिति बोद्ध्यम् । **चोः कुः** । 'स्कोः'रित्यतोऽन्त इति 'झलो झली'त्यतो 'झली'ति चानुवर्त्तते, 'पदस्ये'ति चाऽधिकारः । **कुत्वस्यासिद्धत्वादिति** । अतद्गुणबहुव्रीह्याश्रयणात्प्राप्तिः । **सुयुगिति** । 'सत्सूद्विषे'ति क्विप् । **धातुपाठेति** । व्याख्यानादिति भावः । **युगिति** । 'क्विप् चे'ति क्विप् । **इहेति** । 'सृजिदृशो'रिति सूत्रे 'रज्जुसृड्भ्या'मिति भाष्यप्रयोगात् ... सूत्रे ... 'ऋत्विग्दधृक्' ... प्रयोगात्क्विन्प्रत्ययस्येति कुत्वं नेत्यर्थः ।

विश्वसृट् । विश्वसृड् । विश्वसृजौ । विश्वसृजः । इह 'सृजियज्योः कुत्वं ने'ति क्लीबे वक्ष्यते । परिमृट् । षत्वविधौ राजिसाहचर्यात् 'टुभ्राजृ दीप्ता'विति फणादिरेव गृह्यते । यस्तु 'एजृ भ्रेजृ भ्राजृ दीप्ता'विति तस्य कुत्वमेव । विभ्राक् । विभ्राग् । विभ्राग्भ्यामित्यादि ॥ ** परौ व्रजेः षः पदान्ते । परावुपपदे व्रजेः क्विप्स्याद्दीर्घश्च पदान्तविषये षत्वं च । परित्यज्य सर्वं व्रजतीति परिव्राट् । परिव्राजौ । परिव्राजः । **विश्वस्य वसुराटोः** ।६।३।१२८। विश्वशब्दस्य दीर्घः [अन्तादेशः] स्याद्वसौ राट्शब्दे च परे । विश्वं वसु यस्य स विश्वावसुः । 'रा'डिति पदान्तोपलक्षणार्थम् । चर्त्वमविवक्षितम् । विश्वाराट् । विश्वाराड् । विश्वराजौ । विश्वराजः । विश्वराड्भ्यामित्यादि ॥

**स्कोः संयोगाद्योरन्ते च** ।८।२।२९। पदान्ते झलि च परे यः संयोग-

---

विश्वं सृजतीति विश्वसृट्, क्विन्नन्तः । क्विन्प्रत्ययो यस्मादिति बहुव्रीह्याश्रयणात्कुत्वं कस्मान्न भवतीत्याशङ्क्याह—**नेति क्लीबे वक्ष्यत इति** । 'रज्जुसृड्भ्या'मिति भाष्यकारप्रयोगात् । यद्वा 'व्रश्चादिसूत्रे सृजियज्योः पदान्ते षत्वं कुत्वापवादः'इति वक्ष्यत इत्यर्थः । परिमार्ष्टीति—**परिमृट्** ॥

**परौ व्रजेः** । 'क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसंप्रसारणं च'त्यौणादिकात्पूर्वसूत्रादिह क्विब्दीर्घावनुवर्तेते, तदाह—**क्विप्स्याद्दीर्घश्चेति** । **विश्वस्य वसु** । 'ढ्रलोपे'इत्यतोऽनुवर्तनादाह—**विश्वशब्दस्य दीर्घः स्यादिति** । **स्कोः** । 'पदस्ये'त्यनुवर्तते, 'झलो झलि'त्यतो 'झली'ति च । 'संयोगे'ति लुप्तषष्ठीकं झलन्ताभ्यां विशेष्यते । तदेतदाह—**पदान्ते झलि च परे इति** । झलि किम् ? । भ्रष्टा । भृजतीति

---

**परिमृडिति** । 'धातोरुच्यमानं कार्यन्तत्प्रत्यये' इति परिभाषयाऽत्र सुब्निमित्तिका मृजेर्वृद्धिर्न, क्विन्निमित्तिका तु 'क्ङिति चे'ति निषेधान्न । **परौ व्रजेः** । 'क्विब्वची'त्युणादिपठितमिति मते ततः क्विब्दीर्घावनुवर्त्तेते, व्याख्यानाच्च ताभ्यां पदान्त इत्यस्यासंबन्धः, किन्तु षेणैवेत्याह—**क्विबित्यादि** । **विश्वस्य** । 'ढ्रलोप'इत्यतो 'दीर्घ' इति वर्त्तते । ननु षत्वादीनामसिद्धत्वेन राट्शब्दपरत्वाऽभावोऽत आह—**पदान्तेति** । तेन 'विश्वराजा'वित्यादौ न, 'विश्वाराड्भ्या'मित्यत्र च भवति । 'आदित्यविश्वसव' इत्यत्र तु न दीर्घः, 'नरे संज्ञाया'मित्यतः संज्ञापदापकर्षणात् । **स्कोः सं** । 'झलो लोपः संयोगान्तलोप' इति भाष्योक्तेरत्र 'झल' इत्यस्याऽसंबन्धः । तेन 'झलः परयो स्कोर्लोप' इति नार्थ इत्यत्र प्रपञ्चितम् । 'झलं'त्यनुवर्त्तमानं झलादिप्रत्ययपरं, 'झलो झली'त्यत्रोदःस्थादित्यारम्भेण तदर्थकतयाऽर्थाधिकारात् । तेन 'पृथक्स्थाता' 'पयःस्थिति'रित्यादौ न दोषः, 'सडी'ति वार्तिकाच्च । सनस्सकारमारभ्य महिङो ङकारात्सङिति प्रत्याहारः । 'भूयास्ता'मित्यादौ 'न व्यञ्जनपरस्ये'ति न्यायेन लोपाऽभावेपि न क्षतिः । के चित्त्वप्रत्यये संयोगादिलोपप्राप्तियोग्योदाहरणानामनभिधानमेवोचितम् । 'सडी'ति वक्तव्यं

स्तदाद्योः सकारककारयोर्लोपः स्यात् । भृट् । भृड् । सस्य श्चुत्वेन शः । तस्य जश्त्वेन जः । भृज्जौ । भृज्जः । 'ऋत्वि'गित्यादिना ऋतावुपपदे यजेः क्विन् । क्विन्नन्तत्वात्कुत्वम् । ऋत्विक् । ऋत्विग् । ऋत्विजौ । ऋत्विजः । 'रात्सस्ये'ति नियमान्न संयोगान्तलोपः । ऊर्क् । ऊर्ग् । ऊर्जौ । ऊर्जः । त्यदाद्यत्वं पररूपत्वं च ॥ [इतिजान्ताः]॥

**तदोः सः सावनन्त्ययोः** ।७।२।१०६। त्यदादीनां तकारदकारयोरनन्त्योः स स्यात्सौ

---

भृट् । क्विप् । 'ग्रहिज्ये'ति संप्रसारणम् । 'व्रश्चे'ति षत्वम् । **ऊर्गिति** । 'ऊर्ज बलप्राणनयोः' । अस्माच्चुरादिण्यन्तात् 'भ्राजभासे'त्यादिना क्विपि णिलोपः, स च चोः कुत्वे न स्थानिवत्, पदान्तविधित्वात्, पूर्वत्राऽसिद्धत्वाच्च ।

इह जान्तेषु–अवयाः । अवयाजौ । अवयाज इति नोदाहृतं, 'मन्त्रे श्वेतवहोक्थे'ति प्रकृत्य 'अवे यजः'इति विहितस्य ण्विनस्तदपवादस्य पदान्ते ऽसश्छान्दसत्वेन वैदिकप्रक्रियायामेव वक्तुमुचितत्वात् । इति जान्ताः । **तदोः सः सावनन्त्ययोः** । 'त्यदादीनामः' इत्यतोऽनुवर्तनादाह–**त्यदादीनामिति** । त्यदादीनामिति किम् ? । आतपः । तारकः । तदोरिति किम् ? । यः । अनन्त्ययोः किम् ? । हे स । अत्र परत्वात्त्यदाद्यत्वं बाधित्वा दस्य सकारे सस् इति हल्ङ्यादिना सुलोपे रुत्वविसर्गौ स्याताम्, तथाच 'हे सः'इति रूपं स्यात् । किञ्च स्त्रियां 'से'ति रूपं न स्यात् । यदा त्वन्त्यस्य सकारे जातेऽपि पुनःप्रसङ्गविज्ञानात्त्यदाद्यत्वं सकारस्य स्वीक्रियते, तदा न किंचिदनिष्टमित्यनन्त्ययोरिति त्यक्तुं शक्यम् । यदि तु 'तदोः सः सा'वित्यस्यानन्तरम् 'अदस औ सुलोपश्चे'त्यत्र 'अदसः' इति योगं विभज्या'ऽदस एव दकारस्य सत्वं नान्यस्य दस्ये'ति नियमः स्वीक्रियते, तदा तु 'सकृद्गता'विति न्यायेनाप्यनन्त्ययोरिति त्यक्तुं शक्यम् । न चैवं द्वावात्मन इच्छति 'द्वीयति', ततः क्विपि 'स्व'इति रूपं न स्यात्, किंतु 'द्व'इति रूपं स्यादिति फले भेदान्नियमपक्षो न संभवतीति वाच्यं,–गौणे अत्वसत्वयोरसंभवे 'द्वी'रित्यस्यैव रूपस्य न्याय्यत्वादिति मनोरमायामुक्तत्वात् । सौ किम् ? । तौ ते तं तौ तान् । ननु 'तोः सः सौ'इत्येव सूत्रमस्तु, किमनेन 'तदो'रिति पृथग्ग्रहणेनेति चेन्मैवम्, 'अनेष'इत्यत्र

---

काष्ठशक्स्थाते'ति वार्त्तिकस्य प्रत्याख्यानपरेण 'कष्ठशगेव नास्ति कुतः काष्ठशक्स्थाते'ति भाष्येण तथैव बोधनादित्याहुः । 'प्रत्याख्यानमेकदेश्युक्तिः, सङीति वक्तव्यमेवे'ति परे । 'चोः कु'रित्येतत्पत्वेनाऽपवादत्वाद्बाध्यते, 'क्विन्प्रत्ययस्ये'त्यस्य तु क्विन्विधानसामर्थ्यादेव न बाध इत्याह–**क्विन्नन्तत्वादिति** । ऋत्विक्शब्दो यज्ञसंबन्धिपुरुषविशेषे रूढः । 'त्यदादीना'मित्यनुवृत्तेराह–**त्यदादीनामिति** । तेन 'आतप' इत्यादौ न । तदोः किम् ?, यः । 'तो'रिति तु नोक्तम् । 'अनेषे'त्यादौ नस्याऽप्रसक्तेः । न च ... बहिर्भूतसुनिमित्तकत्वेनास्यैव बहिरङ्ग-

परे। स्यः। त्यौ। त्ये। त्यम्। त्यौ। त्यान्। सः। तौ। ते। परमसः। परमतौ। परमते। 'द्विपर्यन्ताना'मित्येव। नेह। त्वम्। नच तकारोच्चारणसामर्थ्यान्नेति वाच्यम्, अतित्वमिति गौणे चरितार्थत्वात्। संज्ञायां गौणत्वे चाऽत्वसत्वे न। त्यद्। त्यदौ। त्यदः। अतित्यद्। अतित्यदौ। अतित्यदः। यः। यौ। ये। एषः। एतौ। एते। अन्वादेशे तु—एनम्। एनौ। एनान्। एनेन। एनयोः २॥

**ङे प्रथमयोरम्** ।७।१।२८। युष्मदस्मद्भ्यां परस्य 'ङे'इत्येतस्य प्रथमाद्वितीययोश्चाऽमादेशः स्यात्॥ **मपर्यन्तस्य** ।७।२।९१। इत्यधिकृत्य॥ **त्वाहौ सौ** ।७।

---

नकारस्य सत्वप्रसङ्गात्। 'नलोपो नञः' 'तस्मान्नुडचि' इत्यजाद्युत्तरपदस्य 'एष' इत्यस्य नुड्विधानेन त्यदादितवर्गत्वान्नकारस्य। न च सत्वे सति नुड्विधानं व्यर्थमिति वाच्यम्; 'अनश्व'इत्यादौ सावकाशत्वात्। तथाच 'तदो'रित्येव सूत्रं युक्तम्। ननु 'तस्मान्नुडची'ति सूत्रे 'तस्मा'दिति पदं परित्यज्य लाघवात् 'नुगची'त्येवोच्यतां, तथाच अजाद्युत्तरपदे परे नञ एव नुगागम इत्यनेष इत्यत्र नोक्तदोष इति चेत्, एवं तर्हि 'नलोपः प्रातिपदिकान्तस्ये'ति नलोपः स्यात्। विधानसामर्थ्यान्न भवतीति चेदेवमपि 'ङमो ह्रस्वादची'ति ङमुड् दुर्वार एव। ततश्च 'तस्मान्नुडची'ति सूत्रे पञ्चम्यन्तमावश्यकमेव टिदनुबन्धश्चेति। सूत्रे 'तदो'रिति 'तो'रिति वक्तुमशक्यम्। 'अनेष' इत्यत्रोक्तदोषात्। अत्र कैयटः—'तो'रित्युक्तेऽप्यनेष इत्यत्र सत्वं न भवेत्, नुडागमस्य पदद्वयाश्रितत्वेन बहिरङ्गत्वादन्तरङ्गसत्वदृष्ट्या असिद्धत्वादिति। उत्तरपदाधिकारस्थकार्ये बहिरङ्गपरिभाषाऽभावस्य 'इच एकाचोऽम्—' इत्यत्र भाष्ये उक्तत्वादयं कैयटश्चिन्त्यः। **गौणे चरितार्थत्वादिति**। गौणे हि अन्तर्गणकार्यत्वात्सत्वं न प्रवर्तते। 'त्वाहौ सा'वित्युक्ते तु 'अतिस्त्व'मिति स्यादिति भावः। **अत्वसत्वे नेति**। तयोः सर्वाद्यन्तगणकार्यत्वादिति भावः। **अतित्यदिति**। त्यमतिक्रान्तोऽतित्यद्॥

**ङे प्रथमयोरम्**। 'युष्मदस्मद्भ्यां ङसोऽ'सित्यतो 'युष्मदस्मद्भ्या'मित्यनुवर्तते। 'ङे'इति पृथक्पदं लुप्तषष्ठीकम्। 'प्रथमयो'रिति द्विवचनबलेन प्रथमाशब्दः प्रथमाद्वितीयोभयार्थक इत्याशयेन व्याचष्टे—**युष्मदस्मद्भ्यां परस्य ङे इत्येतस्येत्यादिना**।

---

त्वात्। इदञ्च 'तस्मान्नुडची'ति सूत्रे भाष्ये ध्वनितम्। सौ किम्?। तौ। **अत्वसत्वे नेति**। गणकार्यत्वादिति भावः।

**ङे प्रथम**। 'युष्मदस्मद्भ्यां ङसोऽ'श्रित्यतो 'युष्मदस्मद्भ्या'मिति वर्त्तते। 'ङे' इति पृथक् पदम्। अत एव 'प्रथमयो'रित्युच्यते, कयोः प्रथमयोः? विभक्त्योः वचनयोर्वा न ग्रहणं, शसोनेति

२।१४। युष्मदस्मदोर्मपर्यन्तस्य 'त्व' 'अह' इत्येतावादेशौ स्तः सौ परे ॥ **शेषे लोपः ७।२।९०।** आत्वयत्वनिमित्तेतरविभक्तौ परतो युष्मदस्मदोरन्त्यस्य लोपः स्यात् ॥ 'अतो गुणे'। 'अमि पूर्वः'। त्वम्। अहम्। ननु 'त्वं स्त्री' 'अहं स्त्री'त्यत्र 'त्व-अम्' 'अह अ'मिति स्थिते अमि पूर्वरूपं परमपि बाधित्वाऽन्तरङ्गत्वाट्टाप्प्राप्नोति। सत्यम्, अलिङ्गे युष्मदस्मदी, तेन स्त्रीत्वाऽभावान्न टाप्। यद्वा 'शेष' इति सप्तमी स्थानिनो-

---

'ङसुटो'रिति सुवचम्। **त्वाहौ सौ।** यद्यपि युष्मदः 'त्वमावेकवचने' इत्येव त्वादेशः सिद्धस्तथापि अस्मदोऽहादेशार्थमिदम्। किंच 'त्वमौ'इति सूत्रेण युवां युष्मान् वाऽतिक्रान्तोऽतित्वमिति न सिध्यति, एकार्थवाचित्वाभावाद्युष्मद इति भावः।

**युष्मदस्मदोरिति।** एतच्च 'युष्मदस्मदोरनादेशे' इत्यतो लभ्यते।

**शेषे।** उक्तादन्यः शेषः, आत्वं यत्वं च प्रागुक्तम्, तद्विषयादन्यविभक्तिरिह शेषशब्दार्थस्तदेतद्व्याचष्टे—**आत्वयत्वनिमित्तेतरेति। अन्त्यस्येति।** अलोऽन्त्यपरिभाषयेति भावः। **अतो गुण इति।** नव्यास्तु 'त्वाहौ सा'वित्यत्र त्वाहादेशयोरन्त्याकार उच्चारणार्थ एवाऽस्तु किमनेन पररूपकरणप्रयासेनेत्याहुः। **त्वम्। अहमिति।** ननु युष्मानतिक्रान्तः 'अतित्व'मित्यादौ 'त्वाहौ सौ' इत्यस्यावकाशोऽस्ति, त्वामतिक्रान्तेनाऽतित्वयेत्यादौ 'त्वमावेकवचने' इत्यस्यावकाशः, त्वमहमित्यत्र तूभयोः प्रसङ्गे

---

लिङ्गा'दिति भाष्यं सङ्गच्छते। **त्वाहौ।** यद्यपि युष्मदस्त्वादेशस्त्वमावेकवचन इति सिद्धः, तथापि युष्मानतिक्रान्तोऽतित्वमित्यर्थमत्र विधानम्। न चैवं तत्राऽस्य चारितार्थ्यात्केवले परत्वात्त्वमाभ्यां भाव्यमिति वाच्यं, 'त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधत'इत्यस्य वक्ष्यमाणत्वात्। 'युष्मदस्मदोरनादेशे' इत्यतो 'युष्मदस्मदो'रिति वर्त्तते। **शेषे।** आत्वयत्वयोः प्रागुक्तत्वेन तद्विषयातिरिक्तविभक्तिरिह शेषशब्दार्थस्तदाह—**आत्वयत्वेत्यादि।** स्पष्टचेदं 'युष्मदस्मद्भ्यां ङस'इत्यत्र, प्रकृतसूत्रे च भाष्ये। अत एव 'साम आक'मिति ससुट्कनिर्देशः सङ्गच्छते। एवञ्च शेषग्रहणं स्पष्टार्थं, विशेषविहिताभ्यामात्वयत्वाभ्यां स्वविषये बाधसंभवात्। **अन्त्यस्येति।** अलोन्त्यपरिभाषयेति भावः।

'त्वाहादयोऽकारान्ता' इति वृत्त्याद्यनुसारेणाह—**अतो गुणे इति।** 'त्यदादीनाम' इति सूत्रभाष्यकैयटाभ्यां 'हलन्ता एवादेशा' इति लभ्यते, तदा पररूपस्य प्राप्तिरेव न। यद्यप्युच्चारणार्थानामपीत्संज्ञालोपाभ्यां निवृत्तिः कार्या तथाऽप्यतो गुणे इत्यस्याऽप्रवर्त्तनेन प्रक्रियालाघवमत्र पक्षे। इत्संज्ञालोपयोस्तु सूत्र एव प्रवृत्तिरिति न प्रयोगसाधुत्वज्ञाने गौरवम्। 'त्वाहौ सा'विति गुरुनिर्देशस्तु 'श्वेतवहोक्थशस्'सितिवन्नाऽर्थसाधकः। णिजन्तात्क्विपि 'युष्म्'-'अ'स्मिति प्रातिपदिकयोरादेशा एव नेति तदाशयः। 'मपर्यन्तस्ये'ति भाष्यसंमतश्चाऽयमर्थ इत्यनुपदं स्फुटीभविष्यति। **अन्तरङ्गत्वादिति।** परनिमित्तानपेक्षत्वेन तत्त्वमिति भावः। **अलिङ्गे इति।** एवञ्च स्त्रियामनयोरप्रवृत्तेर्न टाविति भावः। इदं 'साम आक'मित्यत्र भाष्ये स्पष्टम्। यद्वेति। 'दस्मदादीनामि' इति सूत्रे

ऽधिकरणत्वविवक्षया। तेन मपर्यन्ताच्छेषस्य 'अ'दित्यस्य लोपः। सच परोऽप्यन्तरङ्गे 'अतो गुणे' कृते प्रवर्तते, तेनाऽदन्तत्वाऽभावान्न टाप्। परमत्वम्। परमाहम्। अतित्वम्। अत्यहम्॥ **युवावौ द्विवचने** ।७।२।९२। द्वयोरुक्तौ

---

'त्वमावेकवचन' इत्यनेन परत्वाद्बाध्यम्। नैष दोषः,—'त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः' इति वक्ष्यमाणत्वात्। **अधिकरणत्वविवक्षयेति**। यदि तु 'शेषे' इति विभक्तिविशेषणं स्यात्तर्हि व्यर्थमेव तत्, आत्वयत्वाभ्यां विशेषविहिताभ्यां स्वविषये लोपस्य बाधसम्भवात्। न चैवमन्त्यलोप इति पक्षस्य निरालम्बनतापत्त्या युष्मदस्मदोरन्त्यस्य लोपः स्यादिति ग्रन्थोऽयुक्त इति वाच्यम्, 'साम आक'मिति ससुट्कनिर्देशेन तस्यापि पक्षस्य ज्ञापितत्वादिति भावः।

**अतो गुणे कृते प्रवर्तत इति**। 'वार्णादाङ्गं बलीयः' इति तु समानाश्रय एव भवति, नतु व्याश्रये। इह तु शेषेलोपस्य विभक्तिर्निमित्तं, पररूपस्य त्वकार इति व्याश्रयत्वमिति भावः। समानाश्रये उदाहरणं तु 'कारक' इत्यादि बोध्यम्। तत्र हि यण्वृद्ध्योः

---

भाष्ये स्पष्टं, 'साम आक'मित्यत्र च। **मपर्यन्ताच्छेषस्येति**। इदमुपलक्षणं, तेन 'त्व'मित्यादौ लोपप्रवृत्तिवेलायां मपर्यन्ताच्छेषत्वाऽभावेपि न क्षतिः। नन्वदन्तत्वे आदेशानां 'वार्णादाङ्ग'मिति परिभाषया पररूपात्पूर्वमेव टिलोपे टाबभाव उपपादयितुमशक्यः, अकारस्य कार्य्यद्वयेपि स्थानित्वेन समानस्थानिकत्वमस्तीति चेन्न, 'हलन्ता एवादेशा' इति कैयटेनात्रैवोक्तत्वेनाऽदोषात्। 'शेष'इत्यस्य सामर्थ्यात्तन्न्यायाऽप्रवृत्तिरत्रेत्यन्ये, तन्न, 'युष्मभ्यं' 'युष्मत्' 'युष्माक'मित्यादौ टान्निवृत्त्या चारितार्थ्यात्। तस्मादनित्यत्वात्तदप्रवृत्तिरित्येके। तदाह—**अतो गुणो कृते इति**। अत्र वदन्ति—तत्तद्भाष्यप्रामाण्याच्छेषग्रहणससुट्कनिर्देशाभ्याधारस्य सूत्रस्यावृत्त्यार्थद्वये तात्पर्यम्। तच्च लक्ष्यानुरोधाद्व्यवस्थितं, तेन भ्यमि टिलोपे 'युष्मभ्य'मिति न। अत एव 'भ्यसोभ्य'मिति सूत्रे भाष्ये 'यदि भ्यमादेशः शेषे लोपोऽन्त्यलोप इति एत्वं प्राप्नोति। अथाऽभ्यमादेशः शेषे लोपष्टिलोप इत्यन्तस्योदात्तनिवृत्तिस्वरः प्राप्नोतीति। यथेच्छसि तथास्तु' इत्येवोक्तं न तु भ्यमादेशे टिलोपमादाय फलभेद उक्तः। वस्तुतस्तु टिलोपो व्यर्थः, अत एव 'लिङ्गाभावाट्टिलोपवचनानर्थक्य'मिति 'साम आक'मित्यत्र भाष्ये उक्तम्। अत्र 'लिङ्गाऽभावा'दित्युपलक्षणम्। 'शिशीलुङ्मिश्रधिभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेने'ति 'नेतराच्छन्दसी'ति सूत्रस्थभाष्यवार्तिकबलेन लिङ्गवत्त्वेपि सन्निपातपरिभाषया टाबभावस्योपपादयितुं शक्यत्वात्। अत एव सन्निपातपरिभाषया 'युवा'वित्यत्र टाबभावः 'कृन्मेजन्त'सूत्रे भाष्ये उक्तः। शेषग्रहणन्तु भाष्ये प्रत्याख्यातमेव। 'त्यदादीनाम' इति सूत्रस्थं 'टिलोपष्टाबभावार्थ' इति तु वार्त्तिकैकदेशिवचनमिति न दोषः। एतच्च भाष्यप्रदीपोद्द्योते निरूपितम्। अभ्यम्सूत्रे 'यथेच्छसि तथा' स्त्विति प्रौढोक्त्या 'भ्य'मितिच्छेदस्य प्रौढिवादत्वं भगवतैव सूचितं। त्वं यथेच्छसि तथास्तु तत्र दोषोद्धारो मया सुकर इति तत्तात्पर्यात्। 'अभ्य'मित्येव तु च्छेदो न्याय्यः। अत एव 'युष्मद-

युष्मदस्मदोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ ॥ **प्रथमायाश्च द्विवचने भाषायाम्** ।७।२।८८। इह युष्मदस्मदोराकारोऽन्तादेशः स्यात् । 'औङी'त्येव सुवचम् । भाषायां किम् ? । युवं वस्त्राणि । युवाम् । आवाम् । मपर्यन्तस्य किम् ? । साकच्कस्य माभूत् । युवकाम् । आवकाम् । 'त्वया' 'मये' 'त्यत्र' त्वया 'म्ये'ति माभूत् । युवकाभ्यामावकाभ्यामिति च न सिध्येत् ॥ **यूयवयौ जसि** ।७।२।९३। स्पष्टम् ।

---

प्राप्तयोर्वृद्धिरेव भवति । आङ्गत्वात्तदन्तविधिरित्याह–**परमत्वमित्यादि । युवावौ द्विवचने** । उक्तिर्वचनं, द्वयोर्वचनं द्विवचनं, तदेतदाह–**द्वयोरुक्ताविति** । न चात्र कृत्रिमाऽकृत्रिमन्यायविरोधः शङ्क्यः, वचनग्रहणसामर्थ्यादेव तद्बाधात् । अन्यथा 'द्वित्वे' इत्येव ब्रूयात् । 'अष्टन आ विभक्तौ'वित्यतो विभक्तावित्यधिकाराद्वित्वे या विभक्तिस्तस्यां परत इति व्याख्यानसंभवात् । **युवं वस्त्राणीति** । शेषे लोपः । **मपर्यन्तस्य किमिति** । अधिकारसूत्रं किमर्थमिति प्रश्नः । **युवकाम् । आवकामिति** । ननु युवावयोः समुदायादेशत्वेऽपि 'युवका'मित्यादि सिध्यति । 'ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच्, अन्यत्र तु सुबन्तस्य टेः प्रा'गिति युष्मदस्मद्विषये व्यवस्थायास्त्वयका मयकेत्यादिसिद्धये वक्ष्यमाणत्वात्, किमनेन 'मपर्यन्तस्ये'त्यधिकारेणेत्यपरितोषादाह–**त्वया मयेत्यत्रेति** । ननु त्वमादेशयोरपि समुदायादेशत्वे 'त्वये'त्यादि साधयितुं शक्यत एव, 'योऽची'ति सूत्रं परित्यज्य 'अच्ये' इति सूत्रे कृते अजादौ विभक्तौ परतोऽन्त्यस्य एकारादेशे सत्ययादेशप्रवृत्तेरिति पुनरपरितोषादाह–

---

स्मदोरनादेशे'इति सूत्रे 'न चादेशो हलादिरस्ती'ति भाष्योक्तिः सङ्गच्छत इति । **परमत्वमिति** । आङ्गत्वात्तदन्तविधिरिति भावः । गौणेऽप्रवृत्तौ बीजाऽभावादाह–**अतित्वमिति । युवावौ** । द्विवचनशब्दोऽत्र यौगिको, व्याख्यानात् । 'द्वयोर्वचनं बोधनं तत्र समर्थयोर्युष्मदस्मदो'रित्यर्थो,भाष्यप्रामाण्याच्च । तद्गृह्यमाणयुष्मदस्मदोरेव विशेषणं न तदन्तस्य, अङ्गाधिकाराद्धि तदन्तग्रहणमित्याशयेनाह–**द्वयोरुक्ताविति** । एतत्फलङ्गौणोदाहरणेषु मूल एव स्फुटम् । **मपर्यन्तस्य किमिति** । अधिकारसूत्रं किमर्थमिति प्रश्नः । ननु समुदायादेशत्वेप्योकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकजन्यत्र तु सुबन्तस्य टेः प्रागिति व्यवस्थाया युष्मदस्मद्विषये त्वयकेत्यादिसिद्धये वक्ष्यमाणत्वादन्तरङ्गत्वाद्युवामित्येतत्सिद्ध्युत्तरमकजिति 'युवका'मित्यत्र न दोषोऽत आह–**त्वयेति** । नन्वत्राऽपि'अच्ये' इति न्यासेनैकारादेशेऽयादेशे च सिद्धेराह–**युवकाभ्यामिति** । 'हलन्ता आदेशा' इति पक्षे तु त्वयेत्यादेरसिद्धिरेव । मादेशस्य सर्वादेशत्वञ्च न स्यादिति बोद्धव्यम् । नन्वेवमपि मान्तस्येत्येवोच्यतां किं परिग्रहणेनेति चेन्न; युष्मयत्यादेः क्विपि सुप्यादेशाऽभावार्थन्तत्सत्त्वात् । 'पर्यन्त'शब्देन मान्तापेक्षया शेषस्य लाभात् । 'कटिपर्यन्तं वास' इत्युक्तेऽग्रे किञ्चिदस्ती'ति नियमेन प्रतीतेः । एवञ्च मान्ताद्यत्राग्रे किञ्चिदवशिष्टं तत्रैव युस्मदस्मदोरादेशः । अत एव भाष्ये [illegible] कर्तव्यं, मान्त-

[अनयोर्मपर्यन्तस्य यूयवयौस्तो जसि] यूयम्। वयम्। परमयूयम्। परमवयम्। अतियूयम्। अतिवयम्। 'इह शेषे लोपोऽन्त्यलोप' इति पक्षे जसः शी प्राप्तः, 'अङ्गकार्ये कृते पुनर्नाङ्गकार्य'मिति न भवति। 'ङेप्रथमयो'रित्यत्र मकारान्तरं प्रश्लिष्य 'अम् मान्त एवाऽवशिष्यते नतु विक्रियते' इति व्याख्यानाद्वा॥

---

**युवकाभ्यामित्यादि। अङ्गकार्य इति।** एतेन 'अङ्गवृत्ते पुनर्वृत्तावविधि'रिति परिभाषा अर्थत उपनिबद्धा। 'अङ्गे-अङ्गाधिकारे-वृत्तं वर्तनं यस्य तदङ्गवृत्तं शास्त्रं, तस्मिन्प्रवृत्ते सति पुनरन्यस्याऽङ्गवृत्तशास्त्रस्य प्रवृत्तौ प्राप्तायामविधिः' इति तत्परिभाषाया अर्थः। एषा च परिभाषा 'ज्ञाजनोर्जे'त्यनेन ज्ञापिता। उपपत्तिस्तु मनोरमातोऽवगन्तव्या। न चैवं 'द्वाभ्या'मित्यत्र त्यदाद्यत्वे कृते 'सुपि चे'ति दीर्घो न स्यादिति वाच्यं, 'द्वयोरेकस्ये'त्यादिनिर्देशेन उक्तपरिभाषाया अनित्यत्वज्ञापनादिति दिक्। **मकारान्तर**मित्युपलक्षणं, 'जसश्शी' इत्यत्र 'जसः स्' इति सकारं प्रश्लिष्य सान्तस्य जस इति व्याख्यानात्, 'अतोऽ'मितिसूत्रादम्ग्रहणमनुवर्त्य 'अम् अमेवे'ति

---

स्येत्युच्यमाने यत्रैव मान्ते युष्मदस्मदी तत्रैवादेशाः स्युः, क्व च मान्ते, युष्मयतेरस्मयतेश्चाऽप्रत्यये' इत्युक्तम्। 'अवधिद्योतनार्थ'मित्यस्याऽन्तशब्दस्याऽवधिवाचकताद्योतनार्थमित्यर्थः। 'पर्यन्त'शब्दस्य लोके तथैव प्रयोगात्। अग्रे किञ्चित्सत्त्वे देशकालयोरवधित्वव्यवहारस्य लोके दर्शनाच्च। **तत्रैवे**त्यस्याऽनिष्ट-एवेत्यर्थः। 'परि'ग्रहणाऽभावे तु 'यतः पूर्वोस्ति परश्च नास्ति सोऽन्त्य' इति भाष्योक्तेर्मान्तपदस्य मुख्यार्थत्वलाभायाऽत्रैव स्यात्। 'क्वौ लुप्त'मित्यस्य प्रवृत्तिश्च स्यात्। 'अभिव्यक्तपदार्था' इति न्यायश्च पदकार्यविषय इति तदाशयः। अत एव भाष्ये प्रयोगदर्शनं न कृतम्। यत्तु 'परि'ग्रहणाऽभावे मान्ते यत्र ते तत्रैव स्यात्सामानाधिकरण्येनान्वयस्यौचित्यात्। सति तु तस्मिन् सामर्थ्याद्युष्मदस्मदोर्यौ मपर्यन्ताविति व्याख्यानाद्दान्ते, व्यपदेशिवद्भावेन युष्मयत्यादेः क्विपि च सिद्ध्यति। 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति तु प्रत्ययविधिविषयमिति, तन्न; परिग्रहणस्य वैयधिकरण्येनाऽन्वये मणिमन्त्रादिन्यायेन नियामकत्वकल्पनापेक्षयोक्तस्यैव न्याय्यत्वात्। तत्र हि सामानाधिकरण्याऽसम्भवाद्वैयधिकरण्यान्वय इत्यन्यत्। किं चाऽत्र व्याख्यानेऽवधिद्योतनार्थमिति भाष्याक्षराऽस्वारस्यम्। 'मपर्यन्तस्ये'ति च तद्गुणसंविज्ञानो बहुव्रीहिरिति दिक्। **अङ्गकार्ये इति।** अङ्गाधिकारस्थे इत्यर्थः। **मकारान्तरमिति।** 'शसो ने'त्यनेन संहितया पाठे' इति शेषः। **परे तु** शेषविभक्तिभूताऽमादियुष्मदादिसन्निपातेन जातस्य लोपस्य तद्विघातकश्यादिनिमित्तत्वं नेति सन्निपातपरिभाषयैव श्याद्यभावः। सुटस्त्वाकमवयवत्वान्न तेन सन्निपातविघात इति सकारनिर्देशः 'साम आक'मित्यत्र। अत एव 'कृन्मेजन्त'-सूत्रे 'ह्रस्वत्वन्तुग्विधेर्ग्रामणिकुल'मिति सन्निपातपरिभाषाप्रयोजनव्याख्यावसरे 'यदा ह्रस्वमात्रस्य तुगागमो न तदन्तस्य, तदेदं प्रयोजन'मिति व्याख्यातं **कैयटेन**। मूलोक्तं तु न युक्तं, भाष्याऽनुक्तेः। अत एव' नेतराच्छन्दसी'ति सूत्रे 'नपुंसकादेशेभ्यो युष्मदस्मदोर्विप्रत्ययेन विप्रतिषेधेने'ति

**त्वमावेकवचने** ।७।२।९७। एकस्योक्तौ युष्मदस्मदोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ ॥ **द्वितीयायां च** ।७।२।८७। युष्मदस्मदोराकारः स्यात् । त्वाम् । माम् । युवाम् । आवाम् ॥ **शसो न** ।७।१।२९। 'ने'त्यविभक्तिकम् । युष्मदस्मद्भ्यां परस्य शसो नकारः स्यात् । अमोपवादः । 'आदेः परस्य' । 'संयोगान्तस्य लोपः' । युष्मान् । अस्मान् ॥ **योऽचि** ।७।२।८९। अनयोर्यकारादेशः स्यादनादेशेऽजादौ परतः । त्वया । मया ॥ **युष्मदस्मदोरनादेशे** ।७।२।८६। अनयोराकारः स्यादनादेशे हलादौ विभक्तौ । युवाभ्याम् । आवाभ्याम् । युष्माभिः । अस्माभिः ॥ **तुभ्यमह्यौ**

---

व्याख्यानाद्वेति बोध्यम् । **एकस्योक्ताविति** । 'त्वमावेकत्वे' इति वक्तव्ये वचनग्रहणाद्द्वयमर्थो लभ्यत इति भावः । **अविभक्तिकमिति** । तथाच 'ङे प्रथमयो'रिति पूर्वसूत्रेण प्राप्तस्याऽमः प्रतिषेधोऽयमिति भाष्ये शङ्कितम् । नच तथैव किं न स्यात् 'द्वितीयायां चे'त्यात्वे पूर्वसवर्णदीर्घे 'तस्माच्छसः' इति नत्वे चेष्टसिद्धेरिति वाच्यं, स्त्रीनपुंसकयोर्नत्वाऽप्राप्त्या 'युष्मान्ब्राह्मणीः' 'युष्मान्कुलानी'त्यसिद्धिप्रसङ्गात् । अलिङ्गत्वपक्षे तु 'युष्मान् ब्राह्मणा'नित्यादेरप्यसिद्धिप्रसङ्गाच्च । **योचि** । अचि किम् ? । युवाभ्याम् । यदि तु 'युष्मदस्मदोरनादेशे'इत्यत्र 'रायो हली'त्यतो हलीत्यनुवर्तते तदेहा'ऽची'ति मास्तु, परिशेषादेव सिद्धेः ।

**युष्मदस्मदोरनादेशे** । आदेशे किम्? युष्मभ्यम् । न चाऽभ्यम्पक्षे आदेशो हलादिर्नेत्यनादेशग्रहणं त्यक्तुं शक्यमिति वाच्यं, 'योऽची'त्यत्राऽनुवृत्त्यर्थं तस्यावश्यकत्वात् ।

**हलादौ विभक्ताविति** । 'योऽची'त्यज्ग्रहणात्परिशेषसिद्धमिदम्, 'रायो हली'त्यतोऽनुवृत्त्या लब्धं वा ।

---

वार्त्तिकं व्याख्याय 'तेषु कृतेषु पुनः प्रसङ्गाच्छिशीलुग्विधयः कस्मान्न भवन्ति, सकृद्गतिन्याया'दित्युक्तम् । त्वद्रीत्या पुनः प्रसङ्गस्यैवाऽभावेन तसगङ्गतिः स्पष्टैव । अत एव च तत्र युष्मदादेर्विभक्त्यादेशस्य 'यूयं ब्राह्मणा' इत्याद्यवकाशप्रदर्शनं कृतम् । अन्यथा तत्रापि जसः शीप्राप्त्या तदसङ्गतिः । 'यूय'मित्यादिप्रयोगकरणेन तत्र श्यादिशङ्कासमाधानाऽकरणेन च भाष्यकृताऽत्र सन्निपातपरिभाषाविषयत्वं सूचितम् । अङ्गवृत्तपरिभाषया वारणमपि चिन्त्यम्, तस्या अङ्गसंबन्धिकार्यविषयत्वात् । सूत्रभाष्यस्वरसोऽप्येवमेव । वस्तुतो नैषा लक्ष्यसंस्कारिका, 'द्वयो'रित्यादिनिर्देशाऽसङ्गतेः । अत एव भाष्ये 'किगेतरया ज्ञापने प्रयोजन'मिति प्रश्ने 'पिबेर्गुणप्रतिषेधो वक्तव्य' इत्येव प्रयोजनमुक्तं न तु प्रयोगसिद्धिः प्रयोजनमुक्त'मित्याहुः । **त्वमाविति** । अत्रापि 'विभक्ता'विति संबद्ध्यते, अन्यथा 'प्रत्ययोत्तरपदयोश्चे'ति व्यर्थं स्यात् । तत्फलन्तु 'त्वं सुन्दरः पुत्रो यस्य युष्मत्सुन्दरपुत्र' इति त्रिपदबहुव्रीहौ नाऽऽदेश इति । अत्रैकवचनशब्दो यौगिको व्याख्यानात् । तदाह—**एकस्येति** । **अविभक्तिकमिति** । व्याख्यानात् । **योऽचि** । अनादेश इति किम् ? त्वत् मत् । 'पञ्चम्याश्च'दित्यदादेशः । आत्वविधायके च [illegible] वस्तुत [illegible] छेदादिति

**ङयि** ।७।२।९५। अनयोर्मपर्यन्तस्य तुभ्यमह्यौ स्तो ङयि । अमादेशः। 'शेषे लोपः' । तुभ्यम् । मह्यम् । परमतुभ्यम् । परममह्यम् । अतितुभ्यम् । अतिमह्यम् । युवाभ्याम् । आवाभ्याम् ॥ **भ्यसोऽभ्यम्** ।७।१।३०। भ्यसो भ्यम् अभ्यम् वा आदेशः स्यात् । आद्यः शेषे लोपस्याऽन्त्यलोपत्व एव । तत्राऽङ्गवृत्तपरिभाषया एत्वं न । अभ्यम् तु पक्षद्वयेऽपि साधुः । युष्मभ्यम् । अस्मभ्यम् ॥ **एकवचनस्य च** ।७।१।३२। आभ्यां पञ्चम्येकवचनस्य अत्स्यात् । त्वत् । मत् । 'ङसेश्चे'ति सुवचम् । युवाभ्याम् । आवाभ्याम् ॥ **पञ्चम्या अत्** ।७।१।३१। आभ्यां पञ्चम्या भ्यसोऽत्स्यात् । युष्मत् । अस्मत् ॥ **तवममौ ङसि** ।७।२।९६। अनयोर्मपर्यन्तस्य तवममौ स्तो ङसि ॥ **युष्मदस्मद्भ्यां ङसोऽश्** ।७।१।२७। स्पष्टम् ।

**पक्षद्वयेऽपि साधुरिति**। नन्वन्तलोपपक्षे पररूपं बाधित्वा सवर्णदीर्घः स्यादकारोच्चारणसामर्थ्यादिति चेदत्राहुः-बहुवचने झल्ये'दित्येत्त्वनिवृत्त्याऽकारोच्चारणस्य चरितार्थत्वादिति। यद्यप्यङ्गवृत्तपरिभाषया एत्वं सुपरिहरं, तथापि तस्या अनित्यत्वे इदमप्यकारोच्चारणं ज्ञापकमिति तत्त्वम् । **युष्मदस्मद्भ्यां ङसोऽश्** । शित्त्वं सर्वादेशार्थम् । अन्यथा हि 'आदेः परस्ये'ति स्यात् । न चाऽकारस्याऽकारविधाने वैयर्थ्यम् , आदेश-

भाष्ये स्पष्टम्। **हलादाविति**। परिशेषलब्धं ।'हली'त्यनुवृत्तौ तु 'योऽची'त्यज्ग्रहणं मास्तु। **भ्यसोभ्य**। अत्र यद्वक्तव्यं तदुक्तम् । **पक्षद्वयेपीति** । तत्राऽन्त्यलोपे द्वयोरकारयोः पररू । 'एकादेश उदात्तेने'त्यभ्यम आद्याऽकार उदात्तः । टिलोपेऽपि यत्राऽनुदात्ते वर्णे परे उदात्तो लुप्यते स वर्ण उदात्त इत्यर्थकेना'ऽनुदात्तस्य च यत्रे'त्यनेन स उदात्त एवेति न विशेष इति भावः । नन्वाकमः पूर्वं लोपाऽभावेनाऽदन्तत्वाऽभावात्सुडागमाऽप्रसक्तेः ससुट्कनिर्देशो व्यर्थः, सूत्राऽसङ्गतिश्चेत्यत आह—**भाविन इति** । आकमि शेषे लोपे कृते प्राप्तस्येत्यर्थः । अयं भावः—'सामः प्रसङ्गे आक'मित्यनेन सुडामोरत्र विषयेऽत्यन्तमप्रयोगो बोद्ध्यते । स्थान्यादेशभावविषये सर्वत्रैवमेव । यथाऽऽर्द्धधातुकविषयेऽस्तेरप्रयोगो भूप्रयोगश्चाऽस्तेर्भूरित्यनेन प्रतिपाद्यते न तु सतो निवृत्तिः, शब्दाऽनित्यत्वप्रसङ्गात् । किं तु प्रसक्तबुद्धेरेव निवृत्तिः । सकारबुद्धिप्रसक्तेश्च प्रकृते सांप्रतिक्या असंभवाद्भाविन्या ग्रहणं, सकारोच्चारणसामर्थ्यादिति प्रथमप्रवृत्त्यैव सुटो निवृत्तिर्न तु प्रवृत्त्यन्तरकल्पनयेति भाष्ये स्पष्टम्। [ यद्वा ] तन्निवृत्तिश्चाऽऽमोऽभावात् । अत्र सामः स्थानित्वोक्त्या स्थानिवत्त्वेन साम्त्वमेव न त्वाम्त्वम् । उक्तरीत्या च न स्थानिवद्भावप्रसक्तिः। सैवाऽप्रसक्तिः ससुट्कनिर्देशेन बोद्ध्यते इति बोद्ध्यम् । अत एवाऽतित्वाकमित्यादौ 'प्रत्ययोत्तरपदयो'रिति भाष्योदाहृते आकम्नुडभावौ सिद्धौ । आम्येव साम्त्वस्याहार्यारोपेणादेशः। आदेशस्याऽऽम्त्वाऽभावाच्चाऽत्र न नुट् । न च यत्र साम्भावो तत्रैवाऽयं, सामो भावित्वस्य सर्वथा दुरुपपादत्वात्साम्त्वस्याऽशास्त्रीयत्वेनातिदेशाऽलभ्यत्वादिति भाष्यविरुद्ध कल्पना

१ 'युष्मदस्मद्भ्यां परस्य ङसः स्थाने [illegible]' इति वृत्तिः ।

तव। मम। युवयोः। आवयोः॥ **साम आकम्** ।७।१।३३। आभ्यां परस्य साम आकम् स्यात्। भाविनः सुटो निवृत्त्यर्थं ससुट्कनिर्देशः। युष्माकम्। अस्माकम्। त्वयि। मयि। युवयोः। आवयोः। युष्मासु। अस्मासु॥

**समस्यमाने द्व्येकत्ववाचिनी युष्मदस्मदी।**
**समासार्थोऽन्यसङ्ख्यश्चेत्स्तो युवावौ त्वमावपि॥ १॥**

---

व्यपदेशेन यत्वनिवृत्त्यर्थत्वात्। न चावयवस्यादेशे सत्यपि विभक्तेरनादेशतास्त्येवेति वाच्यं,'सर्वे सर्वपदादेशा' इति सिद्धान्तात्। इदमेव शित्त्वं ज्ञापयति 'सर्वे सर्वपदादेशाः' इति। अर्थवत्येव स्थान्यादेशभावविश्रान्तिरित्यर्थः। सिच्ङादयस्तु वचनसामर्थ्यादनर्थकस्यापि भवन्तीति मनोरमायां स्थितम्। **तव ममेति।** नन्वत्रान्त्यलोपपक्षेऽशः स्यादेशः स्यात्, यत्वनिवृत्त्यर्थतया अश्वचनस्य चरितार्थत्वात्। नच स्यादेशस्यापवादोऽशिति वाच्यम्, अशादेशप्रवृत्तिकाले शेषे लोपाऽभावेन स्यादेशस्याऽप्रसक्तेः। अत्राहुः—अङ्गवृत्तपरिभाषया स्यादेशो वारणीयः। यदि तु अङ्गस्य यत्कार्यं तद्विपर्यिण्येव सा परिभाषा, न त्वङ्गाधिकारपरेति दुराग्रहः, तर्ह्यशित्यत्र 'अतो गुणे'इति पररूपेणाऽकारान्तरं प्रश्लिष्याऽकाररूप एवाऽश् भवति न तु विक्रियत इति व्याख्येयमिति।

नन्वाकमादेशात्पूर्वमनादेशत्वाद्योचीति यत्वेन भाव्यं, ततश्च शेषे लोपाभावादवर्णान्तादिति विधीयमानस्य सुडागमस्याऽप्रसत्त्या साम इति ससुट्कनिर्देशो व्यर्थ इत्यत आह **भाविन इति।** कृते हि शेषेलोपे अकारान्तत्वात्प्राप्तः सुट् ससुट्कस्य स्थानिवत्त्वेन निर्देशसामर्थ्यान्निवर्तत इति भावः। 'शेषे लोपष्टिलोपः'इति पक्षे तु सुड्ग्रहणं व्यर्थमेव, आकमिति दीर्घोच्चारणं सवर्णदीर्घार्थम्। अन्यथा पररूपं स्यात्। न चाऽकारोच्चारणसामर्थ्यम्, एत्वनिवृत्त्या अभ्यम इव चरितार्थत्वात्।

इह 'युवावौ द्विवचने' 'त्वमावेकवचने' इति सूत्रद्वयेऽपि द्विवचनैकवचनशब्दावर्थपरौ, नतु प्रत्ययपराविति व्याख्यातं, तत्फलं दर्शयति—**समस्यमान इत्यादिना। द्व्येकत्ववाचिनी इति।** 'पञ्चकं प्रातिपदिकार्थ'इति पक्षाभिप्रायेणेदमुक्तम्। अस्मिंस्तु पक्षे सङ्ख्याया अपि प्रातिपदिकार्थत्वात्। त्रिकपक्षे तु 'द्व्येकार्थवाचिनी' इति पाठ्यम्। सङ्ख्याया विभक्त्यर्थत्वेऽपि सङ्ख्येयस्य प्रातिपदिकार्थत्वानपायात्। **अन्यसङ्ख्यश्चे-**

---

व्यर्थेति दिक्। ह्रस्वादिरकमु न कृतः। अन्त्यलोपेऽप्यकारस्यैत्वनिवृत्त्या चारितार्थ्येन पररूपापत्तौ 'युष्माक'मित्यसिद्ध्यापत्तेः॥

द्विवचनैकवचनयोरर्थपरतया व्याख्याने फलं दर्शयति—द्व्येकत्वेति। द्वित्वैकत्वविशिष्ट-

सुजस्ङेङस्सु परत आदेशाः स्युः सदैव ते ।
त्वाहौ यूयवयौ तुभ्यमह्यौ तवममावपि ॥ २ ॥
एते परत्वाद्बाधन्ते युवावौ विषये स्वके ।
त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः ॥ ३ ॥
द्व्येकसङ्ख्यः समासार्थो बह्वर्थे युष्मदस्मदी ।
तयोरद्व्येकतार्थत्वान्न युवावौ त्वमौ न च ॥ ४ ॥

त्वां मां वा अतिक्रान्त इति विग्रहे,—अतित्वम् । अत्यहम् । अतित्वाम् । अतिमाम् । अतियूयम् । अतिवयम् । अतित्वाम् २ । अतिमाम् २ । अतित्वान् । अतिमान् । अतित्वया । अतिमया । अतित्वाभ्याम् । अतिमाभ्याम् । अतित्वाभिः । अतिमाभिः । अतितुभ्यम् । अतिमह्यम् । अतित्वाभ्याम् । अतिमाभ्याम् । अतित्वभ्यम् । अतिमभ्यम् । ङसिभ्यसोः—अतित्वत् २ । अतिमत् २ । भ्यामि प्राग्वत् । अतितव । अतिमम । अतित्वयोः । अतिमयोः । अतित्वाकम् । अतिमाकम् ।

---

दिति । युष्मदस्मदर्थगतसङ्ख्येतरसङ्ख्यायुक्तश्चेदित्यर्थः । स्त इति । अर्थपरत्वाश्रयणसामर्थ्यादेव भूतपूर्वगतेरपि स्वीकाराद्युवावौ त्वमावपि स्तः । प्रत्ययपरत्वे तु न स्यातामित्यव्याप्तिः स्यादिति भावः । एवं चतुर्थश्लोकेऽपि 'न युवावौ त्वमौ न चे' त्युक्त्या प्रत्ययपरत्वेऽतिव्याप्तिर्ध्वनिता । एवं चाऽव्याप्त्यतिव्याप्तिपरिहारायार्थपरत्वमाश्रितमिति फलितम् ।

नन्वेवं सुजस्ङेङस्स्वपि युष्मदस्मदोर्द्व्यर्थत्वे युवावौ स्यातामेकार्थत्वे तु त्वमावित्याशङ्कायामाह—**सुजस्ङेङस्सु परत इति** । के ते आदेशा इत्यत आह—**त्वाहौ यूयवयावित्यादि** । अस्त्वेवं त्वाहादिभिर्युवावयोर्बाधस्त्वमौ तु तेभ्यः परौ कथं तैर्बाध्येतामित्यत आह—**त्वमावपीति** । 'विप्रतिषेधे पर'मित्यत्र परशब्दस्येष्टवाचित्वादिति भावः । **अतित्वामतिमामिति** । त्वां मां वा अतिक्रान्ताविति विग्रहः । **अतियूयम् । अतिवयमिति** । त्वां मां वा अतिक्रान्ता

---

वाचिनी इत्यर्थः । **समासार्थः**—मुख्यविशेष्यम् । **अन्यसङ्ख्यः** । युष्मदाद्यर्थगतसङ्ख्येतरसङ्ख्यायुक्तश्चेदित्यर्थः । **स्त इति** । अर्थपरत्वाश्रयणादिति भावः । **एते इति**—कर्तृपदम् । **'युवावा'विति** कर्मपदम् । एवं त्वमावित्यपि । **पूर्वविप्रतिषेधत इति** । 'विप्रतिषेधे पूर्व' इति । 'सुप्सुपे'ति समासः । अत एव 'प्रत्ययोत्तरपदयोश्चे'ति सूत्रभाष्ये 'त्वमा'विति सूत्रे 'शेषे'इत्यनुवर्त्य सुजस्ङेङस्व्यतिरिक्तविभक्तावेतीविति व्याख्यातम् । **त्वमौ न चेति** । अर्थपरत्वाश्रयणादेवेति भावः । **इति विग्रहे इति** ।

अतित्वयि। अतिमयि। अतित्वयोः। अतिमयोः। अतित्वासु। अतिमासु॥

युवाम् आवां वा अतिक्रान्त इति विग्रहे सुजस्ङेङस्सु प्राग्वत्। औअम्औट्सु-अतियुवाम् ३। अत्यावाम् ३। अतियुवान्। अत्यावान्। अतियुवया। अत्यावया। अतियुवाभ्याम् ३। अत्यावाभ्याम् ३। अतियुवाभिः। अत्यावाभिः। भ्यसि-अतियुवभ्यम्। अत्यावभ्यम्। ङसिभ्यसोः-अतियुवत् २। अत्यावत् २। ओसि-अतियुवयोः २। अत्यावयोः २। अतियुवाकम्। अत्यावाकम्। अतियुवयि। अत्यावयि। अतियुवासु। अत्यावासु॥

युष्मानस्मान्वेति विग्रहे सुजस्ङेङस्सु प्राग्वत्। औअम्आट्सु-अतियुष्माम् ३। अत्यस्माम् ३। अतियुष्मान्। अत्यस्मान्। अतियुष्मया। अत्यस्मया। अतियुष्माभ्याम् ३। अत्यस्माभ्याम् ३। अतियुष्माभिः। अत्यस्माभिः। भ्यसि-

---

इति विग्रहः। एवमग्रेऽप्यूह्यम्। **अतित्वाकम्। अतिमाकमिति।** अत्रान्त्यलोपपक्षे त्वङ्गवृत्तपरिभाषया नुडागमो निवार्यः। 'ह्रस्वनद्यापः' इत्यत्र 'ह्रस्वान्ताद्विहितस्यामो नु'डिति व्याख्यानाद्वा। नन्वेवं भिन्नविषयतया सुटो नुडपवादत्वाऽभावेनाऽवर्णान्तसर्वनामभ्यो विहितस्यामो नुडेव परत्वात्स्यात्, नतु सुडागमः, तस्य 'येषां' 'केषा'मित्यादौ सावकाशत्वादिति चेदत्राहुः-'त्यदादेरामि सु'डिति वक्तव्ये 'आमि सर्वनाम्नः' इति सर्वनामग्रहणसामर्थ्याद्धलि सर्वेषामित्यादिनिर्देशाच्च अवर्णान्तसर्वनामभ्योऽप्यामः सुडेव भवति, नतु नुट्। 'शस्प्रभृतिषु' इति च विषयसप्तमी, तेन पदादिष्वप्यामि न नुडिति। एवं च 'साम'इति ससुट्कनिर्देशेन युष्माकमस्माकमित्यत्र सुडागमाऽभावेऽपि नुडागमो दुर्वार इत्याशङ्काया अपि निरवकाश एवेति बोध्यम्। यत्तु वदन्ति-'साम आक'मित्यत्र यद्यपि सुड्ग्रहणं न स्थानिविशेषणं, बाधात्तथापि उपलक्षणं तु भवति। यस्यामः सुडग्रे भावी तस्यैवाम आकमा भवितव्यं, न चैतद्गौणत्वे संभवतीत्याकन्न प्रवर्तते, तथाच 'अतित्वयाम्' 'अतिमया'मित्येव रूपं, न त्वतित्वाकमतिमाकमिति, तदसत्। आकमाऽपहृतस्यामः सुडन्वयाऽभावात्। 'आकमः सुड्भावी'ति चेत्तर्हि तमेवोपलक्षयेत्। आदेशद्वारकेण परम्परासंबन्धेन स्थानिनमुपलक्षयति चेदेवं तर्हि 'युष्माक'मित्यादौ सुट् श्रूयेत। 'साम' इति निर्देशसामर्थ्यान्न श्रूयेतेति चेन्न, निर्देशस्य गौणव्यावृत्त्या चरितार्थत्वेन सामर्थ्याभावादित्यन्यत्र विस्तरः। गुणभूतयोर्युष्मदस्मदोरेकार्थत्वे उदाहरणान्युक्त्वा सम्प्रति द्व्यर्थवाचित्वे उदाहरति-**युवामावां वा अति-**

---

,एवं विग्रहे सति रूपाणि तानि वक्ष्यन्त'इति शेषः। **अतित्वाकमिति।** अत्र यथाक्रमं ङमावौ तयोक्तम्।

अतियुष्मभ्यम् । अत्यस्मभ्यम् । ङसिभ्यसोः—अतियुष्मत् २ । अत्यस्मत् २ । ओसि—अतियुष्मयोः २ । अत्यस्मयोः २ । अतियुष्माकम् । अत्यस्माकम् । अतियुष्मयि । अत्यस्मयि । अतियुष्मासु । अत्यस्मासु ॥ **पदस्य** ।८।१।१६।

**क्रान्त इत्यादिना** । बह्वर्थयोस्तूदाहरति—**युष्मानस्मान्वेति** । **पदस्य** । 'अपदान्तस्य मूर्धन्यः' इति विरोधनिर्देशात्प्राक्पदस्येत्ययमधिकारः । तेन 'राजा' राजभ्या'मित्यादौ 'नलोपः प्रातिपदिकान्तस्ये'ति नलोपः सिध्यति । न तु 'राजानौ' 'राजान' इत्यत्र । तथा 'गोमान्' 'यवमा'नित्यादौ संयोगान्तलोपो, न तु 'गोमन्तौ' 'यवमन्ता' वित्यादौ । तथा 'मो नो धातोः' इति नत्वं 'प्रशान्भ्या'मित्यादौ भवति न तु 'प्रशामौ' प्रशाम' इत्यत्र । तथा 'हरिं वन्दे' इत्यादौ 'मोऽनुस्वारः' प्रवर्तते, नतु 'गम्यते' इत्यादौ । न च 'उञि च पदे' इत्यतः 'पदे'इत्यधिकारात्पदे परतो मस्याऽनुस्वारः स्यात्, न तु गम्यत इत्यत्रेति किमिह पदस्येत्यधिकारेणेति वाच्यं, 'पुंस्वि'ति रूपाऽसिद्धिप्रसङ्गात् । तस्मात् 'मोऽनुस्वारः' इत्यत्र 'पदस्ये'त्यनुवर्तनीयमेव । 'पदे'इत्यस्योत्तरसूत्रेऽप्युपयोगो नास्तीति 'उञि च पदे' इत्यत्राऽवोचाम । इह 'पदस्ये'ति संबन्धसामान्ये षष्ठी, सा तूत्तरेषु यथायोगं सम्बन्धविशेषेऽवतिष्ठते । क्वचित्स्थाने षष्ठी, क्वचिदवयवषष्ठीति । तत्र 'संयोगान्तस्य लोपः' 'मो नो धातोः' 'मोऽनुस्वारः' इत्यादौ पदस्येति स्थानषष्ठी । अवयवषष्ठ्यान्तूक्ताऽतिप्रसङ्गात् । 'मादुपधाया' इत्यादौ त्ववयवषष्ठी । अन्यथा 'वृक्षवा'निप्यत्रैव मतुपो मस्य वत्वं स्यान्न तु 'वृक्षवन्तौ' 'वृक्षवन्तु' इत्यत्र । एतच्चानुपदमेवोपपादयिष्यते । यद्यपि 'षष्ठी स्थानेयोगे'ति परिभाषया 'पदस्ये'त्यत्र स्थानषष्ठ्येव लभ्यते, न त्ववयवषष्ठी, तथापि नलोपसूत्रे अन्तस्येति ग्रहणाज्ज्ञापकादवयवषष्ठ्यपि लभ्यते । यदि तु 'पदस्ये'ति स्थानषष्ठ्येव स्यात्तर्हि नान्तस्य पदस्य लोपो भवन्नलोऽन्त्यस्य स्यादिति अन्तग्रहणमनर्थकं स्यात् । अवयवषष्ठ्यङ्गीकारे तु 'अन्तस्ये'ति ग्रहणं सार्थकम् । तद्यथा, नलोपसूत्रे 'प्रातिपदिकान्तस्ये'त्यसमासनिर्देशः । प्रातिपदिकसंज्ञकस्य पदस्य अन्तावयवो यो नकारस्तस्य लोप इति सूत्रार्थ इति ।

---

**पदस्य** । 'अपदान्तस्य मूर्द्धन्य' इत्यतः प्रागयमधिकारः। तत्फलन्तु 'राजाना'वित्यादौ । नलोपाऽभावः । इयं च क्वचित्स्थानषष्ठी, क्वचिदवयवषष्ठी । 'होढ' इत्याद्या, 'मादुपधाया' इत्यादावन्त्या । तेन वृक्षवन्तावित्यादौ वत्वसिद्धिः । अन्यथा मत्वन्तपदाभावान्न स्यात् । अत एव नलोप इति सूत्रेऽन्तग्रहणं चरितार्थमिति स्पष्टं भाष्ये । 'त्रः संख्याया' इत्यत्र नलोपाऽभावस्तु 'झलाञ्जश् झशी'त्यत्र जश्त्वाऽभाववद्बोद्धव्यः ।

पदात् ।८।१।१७। अनुदात्तं सर्वमपादादौ ।८।१।१८। इत्यधिकृत्य ॥

युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ ।८।१।२०। पदात्परयोरपादादौ स्थितयोरनयोः षष्ठ्यादिविशिष्टयोर्वां नावित्यादेशौ स्तस्तौ चानुदात्तौ ॥

बहुवचनस्य वस्नसौ ।८।१।२१। उक्तविधयोः षष्ठ्यादिबहुवचनान्तयो-

---

नन्वेवमन्तस्येतिग्रहणमवयवषष्ठीत्वज्ञापनार्थमिति स्वीकारात्पदस्येत्यत्र कथं नाम स्थानषष्ठीलाभः, संबन्धविशेषस्य निर्धारितत्वेन स्थानषष्ठीपरिभाषाया अनुपस्थितेः। अत्राहुः-प्रयोगमूलत्वाद्व्याकरणस्मृतेर्लक्ष्यानुरोधेन स्थानषष्ठ्यपि स्वीक्रियते, ज्ञापकसिद्धा अवयवषष्ठी न सर्वत्र स्वीक्रियते इति नलोपसूत्रे मनोरमायामन्तग्रहणं त्यक्तुं शक्यमित्युक्तम्। भाष्यादौ तु 'पदस्ये' त्यधिकृतस्याऽवयवषष्ठ्यन्तत्वमप्यभ्युपगम्यते न तु स्थानषष्ठ्यन्तत्वमेवेति ज्ञापनार्थमन्तग्रहणम्, तेन 'वृक्षवन्तौ' 'वृक्षवन्त' इत्यत्र 'मादुपधायाः' इति वत्वं सिध्यति, पदावयवस्य मतुपः सत्त्वात्। अन्यथा 'पदस्ये'त्यस्य विशेष्यत्वे मतुपा तदन्तविधौ 'मत्वन्तं यत्पदं तदवयवस्य मतुपो मादुपधायाः परस्य मस्य वत्वं भवती'त्यर्थः स्यात्। तथा च 'वृक्षवा'नित्यत्रैव स्यात्, न तु 'वृक्षवन्तौ' 'वृक्षवन्त' इत्यत्रे'ति स्थितम्। **पदात्**। 'कुत्सने च सुप्यगोत्रादौ' इत्यतः प्रागयमधिकारः। यदि तु 'कुत्सने च सुपी'त्यत्रापि पदादित्यनुवर्तते, तदा 'देवदत्तः पचति पूती'त्यत्रैव निघातः स्यान्न तु 'पचती पूती'त्यत्र। **अनुदात्तं सर्वमपादादौ**। इदं पदत्रयमापादपरिसमाप्तेरधिक्रियते। **षष्ठीचतुर्थीति**। 'अल्पाच्तर'मिति 'षष्ठी'-त्यस्य पूर्वनिपातः। **षष्ठ्यादिविशिष्टयोरिति**। ननु युष्मदस्मदोरित्युक्तत्वात्तयोरेव वांनावादय आदेशाः स्युः। न च 'पदस्ये'त्यधिकाराद्विभक्त्यन्तस्यैव पदत्वात्षष्ठ्यादिविशिष्टयोरेव स्युरिति वाच्यम्, उक्तरीत्या वस्नसादौ दोषाभावेऽपि भ्यामादौ परतो युष्मदस्मदोः पदत्वात्केवलयोर्वांनावादेशप्रसङ्गस्य दुर्वारत्वात्। तथा च 'सुखं वां नौ

---

**पदात्**। 'कुत्सने च सुपी'त्यतः प्रागयमधिकारः। 'अनुदात्तं सर्व'मित्यादिपदत्रयमापादसमाप्तेः, सर्वग्रहणन्तु 'तिङ्ङतिङ' इत्यादौ सर्वानुदात्तत्वस्य विनिगमनाविरहाल्लाभेपि स्पष्टतया तल्लाभार्थमित्याकरे स्पष्टम्। आदेः परस्याऽलोन्त्यस्येत्य नयोस्तु न प्राप्तिः, 'पदस्ये'त्यस्या'ऽनुदात्त'-'ति'ङ्ङित्यादिश्रुतप्रथमान्तानुरोधेन प्रथमया विपरिणामेन स्थानषष्ठ्यभावात्। तत्र 'पाद'शब्देन ऋक्पादः श्लोकपादश्चाऽविशेषाद्गृह्यते। अपादादिशब्देन पादान्तपादमध्यस्थवच्छन्दोहीनवाक्यस्थस्यापि ग्रहणं, 'ग्रामे कम्बलो मे स्व'मिति भाष्यात्। **षष्ठ्यादीति**। 'सर्वस्य' 'पदस्ये'त्युभयाधिकारसामर्थ्यादिदं लभ्यत इत्यन्यत्र विस्तरः। **तौ चानुदात्ताविति**। अनुदात्तत्वगुणविशिष्टयोर्विधानादिति भावः। **उक्तविधयोरिति**। पदात्परयोरपादादौ स्थितयोरित्यर्थः। द्वितीयायान्त्वामयोरप-

वंनसौ स्तः । वान्नावोरपवादः ॥ **तेमयावेकवचनस्य** ।८।१।२२। उक्तविधयोरनयोः षष्ठीचतुर्थ्येकवचनान्तयोस्ते मे एतौ स्तः ।

**त्वामौ द्वितीयायाः** ।८।१।२३। द्वितीयैकवचनान्तयोस्त्वा मा एतौ स्तः ॥

**श्रीशस्त्वाऽवतु माऽपीह दत्तात्ते मेऽपि शर्म सः ।**
**स्वामी ते मेऽपि स हरिः, पातु वामपि नौ विभुः ॥ १ ॥**
**सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः ।**
**सोऽव्याद्वो नः शिवं वो नो दद्यात्सेव्योऽत्र वः स नः ॥ २ ॥**

पदात्परयोः किम् ? । वाक्यादौ माभूत्,–त्वां पातु । मां पातु । अपादादौ किम् ? । 'वेदैरशेषैः संवेद्योऽस्मान्कृष्णः सर्वदाऽवतु' ।

---

ददात्वीशः' इति प्रयोगो न सङ्गच्छेत । नापि 'द्वितीयास्थयो'रिति स्थग्रहणसामर्थ्याद्विभक्तिविशिष्टयोरेव आदेशा भवेयुरिति वाच्यम्, 'स्थग्रहणाच्छ्रूयमाणविभक्तिकयोरेवे'ति वक्ष्यमाणतया तत्सामर्थ्यस्योपक्षयात्। मैवम्, 'अनुदात्तं सर्व'मिति सर्वग्रहणाधिकारात्सर्वस्यैव विभक्तिविशिष्टस्य आदेशा भवन्तीति आकरे स्पष्टत्वात्। यदि तु 'सर्वस्य द्वे' इत्यतः 'सर्वस्ये'ति पदमनुवर्तते, तदा सर्वग्रहणमिह त्यक्तुं शक्यमित्याहुः।

उक्तानादेशान्वचनक्रमेणोदाहरति–**श्रीश इत्यादिना। स्वामी ते मेऽपीति।** 'स्वामीश्वराधिपती'ति षष्ठीसप्तम्योर्विधानादिह षष्ठी । द्विवचनान्तयोरुदाहरणमाह–**पातु वामित्यादिना** । बहुवचनान्तयोस्तु–**सोऽव्याद्वो न इत्यादि** । **सेव्योऽत्र वः स न इति** । 'अर्हे कृत्यतृचश्चे'ति ण्यत्। 'कृत्यानां कर्तरि वे'ति षष्ठी ।

**वेदैरशेषैरिति** । 'युष्मान् रक्षतु गोविन्दः' इति प्राचः पाठस्तूपेक्षितः, 'युष्मा'नित्यस्य तु पदात्परत्वाभावादेवाऽप्राप्तेः । 'अस्मा'नित्यस्य तु पदात्परत्वेऽपि समानवाक्यस्थपदात्परत्वाऽभावात्। ननु 'युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयाना'मिति सूत्र्यतां, विशेषणेन तदन्तविधौ षष्ठ्याद्यन्तयोर्युष्मदस्मदोः पर्यवस्यति । न च 'स्थ'ग्रहणाभावे

---

वादत्वादाह–**षष्ठीचतुर्थ्येकेति** । विभक्तिक्रमङ्कृप्तद्वितीयादिक्रमेणोदाहरति–**श्रीश इति** । 'दत्ता'दित्यनेन चतुर्थ्यन्तत्वं स्फुटीकृतम् । **संवेद्योऽस्मानिति** । नन्वत्र सन्ध्यभावे नवाक्षरत्वेनानुष्टुप्पादत्वानापत्तिः, सन्धौ तूभयत आश्रयणेऽन्तादिवत्त्वाऽभावेन कथमादेशप्राप्तिरिति चेन्न; 'संवेद्यो' इत्येकादेशविशिष्टस्य पूर्वान्तवत्त्वेन पदत्वात् । 'स्मा'नित्यस्य चैकदेशविकृतन्यायेन द्वितीयान्ताऽस्मच्छब्दत्वेन तत्प्राप्तिरित्याशयात्। सन्धिश्चाऽन्तरङ्गत्वादादेशात्पूर्वमेव । 'आदेशे सति 'नः कृष्णः सर्वदाऽव'त्विति पादादित्वापत्त्योपजीव्यविरोधान्नादेश' इत्यन्ये । उभयत आश्रयणेऽपि तस्य स्वीकार इति हणाती निरूपयिष्यास इति परे । [illegible] रथग्रहणेनात

'स्थ'ग्रहणाच्छ्रूयमाणविभक्तिकयोरेव । नेह-'इति युष्मत्पुत्रो ब्रवीति'। 'इत्यस्मत्पुत्रो ब्रवीति'॥ ॐ **समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः । एकतिङ्-**

---

युष्मदस्मदोः संबन्धिनीनां षष्ठीचतुर्थीद्वितीयानामित्यर्थः स्यादिति वाच्यं, 'सर्वस्य पदस्ये'त्यनुवर्तनादतो व्याचष्टे-**स्थग्रहणादिति** । तिष्ठतिरिहाऽहानौ वर्तते । यथा 'समये तिष्ठ सुग्रीवे'ति । समयं मा हासीरिति गम्यते । तेन षष्ठ्यादीनविजहतोरेव युष्मदस्मदोरादेशा इत्यर्थः । **इति युष्मत्पुत्र इति** । युवयोः पुत्रो युष्माकं पुत्र इति वा विग्रहः, न तु तव पुत्र इति । तथा हि सति 'त्वत्पुत्र' इत्येव स्यात् । एवमस्मत्पुत्र इत्यत्राप्यूह्यम् । पदात्परत्वं संपादयितुम्-**इति**शब्दः । ननु राज्ञोः पुरुषो राज्ञां पुरुष इति विग्रहे 'राजपुरुष' इति नेष्यत इति सिद्धान्तविरोधाद्युष्मत्पुत्रोऽस्मत्पुत्र इत्यत्र युवयोर्युष्माकमित्यादिविग्रहो न संभवतीति चेदत्राहुः-यत्र वृत्तौ सङ्ख्याविशेषबोधकं प्रमाणं नास्ति तत्रैवैकत्वसङ्ख्याऽऽश्रीयते, यथा 'राजपुरुष' इति । न हि 'राजपुरुष'इत्यत्र विभक्तौ निवृत्तायां राजपदार्थे द्वित्वादिप्रत्यायकं किंचिदस्ति । यत्र पुनः सङ्ख्याभेदगमकमर्थप्रकरणाद्यस्ति, भवति तत्र द्विवचनबहुवचनयोरपि वृत्तिः । प्रकृते त्वेकवचनान्तेन विग्रहे 'प्रत्ययोत्तरपदयोश्चे'ति त्वमादेशप्रसङ्गादर्थाद्विवचनबहुवचनान्तेनेति विग्रहे वृत्तिर्भविष्यतीति । अर्थः-सामर्थ्यम् । अर्थाद्यथा,-मुद्रैः क्रीतो मौद्रिकः । न ह्येकेन मुद्रेन द्वाभ्यां वा मुद्राभ्यां क्रयणं संभवति । प्रकरणाद्यथा-'भवद्भिरामवसरप्रदानाय वचांसि नः' । भवतोर्गिरामिति तत्र ह्यर्थः ।

**समानवाक्य इति** । 'देवदत्त अस्त्ययं दण्डो-देवदत्त हराऽनेने'त्यत्र

---

आह-**स्थेति** । अहानौ स्थशब्द इति भावः । **युष्मत्पुत्र इति** । युवयोर्युष्माकं वा पुत्र इत्यर्थः । यद्यपि वृत्तौ सङ्ख्याविशेषाऽनवगम इति भाष्ये स्पष्टं तथापि संबोद्धयत्वेनैवानेकव्यक्त्यगतिर्न तु द्वित्वादेर्भानं, नाप्येकत्वस्येति त्वमौ न कृतौ। विग्रहे तु सङ्ख्याविशेषभानाद्विवचनादि भवत्येव। तस्य लुक्यपि प्रत्ययलक्षणेन द्विवचनाद्यन्तत्वम् । अत एव 'वध्वोरगारं वध्वगार'मिति प्रगृह्यसञ्ज्ञासूत्रे भाष्ये प्रयुक्तम् । वचनद्वयविषयसूत्रप्रत्युदाहरणलाभाय 'इति त्वपुत्र' इति न प्रत्युदाहृतम् । **समानवाक्ये इति** । 'निमित्तनिमित्तिनोरेकवाक्यस्थत्वे इत्यर्थकं 'समानवाक्ये' इति प्रकृत्य विधेया' इत्यर्थः ।

**निघातो** नामाऽनुदात्तः। **एकतिङिति**-बहुव्रीहिः। एकतिङन्तघटितमित्यर्थः। तेन पचती-त्येतन्मात्रस्य न वाक्यत्वम् । इदं स्वशास्त्रकार्योपयोग्येकवाक्यत्वलक्षणं, तेन 'पश्य मृगो धावती'-त्यादौ लौकिकैकवाक्यत्ववत्यपि नाऽव्याप्तिः। समर्थसूत्रे भाष्ये स्पष्टमेतत्। अत एव 'तिङतिङ' इत्यत्रैत-दाश्रित्याऽतिङ इति प्रत्याख्यातं भाष्ये। लौकिकवाक्यत्वञ्च 'सुप्तिङन्तचयो वाक्यं क्रिया वा कारका-न्विते'त्यमरेणोक्तं। वाशब्दश्चेदर्थे। कारकान्वितक्रिया चेत्। 'बोद्धये'ति शेषः। तेन निरर्थकशब्दसमुदाय-

**वाक्यम्** । तेनेह न,–'ओदनं पच तव भविष्यति' । इह स्यादेव,–'शालीनां ते ओदनं दास्यामी'ति ॥

ॐ **एते वांनावादय आदेशा अनन्वादेशे वा वक्तव्याः** । अन्वादेशे तु

---

'दण्ड' इत्येतत्पूर्ववाक्यस्थमिति समानवाक्यस्थत्वाभावादामन्त्रितनिघातो न भवति ।

**एकतिङिति** । एकं तिङन्तं यत्रेति बहुव्रीहिः । ननु ओदनस्त्वया पक्तव्यस्तव भविष्यतीत्यत्रातिप्रसङ्गः, पक्तव्योऽस्तीत्यध्याहारेण भिन्नवाक्यतासमर्थनेऽपि पश्य मृगो धावतीत्यादावेकवाक्यत्वव्यवहारो न स्यात् । सत्यम् । प्रकृतोपयोगित्वेनेदमुक्तं । 'पश्य मृग'इत्यादौ तु 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्या'दिति शास्त्रान्तरप्रसिद्धमेवेत्येके । **अन्ये तु**–'आख्यातं सविशेषणं वाक्य'मिति वार्तिककारवचनपर्यालोचनया 'एकति'ङित्यत्र तिङन्तं विशेष्यसमर्पकं विवक्षितं, ततश्च 'पश्य मृगो धावती'त्यत्र तिङन्तद्वये सत्यपि पश्येत्यस्यैव विशेष्यसमर्पकत्वान्नोक्तदोष इत्याहुः । एकशब्दः समानवचनो न तु सङ्ख्यावाची, बहुव्रीहिश्चायम् । तेन 'ब्रूहि ब्रूहि देवदत्ते'त्यत्र वाक्यत्वादामन्त्रितनिघातः सिध्यतीति समर्थसूत्रे कैयटः ।

'युष्मदस्मदोर्विभाषा अनन्वादेशे'इति वार्तिकमर्थतः पठति–**एते वांनावादय**

---

व्यावृत्तिः । सुप् च तिङन्तश्च सुप्तिङन्ते, सुब्विशिष्टन्तिङन्तंसुप्तिङन्तम् । तेषामेकशेषः । तेन कारकान्वितक्रियावोधकसुबन्तचयतिङन्तचयसुप्तिङन्तचयानात्रयाणामपि वाक्यत्वलाभः । तत्र **सुबन्तचयो**–'देवदत्तेन शयितव्यं'। **द्वितीयं**–'पचति भवती'त्यादि । **तृतीयं** चैत्रः पचतीत्यादि । एतत्समानार्थकमेव 'तिङ्ङतिङः' इति सूत्रे 'अतिङ' इति वदत्सूत्रकाराभिमेतं वाक्यलक्षणम् 'आख्यातं सविशेषणं वाक्यम्' इति समर्थसूत्र**भाष्ये** उक्तम् । तत्राऽऽख्यातपदेन क्रियाप्रधानं लक्ष्यते । तेन 'त्वया शयितव्य'मित्यादेः सङ्ग्रहः । 'सविशेषण'मित्यस्य साक्षात्परम्परया वा यद्विशेषणं, तत्सहितमित्यर्थः । तेन 'नद्यास्तिष्ठति कूले' इत्यादौ नद्यादेः समानवाक्यस्थत्वसिद्धिः । सविशेषणत्वेन विभागे साकाङ्क्षत्वं लब्धम् । एतदेवैकोद्देश्यकैकविधेयकत्वरूपैकार्थत्वगर्भमेकवाक्यत्वलक्षणं बोध्यम् । 'अर्थैक्यादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्या'दिति जैमिन्युक्तेः । अनेन च 'ब्रूहि-ब्रूहि' इत्यस्याऽसङ्ग्रहो, विशेषणाऽनुपादानेन सविशेषणत्वाऽभावात् । वाक्यत्वफलं त्वत्र प्रश्नोत्तरे 'अनन्त्यस्यापि प्रश्नाख्यानयोः' इत्यनेन वाक्यस्य टेः प्लुतसिद्धिः । अतः स्वशास्त्रपरिभाषितं लक्षणम् 'एकतिङ्वाक्यम्' इत्युक्तम् । अत एव एतदुदाहणं–'ब्रूहि-ब्रूहि' इत्येव **भाष्ये दत्तम्** । यत्तु अत्रोदाहरणे 'देवदत्ते'ति विशेषणं पूरणीयमिति; तन्न, पूर्वलक्षणेनैव सिद्धेः, । द्विः प्रयोगस्य **भाष्ये** व्यर्थत्वापत्तेश्च । यद्यपि पदद्वित्वेऽवान्तरपदत्वमप्यस्ति, तथापि 'एकतिङ्' इत्यस्य एकानुपूर्वीकैकतिङन्तवदित्यर्थ इति न प्रकृते दोष इत्यलम् । **ओदनं पचेत्यादि** । समर्थपरिभाषा त्वत्र न प्रवर्त्तते, एकार्थीभावविषये एव तत्प्रवृत्तेरिति भावः ।

नित्यं स्युः। धाता ते भक्तोऽस्ति। धाता तव भक्तोऽस्तीति वा। 'तस्मै ते नम' इत्येव॥ **न चवाहाहैवयुक्ते** ।८।१।२४। चादिपञ्चकयोगे नैते आदेशाः स्युः। 'हरिस्त्वां मां च रक्षतु'। 'कथं त्वां मां न रक्षे'दित्यादि। 'युक्त'ग्रहणात्साक्षाद्योगेऽयं निषेधः। परम्परासंबन्धे त्वादेशः स्यादेव,—हरो हरिश्च मे स्वामी॥ **पश्यार्थैश्चाऽनालोचने** ।८।१।२५। अचाक्षुषज्ञानार्थैर्धातुभिर्योगे एते आदेशा न स्युः। चेतसा त्वां समीक्षते। परम्परासंबन्धेऽप्ययं निषेधः। भक्तस्तव रूपं ध्यायति। आलोचने तु—भक्तस्त्वा पश्यति चक्षुषा॥ **सपूर्वायाः प्रथमाया विभाषा**

---

इति। यद्यपि 'सपूर्वायाः प्रथमाया विभाषे'त्यत्रैतत्पठ्यते तथाप्यविशेषेण विकल्पोऽयं विधीयते इत्याशयेन सपूर्वत्वाऽभावेऽपि विकल्पमुदाहरति—**धाता ते भक्त इति**। अन्वादेशे तु नित्यमुदाहरति—**तस्मै ते नम इत्येवेति**। 'तुल्यार्थै'रित्यादिवन्न चवाहाहैवैरिति तृतीयानिर्देशेनाऽपि युक्तार्थलाभे 'युक्त'ग्रहणमनर्थकमित्यत आह—**युक्तग्रहणादिति**। यत्र युष्मदस्मदर्थगतान् समुच्चयादींश्चादयो द्योतयन्ति तदा चादिभिः सहाऽर्थद्वारा युष्मदस्मदोः साक्षाद्योगः तत्रैवायं निषेध इत्यर्थः। **हरो हरिश्चेति**। अत्र 'च'शब्दो हरहरिगतसमुच्चयमाह। हरिहराभ्यां त्वस्मदः संबन्धो, न तु समुच्चयेनेति न साक्षाद्योगः किंतु परम्परायोग इति न निषेध इति भावः। **पश्यार्थैश्चाऽना**। अतएव निपातनाद्भावे 'पाघ्राध्माधे'डिति शः। दर्शनं पश्यः। तच्चेह ज्ञानमात्रम्। 'अदर्शनं लोपः' इत्यत्र यथा, न तु चाक्षुषज्ञानमेव, 'अनालोचने'इति निषेधात्। तदेतदाह—**अचाक्षुषज्ञानार्थैरिति**। **परम्परासंबन्धेऽपीति**। पूर्वसूत्रस्थ-

---

**एते वांनावादय इति**। इदञ्च 'सपूर्वाया' इत्यत्र भाष्ये स्पष्टम्। **न चवा**। चादयः समुच्चयविकल्पाद्भुतखेदावधारणार्थास्तेषामन्यतमेन योगइत्यर्थः। ननु तृतीयानिर्देशेनैव सिद्धे युक्तग्रहणं व्यर्थमत आह—**युक्तग्रहणादिति**। **साक्षादिति**। युष्मदस्मदर्थगतसमुच्चयादिद्योतकत्वे इत्यर्थः। **परंपरेति**। स्वार्थाश्रयान्वय्यन्वयित्वादिरूपेत्यर्थः। **चेतसेति**। 'अनालोचनार्थै'रित्येव पर्युदासेन सिद्धे पश्यार्थैरित्येतदिन्द्रियजन्यसकलज्ञानसङ्ग्रहार्थमिति भावः। **परंपरेति**। स्वाऽन्वितान्वयित्वादिरूपे इत्यर्थः। तदुक्तं भाष्ये—'पश्यार्थैश्च प्रतिषेधः समानवाक्यइति प्रकृत्य वक्तव्यः, इतरथा हि यत्रैव पश्यार्थानां युष्मदस्मदी साधनं तत्र प्रतिषेधः स्यात्, 'ग्रामस्त्वां संप्रेक्ष्य गत' इति, इह न स्यात्—'ग्रामस्तत्र स्वं संप्रेक्ष्य गत' इति। 'समानवाक्ये इति करणेन समानवाक्ये पश्यार्थैर्युक्ते युक्तयुक्ते च युष्मदाद्यर्थे आदेशप्रतिषेध' इति **कैयटः**। एवञ्च 'न चवे'ति सूत्रे युक्तग्रहणं स्पष्टार्थमेव, तदभावेपि प्रकृतसूत्रस्येव तस्यापि साक्षात्संबन्धएव प्रवृत्तिः स्यात्। 'समानवाक्ये' इत्येतत्संबन्धात्तु अस्य युक्तयुक्तेपि प्रवृत्तिरित्यन्यत्। अत एव 'देवदत्तस्य पुत्राद्यज्ञदत्तः पृथ'गित्यादौ देवदत्तशब्दान्न पञ्चमीत्याहुः। **भक्तस्तवेति**।

।८।१।२६। विद्यमानपूर्वात्प्रथमान्तात्परयोरनयोरन्वादेशेऽप्येते आदेशा वा स्युः । 'भक्तस्त्वमप्यहं तेन हरिस्त्वां त्रायते स माम्' । 'त्वा' 'मे'ति वा ॥ **सामन्त्रितम्** ।२।३।४८। संबोधने या प्रथमा तदन्तमामन्त्रितसंज्ञं स्यात् ॥ **आमन्त्रितं पूर्वम-**

---

'युक्त'ग्रहणेन ज्ञापितमेतद्भवत्यन्यत्र परम्परासंवन्धेऽपि निषेध इति । **सपूर्वायाः** । 'सह'शब्दोऽत्र 'सलोमक' इत्यत्रेव विद्यमानवचनः । 'तेन सहेती'त्यत्र तुल्ययोगवचनं प्रायिकमिति वक्ष्यमाणत्वाद्विद्यमानवचनस्यापि सहस्य समासः । 'वोपसर्जनस्ये'ति सभावः । 'प्रथमाया'इति च प्रत्ययग्रहणात्तदन्तविधिरित्यालोच्याह—**विद्यमानपूर्वादित्यादि** । 'एते वांनावादय आदेशाः' इत्यविशेषोक्त्यैव विभाषया सिद्धेः किमर्थमिदं वचनमित्याशङ्कां परिहरन्नाह—**अन्वादेशेऽपीति । भक्तस्त्वमित्यादि** । त्वं भक्तोऽहमपि तेन हरिस्त्वां मां च त्रायते इति संवन्धः । एवं च प्रक्रान्तत्वान्न यच्छब्दापेक्षा । 'येन कारणेन हरेस्त्वं भक्तस्तेनैव कारणेनाऽहमपी'ति व्याचक्षाणानां तु यच्छब्दाध्याहारक्लेश इति बोध्यम् । अत्र 'तेने'ति पूर्वविद्यमानं पदं, ततो हरिरिति प्रथमान्तं, ततः परस्य युष्मच्छब्दस्यादेशः । तथा 'त्रायते' इत्यस्मात्परं 'स'इति प्रथमान्तं, ततः परस्याऽस्मच्छब्दस्यादेशः ।

**सामन्त्रितम्** । 'संवोधने चे'त्यतः 'संवोधने' इत्यनुवर्तते । 'से'त्यनेन प्रथमा निर्दिश्यते । महासंज्ञाकरणसामर्थ्यात्संज्ञाविधावपि तदन्तग्रहणम् । आमन्त्रणमामन्त्रितम् । उपचारात्तत्साधने वृत्तिः । विभक्त्यन्तेन चामन्त्र्यते न केवलया विभक्त्येत्याशये-

---

इह 'तवे'त्यस्य रूपेण संवन्धो न तु साक्षाद्धयायतिनेति भावः । **सपूर्वा** । सहशब्दो विद्यमानवाची । अवधेरपि संवन्धित्वेन विवक्षायां षष्ठ्यर्थेऽन्यपदार्थेऽनेकमिति समासो, 'वोपसर्जनस्ये'ति सः । तदाह—**विद्यमानपूर्वादिति** । प्रत्ययग्रहणे तदन्तग्रहणमित्याह—**प्रथमान्तादिति** । नन्वेते वांनावादय इत्येनेनैव विकल्पसिद्धेः किमेतेनेत्यत आह—**अन्वादेशेपीति** । अत्र 'ने'ति निवृत्तं, तदाह—**आदेशा वेति । तेनेति** । भक्तत्वेनेत्यर्थः । प्रक्रान्तार्थत्वान्न यच्छब्दोपादानापेक्षेति भावः । स्पष्टचेदं सप्तमोल्लासे **काव्यप्रकाशादौ** । अत्र 'तेन हरिस्त्वा'मित्येकमुदाहरणं, 'स मा'मित्यपरं । 'त्रायते' इत्यस्य च मद्धयमणिन्यायेन तन्त्रेणोभयत्रान्वयः । 'तेन' 'स' इत्यस्यापि समानवाक्यस्थत्वेन विद्यमानपूर्वत्वं बोद्धयम् ।

**सामन्त्रितम्** । 'संवोधने चे'त्यत 'संवोधने' इति वर्त्तते । 'से'त्यनेन प्रथमा परामृश्यते । 'आमन्त्रणमामन्त्रितमिति महासंज्ञावलात्तदन्तविधिरियाह—**तदन्तमिति** । अत एव 'हे-है-भो' इत्यादीनामपि संज्ञासिद्धिः । अन्यथाऽन्तरङ्गानपीति न्यायेन पूर्वं विभक्तिलुकि प्रथमाया अभावेन नखनिर्भिन्न इत्यत्रैसभाववदत्र संज्ञा न स्यात् । यद्यप्येषां संबोधने शक्तेः प्रातिपदिकार्थसूत्रेणैव प्रथमा तथापि संबोधनविपर्[illegible] दोषः । एतदर्थमेव 'प्रथमे'त्यनुवर्त्यमाने 'से'ति पदम् । **अन्ये तु** 'संवोधने

विद्यमानवत् ।८।१।७२। स्पष्टम् । अग्ने तव । देवाऽस्मान्पाहि । अग्ने नय । अग्न इन्द्र वरुण । इह युष्मदस्मदोरादेशस्तिङन्तनिघात आमन्त्रितनिघातश्च न । 'सर्वदा रक्ष-देव नः' इत्यत्र तु 'देवे'त्यस्याऽविद्यमानवद्भावेऽपि ततः प्राचीनं 'रक्षे'त्येतदाश्रित्यादेशः । एवम् 'इमं मे गङ्गे यमुने' इति मन्त्रे 'यमुने' इत्यादिभ्यः प्राचीनामन्त्रिताऽविद्यमानवद्भावेऽपि 'मे'शब्दमेवाश्रित्य सर्वेषां निघातः ॥

**नामन्त्रिते समानाधिकरणे सामान्यवचनम्** ।८।१।७३। विशेष्यं समानाधिकरणे आमन्त्रिते परे नाऽविद्यमानवत्स्यात् । हरे दयालो नः पाहि । अग्ने तेजस्विन्। **विभाषितं विशेषवचने** ।८।१।७४। अत्र भाष्यम्-'बहुवचनमिति वक्ष्यामी'ति । बहुवचनान्तं विशेष्यं समानाधिकरणे आमन्त्रिते विशेषणे

---

नाह-तदन्तमिति । **इहेति** । 'अग्ने तव' 'देवास्मा'नित्यत्र युष्मदस्मदोर्न भवत्यादेशः, 'अग्ने नये'त्यत्र 'तिङ्ङतिङः' इति न तिङन्तनिघातः, 'अग्न इन्द्र वरुणे'त्यत्र तु 'आमन्त्रितस्य चे'त्यामन्त्रितनिघातो नेति विवेकः । **सर्वेषां निघात इति** । अयं च निघातः पदकाले श्रूयते न तु संहिताकाले । 'स्वरितात्संहितायामनुदात्ताना'मिति संहितायामेकश्रुतिविधानात् । **अग्ने तेजस्विन्निति** । इह पदात्परत्वात्तेजस्विन्नित्यस्य

---

चे'त्यस्य तत्र वर्त्तमानादित्यर्थे अन्यत्रेवात्रापि संबोधने चेत्येव प्रथमा, प्रातिपदिकोक्तत्वस्याऽव्यावर्त्तकत्वेन विभक्त्यप्रतिबन्धकत्वात्, 'तिङ्कृत्तद्धितसमासै'रिति परिगणनाच्च । 'से'ति तु विधेयसमर्पिकाया अनुवाद्यत्वाय स्पष्टार्थमित्याहुः । **अविद्यमानवदिति** । 'गोतो णि'दितिवत्सिद्धे वत्करणमतिदिश्यमानविरुद्धस्वाश्रयस्यापि लाभार्थं । तेन-'आम्भो देवदत्ते'त्यादावाम एकान्तरमामन्त्रितमनन्तिके'इति एकान्तरत्वप्रयुक्तामन्त्रितनिघातनिषेधसिद्धिरिति स्पष्टं भाष्ये । न चात्र 'नामन्त्रिते समानाधिकरणे' इत्यनेन निषेधादविद्यमानवत्त्वमेव नेति वाच्यम्, अस्य संबोधनमात्रद्योतकत्वेन विशेष्यवचनत्वाऽभावात् । देवदत्तस्यैव विशेष्यत्वाच्च । **इहेति** । 'अग्ने तव' 'देवास्मा'नित्यत्रादेशाः,'अग्ने नये'त्यत्र 'तिङ्ङतिङ' इतिनिघातः,'अग्नेइन्द्रे'त्यत्रामन्त्रितस्य चेति निघात इति विवेकः । अत्र 'पूर्वं'मित्यनेन परस्याक्षेपात् पूर्वं परस्य कार्येऽविद्यमानवदित्यर्थः । तेन 'देवाऽस्मा'नित्यत्र 'देवे'त्यस्याऽऽमन्त्रिताद्युदात्तत्वं भवत्येव । पूर्वं किम् ?, पाहि देव । अत्रामन्त्रितनिघातो भवत्येव । **प्राचीनमिति** । एवमेव 'लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामी'त्यादिसिद्धिः । 'नृसिंहाश्रम ते ख्याति'रित्यादौ,'गेये केन विनीतौ वा'मित्यादाविव विभक्त्यन्तप्रतिरूपकनिपाताङ्गीकारेणाऽदोषः । अयं समाधिः प्रकृतेपि । 'न' इत्यस्य विभक्तिप्रतिरूपकत्वात् । अन्याऽर्थन्तु मूलोक्तकल्पनावश्यकत्वन्तदाह-**एवमिति** । **सर्वेषां निघात इति** । अस्य 'प्राप्त' इति शेषः । तत्र 'यमुने' 'सरस्वती'त्यनयोर्बाधकाभावाद्भवति, 'शुतुद्री'त्यस्य तु न, पादादिस्थत्वात् । एतेन'आदिभ्य' 'सर्वेषा'मिति बहुवचनमसङ्गतमित्यपास्तम् । **अग्नेतेजस्विन्निति** ।

---

१ आमन्त्रितं पूर्वमविद्यमानवत्स्यात्-इति वृत्तिः ।

परेऽविद्यमानवद्वा । यूयं प्रभवः । देवाः शरण्याः । युष्मान् भजे । वो भजे इति वा । इहान्वादेशेऽपि वैकल्पिका आदेशाः ॥

सुपात् । सुपाद् । सुपादौ । सुपादः । सुपादम् । सुपादौ ॥ **पादः पत्** ।६।४।१०३ पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पाच्छब्दस्य पदादेशः स्यात् । सुपदः । सुपदा । सुपाद्भ्यामित्यादि ॥ **[ इति दान्ताः ]** ।

अग्निं मन्थतीत्यग्निमत् । अग्निमद् । अग्निमथौ । अग्निमथः । अग्निमद्भ्यामित्यादि ॥ **[ इति थान्ताः ]** ।

'ऋत्वि'गित्यादिसूत्रेणाऽञ्चेः सुप्युपपदे क्विन् ॥ **अनिदितां हल उपधायाः क्ङिति** ।६।४।२४। हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः

---

'आमन्त्रितस्य चे'त्याष्टमिकनिघातः सर्वानुदात्तः । **सुपादिति** । शोभनौ पादौ यस्येति बहुव्रीहिः । 'सङ्ख्यासुपूर्वस्ये'ति पादस्याऽन्तलोपः । **पादः पत्** । **तदवयवस्येति** । एतच्च 'निर्दिश्यमानस्यादेशा भवन्ती'ति परिभाषया लभ्यते । इयं च परिभाषा 'षष्ठी-स्थानेयोगे'त्यनेन ज्ञापिता । तथाहि 'अस्तेर्भूः' 'इको यणची'त्यादौ सामीप्यादिसंबन्ध-प्रसङ्गेऽपि लक्ष्यानुरोधेन व्याख्यानादन्तरङ्गत्वात् 'स्थानिवदादेशः' इति ज्ञापकाच्च स्थाने-योगत्वे सिद्धेऽप्यारभ्यमाणेन 'षष्ठी स्थानेयोगे'त्यनेन षष्ठ्यन्तमुच्चार्यमाणमेव स्थानेन युज्यते न तु प्रतीयमानमित्यर्थो लभ्यते । तथाच 'निर्दिश्यमानस्यादेशा भवन्ती'ति सिद्धम् । 'अलोऽन्त्यस्य' 'आदेः परस्ये'ति योगौ त्वारम्भसामर्थ्यान्निर्दिश्यमानपरि-भाषाया बाधकौ, तेन 'पुमः खय्यम्परे' 'उदः स्थास्तम्भो'रित्यादौ न दोष इति दिक् ॥ **इति दान्ताः** ॥

**अग्निमदिति** । मथ्नातेर्मन्थतेश्च क्विपि एतदेव रूपम् । इदितस्तु नलोपाभावा-दग्निमन् । अग्निमन्थौ । अग्निमन्थः ।। **इति थान्ताः** ।।

**अनिदिताम्** । इद्ध्रस्वेकार इत्संज्ञको येषां तानि इदिन्ति न इदिन्ति अनिदिन्ति तेषाम्–अनिदिताम् । एतच्च अङ्गस्य विशेषणं, हल इत्यपि । तदाह–**हलन्तानामनिदि-तामिति** । **उपधाया नस्येति** । 'श्नान्नलोपः' इति सूत्रान्नेति लुप्तषष्ठीकं पदमनुवर्तते,

---

'अनुदात्तं' 'सर्व'मित्यनयोः संबन्धाऽनर्हत्वेन निवृत्त्या तत्साहचर्येणाऽपादादावित्यस्याप्यविद्यमानवत्सूत्रे निवृत्तिरिति भावः । आमन्त्रिते किम् ?। अम्ब्ये देवि सरस्वति इडे काव्ये इत्यादौ पर्यायेषु परेषु निषेधो मा भूत् । सामानाधिकरण्यञ्चैकार्थविशेष्यकबोधजनकत्वमेव न तु प्रवृत्तिनिमित्तभेदगर्भमिति दिक् ॥

**सुपादिति** । शोभनौ पादावस्येति बहुव्रीहिः । संख्यासुपूर्वस्ये'त्यकारलोपः समासान्तः । **अञ्चेः सुपीति** । निपातनसाहचर्यादिति भावः । **अनिदिताम्** । इत्संज्ञकह्रस्वेकाररहितानामित्यर्थः ।

स्यात्किति ङिति च । 'उगिदचा'मिति नुम् । 'संयोगान्तस्य लोपः' । नुमो नकारस्य 'क्विन्प्रत्ययस्य कु'रिति कुत्वेन ङकारः । प्राङ् । अनुस्वारपरसवर्णौ । प्राञ्चौ । प्राञ्चः । प्राञ्चम् । प्राञ्चौ ॥ अचः ।६।४।१३८। लुप्तनकारस्याऽञ्चतेर्भस्याऽकारस्य लोपः स्यात् ॥

चौ ।६।३।१०८ लुप्ताऽकारनकारेऽञ्चतौ पूर्वस्याऽणो दीर्घः स्यात् । प्राचः । प्राचा । प्राग्भ्यामित्यादि । प्रत्यङ् । प्रत्यञ्चौ । प्रत्यञ्चः । प्रत्यञ्चम् । प्रत्यञ्चौ । 'अच' इति लोपस्य विषयेऽन्तरङ्गोऽपि यण्न प्रवर्तते, अकृतव्यूहा इति परिभाषया । प्रतीचः ।

---

तच्चोपधाग्रहणेन विशेष्यत इति भावः । अनिदितामिति किम् ? । नन्यते । हलः किम् ?, नीयते । उपधायाः किम् ? । हन्यते । **अचः** । 'अल्लोपोऽनः' इत्यतोऽल्लोप इत्यनुवर्तते, 'भस्ये'ति च । तदाह–**भस्याकारस्य लोपः स्यादिति** । अत्र नव्याः-यद्यत्राञ्चतेर्भस्येति सामानाधिकरण्येनान्वयः स्वीक्रियते तर्हि 'प्रतीचः' 'प्रतीचे'त्यादि न सिध्येत् । उपसर्गसहितस्यैव भत्वेन केवलस्याऽञ्चतेर्भत्वाभावात् । भस्यावयवस्याञ्चतेरिति वैयधिकरण्येनान्वये तु प्रत्यगात्मनेत्यादावञ्चतेरकारस्य लोपः स्यात् । 'अञ्चत्यन्तस्य भस्याकारलोप' इति व्याख्यायां 'प्राचः' 'प्राचेति' प्र शब्दाकारस्यापि लोपः स्यात् । तन्त्रावृत्त्यादिनाऽञ्चत्यन्तस्य भस्याञ्चतेरकारस्येति व्याख्यानेऽपि–प्रत्यञ्चमञ्चति प्रत्यङ् । ततः शसादिषु 'प्रत्यक्चः' 'प्रत्यक्चे'त्यादावतिप्रसङ्ग एव । तस्मात् 'अल्लोपोऽनः' इत्यत्रेवात्रापि अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽञ्चतिस्तस्याऽकारस्य लोपः स्यादिति व्याख्येयम् । 'द्युप्रागपागुदक्प्रतीचः' इति निर्देशश्चेह व्याख्याने लिङ्गमित्याहुः । **चौ** । 'चजोः'इति निर्देशाच्चवर्गग्रहणं न भवतीत्याह–**लुप्ताकारनकारेऽञ्चताविति** । अत्राऽकारलोपेन नकारलोपस्याक्षिप्तत्वात्तत्कथनं व्यर्थमेव, किंतु लुप्ताऽकारेऽञ्चतावित्येव सुवचमित्याहुः । 'ढ्रलोपे' इति सूत्रादणो दीर्घ इत्यस्य चानुवर्तनादाह–**अणो दीर्घः स्यादिति** । **प्राचः** । **प्राचेति** । 'प्रतीच' इत्याद्यर्थमवश्यस्वीकार्येऽतोलोपे कृतेऽनेन दीर्घो विधीयत इति भावः । **प्राग्भ्यामिति** । 'चोः कुः' इति कुत्वं, न तु 'क्विन्प्रत्ययस्ये'त्यनेन, तस्याऽसिद्धत्वात् ।

---

'अङ्गस्ये'त्यधिकारः । **अञ्चतेर्भस्येति** । 'अल्लोपोऽन' इतिवदस्यापि प्रत्यञ्चमञ्चति तेन प्रत्यक्चेत्यादौ पूर्वाऽकारे न प्रवृत्तिः । 'अच' इत्यञ्चतेर्लुप्तनस्य ग्रहणं, व्याख्यानात् । भस्य किम् ? प्रत्यञ्चौ । लुप्तनस्येति किम् ? । पूजायां–प्रत्यञ्चा । **चौ** । नेदं वर्गग्रहणं, व्याख्यानात । तदाह,–**लुप्तेत्यादि** । **अण इति** । 'कर्तृच' इत्यादीनामनभिधानमिति भावः । एवञ्चाऽण्ग्रहणमुत्तरत्र 'संप्रसारणस्ये'त्यत्र 'तृतीय' इत्येतद्व्यावृत्त्यर्थमा[illegible] संपद्यते, न त्वजस्य व्यावर्त्यमस्ति इत्याकरे स्पष्टम् । **अकृतेति** ।

प्रतीचा। असुमञ्चतीति विग्रहे अदस्-अञ्च् इति स्थिते ॥ **विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये**।६।३।९६। अनयोः सर्वनाम्नश्च टेरद्र्यादेशः स्यादप्रत्ययान्तेऽञ्चतौ परे। अदद्रि-अञ्च् इति स्थिते यण् ॥ **अदसोऽसेर्दादु दो मः**।८।२।८०। अदसोऽसान्तस्य दात्परस्य उदूतौ स्तो दस्य च मः। 'उ' इति ह्रस्वदीर्घयोः समाहारद्वन्द्वः। आन्तरतम्याद्ध्रस्वव्यञ्जनयोर्ह्रस्वो, दीर्घस्य दीर्घः। अमुमुयङ्। अमुमुयञ्चौ। अमुमुयञ्चः। अमुमुयञ्चम्। अमुमुयञ्चौ। अमुमुईचः। अमुमुईचा। अमुमुयग्भ्यामित्यादि। मुत्वस्याऽसिद्धत्वान्न यण् ॥

---

**विष्वग्देवयोश्च**। चकारेण 'आ सर्वनाम्नः' इत्यतः 'सर्वनाम्न'इति लभ्यते, इत्याह-**अनयोः सर्वनाम्नश्चेति**। **अप्रत्ययान्तेऽञ्चताविति**। अविद्यमानः प्रत्ययोऽप्रत्ययः-क्विन्क्विबादिः। 'अञ्चतौ वप्रत्यये' इति पाठे तु 'वप्रत्ययान्तेऽञ्चतौ' इति व्याख्येयम्। विष्वग्देवयोस्तूदाहरणं-विष्वगञ्चतीति विष्वद्र्यङ्। देवानञ्चतीति देवद्र्यङ्ङिति बोध्यम्। **अदसोऽसेः**। 'असे'रिति इकार उच्चारणार्थस्तदाह-**अदसोऽसान्तस्येति**। असान्तस्येति किम्?। अमुमात्मन इच्छति अदस्यति। दात्परस्य किम्?। 'अमुया' 'अमुयो'रित्यत्राऽन्त्ययकारस्य माभूत्। **ह्रस्वव्यञ्जनयोरिति**। व्यञ्जनस्य हि ह्रस्व ईषत्सदृशो दीर्घस्तु विसदृश इति भावः। प्राञ्चस्तु-ह्रस्वदीर्घयोः समाहारद्वन्द्वमकृत्वैव 'विधीयमानोऽप्यण् क्वचित्सवर्णान् गृह्णाती'ति स्वीकृत्य आन्तरतम्याद्ध्रस्वव्यञ्जनयोर्ह्रस्वो दीर्घस्य दीर्घ इति व्याचक्षते।

---

तत्परिभाषाऽभावे तु 'चौ प्रत्यङ्गस्य प्रतिषेधो वक्तव्य' इति वचनमेव भाष्योक्तं शरणम्। **विष्वग्दे**। न्वादासर्वनाम्न इत्यतः सर्वनाम्न इत्याकृष्यते। सामर्थ्यादुपसर्जने प्रवृत्तिः। 'अप्रत्यये' इति पाठे अविद्यमानः प्रत्ययः क्विबादिरित्यर्थः। 'वप्रत्यय'इति पाठेऽप्यकारस्याऽविवक्षितत्वात्स एवार्थः। अद्र्यादेशसध्र्यादेशावन्तोदात्तौ निपातनादिति स्पष्टं भाष्ये। **अदसो**। 'असे'रितीकार उच्चारणार्थः। 'अदस' इत्यवयवषष्ठी, सग्रहणं तत्स्थानिकौकाररेफयोरप्युपलक्षणं, तेनादस्यति 'अदोत्र' 'अद' इत्यादौ न दोषः। दादिति किम्?। 'अमुयो'रित्यत्रान्त्यस्य मा भूदिति। **समाहारद्वन्द्व इति**। इदमर्वाचामनुरोधेन। वस्तुतोऽयुक्तमेव तत्। उस्ऊस् इति द्वन्द्वे सुलोपे घ्यन्तत्वाद्ध्रस्वस्य पूर्वनिपाते नपुंसकह्रस्वसवर्णदीर्घयोः प्राप्तयोर्दीर्घस्य शब्दान्तरप्राप्त्याऽनित्यत्वेन नित्यत्वादपरनिमित्तकत्वेनान्तरङ्गत्वाच्च ह्रस्वत्वे ततः सवर्णदीर्घे'उ' इति रूपाऽसिद्धेः। अत एवोकाल इत्यत्र उकाल इति न कृतम्। तस्मादिव उत् ऋत उदिति च तपरत्वेन भाव्यमानोकारस्य सवर्णग्राहकत्वात्सिद्धमिति बोद्धयम्। 'ष्यङः संप्रसारण'मिति सूत्रे भाष्येऽनन्त्यविकारेन्त्यसदेशस्येति परिभाषा पठिता। अन्त्यसदेशानन्त्यसदेशयोरेकप्रयोगे युगपत्प्राप्तावन्त्यसदेशस्यैवेति तदर्थः। 'अनन्त्यविकारे' इति लिङ्गं। सामर्थ्यतः पठति-

'अन्त्यबाधेऽन्त्यसदेशस्ये'ति परिभाषामाश्रित्य परस्यैव मुत्वं वदतां मते—अदमुयङ् । 'अः—सेः सकारस्य स्थाने यस्य—सोऽसिरिति व्याख्याना-त्यदाद्यत्वविषय एव मुत्वं नान्यत्रेति पक्षे—अदम्रङ् ॥ उक्तं च—

'अदसोऽद्रेः पृथङ्मुत्वं केचिदिच्छन्ति लत्ववत् ।
केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते ॥' इति ।

---

**अन्त्यबाध इति ।** सूत्रे 'अदस' इति नाऽवयवषष्ठी, किन्तु स्थानेषष्ठी, एवं हि अलोऽन्त्यपरिभाषोपतिष्ठते । तथा च अदसो योऽन्त्यः स दात्परो न भवति, दात्परो यः सोऽदसोऽन्त्यो न भवतीत्येवमन्त्यबाधेऽन्त्यसमीपस्य भवतीति तेषामाशयः ।

• **उक्तं चेति ।** 'वार्तिककृते'ति शेषः । एवं च 'अमुम्र'ङिति केषाञ्चिदुदाहरणं भाष्यादावनुक्तत्वादुपेक्ष्यमिति भावः ।

**लत्ववदिति ।** 'चलीक्लृप्यते'इत्यत्र 'कृपो रो लः' इत्युभयोर्यथा लत्वं तथेत्यर्थः ।

---

**अन्त्यबाधे इति । अन्त्यस्य बाधे** कार्याऽप्राप्तावर्थादनेकाऽनन्त्यस्य प्राप्तावित्यर्थः । अन्यथा 'णो नः' इत्यादि 'नेते'त्यादावेव स्यान्नतु 'नमती'त्यादाविति भाष्ये स्पष्टम् । 'अल्लोपोऽनः' 'अचः' 'सान्ते'त्यादाव-नेकक्लिष्टकल्पनापेक्षयेयं न्याय्या । **किञ्च** भसंज्ञायां कार्यकालपक्षाश्रयणमशक्यम् । परत्वेन पदसंज्ञा-बाधकत्वानुपपत्तेः । 'राज्ञ' इत्यादौ नलोपस्याऽसिद्धत्वात्पूर्वमल्लोपोऽन इति लोपे पश्चात्प्राप्तनलोपैक-वाक्यतापन्नपदत्वस्यैतदेकवाक्यतापन्नभत्वेन बाधाऽयोगात् । नलोपापत्तेश्च । तस्मादाकडारस्थसंज्ञासु यथोद्देशाश्रयणमेवावश्यकमिति यजादिस्वादिपरो योऽनित्यर्थस्य न तत्र लाभः । 'ष्यङः संप्रसारण'मिति सूत्रस्थं 'कार्यकालं सञ्ज्ञापरिभाषं भस्येत्युपस्थितमिदं भवति यचि भमिति, तत्र यजादिपरतया ऽङ्कारं विशेषयिष्यामः, अनाऽकार'मिति भाष्यन्त्वेकदेश्युक्तिः । यजादिप्रत्ययस्याङ्गांशे उत्थिताकाङ्क्ष-तया तेनाऽनो विशेषणाऽयोगाच्च । अतएव सर्वफलानामन्यथासिद्धिं प्रदर्श्याऽपि 'तस्माद्यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा कर्त्तव्ये'ति उपसंहृतं भाष्ये इति भावः । **अनन्त्यसदेशस्येति ।** अन्त्येन समानो देशो यस्येत्यर्थः । तत्त्वञ्चाऽन्त्यवर्णतद्वर्णयोरितराऽव्यवधाने भवति, चलीक्लृप्यत-इत्यादौ ऋकारान्तर्गतरेफस्योत्तराज्भागेन व्यवधानान्नान्त्यसदेशसंभव इति न तत्रैतत्परिभाषाप्रवृत्तिः । अत एव 'न संप्रसारणे'इत्युदाहरणीभूतस्य 'विद्ध' इत्यादेर्नाऽनया सिद्धिः । अत एव 'न संप्रसारणे'-इति सूत्रं सार्थकम् । 'नैतस्याः परिभाषायाः प्रयोजनानी'ति तत्सूत्रस्थभाष्यस्य त्वयमर्थः,—एतत्सूत्र-साध्यानि 'विद्ध' इत्यादीन्युदाहरणानि नैतस्याः परिभाषाया भवन्तीति । अन्त्यसदेशत्वाभावादिति च तद्भावः । **परस्यैवेति ।** द्रशब्दस्यैवेत्यर्थः । **अः सेरिति ।** अत्र अकारेण आकारस्यापि ग्रहणं, तेनामूदृगित्यादिसिद्धिः । तत्र द्वासर्वनाम्न इति पूर्वपदान्तस्यात्वम् । **त्यदाद्यत्वेति ।** त्यदादीनामत्व-विषय इत्यर्थः । **पक्षे इति ।** अत्र तन्त्रेणाऽर्थद्वयेपि सूत्रतात्पर्यम् । तत्र लक्ष्यानुरोधाद्व्यवस्था । अत्र प्रमाणमुपन्यस्यति । **उक्तवेति । लत्ववदिति ।** चलीकृप्यते इत्यत्र यथा लत्वं रीगृकारयोर्भवति

विष्वग्देवयोः किम्?। अश्वाची । अञ्चतौ किम्?। विष्वग्युक् । अप्रत्यये किम्?। विष्वगञ्चनम् । अप्रत्ययग्रहणं ज्ञापयति–'अन्यत्र धातुग्रहणे तदादिविधि'रिति । तेनाऽयस्कारः । 'अतः कृकमी'ति सः । उदङ् । उदञ्चौ । उदञ्चः । शसादावचि–॥

**उद ईत्** ।६।४।१३९। उच्छब्दात्परस्य लुप्तनकारस्याऽञ्चतेर्भस्याऽकारस्य ईत्स्यात्। उदीचः। उदीचा। उदग्भ्यामित्यादि ॥ **समः समि** ।६।३।९३। वप्रत्ययान्तेऽञ्चतौ परे[1] । सम्यङ् । सम्यञ्चौ । सम्यञ्चः । समीचः । समीचा ॥

**सहस्य सध्रिः** ।६।३।९५। वप्रत्ययान्तेऽञ्चतौ परे[2] । सध्र्यङ् ॥ **तिरसस्ति-**

---

नन्वप्रत्ययग्रहणाभावेऽप्युत्तरपदाधिकारस्थत्वाद्विष्वग्यङ् देवद्र्यङ्ङित्युत्तरपदेष्वेवाऽद्र्यादेशः स्यान्न तु 'विष्वगञ्चन'मित्यत्रातो व्याचष्टे–**अप्रत्ययग्रहणं ज्ञापयतीति** । **अन्यत्रेति** । 'अतः कृकमी'त्यादौ । **तेनेति** । अन्यथा 'नित्यं समासे' इत्यतोऽनुवृत्तेन समासग्रहणेनोत्तरपदस्याक्षेपादतः कृकमीति कृधातुग्रहणे कृधातूत्तरपदक एवाऽयस्कृदित्यादौ सत्वं स्यान्नत्वणन्तोत्तरपदकेऽयस्कार इत्यत्रेति भावः ॥

**उद ईत्**। 'अचः' इत्यस्यापवादः । इह 'अच'इत्यनुवर्तते, 'भस्ये'ति च। तदाह-**उच्छब्दात्परस्य लुप्तनकारस्येत्यादि**। भस्येति किम्?। उदञ्चौ । उदञ्चः । उदग्भ्याम् । लुप्तनकारस्येति किम्? पूजायाम्–'उदञ्चः' 'उदञ्चे'ति यथा स्यादिति ।

**समः समि**। 'समी'त्यविभक्तिको निर्देशः। एवं 'तिरसस्तिरी'त्यपि । सङ्गतमञ्चतीति **सम्यङ्**। **समीच इति**। अल्लोपे 'चौ' इति दीर्घः । सह अञ्चतीति **सध्र्यङ्**। भविषये अल्लोपदीर्घौ। सध्रीचइत्यादि। **तिरसः**। न विद्यते लोपो यस्य

---

तथेत्यर्थः । अत्राऽदमुयङिति रूपवादिमतं न्याययुतम् । लत्वे उक्तरीत्यैतन्न्यायाप्रवृत्तावपि अत्रैतदप्रवृत्तौ मानाऽभावात् । अत एव भाष्ये 'अदसोऽनोस्रे'रिति वार्तिकप्रत्याख्यानाय'अथवा अःसे'रिति पक्षमुक्त्वा 'यद्येवममुमुयङिति न सिद्ध्यति अदद्र्यङिति प्राप्नोति। अदमुयङिति भवितव्यम्, अनन्त्यविकारेऽस्ति'–इत्युक्तम् । अत्र–**इति प्राप्नोती**त्युक्त्या तत्राऽसंमतिरुक्ता । 'इति भवितव्य'मित्यनेन पृथङ्मुत्वमिति पक्षे संगत्यभावो दर्शितः। 'भवितव्य'मित्युक्त्या च तत्र शब्देऽप्रयुक्तत्वं सूचितमित्याहुः।

**विष्वग्देवयोः किमिति**। चस्याऽप्युलक्षणमिदम्। ननूत्तरपदाधिकारादञ्चुरूपे उत्तरपदे इत्यर्थाद्विष्वगञ्चनमित्यादेर्व्यावृत्तौ व्यर्थमप्रत्ययग्रहणमत आह–**अप्रयत्येति**। **तेनेति**। अन्यथाऽतः कृ इत्यत्र 'नित्यं समासे' इत्यतोऽनुवृत्तसमासग्रहणेनोत्तरपदाक्षेपेऽपि कृधातुरूपे उत्तरपदे इत्यर्थाऽऽपत्तावयस्कृदित्यादावेव स्यादिति भावः । **उद ईत्**। अत्राऽच इत्यनुवर्त्तते । **समः स**। 'समो

---

१ वप्रत्ययान्तेऽञ्चतौ परे समः सम्यादेशः स्यादिति वृत्तिः ।

२ 'वप्रत्ययान्तेऽञ्चतौ परे सहस्य सध्र्यादेशः स्या'दिति वृत्तिः ।

र्यलोपे ।६।३।९४। अलुप्ताकारेऽञ्चतौ वप्रत्ययान्ते परे तिरसस्तिर्यादेशः स्यात्। तिर्यङ्। तिर्यञ्चौ। तिर्यञ्चः। तिर्यञ्चम्। तिर्यञ्चौ। तिरश्चः। तिरश्चा। तिर्यग्भ्यामित्यादि॥ **नाञ्चेः पूजायाम्** ।६।४।३०। पूजार्थस्याञ्चतेरुपधाया नस्य लोपो न स्यात्। अलुप्तनकारत्वान्न नुम्। प्राङ्। प्राञ्चौ। प्राञ्चः। नलोपाऽभावादकारलोपो न। प्राञ्चः। प्राञ्चा। प्राङ्भ्याम्। प्राङ्क्षु। प्राङ्षु। एवं पूजार्थे प्रत्यङ्ङादयः। क्रुञ्च कौटिल्याल्पीभावयोः'। अस्य ऋत्विगादिना नलोपाभावोऽपि निपात्यते। क्रुङ्। क्रुञ्चौ। क्रुञ्चः। क्रुङ्भ्यामित्यादि॥ 'चोः कुः॥ पयोमुक्। पयोमुग। पयोमुचौ। पयोमुचः। 'व्रश्चे'ति षत्वम्। 'स्को'रिति सलोपः। जश्त्वचर्त्वे। सुवृट्।

---

सः 'अलोप'इति बहुव्रीहिः। अञ्चतावित्यनुवर्त्तमानमन्यपदार्थः। अवयवद्वारकश्च लोपः समुदाये उपचर्यत इत्यभिप्रेत्याह—**अलुप्ताकार इत्यादि**। 'अकारलोपे सती'ति नोक्तं, व्याख्यानात्। अप्रत्ययान्ते किम्?। 'तिरोऽञ्चन'मित्यादौ मा भूत्। **तिरश्च इति**। लुप्ताऽकारत्वात्तिर्यादेशाऽभावे सस्य श्चुत्वेन शः। न चाऽल्लोपस्य स्थानिवत्त्वात् श्चुत्वं न स्यादिति वाच्यम्, पूर्वत्रासिद्धे तदभावात्पदान्तविधित्वाच्च। **नाञ्चेः**। नुमैव सिद्धे 'प्राञ्चः' 'प्राञ्चे'त्यादौ नुमोऽभावेऽपि नकारश्रवणार्थः। **प्राङिति**। प्रकर्षेणाऽञ्चति पूजयतीति पूजार्थादञ्चेः क्विन्। **प्राङ्क्षिति**। 'ङ्णोः कुक्टुक्'गिति वा कुक्। 'चयो द्वितीया' इति पक्षे खकारोऽपि बोध्यः। **एवमिति**। शसादिषु—प्रत्यञ्चः। प्रत्यङ्भ्याम्। अमुमुयञ्चः। अमुमुयङ्भ्याम्। उदञ्चः। उदङ्भ्यामित्यादि ज्ञेयम्। क्रुञ्चतीति क्रुङ्। **सलोप इति**। श्चुत्वस्याऽसिद्धत्वादिति भावः। सुष्ठु वृश्चतीति सुवृट्। क्विपि 'ग्रहिज्ये'ति सम्प्रसारणम्। **सुवृट्त्स्विति**। चर्त्वस्याऽसिद्धत्वा-

---

मि'ङिति 'सम इ'गिति वा न कृतम्। परिभाषाज्ञानकृतगौरवापत्तेः। **तिरसस्ति**। 'अलोप'इत्यत्र शकन्ध्वादित्वात्पररूपेणाऽकारः प्रश्लिष्यते। अस्य अलोपो लोपाऽभावो यस्मिन्नञ्चतावित्यर्थस्तदाह—**अलुप्ताकारेति**। **तिरश्चेति**। श्चुत्वेऽल्लोपस्य स्थानिवत्त्वन्तु न, पूर्वत्रासिद्धीये तन्निषेधात्। **पूजार्थस्येति**। पूजारूपार्थस्य गम्यत्वे इत्यर्थः। अत एवाऽव्याकुलं गच्छतीत्यर्थकेऽञ्चितं गच्छतीत्यादौ नलोपो न। अव्याकुलगमनेन च पूजा गम्यते न त्वञ्चतेरेव सोर्थ इति स्पष्टमञ्चोऽनपादाने इति सूत्रे भाष्यकैयटयोः। पूर्वोदाहृतं 'प्राच' इत्यादि चिरन्तनादिरूढस्येति बोद्धव्यम्। एतेनाऽञ्चेर्गताविति नियमेनैव सिद्धौ 'नाञ्चेः पूजाया'मिति व्यर्थमित्यपास्तम्। **नलोपाभाव इति**। ञोपधत्वबोधनद्वारेत्यर्थः। स्पष्टञ्चेदं 'परेश्च घे'ति सूत्रे भाष्ये। अपिना चसमवधाने 'चोः कु'रिति कुत्वाऽभावो, निरुपपदात्क्विन्निति च निपात्यतइति बोद्धव्यम्। 'सङी'ति वचनाद्वा कुत्वाभावः। **षत्वं स्कोरितीति**। सलोपे षत्वस्याऽसिद्धत्वात्सलोपः इति [illegible] अत एव 'षत्वे'इति सप्तम्यन्तं न पठितम्। व्रश्चः क्विपि

सुवृड् । सुवृश्चौ । सुवृश्चः । सुवृश्चा । सुवृड्‌ड्‌भ्याम् । सुवृड्त्सु ॥ [ इति चान्ताः ॥ ]

**'वर्तमाने पृषन्महद्बृहज्जगच्छतृवच्च'** । एते निपात्यन्ते शतृवच्चैषां कार्यं स्यात् । उगित्त्वान्नुम् । 'सान्तमहत' इति दीर्घः । मह्यते पूज्यते इति महान् । महान्तौ । महान्तः । हे महन् । महतः । महता । महद्भ्यामित्यादि ॥

**अत्वसन्तस्य चाऽधातोः** ।६।४।१४। अत्वन्तस्योपधाया दीर्घः स्याद्धातुभिन्नाऽसन्तस्य चाऽसंबुद्धौ सौ परे । परं नित्यं च नुमं बाधित्वा वचनसामर्थ्यादादौ दीर्घः । ततो नुम् । धीमान् । धीमन्तौ । धीमन्तः । हे धीमन् । शसादौ महद्वत् । धातोरप्यत्वन्तस्य दीर्घः । गोमन्तमिच्छति गोमानिवाचरतीति वा क्यजन्तादाचार-

---

त्पूर्वं 'ङः सी'ति वा धुट् । ततश्चर्त्वम् । **इति चान्ताः ।**

**निपात्यन्त इति** । 'पृषु सेचने' । 'वृह वृद्धौ' । अत्र गुणाऽभावः । महेः कर्मणि प्रत्ययः । अतएव मह्यते पूज्यते स महानिति व्याचष्टे । गमेस्तु जगादेशः । चत्वारोऽप्यतिप्रत्ययान्ताः । एतच्चोणादिषु स्फुटीकरिष्यते । **अत्वसन्तस्य चाऽधातोः** । 'ढ्रलोपे' सूत्राद्दीर्घस्य 'नोपधायाः' इत्युपधाग्रहणस्य चानुवर्तनादाह—**उपधाया दीर्घः स्यादिति** । इह 'अधातो'रिति योगो विभज्यते, तत्सामर्थ्यादनन्तरस्याऽसन्तस्यैव प्रतिषेधः, न त्वत्वन्तस्येति कैयटादयस्तदेतद्दर्शयति—**धातुभिन्नाऽसन्तस्य चेति** । धात्ववयवभिन्नो योऽस् तदन्तस्येत्यर्थः । तेन 'उखास्रत्' 'पर्णध्व'दित्यादि सिद्धम् । 'धातुभिन्नो योऽसन्तस्तस्ये'ति व्याख्यायां 'स्रत्' 'ध्व'दित्यत्र सिद्धान्ते दीर्घाऽभावेऽप्यत्र तु स्यादेवेति दिक् । अत्र 'सर्वनामस्थाने चे'ति सूत्रादसंबुद्धावित्यनुवर्तते । 'सौ च'त्यतः 'सा'विति च । तदाह—**असंबुद्धौ सौ पर इति ।**

---

'ग्रहिज्ये'ति संप्रसारणे पूर्वत्वे श्चुत्वस्यासिद्धत्वात्सलोपः । **सुवृड्त्स्विति** । चर्त्वस्यासिद्धत्वाड्डः सीति वा धुट् । **निपात्यन्ते इति** । 'अतिप्रत्ययान्ता' इति शेषः । तत्र पृषद्बृहतोर्गुणाभावश्च, गमेर्जगादेशश्च, महेः कर्मणि प्रत्ययश्च निपातनात् । **शतृवदिति** । प्रत्ययग्रहणपरिभाषया शतृप्रत्ययान्तवदित्यर्थः । 'शतुरनुम' इति सूत्रे 'बृहन्महतोरुपसङ्ख्यान'मिति तु पृषदादिव्यावृत्तये नियमार्थमिति बोद्धव्यम् । **अत्वसन्त** । चस्त्वर्थे । अतु इति लुप्तषष्ठीकं पृथक् पदम् । अधातोरित्यसन्तस्यैव विशेषणं, तुशब्दात्तदाह—**धातुभिन्नेति** । अत एवोगिदचामिति सूत्रे गोमत्यतेरप्रत्यये गोमानिति प्रयोगो भाष्ये सङ्गच्छते । अङ्गविशेषणतयाऽर्थसिद्धतदन्तविधेरेवानुवादकमन्तग्रहणम् । **परमिति** । वचनसामर्थ्यादुपधापदासंबन्धेन चारितार्थ्यादित्यभिमानः। अयमभ्युच्चय इत्याह—**नित्यमिति** । कृताऽकृतप्रसङ्गित्वमात्रेणेत्यर्थः। **सामर्थ्यादिति** । वाक्यार्थबोधकाले विरोधाऽभावेनोपधापदसंबन्धे कृते सामर्थ्यात्पूर्वं दीर्घप्रवृत्तिरेव कल्प्यत इति भावः । **धीमानिति** । न चैकान[illegible] सर्वादिपठिते·

क्विबन्ताद्वा कर्तरि क्विप् । 'उगिदचा'मिति सूत्रेऽञ्ग्रहणं नियमार्थम्–[ 'धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवे'ति ] । तेन 'स्रत्' 'ध्व'दित्यादौ न । 'अधातो'रिति तु अधातुभूतपूर्वस्यापि नुमर्थम् । गोमान् । गोमन्तौ । गोमन्तः । इत्यादि । 'भातेर्डवतुः' । भवान् । भवान्तौ । भवन्तः । शत्रन्तस्य त्वत्वन्तत्वाभावान्न दीर्घः । भवतीति भवन् ॥

**उभे अभ्यस्तम्** ।६।१।५। षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदिते अभ्यस्तसंज्ञे स्तः ॥

---

**अत्वन्तत्वाभावादिति** । 'अतु'इत्यकारानुबन्धस्याऽनुकरणाच्छत्रन्तस्य न भवतीत्यर्थः । **उभे** । शब्दरूपाऽपेक्षया नपुंसकनिर्देशः । **षाष्ठद्वित्वेति** । 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे'ति न्यायादिति भावः । 'द्वे'इत्यनुवृत्त्यैव सिद्धे 'उभे'ग्रहणं समुदायप्रतिपत्त्यर्थमिति व्याचष्टे–**उभे समुदिते इति** । अन्यथा 'नेनिजती'त्यत्र

---

ऽनुनासिकोकारविशिष्टे भवतुशब्दे चरितार्थमिति वाच्यम् , पकारादेः समुदायानुबन्धत्वेऽप्यतोर्ह्यनुबन्धकत्वाऽभावात् । अवयवानां नान्तरीयकतया समुदायोपदेशएव त्र्पितात्पर्यमित्यर्थस्यादेच उपदेश इति सूत्रस्थभाष्यसंमतत्वेन यदुपदेशप्रयुक्ता यस्येत्संज्ञा तस्य तदनुबन्धकताया एव स्वीकारात् । न चोकारलोपेऽत्वन्तत्वस्याऽप्यभावः, उकारस्याश्रयणेन तदंशे भूतपूर्वगतिस्वीकारात् । एतेन तदाश्रयणेऽतुवन्तमेतन्नाऽत्वन्तमित्यपास्तम् । तदाश्रयणाऽभावात् । तस्मादनुनासिकोकारविशिष्टो य उपदेशेऽत्, तदन्तस्य प्रयोगस्थस्य दीर्घ इति सूत्रार्थ इति न दोषः । **नियमार्थमिति** । 'धातोश्चेदुगित्कार्यन्तर्हि नलोपिनोऽञ्चतेरेवे'ति नियम इति भावः । तेनोखास्रद्भ्राह्मणीत्यादौ नुम्ङीपौ न, न्यायप्राप्ताऽलोपाऽकरणपूर्वकं नलोपकरणस्य विवक्षार्थत्वमित्याशयः । यद्यपि 'अञ्चतेश्चेन्नलोपिन एवे'ति नियमेऽप्यञ्चतिग्रहणं चरितार्थं तथापि भाष्यप्रामाण्येन सामान्यापेक्ष उक्तनियमो युक्त इति बोद्धव्यम् ।

नन्वत्र धातुत्वात्कथं नुमत आह–**अधातोरिति** । न चौपदेशिकधातुविषयक एव नियमोऽस्तु किमनेनेति वाच्यम् , औपदेशिकत्वाऽनन्तर्भावेण सामान्यापेक्षनियमज्ञापनार्थत्वात् । तत्फलं पर्णध्वदित्यादाविव गोमानित्यादिनामधातावुगितश्चेति ङीवभाव इति दिक् । क्यच्पक्षेऽल्लोपो न स्थानिवत्, क्वौ लुप्तत्वात् । अत्राऽऽचारक्विबर्वाचीनमतेन । वस्तुतो 'हलन्तेभ्यस्तदभाव'इति 'ह्रस्वनद्याप'इत्यत्र भाष्ये स्पष्टम् ।

**उभे अभ्य** । लक्ष्यानुसारेण गर्गदण्डनन्यायादत्र समुदाये वाक्यपरिसमाप्तिरित्याह–**उभे समुदिते इति** । 'द्वे'इत्यनुवृत्त्यैव सिद्धे 'उभे'ग्रहणं स्पष्टार्थम् । यत्तूभेग्रहणं सामर्थ्यात्सहभावोपसर्जनद्वित्वविशिष्टार्थकं, तेन समुदिते इत्यर्थलाभ इति, तन्न, अशब्दार्थत्वात् । शब्दाधिक्यादर्थाधिक्यस्य बहुशो भाष्यकृतोपहसितत्वाच्च । ध्वनितश्चेदं'तदसति प्रयोजने उभेग्रहणं सहार्थं विज्ञास्यते' इति ग्रन्थेन भाष्ये । अत एव सूत्रशेषे भाष्ये गर्गदण्डनन्यायेनैतदर्थसिद्धिमाश्रित्य 'सहग्रहणं कर्तव्य'-मिति वार्तिकं प्रत्याख्यातं । तुल्यन्यायात्तदर्थकत्वेन पराभिमतमुभेग्रहणञ्च प्रत्याख्यातमेवेति सुधियो विभावयन्तु । तत्र [illegible] कार्यकालपक्षे न संज्ञेति

**नाभ्यस्ताच्छतुः**।७।१।७८। अभ्यस्तात्परस्य शतुर्नुम्न स्यात्। ददत्। ददद्। ददतौ। ददतः॥ **जक्षित्यादयः षट्**।६।१।६। षड्धातवोऽन्ये जक्षितिश्च सप्तम एतेऽभ्यस्तसंज्ञाः स्युः। जक्षत्। जक्षद्। जक्षतौ। जक्षतः। एवं जाग्रत्। दरिद्रत्। शासत्। चकासत्। दीधीवेव्योर्ङित्त्वेऽपि छान्दसत्वाद्व्यत्ययेन परस्मैपदम्। दीध्यत्। वेव्यत्। [ इति तान्ताः ]।

गुप्। गुब्। गुपौ। गुपः। गुब्भ्यामित्यादि॥ [ इति पान्ताः ]।

**त्यदादिषु दृशोऽनालोचने कञ्च**।३।२।६०। त्यदादिषूपपदेष्वज्ञानार्थाद्दृशेर्धातोः कञ्स्याच्चात्क्विन्॥ **आ सर्वनाम्नः**।६।३।९१। सर्वनाम्न आकारोऽन्ता-

---

'अभ्यस्तानामादि'रित्याद्युदात्तत्वं प्रत्येकं पर्यायेण स्यात्। **नाभ्यस्ताच्छतुः**। व्यवहितोऽपि नुमेवाऽत्र निषिध्यते, अन्येषामप्रसक्तेरित्यभिप्रेत्याह—**नुम्न स्यादिति**।

**ददिति**। ददातीति ददत्। दाञो लटः शत्रादेशः। शपः श्लुः। 'श्लौ' इति द्वित्वम्। अभ्यासस्य ह्रस्वः। 'श्नाभ्यस्तयोरातः' इत्यालोपः।

**जक्षित्यादयः षट्**। 'ज'क्षिति पृथक् पदम्। 'इति'शब्देन जक्षिरेव परामृश्यते। इति आदिर्येषामित्यतद्गुणसंविज्ञानबहुव्रीहिस्तदेतदाह—**षड्धातवोऽन्ये इति**। **इति तान्ताः**। गोपायतीति गुप्। क्विपि विवक्षिते 'आयादय आर्धधातुके वे'ति वैकल्पिकत्वादिहाऽऽयप्रत्ययाऽभावः। आयप्रत्ययपक्षे त्वतो लोपे यलोपे च 'गोपा'इति रूपं बोध्यम्। **इति पान्ताः**।

**त्यदादिषु**। कन्नन्तस्य तूदाहरणं 'तादृशो' 'यादृश' इत्यादि, तच्चाऽत्र नोक्तं, हलन्तेष्वनुपयोगात्। अनालोचने किम्?। तं पश्यतीति तद्दर्शः। कर्मण्यण्। तादृशादयस्तु रूढिशब्दत्वादसताप्यवयवार्थेन व्युत्पाद्यन्ते। अतएवाऽज्ञानार्थाद्दृशेरिति सङ्गच्छते। भाष्ये तु कर्मकर्तरि व्युत्पत्तिर्दर्शिता—'तमिवेमं पश्यन्ति जनाः', 'स इवायं पश्यति'। ज्ञानविषयो भवतीत्यर्थात्। अज्ञानार्थादिति तु सङ्गच्छते, तत्र दृशेर्ज्ञानविष-

---

न जुस्। एकादेशात्पूर्वमायन्नादिषूपदेशिवद्वचनेनाऽन्तरङ्गत्वादन्तादेशेपि 'सर्वे सर्वपदादेशा' इति न्यायेन स्थानिवद्भावाज्झित्वेन जुसापत्तिः। किं चैकादेशे जुसोऽपवादविषयस्य जायमानत्वेन 'प्रकल्प्य चापवादविषय'मिति न्यायेन पूर्वमन्तिभावाऽप्रवृत्तौ एकादेशे जुसापत्तिः। यथोद्देशे पूर्वं समुदाये प्रवृत्तसञ्ज्ञायाः स्थानिवद्भावेनाऽभ्यासलोपे सत्त्वेऽपि पश्चमीसमासेनैकादेशस्य स्थानिवत्वान्न तत्प्रवृत्तिः। अत एव 'प्रत्यैपिप'न्नित्यादौ न दोष इत्यलम्॥

**नाभ्यस्ता**। बहुयोगव्यवच्छिन्नोऽपि नुमिहाऽनुवर्त्तते, सामर्थ्यात्। तदाह—**नुम्नेति**। दाञः शतरि शपः श्लौ श्लाविति द्वित्वेऽभ्यासह्रस्वत्वे श्नाभ्यस्तयोरित्यालोपे—ददिति।

देशः स्याद्दृग्दशवतुपु। कुत्वस्याऽसिद्धत्वात् 'व्रश्चे'ति षः। तस्य जश्त्वेन डः। तस्य कुत्वेन गः। तस्य चर्त्वेन पक्षे कः। तादृक्। तादृग्। तादृशौ। तादृशः। 'षत्वाऽपवादत्वात्कुत्वेन खकार' इति कैयटहरदत्तादिमते तु चर्त्वाऽभावपक्षे [तु] ख एव श्रूयते नतु गः, जश्त्वं प्रति कुत्वस्याऽसिद्धत्वात्। 'दिगादिभ्यो य'दिति निर्देशान्नाऽसिद्धत्वमिति वा बोध्यम्। 'व्रश्चे'ति षत्वम्। जश्त्वचर्त्वे। विट्। विड्। विशौ। विशः। विशम्॥ **नशेर्वा** ।८।२।६३। नशेः कवर्गोऽन्तादेशो वा स्यात्पदान्ते। नक्। नग्। नट्। नड्। नशौ। नशः। नग्भ्याम्। नड्भ्यामित्यादि॥ **स्पृशोऽनुदके क्विन्** ।३।२।५८। अनुदके सुप्युपपदे स्पृशेः क्विन्स्यात्। घृतस्पृक्।

---

यल्लापत्तिमात्रप्रवृत्तित्वेऽपि विषयीकरणाऽवृत्तित्वात्। **आकारोऽन्तादेश इति**। अकारादेशे सति ल्लतो गुणः स्यात्। न चाऽकारोच्चारणसामर्थ्याद्दीर्घः स्यादेवेति वाच्यम्, अकारस्याऽविधौ हल एव श्रवणप्रसङ्गात्। **विडिति**। 'विश प्रवेशने' इत्यस्मात् क्विप्। **नशेर्वा**। केचिदिह 'झली'त्यनुवर्त्य 'झलि पदान्ते चे'ति व्याचक्षते, तन्न, 'नष्ट'मित्यादावतिप्रसङ्गात्। **नगिति**। षडगकाः प्राग्वत्। **स्पृशोऽनुदके क्विन्**। ककारो गुणाऽभावार्थः। नकारस्तु 'क्विन्प्रत्ययस्य कुः' इति विशेषणार्थः। वस्तुतस्तु व्यर्थ एव सः, 'क्विप्रत्ययस्य कुः' इत्युक्तेऽपि तदनुबन्धपरिभाषया क्विबन्तस्य कुत्वाऽप्रसक्तेः। न चाद्युदात्तत्वं प्रयोजनं, क्विनः प्रकृतीनामेकाच्त्वाद्धातुस्वरेणाऽपि तत्सिद्धेः। 'दधृ'गित्यत्र ल्लन्तोदात्तत्वनिपातनादाद्युदात्तत्वं नापेक्षितमेवेति दिक्। अत्र 'सुपी'त्यनुवर्तते, 'कर्मणी'ति तु निवृत्तमित्याशयेनाह–**अनुदके सुप्युपपदे इति**। **घृतस्पृगिति**। घृतं घृतेन वा स्पृशतीति विग्रहः। अनुदके किम्?, उदकं स्पृशतीति उदकस्पर्शः। निषेधसामर्थ्यादिह क्विबपि न भवति, तस्मिन्हि सति क्विन्प्रत्ययो यस्मा-

---

**त्यदादिषु**। आलोचनमिह ज्ञानमात्रम्। **आ स**। दृग्दृशवतुष्विति सूत्रमनुवर्त्तते। **षत्वापवादत्वादिति**। 'कुः क्विन्यत'इति न्यासेन 'दृष्ट' इत्यध्याहारेण च बहुव्रीहिफले सिद्धे प्रत्ययग्रहणेनाऽन्यपदार्थांशे वीप्सागर्भबहुव्रीहिणा लब्धं तादृशादिक्विन्नन्तविषयं लक्षणमचरितार्थमिति भावः। **खकार इति**। अघोषमहाप्राणशकारतुल्यत्वादिति भावः। **कैयटेति**। 'क्विन्प्रत्ययस्येति सूत्रस्थे'त्यादिः। **असिद्धत्वादिति**। यद्यपि जश्त्वापवादोऽपि कुत्वं, तथापि शस्थानिकजश्त्वस्यैव न तु खस्थानिकस्यापीति भावः। वस्तुत इदं चिन्त्यं, प्रत्ययग्रहणस्य बहुव्रीहिमात्रफलकताया एव भाष्यकृतोक्तेः। तस्माद्धृगधुयुजिक्रुङ्भ्यस्य चारितार्थ्येन जश्त्वषत्वापवादताऽस्य न युक्तेति। तदेतन्मतइति वदता सूचितमिति दिक्। **नगिति**। षडगकाः प्राग्वत्। **नड्भ्यामिति**। 'मस्जिनशो'रिति नुम्तु न, धातुप्रत्यये तद्विधानात्। **स्पृशोऽनु**। अनुदके किम्?। उदकस्पर्शः। **अन्तोदात्तत्वमिति**। नित्त्वादाद्युदात्तत्वं प्राप्तम्।

घृतस्पृग् । घृतस्पृशौ । घृतस्पृशः । क्विन् प्रत्ययो यस्मादिति बहुव्रीह्याश्रयणात्क्विप्यपि कुत्वम् । स्पृक् । षडगकाः प्राग्वत् । [ इति शान्ताः ] ।

'ञिधृषा प्रागल्भ्ये' । अस्मात् 'ऋत्विगा'दिना क्विन्द्वित्वमन्तोदात्तत्वं च निपात्यते । कुत्वात्पूर्वं जश्त्वेन डः । गः । कः । धृष्णोतीति दधृक् । दधृग् । दधृषौ । दधृषः । दधृग्भ्यामित्यादि । रत्नानि मुष्णातीति रत्नमुट् । रत्नमुड् । रत्नमुषौ । रत्नमुषः ॥ 'षड्भ्यो लुक्' । षट् । षड् । षड्भिः । षड्भ्यः २ । 'षट्चतुर्भ्यश्चे'ति नुट् । 'अना'मिति पर्युदासान्न ष्टुत्वनिषेधः । 'यरोऽनुनासिक'इति विकल्पं बाधित्वा **प्रत्यये भाषायां नित्यमिति** वचनान्नित्यमनुनासिकः । षण्णाम् । षट्त्सु । षट्सु । तदन्तविधिः । परमषट् । परमषण्णाम् । गौणत्वे तु—प्रियषषः । प्रियषषाम् । रुत्वं प्रति षत्वस्याऽसिद्धत्वा'त्ससजुषो रु'रिति रुत्वम् ॥ **र्वोरुपधाया दीर्घ इकः** ।८।२।७६। रेफवान्तस्य धातोरुपधाया इको दीर्घः स्यात्पदान्ते । पिपठीः । पिपठिषौ । पिपठिषः । पिपठीर्भ्याम् । 'वा शरी'ति वा विसर्जनीयः ।

**नुम्विसर्जनीयशर्व्यवायेऽपि** ।८।३।५८। एतैः प्रत्येकं व्यवधानेऽपि इण्कुभ्यां परस्य सस्य मूर्धन्यादेशः स्यात् । ष्टुत्वेन पूर्वस्य षत्वम् । पिपठीष्षु ।

---

दिति बहुव्रीह्याश्रयणेन कुत्वस्याऽवर्जनीयतया 'अनुदके' इति निषेधस्य फलाऽभावात् । केचित्तु 'उदकस्पृ'डिति प्रत्युदाहरन्ति, निषेधसामर्थ्यात्कुत्वं माऽस्तु क्विप्स्यादेवेति तेषामाशयः ॥ **इति शान्ताः ॥**

**गौणत्वे त्विति** । 'षड्भ्यो लुक्' 'षट्चतुर्भ्यश्चे'ति बहुवचननिर्देशात्षडर्थप्राधान्ये एव लुङ्नुटौ भवत इति भावः । पिपठिषतेः क्विप्यतो लोपे कृदन्तत्वात्स्वाद्युत्पत्तौ पिपठिष्—सुइति स्थिते सोर्हल्ङ्यादिलोपे प्रत्ययलक्षणेन पदान्तत्वात्सस्य रुर्भवति । न च रुत्वे कर्तव्येऽल्लोपस्य स्थानिवत्त्वं शङ्क्यं, पूर्वत्रासिद्धे तन्निषेधात् । **नुम्विसर्जनीय** । 'इण्को'रिति पञ्चमीनिर्देशाद्व्यवहितस्याऽप्राप्तौ वचनम् । **ष्टुत्वेन पूर्वस्येति** । सनः सस्य रुत्वविसर्गयोः कृतयोः 'वा शरी'ति विकल्पात्पक्षे सकारस्तेन

---

कुत्वस्य जश्त्वं प्रत्यसिद्धत्वादाह—**कुत्वात्पूर्वमिति** । **र्वोरु** । 'सिपि धातो'रित्यतो धातोरिति वर्त्तते । तच्च र्वाभ्यां विशेष्यते । पिपठिषतेः क्विपि अतो लोपे प्रातिपदिकत्वात्सौ हल्ङ्यादिलोपे प्रत्ययलक्षणेन पदान्तत्वाद्रुः । रुत्वेऽल्लोपो न स्थानिवत्, पूर्वत्राऽसिद्धे तन्निषेधादिति केचित् । 'कौलुसं ने'ति तत्त्वम् ।

**नुम्वि** । इण्को'रित्यनुवर्तते ... 'स्त्यत्र धातोः सस्य

पिपठीःषु । 'प्रत्येक'मिति व्याख्यानादनेकव्यवधाने षत्वं न । निंस्व । निंस्से । नुम्ग्रहणं नुम्स्थानिकानुस्वारोपलक्षणार्थं, व्याख्यानात् । तेनेह न–सुहिन्सु । पुंसु । अतएव न शर्ग्रहणेन गतार्थता । 'रात्सस्ये'ति सलोपे विसर्गः,–चिकीः । चिकीर्षौ । चिकीर्षः । 'रोः सुपी'ति नियमान्न विसर्गः,–चिकीर्षु । 'दमेर्डोस्' । डित्त्वसामर्थ्याट्टिलोपः । षत्वस्याऽसिद्धत्वाद्रुत्वविसर्गौ । दोः । दोषौ । दोषः । 'पद्दन' इति वा दोषन् । दोष्णः । दोष्णा । दोषः। दोषा ॥ 'विश प्रवेशने'। सन्नन्तात्क्विप् । षत्वस्याऽसिद्धत्वात्संयोगान्तलोपः । 'व्रश्चे'ति षः । जश्त्वचर्त्वे । विविट् । विविड् । विविक्षौ । विविक्षः। 'स्कोः'रिति कलोपः। तट् । तड् । तक्षौ। तक्षः । गोरट्। गोरड् ।

---

शर्व्यवाये सुपः सस्य षत्वं । पूर्वस्य ष्टुत्वम्, न तु 'आदेशप्रत्ययो'रिति षः, 'अपदान्तस्ये'ति निषेधादिति भावः । एवं स्थिते शर्ग्रहणेन न प्रयोजनं किं तु 'नुम्विसर्जनीयव्यवायेपी'त्येव सूत्रं युक्तमित्येके । 'नुम्शर्व्यवायेपी'त्येव युक्तं सूत्रयितुं, शर्ग्रहणेन विसर्जनीयस्य लाभादित्यन्ये । **निंस्स्वेति** । आद्यसकारस्य प्रत्येक व्यवधानेऽपि आदेशप्रत्ययावयवत्वाभावात्षत्वं न भवति । न चाऽत्र 'आदेशप्रत्यययो'रित्यनुवृत्त्यभावात् 'नुम्विसर्जनीये'त्यनेन धातुसकारस्य षत्वं स्यादिति वाच्यम्, तस्य स्वातन्त्र्येण विधायकत्वाऽनङ्गीकारात् । 'अपदान्तस्य मूर्धन्यः' 'इण्को'रितिवत् 'नुम्विसर्जनीये'त्यस्याप्यधिकारसूत्रत्वात् । कर्तुमिच्छति चिकीर्षति । चिकीर्षतेः क्विप्प्रत्ययः–चिकीः । "एकाच उपदेशे"इति 'सनि ग्रहगुहोश्चे'ति वा सन इडभावे 'इको झ'लिति कित्वाद्गुणाऽभावे 'अज्झनगमां सनी'ति दीर्घे 'ॠत इद्धातो'रिति इत्वे रपरत्वं, ततो द्वित्वं, 'हलादिः शेषः' 'कुहोश्चुः' अल्लोपः । सोर्हल्ङ्यादिलोपे पदान्तत्वात् 'र्वोरुपधायाः' इति दीर्घः ।

**दोरिति**। दाम्यतीति दोः । **संयोगान्तलोप इति**। न चाऽस्मिन्कर्तव्ये वहिरङ्गत्वेनाऽतोलोपस्याऽसिद्धत्वं शक्यं, वहिर्निमित्तापेक्षपदसंज्ञासापक्षत्वेन संयोगान्तलोपस्यैव वहिरङ्गत्वादिति दिक् । **विविडिति** । विशेः सन् 'एकाच' इतिणिषेधे 'हलन्ताच्चे'ति क्त्विवाद्गुणाऽभावः । द्वित्वाऽभ्यासकार्ये । **तडिति** । 'तक्षू त्वक्षू तनूकरणे' इत्यस्मात् क्विप् । गां रक्षतीति **गोरट्** । कर्मण्युपपदे 'वा सरूप'न्यायेन क्विप् ।

---

नाऽनेन षत्वम् । व्यवायशब्दस्य प्रत्येकं संबन्धो व्याख्यानात् । तदाह–**प्रत्येकमिति** । अपिनाऽव्यवधानेऽपि । **नुम्स्थानिकेति**। प्रकृतसूत्रस्थं,हयवरट्सूत्रस्थश्च भाष्यमत्र मानम् । **व्रश्चेति ष इति** । सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतायान्त्रिपादीस्थस्याऽप्रवृत्तेर्हल्ङ्यादिलोपोत्तरं 'विविश् स्' इत्यवस्थायां षत्वस्याऽसिद्धत्वात्संयोगान्तलोपे ष इत्यर्थः । **कलोप इति** । पदान्ते संयोगादिलोपस्य संयोगान्त-

गोरक्षौ। गोरक्षः। तक्षिरक्षिभ्यां ण्यन्ताभ्यां क्विपि तु 'स्को'रिति न प्रवर्तते, णिलोपस्य स्थानिवद्भावात्। **पूर्वत्रासिद्धीये न स्थानिवदिति** तु इह नास्ति, **'तस्य दोषः संयोगादिलोपलत्वणत्वेषु'**–इति निषेधात्। तस्मात्संयोगान्तलोप एव। तक्। तग्। गोरक्। गोरग्। 'स्को'रितिलोपं प्रति कुत्वस्याऽसिद्धत्वात् संयोगान्तलोपः। पिपक्। पिपग्। एवं विवक्। दिधक्। [ इति षान्ताः ] ॥

'पिस गतौ'। सुष्ठु पेसतीति सुपीः। सुपिसौ। सुपिसः। सुपिसा। सुपीर्भ्याम्। सुपीःषु। सुपीष्षु। एवं सुतूः। 'तुस खण्डने' ॥

विद्वान्। विद्वांसौ। विद्वांसः। हे विद्वन्। विद्वांसम्। विद्वांसौ ॥ **वसोः संप्रसारणम्**।६।४।१३१। वस्वन्तस्य भस्य संप्रसारणं स्यात्। पूर्वरूपत्वं। षत्वम्। विदुषः। विदुषा। 'वसुस्रं'स्विति दत्वम्। विद्वद्भ्यामित्यादि। सेदिवान् ॥ सेदिवांसौ। सेदि-

---

**कुत्वस्यासिद्धत्वादिति**। इतरथा 'स्को'रिति कलोपः स्यादिति भावः। **पिपगिति**। पक्तुमिच्छति **पिपक्**। वक्तुमिच्छति **विवक्**। 'दादे'रिति घः। 'एकाचो बश'इति भष्भावः। दग्धुमिच्छतीति **दिधक्** ॥ **इति षान्ताः** ॥

**सुतूरिति**। सुष्ठु तोसतीति **सुतूः**। वेत्तीति **विद्वान्**। 'विदेः शतुर्वसुः'। अदादित्वाच्छपो लुक्। 'सार्वधातुकमपित्' इति ङित्त्वान्नोपधागुणः। उगित्त्वान्नुम्। 'सान्तमहतः' इति दीर्घः। संयोगान्तलोपस्याऽसिद्धत्वान्नलोपो न ॥ **वसोः**। प्रत्ययग्रहणे तदन्तग्रहणमित्याह–**वस्वन्तस्येति**। **सेदिवानिति**। 'भाषायां सदवसश्रुवः' इति लिटः क्वसुः। 'लिटि धातो'रितिद्वित्वम्, 'हलादिः शेषः' 'अत एकहल्मध्ये'

---

लोपाऽपवादत्वादिति भावः। **तडिति**। तक्ष्णोतेः क्विप्। **ण्यन्ताभ्यामिति**। णिलोपस्य स्थानिवत्त्वा'त्तक्स्थाते'त्यादौ संयोगादिलोपाऽप्राप्तेः 'काष्ठशगेव नास्ति कुतः काष्ठशक्स्थाते'ति 'परेश्च घाङ्क्यो'रिति सूत्रस्थभाष्येण न विरोधः। तत्र झल्परसंयोगादिलोपमाशङ्क्य तथोक्तम्। **तस्य दोष इति**। 'कौ लुप्त'मिति तु न सार्वत्रिकमिति भाव इत्यन्यत्र विस्तरः। **कुत्वस्याऽसिद्धत्वादिति**। 'पिपच्सि'त्यवस्थायाङ्कुत्वस्याऽसिद्धत्वात्तदभावे 'स्को'रित्यस्याऽप्राप्तेः संयोगान्तलोप इति भावः। **दिधगिति**। 'दादे'रिति घः। 'एकाच'इति भष्भावः। **विद्वानिति**। विदेः शतुर्वसावदादित्वाच्छपो लुकि शतुर्ङित्वाद्गुणाऽभावे उगित्वान्नुमि 'सान्ते'ति दीर्घे संयोगान्तलोपे तस्याऽसिद्धत्वान्नलोपो न ॥ **वसोः**। प्रत्ययग्रहणे तदन्तग्रहणं, 'भस्ये'त्यधिकारः। तदाह–**वस्वन्तस्येत्यादि**। न च विदेः शतुर्वसोरेकानुबन्धकत्वात्तस्यैवाऽत्र ग्रहणं स्यान्न लिडादेशक्वसोरिति वाच्यं, क्वसुसादेशेन तस्याऽपि द्व्यनुबन्धकत्वादिति भाष्ये स्पष्टम्। **विदुष इति**। संप्रसारणपूर्वत्वस्य 'षत्वतुको'रित्यसिद्धत्वन्तु न, पदान्तपदाद्योरेकादेशस्यैव तेनाऽसिद्धत्वात्। **सेदिवानिति**। षद्धातोर्भाषायां सदेति लिटः

वांसः। सेदिवांसम् । अन्तरङ्गोऽपीडागमः संप्रसारणविषये न प्रवर्तते, 'अकृतव्यूहा' इति परिभाषया । सेदुषः । सेदुषा । सेदिवद्भ्यामित्यादि । 'सान्तमहत' इत्यत्र सान्तसंयोगोऽपि प्रातिपदिकस्यैव गृह्यते, नतु धातोः, महच्छब्दसाहचर्यात् । सुष्ठु हिनस्तीति स सुहिन् । सुहिंसौ । सुहिंसः । सुहिन्भ्याम् । सुहिन्त्सु ॥

ध्वत् । ध्वद् । ध्वसौ । ध्वसः । ध्वद्भ्याम् । एवं स्रत् ॥

**पुंसोऽसुङ्** ।७।१।८९। सर्वनामस्थाने विवक्षिते पुंसोऽसुङ् स्यात् । उकार

---

इत्येत्वाभ्यासलोपौ । 'वस्वेकाजाद्घसा'मितीट् । नुम् । 'सान्ते'ति दीर्घः ।

**सेदुष इति** । ननु 'तदनुबन्धकग्रहणे नाऽतदनुबन्धकस्ये'ति परिभाषया 'विदेः शतुर्वसु'रित्यस्यैव वसोः संप्रसारणं युक्तं, न तु क्वसोः । सत्यम् । वसोरुकारानुबन्धकरणं क्वसोः सामान्यग्रहणार्थम् । उगित्त्वस्य स्थानिवद्भावेनाऽपि सिद्धेः । इह गमिप्रभृतिभ्यः क्वसुर्नोदाहृतः, छान्दसत्वात् । अतएव वैदिकप्रक्रियायां 'तस्थिवान्' 'जग्मिवान्' इत्याद्युदाहर्तव्यं नाऽत्रेत्याहुः । कवयस्तु प्रयुञ्जते-'श्रेयांसि सर्वाण्यधिजग्मुषस्ते' । 'तं तस्थिवांसं नगरोपकण्ठे' इत्यादि । अत्र वदन्ति--छान्दसा अप्येते पद्न्नसादय इव क्वचिद्भाषायां भवन्ति, 'मासश्छन्दसी'त्यस्य सामान्यापेक्षज्ञापकत्वाश्रयणात्कथंचित्स-गाधेयमिति । **सुहिनिति** । संयोगान्तलोपस्याऽसिद्धत्वान्नोपधादीर्घः ।

**सुहिन्त्स्वति** । 'नश्चे'ति सस्य वा धुट् । ध्वंसत इति **ध्वत्** । स्रंसत इति **स्रत्** । 'स्रंसु ध्वंसु अवस्रंसने' 'ध्वंसु गतौ याचने चे'त्याभ्यां क्विप् । 'अनिदिता'-मिति नलोपः । 'वसुस्रंसु' इति दत्वम् ।

**पुंसोऽसुङ्** । 'इतोऽत्सर्वनामस्थाने' इत्यनुवर्तनादाह- **सर्वनामस्थान इति । विवक्षित इति** । तेन 'परमपुमा'नित्यत्र परत्वादसुङि कृते समासान्तोदात्तत्वं भव-

---

क्वसौ द्वित्वे'ऽत एके'त्येत्वाभ्यासलोपयोर्वस्वेकाजादितीट् । **अकृतेति । परे तु** पदावधिकेऽन्वाख्याने 'सद्स् अ'सिति स्थिते इट्संप्रसारणयोः प्राप्तावेव विचारः, परन्तु 'सद्स्-अ'सित्यवस्थायामेव प्रति-पदविधित्वेन शीघ्रोपस्थितिकत्वात्पूर्वं संप्रसारणे वलादित्वाऽभावादिटः प्राप्तिरेव नेति 'सेदुष' इत्यादि-सिद्धिरित्यकृतव्यूहपरिभाषा निष्फला । लक्ष्यानुरोधादत्र पदावधिकमेवान्वाख्यानमित्याहुः । **साह-चर्यादिति** । न च महत्यतेः क्विपि महतोऽपि धातुत्वसंभव इति वाच्यम्, औपदेशिकधातुत्वाऽसंभ-वेन तत्साहचर्येणौपदेशिकधातुभिन्नसान्तसंयोगस्य ग्रहणमित्याशयात् । **सुहनिति** । नान्तलक्षणदीर्घस्तु संयोगान्तलोपस्याऽसिद्धत्वान्न । 'हिसी'त्यस्येदित्त्वादनिदितामिति लोपो न । **ध्वदिति** । 'स्रंसु ध्वंसु अवस्रंसने' क्विप् । अनिदित्वान्नलोपः । वस्विति दत्वम् । **विवक्षित इति** । भाष्ये 'असुङ्युपदेशिवद्वचनं स्वरसिद्ध्यर्थं ... । ... वचनमेव ज्यायः विवक्षितसप्तम्यामपि

उच्चारणार्थः । 'बहुपुंसी'त्यत्र 'उगितश्चे'ति ङीबर्थं कृतेन 'पूञो डुम्सु'न्निति प्रत्ययस्योगित्त्वेनैव नुम्सिद्धेः । पुमान् । हे पुमन् । पुमांसौ । पुमांसः । पुंसः । पुंसा । पुंभ्याम् । पुंभिः । पुंसु । 'ऋदुशन' इत्यनङ् । उशना । उशनसौ । उशनसः ॥ ॐ अस्य संबुद्धौ वाऽनङ्नलोपश्च वा वाच्यः ॥ हे उशनन् । हे उशन । हे उशनः । उशनोभ्यामित्यादि ॥ अनेहा । अनेहसौ । हे अनेहः । अनेहोभ्यामित्यादि ॥ वेधाः । वेधसौ । वेधसः । हे वेधः । वेधोभ्यामित्यादि ।

'अधातो'रित्युक्तेर्न दीर्घः, सुष्ठु वस्ते सुवः । सुवसौ । सुवसः ॥

---

दसुङ् एवाऽकारस्य भवति । परसप्तम्यां तु नैतत्सिध्येत् । सर्वनामस्थानोत्पत्तेः प्रागेव पुम्शब्दोकारस्योदात्तत्वे कृते स्रंसनधर्मिणो हलः स्थाने तद्धर्मणोऽनुदात्तस्यैवादेशस्य प्रसङ्गात् । न चोकारस्य कृतोऽपि स्वरोऽनन्त्यत्वान्निवर्तयिष्यते, असुङश्चान्त्यत्वात्करिष्यत इति वाच्यम् , अन्तरङ्गे स्वरे कर्तव्ये बहिरङ्गस्याऽसुङोऽसिद्धत्वादिति भावः । वस्तुतस्तु अकृतव्यूहपरिभाषाया अन्तरङ्गपरिभाषापवादत्वात्परसप्तमीपक्षोऽपि सूपपादः । एतच्च मनोरमायां स्पष्टम् । **पूञ इति** । यद्यप्युणादिषु 'पातेर्डुम्सु'न्निति वक्ष्यति, तथापि पाठान्तरमनुसृत्याऽत्रोक्तमिति बोध्यम् । **हे पुमन्निति** । 'असंबुद्धा'वित्युक्तेः 'सान्ते'ति न दीर्घः । **पुंस्विति** । संयोगान्तलोपे 'मोऽनुस्वारः' । नुम्स्थानिकस्यैवाऽनुस्वारस्योपलक्षणान्नुम्विसर्जनीयेति न षत्वम् । **उशनेति** । 'वशेः कनसिः' । 'ग्रहिज्ये'ति संप्रसारणम् । **अस्य संबुद्धाविति** । एतच्च वार्तिकम् । हरदत्तादयस्त्वाहुः—'सोर्डे'ति वाच्ये 'अनङ् सा' विति वचनेन क्वचिदनङ्श्रवणस्य ज्ञापितत्वादेतत्सिद्धमिति । यद्यपि सोर्डे कृते डित्त्वसामर्थ्याट्टिलोपे 'सर्वनामस्थाने चासंबुद्धौ' इति दीर्घे 'उशाना' इत्यनिष्टरूपं प्रसज्येत, तथाप्यङ्गवृत्तपरिभाषया दीर्घो नेति कृत्वा ज्ञापकत्वं सङ्गच्छत इति तेषामाशयः । **अनेहा । वेधा इति** । असुन्-

---

विभक्तिनिमित्तकत्वेन बहिरङ्गत्वात्ततः पूर्वं 'परमपुमा'नित्यादौ स्वरप्रवृत्तौ दोषात् । **बहुपुंसीति** । विभक्तौ लिङ्गविशिष्टाग्रहणान्नाऽसुङ् । विभक्तिविवक्षाया लिङ्गकार्योत्तरमेव सत्त्वेन न ङीपः प्रागसुङिति भावः । **पूञ इति** । 'पाते'रिति पाठान्तरम् । 'स्त्रिया'मिति सूत्रे भाष्ये तु—'सूतेः सस्य पः ह्रस्वः म्सुन्प्रत्यय' इत्युक्तम् । वस्तुत उच्चारणार्थानामपीत्सञ्ज्ञावश्यकत्वादियमुक्तिर्निष्फला । **पुमानिति** । 'सान्ते'ति दीर्घः । **उशनेति** । वशेः कनसिः । ग्रहिज्येति संप्रसारणम् । **अस्य संबुद्धाविति** । एतच्च वृत्तौ वाचनिकं पठितं । वस्तुतो माधवस्तु—'संबोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्त'मिति श्लोकवार्तिकमित्याह । 'भाष्यानुक्तत्वादिदमप्रमाणमेवे'ति प्रामाणिकाः । **उशना**—शुक्रः । **अनेहा** कालः । 'नञि हन एह च' इत्यसुन् । हन्तेः एहादेशश्च । **सुव इति** । 'अधातो'रित्यस्य

पिण्डं ग्रसते पिण्डग्रः । पिण्डग्लः । 'ग्रसु ग्लसु अदने' ॥

**अदस औ सुलोपश्च** ।७।२।१०७। अदस औकारोऽन्तादेशः स्यात्सौ परे सुलोपश्च । 'तदोः सः सा'विति दस्य सः । असौ ॥ ❀ **औत्वप्रतिषेधः साकच्कस्य वा वक्तव्यः सादुत्वं च** ॥ प्रतिषेधसंनियोगशिष्टमुत्वं तदभावे न प्रवर्तते । असकौ । असुकः । त्यदाद्यत्वं । पररूपत्वम् । वृद्धिः । 'अदसोऽसे'रिति मत्वोत्वे । अमू । 'जसः शी' । 'आद्गुणः' ॥ **एत ईद्बहुवचने** ।८।२।८१। अदसो दात्परस्यैत ईत्स्याद्दस्य च मो बह्वर्थोक्तौ । अमी । 'पूर्वत्राऽसिद्ध'मिति विभक्तिकार्यं प्राक्पश्चादुत्वमत्वे । अमुम् । अमू । अमून् । मुत्वे कृते घिसंज्ञायां नाभावः ॥

---

करणे 'नञि हन एह च' 'विधाञो वेध चे'ति व्युत्पादनादसन्तत्वेन दीर्घः । अनेहा-कालः । वेधाः-विश्वसृट् ॥

**अदस औ सुलोपश्च** । 'अदस'इति षष्ठी । 'तदोः सः सौ' इत्यतः साविल्यनुवर्तते, तदाह-**औकारोऽन्तादेशः स्यात्सौ पर इति** । नन्वदस इति पञ्चम्येवाऽस्तु ततः परस्य सोरेवौकारो विधीयतां, त्यदाद्यत्वेन असाविति रूपं सिध्यति किं सुलोपविधानेन ? । न च स्वरे भेदः, उदात्तेन सहैकादेशे औकारस्योदात्तत्वात् । मैवम् । 'असकौ स्त्री'त्यत्र टापि 'प्रत्ययस्थ.'दितीत्त्वप्रसङ्गात् । **असुक इति** । औत्वाऽभावे त्यदाद्यत्वे सादुत्वम् । स्त्रियां तु 'असुकौ' 'असुक' इति 'असुकी' इति च प्रयोगोऽसाधुरेव । एवममुकशर्मेत्यादिरपि । 'अदकः शर्मे'त्यादेरेव न्याय्यत्वात् । **एत ईद्बहुवचने** । पारिभाषिकस्य बहुवचनस्य ग्रहणे 'अमीभि'रित्यादिसिद्धावपि जसि 'अमी' इति न सिध्येत् । न ह्यत्र एकारस्य बहुवचनपरताऽस्त्यतो व्याचष्टे-**बह्वर्थोक्ताविति** । **विभक्तिकार्यं प्रागिति** । 'त्यदादीनामः' इत्यादिसपादसप्ताध्यायीं प्रति 'अदसोऽसे'-रिति त्रैपादिकशास्त्रस्याऽसिद्धत्वादिति । अकृते तु विभक्तिकार्ये सान्तत्वादुत्वमत्वयोरप्रवृत्तेश्चेति भावः। यदि तु 'पूर्वत्रासिद्ध'मित्यत्र कार्याऽसिद्धत्वमिष्येत, तर्हि 'अमू' 'अमु'मित्यादि

---

धात्ववयवभिन्नाऽसन्तस्येत्यर्थ इति भावः । अन्यथा समुदायस्य धातुभिन्नत्वाद्दीर्घः स्यादेवेति बोद्धयम् । **अदस औ** । 'अदस'इति षष्ठी । 'तदोः स'इत्यतः 'सा'विति वर्त्तते । औत्वं त्यदाद्यत्वापवादः । न नु 'सोडौ'इत्येवास्तु इति चेन्न, 'असा'वित्यत्र टिलोपे कृते नित्यत्वात्सत्वं बाधित्वा त्यदाद्यत्वेऽसावित्यसिद्धेः। **असुक इति** । 'अमुक'इत्यादौ त्वव्युत्पन्नोऽदःशब्दपर्यायोऽमुकशब्द इत्याहुः।

**एत ईत्** । बहुवचनशब्दो यौगिक इत्याह-**बह्वर्थेति** । तेनाऽमी इति सिद्धम् । **पश्चादुत्वेति** । 'उत्वे'त्युपलक्षणमीत्वस्यापि । ननु मुत्वस्याऽसिद्धत्वात्कथं नाभाव इत्यत आह-**नमुने इति** ।

**न मुने** ।८।२।३। नाभावे कर्तव्ये कृते च मुभावो नाऽसिद्धः स्यात् । अमुना । अमूभ्याम् । अमूभ्याम् । अमूभ्याम् । अमीभिः । अमुष्मै । अमीभ्यः । अमीभ्यः । अमुष्मात् । अमुष्य । अमुयोः । अमीषाम् । अमुष्मिन् । अमुयोः । अमीषु ॥ [ इति सान्ताः ] ॥ इति हलन्ताः पुंलिङ्गाः ॥

न सिध्येत् । त्यदाद्यत्वे कृते पररूपात्प्रागेवोत्वमत्वयोः कृतयोः पश्चान्मुत्वकार्यस्याऽसिद्धतया 'अतो गुणे' इति पररूपे 'अमो' इत्यादिरूपसिद्धिप्रसङ्गात् । किंच चर्म वस्ते 'चर्मवः', सुष्ठु वस्ते 'सुवः' । अत्र परत्वात्स्कोरिति सलोपे तस्याऽसिद्धत्वाद्धल्ङ्यादिलोपे उक्तरूपं न सिध्यतीति कार्याऽसिद्धिपक्षो हेय एव । अत्र वदन्ति—'सपादसप्ताध्याय्यां विहितं कार्यं प्रति त्रिपाद्यां विहितमसिद्ध'मिति प्रक्रियाग्रन्थोक्तकार्याऽसिद्धिपक्षे 'मनोरथः' 'अमु'मित्यादि न सिध्येदिति केचित् । तन्न । प्रक्रियाग्रन्थोक्तेर्हि **कार्यं प्रति**—कार्ये कर्तव्ये, **असिद्धं**—पूर्वमेव न जातमित्यर्थः । शास्त्राऽसिद्धत्वेऽप्येवमेव फलितोऽर्थः । तदुक्तं कैयटेन—'यच्छास्त्रमुच्चारितं तस्याऽसिद्धत्वमशक्यं कर्तुमित्यसिद्धवचनादतिदेश आश्रीयते' इति । तथा चातिदेशेन कार्याऽप्रवर्तकत्वरूपोऽसिद्धधर्मः शास्त्रेऽतिदिश्यमानः कार्याऽसिद्धत्व एव फलति । एवं च 'मनोरथ' इत्यत्र उत्वे कर्तव्ये रेफलोपस्य पूर्वमेवाऽप्रवृत्तौ रोरुत्वस्याऽप्रतीघातान्मनोरथसिद्धिरप्रत्यूहा । तथा 'अमु'मित्यादिसिद्धिरिति कार्याऽसिद्धिपक्षे न काप्यनुपपत्तिरिति ॥ **न मु ने** । 'ने'इति विषयसप्तमीत्याह—**नाभावे कर्तव्य इति** । अन्यथा घेः परत्वाऽभावान्नाभावो न स्यादिति भावः । नन्वेवमपि कृते नाभावे 'सुपि चे'ति दीर्घः स्यात्, दीर्घं प्रति मुत्वस्याऽसिद्धत्वादत आह—**कृते चेति** । एतच्च 'ने'इत्यस्यावृत्त्या लभ्यते । एकत्र विषयसप्तम्यपरत्र परसप्तमीत्याश्रयणात् । वस्तुतस्तु 'कृते चे'ति व्याख्यानं व्यर्थं, संनिपातपरिभाषया 'सुपि चे'ति दीर्घस्य सुसमाधेयत्वात् । ननु 'अधुना' इतिवत् 'अमुना' इत्येवोच्यतां किमनेनाऽसिद्धत्वनिषेधेनेति चेत् । अत्राहुः—'न मु ने'इत्युक्तिः 'न' इति योगविभागार्था, तेन 'रामः' 'रामेभ्य' इत्यादि सिध्यति । अन्यथा हि रोरसिद्धतयोकारस्येत्संज्ञालोपौ कथं स्याताम् । न चानुनासिकनिर्देशसामर्थ्यादित्संज्ञालोपौ प्रति रुत्वं नासिद्धमिति वाच्यम्, 'तरुमूलं' 'देवरुही'त्यादौ 'हशि चे'त्यस्य व्यावृत्तये 'अतो रो'रित्यत्रानुनासिकस्यैव निर्देशेन तत्रैव चरितार्थत्वात् । एवं च स्थानिवत्सूत्रस्यापि प्रवृत्तौ पदत्वाद्विसर्गो लभ्यते ।

**कर्त्तव्ये कृते चेति** । एवञ्च 'ने' इति विषयसप्तमीति भावः । भाष्ये तु 'ने यत्कार्यं तत्रासिद्धत्वं नेत्यर्थेनैव नाभावोऽप्याक्षिप्त' इति व्याख्यातम् । 'मु'इति समाहारद्वन्द्वः । कृते ... सुपि चेति

## अथ हलन्तस्त्रीलिङ्गप्रकरणम्।

नहो धः ।८।२।३४। नहो हस्य धः स्याज्झलि पदान्ते च । उपानत् । उपानद् । उपानहौ । उपानहः । उपानद्भ्याम् । उपानत्सु । उत्पूर्वात् 'ष्णिह प्रीता'-वित्यस्मात् 'ऋत्वि'गादिना क्विन् । निपातनाद्लोपपत्वे । क्विन्नन्तत्वात्कुत्वेन हस्य घः । जश्त्वचर्त्वे । उष्णिक् । उष्णिग् । उष्णिहौ । उष्णिहः । उष्णिग्भ्याम् । उष्णिक्षु ॥ द्यौः । दिवौ । दिवः । द्युषु ॥ गीः । गिरौ । गिरः ॥ एवं पूः ॥ चतुर-श्चतस्रादेशः । चतस्रः २ । चतसृणाम् । किमः कादेशे टाप् । का । के । काः । सर्वावत् ॥

'प्रत्ययः' 'परश्चे'त्यादिनिर्देशाश्चेह लिङ्गमिति दिक् । **इति हलन्तपुंलिङ्गप्रकरणम् ।**

**अथ हलन्ताः स्त्रीलिङ्गाः । नहो धः ।** 'द'इत्येव तु नोक्तं, तथा हि सति 'नद्ध'मित्यत्र 'रदाभ्या'मिति नत्वं स्यात, 'झषस्तथो'रिति च न स्यात् । **नहो हस्येति ।** 'हो ढः' इत्यतोऽनुवृत्तेः 'अलोऽन्त्यस्ये'त्यनेन वा हस्यैवादेश इति भावः । 'झलो झलि' 'पदस्य' 'स्कोः 'संयोगाद्योरन्ते चे'त्यतो झलपदान्तग्रहणान्यनुवर्तन्ते । तदाह— **झलीत्यादि ।** झलि परतः पदान्ते वा विद्यमानस्येत्यर्थः । **उपानदिति ।** उपपूर्वा-न्नहेः संपदादित्वात्क्विपि 'नहिवृती'ति पूर्वपदस्य दीर्घः । सोर्हल्ड्यादिलोपे धत्वम् । जश्त्वचर्त्वे । अत्रेदं बोध्यम्—सुष्ठु अनड्वाहो यस्यामिति बहुव्रीहौ 'स्वनड्वा'निति पुंवदेव रूपम् । केचित्तु गौरादिङीषं कृत्वा 'स्वनडुही'त्युदाजह्रुः । तदसत् । अनुपसर्जनाधि-कारविरोधात् । **गीरिति ।** 'गॄ निगरणे', 'गॄ शब्दे' इत्यस्माद्वा क्विप् । 'ॠत इद्धातोः' इतीत्त्वे रपरत्वम् । 'र्वोरुपधाया दीर्घः' इति दीर्घः । **पूरिति ।** 'पॄ पालनपूरणयोः' 'उदोष्ठ्यपूर्वस्य' इत्युत्त्वम् । **चतस्र इति ।** इह 'चतुरनडुहो'रित्याम्न भवति, परत्वा-दामं बाधित्वा चतस्रादेशे कृते सकृद्गतिन्यायेन पुनस्तस्याऽप्रवृत्तेः । **चतसृणामिति ।** 'न तिसृचतसृ' इति न दीर्घः । **सर्वावदिति ।** 'तेन तुल्य'मिति वतिः । 'सर्वनाम्नो

दीर्घो न । **अमीभिरिति ।** 'नेदमदसो'रित्यैस्न ॥ ॐ ॥ **इति हलन्ता. पुँल्लिङ्गाः** ॥ ॐ ॥

**अथ हलन्ताः स्त्रीलिङ्गाः । नहो धः ।** 'झलो झली'ति 'पदस्ये'ति 'स्को'रित्यतोऽन्त इति चानुवर्त्तते । झलि परे पदान्ते विद्यमानस्येत्यर्थः । 'अलोन्त्यस्ये'त्येतलब्धं—**हस्येति ।** उपपूर्वाण्णह-बन्धन इत्यतः क्विप् । 'नहिवृती'ति पूर्वपदस्य दीर्घः । सोर्हल्ड्यादिलोपे धत्वजश्त्वचर्त्वादि । **तलोप-षत्वे इति ।** पूर्वपदान्तस्य लोपो, धातोः सस्य षत्वम् । 'आदेशप्रत्यययो'रिति तु न षत्वं, 'पदा-दादि'रिति पक्षे 'सात्पदाद्यो'रिति निषेधात् । 'हस्य घ'इति कैयटादिमते षत्वस्येव ढत्वस्यापि कुत्वेन बाधादिति भावः । उष्णिगञ्चित्रति निर्देशात्कुत्वस्य जश्त्वे नाऽसिद्धत्वं, स्वरीत्या तु ढडगका इति बोद्धव्यम् । **द्यौरिति ।** 'दिव औ'दित्यौत्वं, यण् । **चतस्र इति ।** परत्वादामं बाधित्वा चतस्रादेशे

**यः सौ** ।७।२।११०। इदमो दस्य यः स्यात्सौ ॥ 'इदमो मः' इयम् । त्यदाद्यत्वं टाप् । 'दश्चे'ति मः । इमे । इमाः । इमाम् । इमे । इमाः । अनया । 'हलि लोपः' ॥ आभ्याम् ३ । आभिः । अस्यै । अस्याः २ । अनयोः २ । आसाम् । अस्याम् । आसु । अन्वादेशे तु–एनाम् । एने । एनाः । एनया । एनयोः २ । 'ऋत्वि'गादिना सृजेः क्विन्, अमागमश्च निपातितः । स्रक् । स्रग् । स्रजौ । स्रजः । स्रग्भ्याम् । स्रक्षु । त्यदाद्यत्वं टाप् । स्या । त्ये । त्याः । एवं तद् यद् एतद् ॥

वाक् । वाग् । वाचौ । वाचः । वाग्भ्याम् । वाक्षु ॥

अप्शब्दो नित्यं बहुवचनान्तः । 'अप्तृ'न्निति दीर्घः । आपः । अपः ॥

**अपो भि** ।७।४।४८। अपस्तकारः स्याद्भादौ प्रत्यये परे । अद्भिः । अद्भ्यः २ । अपाम् । अप्सु ॥ दिक् । दिग् । दिशौ । दिशः । दिग्भ्याम् । दिक्षु ॥ 'त्यदादिषु'— इति दृशेः क्विन्विधानादन्यत्रापि कुत्वम् । दृक् । दृग् । दृशौ । दृशः ॥ त्विट् । त्विड् । त्विषौ । त्विषः । त्विड्भ्याम् । त्विट्त्सु । त्विट्सु । सह जुषते इति सजूः । सजुषौ । सजुषः । सजूर्भ्याम् । सजूष्षु । सजूःषु । षत्वस्यासिद्धत्वाद्रुत्वम् । आशीः । आशिषौ ।

---

वृत्तिमात्रे' इति पुंवद्भावः । **यः सौ** । यत्त्वमिदं स्त्रियामेव, परिशेषात् । 'इदोऽय्पुंसी'ति पुंस्यय्वचनात्क्लीबे सोर्लुका लुप्तत्वाच्च । **एवमिति** । सा । ते । ताः ॥ याः । ये । याः ॥ एषा । एते । एताः । इत्यादीत्यर्थः । **वागिति** । वचेः 'क्विब्वची'त्यादिना क्विब्दीर्घोऽसंप्रसारणं च । 'चोः कुः' । **अप्शब्द इति** । 'आप्नोतेर्ह्रस्वश्चे'ति ह्रस्वः चकारात्क्विप् । 'अच उपसर्गात्तः' इत्यतोऽनुवर्तनादाह–**तकारः स्यादिति** । **दिगिति** । क्विन्नन्तत्वात्कुत्वम् । षडगकाः प्राग्वदूह्याः । **अन्यत्रापीति** । त्यदाद्युपपदत्वाभावेऽपीत्यर्थः । **त्विडिति** । 'त्विष दीप्तौ' इत्यस्मात्क्विप् । जश्त्वचर्त्वे । **सजूरिति** । 'जुषी प्रीतिसेवनयो'रित्यस्मात्क्विप् । 'ससजुषो'रिति षस्य रुत्वम् । 'र्वो'रिति दीर्घः । **आशिषाविति** । 'आशासः क्वावुपधाया इत्वं वाच्य'मित्युपधाया इत्वम्, 'शासिवसी'रिति षत्वम् । **असाविति** । अदसस्त्यदाद्यत्वं टाप् । एकादेशस्य पूर्वान्तत्वेन

---

सकृद्गतिन्यायात्पुनराम्नेति स्थानिवत्सूत्रे भाष्ये । **चतसृणामिति** । 'न तिसृ' तिदीर्घनिषेधः । **सर्वावदिति** । सर्वाशब्दवदित्यर्थः । अत एव 'सर्वनाम्नो वृत्तिमात्रे'इति न पुंवत्त्वम् । शब्दपरस्य कदापि सर्वनामत्वाऽभावादिति भावः । **यः सौ** । पुंस्यया बाधात्क्लीबे सोर्लुका लोपात्स्त्रियामिदम् । **वागिति** । वचेः 'क्विब्वची'त्यादिना क्विप्, दीर्घोऽसंप्रसारणञ्च । **अपो भि** । 'अच उपसर्गात्त इत्यतस्तइत्यनुवर्त्तते । 'अ'विति न प्रत्ययो, व्याख्यानात् । **दिगिति** । 'दिश अतिसर्जने' क्विन् । षड्गकाः प्राग्वत् । 'त्विष-

आशिषः। आशीभ्याम्। असौ। त्यदाद्यत्वं। टाप्। औङः शी। उत्वमत्वे। अमू। अमूः। अमूम्। अमू। अमूः। अमुया। अमूभ्याम्। अमूभिः। अमुष्यै। अमूभ्याम्। अमूभ्यः। अमुष्याः २। अमुयोः २। अमूषाम्। अमुष्याम्। अमूषु॥

इति हलन्ताः स्त्रीलिङ्गाः॥

## अथ हलन्तनपुंसकलिङ्गप्रकरणम्।

**स्वमोर्लुक्**। दत्वम्। स्वनडुत्। स्वनडुद्। स्वनडुही। 'चतुरनडुहो'रित्याम्। स्वनड्वांहि। पुनस्तद्वत्। शेषं पुंवत्॥ 'दिव उत्'॥ विमलद्यु अहः। अन्तर्वर्तिनीं विभक्तिमाश्रित्य पूर्वपदस्यैवोत्तरखण्डस्यापि पदसंज्ञायां प्राप्तायाम्–। ❀ **उत्तरपदत्वे चाऽपदादिविधौ प्रतिषेधः**। इति प्रत्ययलक्षणं न। विमलदिवी।

ग्रहणात् 'अदस औ सुलोपश्च'। 'तदोः–' इति सत्वमित्येके। अन्ये तु परत्वाद्विशेषविधेश्च पूर्वमौत्वं, ततोऽत्र नाऽत्वटापावित्याहुः। **इति हलन्तस्त्रीलिङ्गप्रकरणम्।**

**अथ हलन्ता नपुंसकलिङ्गाः। दत्वमिति**। 'वसुस्रंसु–' इति दत्वमनडुच्छब्दान्तेऽपि प्रवर्तते, पदाधिकारस्थत्वादिति भावः। **पूर्वपदस्यैवेति**। अन्यथा 'राजपुरुषो' 'वागाशी'रित्यादौ नलोपकुत्वादिकं यथासंभवं न स्यादिति भावः। **उत्तरपदत्वे चेति**। उत्तरशब्देनोत्तरपदमुच्यते। उत्तरपदस्य पदत्वे पदव्यपदेशे कर्तव्ये प्रत्ययलक्षणं न भवतीत्यर्थः। एतेन 'सुधियौ' 'सुधिय' इत्यत्रान्तर्वर्तिसुपा पदत्वापक्षे शाकलप्रसङ्ग इत्याशङ्का परास्ता, उक्तरीत्या प्रत्ययलक्षणनिषेधात्। उत्तरपदत्वे किम्?। 'राजपुरुष' इत्यादौ नलोपो यथा स्यात्। 'पश्यति दधी'त्यादावपि दधि-

गतौ'अस्मात् क्विप्। जश्त्वचर्त्वे। 'जुषी प्रीती'त्यतः क्विप्। सहस्य सभावे–सजूः। **अमूभिरिति**। अदन्तत्वाऽभावादेत्वाभावेनैत ईदित्यस्याऽभावे मूत्वमेव॥ ❀॥ **इति हलन्ताः स्त्रीलिङ्गाः॥**

**दत्वमिति**। 'वसुस्रं'स्वित्यस्य पदाधिकारस्थत्वात्तदन्तेपि दत्वम्। एवमाङ्गत्वादामपि। **पूर्वपदस्यैवेति**। प्रत्ययलक्षणेनेति भावः। अत एव राजपुरुषादौ नलोपादिसिद्धिः। **उत्तरपदत्वे चेति**। उत्तरशब्देनोत्तरपदं लक्ष्यते। उत्तरपदशब्दश्च समासचरमावयवे रूढः। तेन तस्य पदत्वे तत्प्रयुक्तकार्ये कर्तव्ये लुमता लुप्ते प्रत्ययलक्षणं न। पदादिविधौ त्वयं निषेधो नेत्यर्थः। तेन 'परमवाचे'त्यादौ न कुत्वं, 'दध्निसेचा'वित्यादौ 'सात्पदाद्यो'रिति षत्वनिषेधश्च। निरुपपदादेव विचि षष्ठीसमासोऽत्र। सोपपदाद्विचोऽनभिधानमिति **कैयटः**। सेचयतेः क्विबित्यन्ये। पदादिविधिश्च प्रतिपदोक्तत्वात्सात्पदाद्योरित्येव। तेन 'परमबुधा'वित्यादौ भष्भावो न। 'उत्तरपदादिः' 'कर्णो वर्णलक्षणा'दित्यादौ तूत्तरपदशब्दस्य समासचरमावयवमात्रे रूढेर्न दोषः। अयञ्च निषेध उत्तरपदस्य कार्यित्व एवेति ङमुट्सूत्रे उक्तम्। बहुच्पूर्वके 'बहुवाचौ' 'बहुसेचा'वित्यादावपि च न दोषः; 'बहुच्पूर्वस्य च पदादि-

विमलदिवि । अपदादिविधौ किम् ? । दधिसेचौ । इह षत्वनिषेधे कर्तव्ये पदत्वमस्त्येव । कुत्वे तु न ॥ वाः । वारी । अझलन्तत्वान्न नुम् । वारि ॥ चत्वारि ॥ 'न लुमते'ति कादेशो न । किम् । के । कानि । इदम् । इमे । इमानि ॥ ❀ **अन्वादेशे नपुंसके एनद्वक्तव्यः** । एनत् । एने । एनानि । एनेन । एनयोः । एनयोः ।

---

शब्दस्य पदत्वे प्रत्ययलक्षणं भवत्येव । उत्तरपदस्य समासावयवे रूढत्वात् । **दधिसेचाविति** । सिञ्चत इति सेचौ । 'अन्येभ्योऽपि दृश्यन्ते' इति विच् । दध्नः सेचाविति षष्ठीसमासः । उपपदसमासे तु प्राक् सुबुत्पत्तेः समासविधानात्सेच्शब्दस्य पदसंज्ञा नास्तीति पदादित्वं सकारस्य न स्यात् । नन्वेवमुपपदसमासे षत्वं दुर्वारमिति चेत्, अत्राह कैयटः—'अनभिधानात्सोपपदाद्विजभावः, दधिसेचाविति प्रयोगाऽभावा'दिति । वस्तुतस्तु पदादादिः पदादिरिति पक्षे तूपपदसमासेऽपि षत्वं सुपरिहरम् । **अन्वादेश इति** । अम्येवेदं विधीयते नत्वौट्शसादिषु, फलाभावात् । 'स्वमोर्नपुंसकात्' इत्यमो लुका लुप्तत्वेऽपि प्रत्ययलक्षणमिह प्रवर्तते, वचनसामर्थ्यादित्याहुः । वस्तुतस्तु 'द्वितीयाटौःसु—' इति सूत्र एव एनद्वक्तव्यः । एनम् एनौ एनानित्यादि तु त्यदाद्यत्वेन सिद्धम् । क्लीबे अमि लुका लुप्तत्वेऽपि तकारोच्चारणसामर्थ्यादेनदादेशः । न चैवमेतच्छ्रितमित्यत्राप्येनदादेशापत्तिः । 'द्वितीयाश्रिते'ति समासे कृते सुपो लुकि द्वितीयादिविभक्तिपरत्वाऽभावात् । न च तकारोच्चारणसामर्थ्यादेनदादेश इत्युक्तमिति

---

विधावेव प्रत्ययलक्षण'मिति वचनान्तरात् । पूर्ववार्तिकमपि उत्तरपदत्वे च पदादिविधावित्येवमेव पठितम् । एतत्प्रत्याख्यानप्रकारस्तु गुरुतर इति न युक्त इति भाष्ये ध्वनितं प्रत्याख्यानोत्तरं पुनर्नञ्घटितैतद्वचनपाठेनेति न स लिखितः । उत्तरपदशब्देन मद्ध्यमपदत्वानाक्रान्तोत्तरपदस्य ग्रहणं व्याख्यानात् । तेन 'पूर्वदण्डिप्रिय' इत्यादाववान्तरतत्पुरुषोत्तरपदेपि नलोपादिसिद्धिः। **कादेशोनेति** । इदम्शब्दे 'यः सा'विति च नेत्यपि बोद्धयम् । **वक्तव्य इति** । 'द्वितीयाटौरिस्व'ति अत्र संबद्धयते । अयञ्च सामर्थ्याल्लुका लुप्तेपि भवति । एनादेशोपि 'एन'मित्यादिसिद्ध्यर्थं वक्तव्यः । येननाप्राप्तिन्यायेनैनदस्त्यदाद्यत्वापवादत्वेन तत्र कृते त्यदाद्यत्वाऽप्राप्तेः । अत एव भाष्ये 'नपुंसकैकवचने एनद्वक्तव्यः कुण्डमानय प्रक्षालयैन'दित्युक्तम् । अत्र 'नपुंसकैकवचने' इत्युक्तयाऽन्यत्रैनो वक्तव्य इति स्पष्टमेवोक्तं वार्त्तिककृता सिद्धान्तिना । अपवादत्वमजानत एकदेशिनो 'यद्येन'दित्यादिरुक्तिः । 'यदि'गर्भवाक्ये पूर्वपक्ष्युक्तित्वस्यैवौचित्यात् । भाष्यकृता तु फल्गुत्वान्नाऽत्रोत्तरमुक्तम् । सिद्धान्ती तु 'किमुच्यते नपुंसकैकवचनइति, सर्वत्र एनदेव वक्तव्य' इत्येवंशब्दैः प्रत्याख्यानं कुर्यात् । अनयोरप्यादेशयोरेतदस्त्रतसोरित्येतत्साहचर्येणोपसर्जने न प्रवृत्तिः, 'त्यदाद्यत्वेन सिद्ध'मिति भाष्याऽसङ्गतेश्च । एनतमादायैनादेशप्रत्याख्यानपरं [illegible] अन्वादेशविषयेऽइदमे-

ब्रह्म। ब्रह्मणी। ब्रह्माणि। हे ब्रह्मन्। हे ब्रह्म ॥

'रोऽसुपि'। अहर्भाति। 'विभाषा ङिश्योः'। अह्नी–अहनी। अहानि ॥

अहन् ।८।२।६८। 'अह'न्नित्यस्य रुः स्यात्पदान्ते। अहोभ्याम्। अहोभिः। इह 'अहः' अहोभ्या'मित्यादौ रुत्वरुत्वयोरसिद्धत्वान्नलोपे प्राप्ते। 'अह'न्नित्यावर्त्य नलोपाऽभावं निपात्य द्वितीयेन रुर्विधेयः॥ तदन्तस्याऽपि रुत्वरत्वे। दीर्घाण्यहानि यस्मिन्

---

वाच्यम्। एकपदाश्रयत्वेनान्तरङ्गे स्वमोर्लुकि चरितार्थत्वेन बहिरङ्गे सामासिके लुकि तदप्रवृत्तेरिति मनोरमायां स्थितम्। **ब्रह्मणी इति**। इह 'विभाषा ङिश्यो'रित्यल्लोपो न, 'न संयोगाद्वमन्ता'दिति निषेधात्। **रोऽसुपि। अहर्भातीति**। 'अहन्' इति रुत्वे कृते तु 'हशि चे'त्युत्वप्रवृत्त्या 'अहो भाती'ति स्यादिति भावः। **नलोपाभावं निपात्येति**। 'अहन्' इत्यत्र नकारान्तरं प्रश्लिष्य 'नान्तस्य अहन्शब्दस्य रु'रिति व्याख्यायामपि रुत्वरत्वयोर्नकारस्थानिकत्वं सेत्स्यतीति बोध्यम्। **तदन्तस्यापीति**। पदाधिकारस्थत्वादिति भावः। न चात्र प्रत्ययलक्षणन्यायेन अन्तवर्तिनीं विभक्तिमाश्रित्य समासैकदेशस्याप्यहन्शब्दस्य पदत्वाद्रुत्वं स्यादेव, किमनेन तदन्तविध्याश्रयणे-

---

तदोः समासस्याऽनभिधानमेव,'यद्येनत्क्रियते एनो न वक्तव्यः, कथमेन'मित्यादि, त्यदाद्यत्वेन सिद्धं, यद्येवमेतच्छ्रितको न सिद्ध्यति, एनच्छ्रितक इति प्राप्नोति। यथालक्षणमप्रयुक्ते' इति भाष्यात्। **ब्रह्मणी इति**। 'न संयोगा'दिति निषेधादल्लोपो न ॥

**रोऽसुपि। अहर्भातीति**। 'अहन्नि'ति रुत्वे 'ऽहो भाती'ति स्यादिति भावः। **नलोपे प्राप्त इति**। न च नलोपेऽकारस्य रौ रे वा विशेषाऽभावेनान्यतरेणैवोपपत्तावुभयविधानसामर्थ्यादेव लोपो नेति वाच्यं, संबुद्धौ नलोपनिषेधेनाऽहर्गच्छेत्यादावुत्वाऽभावेन 'दीर्घाहो निदाघे'त्यादावुत्वसंपादनेन चारितार्थ्यात्। न च नकारोच्चारणसामर्थ्यलब्धेन नकारान्ताऽनुकरणेन नान्तस्याऽहन्शब्दस्येति व्याख्यानान्नलोपो नेति वाच्यं, 'दीर्घाहो निदाघे'त्यादौ संबुद्धौ प्रवृत्त्या, भ्यामादौ व्यावृत्त्या च नकारस्य चारितार्थ्यात्तेन नलोपबाधे मानाऽभावादिति भावः। **आवर्त्येति**। आवृत्तौ मानं च 'रूपरात्री'ति वार्त्तिकमेव। अन्यथा नलोपेऽकारस्य रेफादेशेनैव सिद्धे तद्वैयर्थ्यं स्पष्टमेव। भाष्यप्रामाण्याच्च तस्य संबुद्धावप्रवृत्तिः। तज्ज्ञापकसिद्धवचनकल्पनाऽपेक्षया आवृत्तिर्लघीयसीति भावः। आवृत्तस्य पदान्तेऽहन्निति निपात्यत इत्यर्थः। इदमसंभव एवापवादत्वमिति वार्त्तिकमतेऽहन्नित्यस्य नलोपोत्तरचारितार्थ्याभिमानेन। वस्तुतः 'सत्यपि संभवे बाधनं भवती'ति भाष्यसिद्धान्ताद्रुत्वरत्वे नलोपापवादभूते एव। निषेधविषयेपि प्राप्तिमात्रेण येननाप्राप्तिन्यायविषयसत्त्वात्। निषेधेनापि तस्य बाध इत्यन्यत्। एतेन संबुद्धौ चारितार्थ्यमित्यपास्तम्। ध्वनितश्चेदमपवादो रुर्नलोपं बाधिष्यत इत्यर्थक-भाष्येण। एतदग्रे नलोपे कृतेऽकारे सावकाशत्वशङ्का तत्समाधानादि वार्त्तिकानुसारिणोरित्यलम्।

**तदन्तस्यापीति**। पदाधिकारस्थत्वात्। 'ग्रहणवते'ति निषेधस्तु प्रत्ययविधिविषय इत्यसमासे

विमलदिवि । अपदादिविधौ किम् ? । दधिसेचौ । इह षत्वनिषेधे कर्तव्ये पदत्वमस्त्येव । कुत्वे तु न ॥ वाः । वारी । अझलन्तत्वान्न नुम् । वारि ॥ चत्वारि ॥ 'न लुमते'ति कादेशो न । किम् । के । कानि । इदम् । इमे । इमानि ॥ ॐ अन्वादेशे नपुंसके एनद्वक्तव्यः । एनत् । एने । एनानि । एनेन । एनयोः । एनयोः ।

---

शब्दस्य पदत्वे प्रत्ययलक्षणं भवत्येव । उत्तरपदस्य समासावयवे रूढत्वात् । **दधिसेचाविति** । सिञ्चत इति सेचौ । 'अन्येभ्योऽपि दृश्यन्ते' इति विच् । दध्नः सेचाविति षष्ठीसमासः । उपपदसमासे तु प्राक् सुबुत्पत्तेः समासविधानात्सेच्शब्दस्य पदसंज्ञा नास्तीति पदादित्वं सकारस्य न स्यात् । नन्वेवमुपपदसमासे षत्वं दुर्वारमिति चेत्, अत्राह कैयटः—'अनभिधानात्सोपपदाद्विजभावः, दधिसेचाविति प्रयोगाऽभावा'दिति । वस्तुतस्तु पदादादिः पदादिरिति पक्षे तूपपदसमासेऽपि षत्वं सुपरिहरम् । **अन्वादेश इति** । अम्येवेदं विधीयते नत्वौट्शसादिषु, फलाभावात् । 'स्वमोर्नपुंसकात्' इत्यमो लुका लुप्तत्वेऽपि प्रत्ययलक्षणमिह प्रवर्तते, वचनसामर्थ्यादित्याहुः । वस्तुतस्तु 'द्वितीयाटौःसु–' इति सूत्र एव एनद्वक्तव्यः । एनम् एनौ एनानित्यादि तु त्यदाद्यत्वेन सिद्धम् । क्लीबे अमि लुका लुप्तत्वेऽपि तकारोच्चारणसामर्थ्यादेनदादेशः । न चैवमेतच्छ्रितमित्यत्राप्येनदादेशापत्तिः । 'द्वितीयाश्रिते'ति समासे कृते सुपो लुकि द्वितीयादिविभक्तिपरत्वाऽभावात् । न च तकारोच्चारणसामर्थ्यादेनदादेश इत्युक्तमिति

---

विधावेव प्रत्ययलक्षण'मिति वचनान्तरात् । पूर्ववार्तिकमपि उत्तरपदत्वे च पदादिविधावित्येवमेव पठितम् । एतत्प्रत्याख्यानप्रकारस्तु गुरुतर इति न युक्त इति भाष्ये ध्वनितं प्रत्याख्यानोत्तरं पुनर्नञ्घटितैतद्वचनपाठेनेति न स लिखितः । उत्तरपदशब्देन मध्यमपदत्वानाक्रान्तोत्तरपदस्य ग्रहणं व्याख्यानात् । तेन 'पूर्वदण्डिप्रिय' इत्यादाववान्तरतत्पुरुषोत्तरपदेपि नलोपादिसिद्धिः । **कादेशोनेति** । इदम्शब्दे 'यः सा'विति च नेत्यपि बोद्धव्यम् । **वक्तव्य इति** । 'द्वितीयाटौस्स्वि'ति अत्र संबद्ध्यते । अयश्च सामर्थ्याल्लुका लुप्तेपि भवति । एनादेशोपि 'एन'मित्यादिसिद्ध्यर्थं वक्तव्यः । येननाप्राप्तिन्यायेनैनदस्त्यदाद्यत्वापवादत्वेन तत्र कृते त्यदाद्यत्वाऽप्राप्तेः । अत एव भाष्ये 'नपुंसकैकवचने एनद्वक्तव्यः कुण्डमानय प्रक्षालयैन'दित्युक्तम् । अत्र 'नपुंसकैकवचने' इत्युक्त्याऽन्यत्रैनो वक्तव्य इति स्पष्टमेवोक्तं वार्तिककृता सिद्धान्तिना । अपवादत्वमजानत एकदेशिनो 'यद्येन'दित्यादिरुक्तिः । 'यदि'गर्भवाक्ये पूर्वपक्ष्युक्तित्वस्यैवौचित्यात् । भाष्यकृता तु फल्गुत्वान्नाऽत्रोत्तरमुक्तम् । सिद्धान्ती तु 'किमुच्यते नपुंसकैकवचनइति, सर्वत्र एनदेव वक्तव्य' इत्येवंशब्दैः प्रत्याख्यानं कुर्यात् । अनयोरप्यादेशयोरेतदस्त्रतसोरित्येतत्साहचर्येणोपसर्जने न प्रवृत्तिः, 'त्यदाद्यत्वेन सिद्ध'मिति भाष्याऽसङ्गतेश्च । एनतमादायैनादेशप्रत्याख्यानपरं 'यद्येनत्क्रियत' इत्यादि भाष्यं त्वेकदेश्युक्तिरिति [illegible] विषये इदमे-

ब्रह्म । ब्रह्मणी । ब्रह्माणि । हे ब्रह्मन् । हे ब्रह्म ॥

'रोऽसुपि' । अहर्भाति । 'विभाषा ङिश्योः' । अह्नी-अहनी । अहानि ॥

अहन् ।८।२।६८। 'अह'न्नित्यस्य रुः स्यात्पदान्ते । अहोभ्याम् । अहोभिः । इह 'अहः' अहोभ्या'मित्यादौ रुत्वरुत्वयोरसिद्धत्वान्नलोपे प्राप्ते । 'अह'न्नित्यावर्त्य नलोपाऽभावं निपात्य द्वितीयेन रुर्विधेयः॥ तदन्तस्याऽपि रुत्वरत्वे । दीर्घाण्यहानि यस्मिन्

---

वाच्यम् । एकपदाश्रयत्वेनान्तरङ्गे स्वमोर्लुकि चरितार्थत्वेन बहिरङ्गे सामासिके लुकि तदप्रवृत्तेरिति मनोरमायां स्थितम् । **ब्रह्मणी इति** । इह 'विभाषा ङिश्यो'रित्यल्लोपो न, 'न संयोगाद्वमन्ता'दिति निषेधात् । **रोऽसुपि** । **अहर्भातीति** । 'अहन्' इति रुत्वे कृते तु 'हशि चे'त्युत्वप्रवृत्त्या 'अहो भाती'ति स्यादिति भावः । **नलोपाभावं निपात्येति** । 'अहन्' इत्यत्र नकारान्तरं प्रश्लिष्य 'नान्तस्य अहन्शब्दस्य रु'रिति व्याख्यायामपि रुत्वरत्वयोर्नकारस्थानिकत्वं सेत्स्यतीति बोध्यम् । **तदन्तस्यापीति** । पदाधिकारस्थत्वादिति भावः । न चात्र प्रत्ययलक्षणन्यायेन अन्तवर्तिनीं विभक्तिमाश्रित्य समासैकदेशस्याप्यहन्शब्दस्य पदत्वाद्रुत्वं स्यादेव, किमनेन तदन्तविध्याश्रयणे-

---

तदोः समासस्याऽनभिधानमेव,'यद्येनत्क्रियते एनो न वक्तव्यः, कथमेन'मित्यादि, त्यदाद्यत्वेन सिद्धं, यद्येवमेतच्छ्रितको न सिद्ध्यति, एनच्छ्रितक इति प्राप्नोति । यथालक्षणमप्रयुक्ते' इति भाष्यात् । **ब्रह्मणी इति** । 'न संयोगा'दिति निषेधादल्लोपो न ॥

**रोऽसुपि** । **अहर्भातीति** । 'अह'न्नि'ति रुत्वे 'ऽहो भाती'ति स्यादिति भावः । **नलोपे प्राप्त इति** । न च नलोपेऽकारस्य रौ रे वा विशेषाऽभावेनान्यतरेणैवोपपत्तावुभयविधानसामर्थ्यादेव लोपो नेति वाच्यं, संबुद्धौ नलोपनिषेधेनाऽहर्गच्छेत्यादावुत्वाऽभावेन 'दीर्घाहो निदाघे'त्यादावुत्वसंपादनेन चारितार्थ्यात् । न च नकारोच्चारणसामर्थ्यलब्धेन नकारान्ताऽनुकरणेन नान्तस्याऽहन्शब्दस्येति व्याख्यानान्नलोपो नेति वाच्यं, 'दीर्घाहो निदाघे'त्यादौ संबुद्धौ प्रवृत्त्या, भ्यामादौ व्यावृत्त्या च नकारस्य चारितार्थ्यात्तेन नलोपबाधे मानाऽभावादिति भावः । **आवर्त्येति** । आवृत्तौ मानं च 'रूपरात्री'ति वार्त्तिकमेव । अन्यथा नलोपेऽकारस्य रेफादेशेनैव सिद्धे तद्वैयर्थ्यं स्पष्टमेव । भाष्यप्रामाण्याच्च तस्य संबुद्धावप्रवृत्तिः । तज्ज्ञापकसिद्धवचनकल्पनाऽपेक्षया आवृत्तिर्लघीयसीति भावः । आवृत्तस्य पदान्तेऽहन्निति निपात्यत इत्यर्थः । इदमसंभव एवापवादत्वमिति वार्त्तिकमतेऽहन्नित्यस्य नलोपोत्तरचारितार्थ्याभिमानेन । वस्तुतः 'सत्यपि संभवे बाधनं भवती'ति भाष्यासिद्धान्ताद्रुत्वरत्वे नलोपापवादभूते एव । निषेधविषयेपि प्राप्तिमात्रेण येननाप्राप्तिन्यायविषयसत्त्वात् । निषेधेनापि तस्य बाध इत्यन्यत् । एतेन संबुद्धौ चारितार्थ्यमित्यपास्तम् । ध्वनितश्चेदमपवादो रुर्नलोपं बाधिष्यतइत्यर्थक-भाष्येण । एतदग्रे नलोपे कृतेऽकारे सावकाशत्वशङ्का तत्समाधानादि वार्त्तिकानुसारिणोरित्यलम् । **तदन्तस्यापीति** । पदाधिकारस्थत्वात् । 'ग्रहणवते'ति निषेधस्तु प्रत्ययविधिविषय इत्यसमासे

स दीर्घाहा निदाघः। इह हल्ङ्यादिलोपे प्रत्ययलक्षणेना'ऽसुपी'ति निषेधाद्रुत्वाऽभावे रुः। तस्याऽसिद्धत्वान्नान्तलक्षण उपधादीर्घः। संबुद्धौ तु—हे दीर्घाहो निदाघ। दीर्घाहानौ। दीर्घाहानः। दीर्घाह्ना। दीर्घाहोभ्याम्॥ दण्डि। दण्डिनी। दण्डीनि॥ स्रग्वि। स्रग्विणी। स्रग्वीणि॥ वाग्मि। वाग्मिनी। वाग्मीनि॥

बहुवृत्रहाणि॥ बहुपूषाणि॥ बह्वर्यमाणि॥ असृजः पदान्ते कुत्वम्। सृजेः क्विनो विधानात्। विश्वसृडादौ तु न, 'सृजिदृशो'रिति सूत्रे 'रज्जुसृङ्भ्या'मिति भाष्यप्रयोगात्। यद्वा 'व्रश्चे'तिसूत्रे सृजियज्योः पदान्ते षत्वं कुत्वाऽपवादः। स्रगृत्विक्शब्दयोस्तु निपातनादेव कुत्वम्। असृक्शब्दस्तु अस्यतेरौणादिके ऋक्प्रत्यये बोध्यः।

---

नेति शङ्क्यम्। 'उत्तरपदत्वे चापदादिविधौ' इति प्रतिषेधेन प्रत्ययलक्षणाऽप्रवृत्तेः।

**सृजिदृशोरिति सूत्र इति।** एतच्चोपलक्षणम्। 'मृजेर्वृद्धिः' इति सूत्रेऽपि तत्प्रयोगात्। **रज्जुसृङ्भ्यामिति।** ननु भ्यांप्रत्ययो झलादिरकिद्भवतीति 'सृजिदृशोः' इत्यमागमः स्यात्। मैवम्। धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात्। न चैवमपि 'अनुदात्तस्य चर्दुपधस्ये'ति वैकल्पिकः प्राप्नोति, तद्विधौ धातोः स्वरूपेणानुपादानादिति शङ्क्यम्; धातोरुच्यमानं कार्यं तत्प्रत्यय एवेति परिष्कारात्। एवं च 'प्रसङ्भ्यां' 'प्रसृङ्भि'रित्यादौ नायं दोषः प्रसज्यते। एतच्च 'मृजेर्वृद्धि'रिति सूत्रे भाष्ये स्पष्टम्। ननु धातोरुच्यमानं कार्यं तत्प्रत्यय एवेति चेत्,–'धियौ' 'धियः,' 'भुवौ' 'भुवः' इत्यादावियङुवङौ न स्यातां, किंतु 'चिक्षियतुः' 'लुलुवतु'रित्यादावेव स्याताम्। वस्तुगत्या धातोरेवोच्यमानं कार्यमियङादिकं न भवति किन्त्वङ्गस्योच्यमानमिति वैषम्यात्। **कुत्वापवाद इति।** षत्वसूत्रे 'सृजमृजयजे'ति विशिष्य ग्रहणादिति भावः। **असृक्शब्दस्त्विति।** एतच्च क्षीरस्वामिग्रन्थे स्पष्टम्।

---

निष्कादिभ्य इति सूत्रे भाष्यकैयटयोः स्पष्टमिति भावः। **तस्याऽसिद्धत्वादिति।** अकृतव्यूहपरिभाषया दीर्घाऽप्रवृत्तिः स्यादित्यभिमानेनेदम्। दीर्घस्तु परत्वाद्धल्ङ्यादिलोपात्पूर्वमेव बोद्धव्यः। **संबुद्धौ त्विति।** सुपोऽत्र हल्ङ्यादिलोपादसंबुद्धावित्युक्तेर्दीर्घाभावे रुत्वे हशि चेत्युत्वे आद्गुणः। **स्रग्वीणीति।** इन्ग्रहणेऽनर्थकस्यापि ग्रहणाद्दीर्घ इति भावः। **बहुवृत्रहाणीति।** अत्र यद्वक्तव्यन्तदुक्तम्। **पदान्ते कुत्वमिति।** 'क्विन्प्रत्ययस्ये'त्यसिद्धत्वाद्व्रश्चेति षत्वे कुत्वमित्यर्थः। षत्वन्तु 'सृष्ट'मित्यादौ सावकाशमिति भावः। **भाष्यप्रयोगादिति।** अनेन भाष्यप्रयोगेणानव्ययपूर्वपदे कुत्वाऽभावो बोद्धयते। तेनाऽसृगित्यत्र न दोषः। **कुत्वापवाद इति।** सृजियज्योः पूर्वोत्तरसाहचर्येण पदान्तेऽपि विशिष्य षत्वबोधेनेन तत्सामर्थ्यात्कुत्वबाध इति भावः। अत एवोपयट्क्ष्यतीति काम्यच्सूत्रस्थोक्तभाष्यप्रयोगः सङ्गच्छते। **निपातनादेवेति।** निपातनेन ह्यनयोरपवादाऽप्रवृत्ति-

असृक् । असृग् । असृजी । असृञ्जि । 'पद्दन्न'इति वा असन् । असानि । असृजा । अस्ना । असृग्भ्याम् । असभ्यामित्यादि ॥ ऊर्क् । ऊर्ग् । ऊर्जी । ऊर्न्जि । नरजानां संयोगः ॥ ❀ बहूर्जि नुम्प्रतिषेधः । ❀ अन्त्यात्पूर्वो वा नुम् । बहूर्जि बहूर्ञ्जि वा कुलानि ॥ त्यत् । त्यद् । त्ये । त्यानि । तत् । तद् । ते तानि ॥ यत् । यद् । ये । यानि ॥ एतत् । एतद् । एते एतानि । अन्वादेशे तु एनत् ॥ बेभिद्यतेः क्विप् । बेभित् । बेभिद् । बेभिदी । शावल्लोपस्य स्थानिवत्त्वादझलन्तत्वान्न नुम् । अजन्तलक्षणस्तु नुम्न, स्वविधौ स्थानिवत्त्वाऽभावात् । बेभिदि ब्राह्मणकुलानि । चेच्छिदि ॥

**ऋच्प्रत्यये बोध्य इति** । यद्यप्यस्मिन्पक्षे स्वरो भिद्यते, तथापि लोके स्वरस्यानादराद्वेदे तु बाहुलकादिष्टस्वरः सिध्यतीति भावः । **बहूर्जीति** । इदमन्त्यादिति च वाचनिकम् । तथा च वार्तिकम्—'बहूर्जि प्रतिषेधः,' 'अन्त्यात्पूर्वं नुममेके' इति । भाष्ये तु अचः परो यो झलतदन्तस्य नुमित्याश्रित्य प्रथमवार्तिकं प्रत्याख्यातम् । एवं च 'ऊर्न्जी'त्यत्र नुम् दुर्लभः । किंच 'उर्द माने क्रीडायां च', 'गर्ह गर्हायाम्' इत्यादीनां क्विबन्तानां भाष्यमते नुमा न भाव्यमेवेति बोध्यम् । **अल्लोपस्य स्थानिवत्त्वादिति** । 'क्वौ लुप्तं न स्थानिवत्' इति तु नेहाश्रीयते, तस्य क्वाचित्कत्वात् । 'क्वौ विधिं प्रति न स्थानिव'दित्यस्यैव सार्वत्रिकत्वादिति भावः।

जायन्ते नव सौ, तथाऽमि च नव, भ्यांभिस्भ्यसां सङ्गमे—
　　षट्सङ्ख्यानि, नवैव सुप्यथ जसि त्रीण्येव तद्वच्छसि ॥
चत्वार्यन्यवचःसु कस्य विबुधाः ! शब्दस्य रूपाणि
　　तज्जानन्तु प्रतिभाऽस्ति चेन्निगदितुं षाण्मासिकोऽत्रावधिः ॥'

मात्रबोधनं, कुत्वन्तु स्वशास्त्रेणैव । एतेन निपातनादपदान्तेऽपि कुत्वापत्तिरिति निरस्तम् । **असृक्शब्दस्त्विति** । इदमेव न्याय्यम् । **ऊर्गिति** । अयं पुलिङ्गोऽपि, 'नपुंसकस्ये'ति सूत्रे बहुवचने 'ऊर्ञ्जि' इति कैयटात् । **नरजानामिति** । 'बहुर्जि नुम्प्रतिषेध' इति वार्त्तिकरीत्येदम् । 'अचः परो यो झल् तदन्तस्य नु'मिति तत्प्रत्याख्यातृभाष्यमते तु नुमोऽत्र प्राप्तिरेव नेति बोद्धयम् । न चैवं 'कुण्डानी'त्यसिद्धिः, 'इकोची'ति सूत्रेऽचः सर्वनामस्थाने इत्यनुवर्त्याऽनुवृत्तिसामर्थ्यादिक इत्येतत्साहचर्याच्च सर्वनामस्थान इति सप्तम्या षष्ठीं प्रकल्प्य वाक्यभेदेनाऽजन्तस्य क्लीबस्य तत्र नुम्विधानाददोष इति भाष्ये स्पष्टं ।'काष्ठतक्षी'त्यादौ 'दिव औ'दिति सूत्रभाष्योदाहृतेऽचःपरझल्त्वजातेराश्रयणान्न दोषः ।
**अन्त्यादिति** । इदं वाचनिकमेव, बहूर्ज्शब्दमात्रविषयकम् । **बहूर्ञ्जीति** । श्चुत्वस्याऽसिद्धत्वादनुस्वारे परसवर्णो बोद्धयः । **स्थानिवत्त्वादिति** । 'क्वौ लुप्तं ने'ति त्वसार्वत्रिकमिति भावः । स्पष्टश्चेदं 'दीधीवेवीटा'मिति सूत्रे कैयटे ।

**गवाक्छब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः ।**
**असन्ध्यवङ्पूर्वरूपैर्नवाधिकशतं मतम् ॥ १ ॥**
**स्वम्सुप्सु नव षड्भादौ षट्के स्युस्त्रीणि जश्शसोः ।**
**चत्वारि शेषे दशके रूपाणीति विभावय ॥ २ ॥**

तथाहि–गामञ्चतीति विग्रहे 'ऋत्विगा'दिना क्विन् । गतौ नलोपः । 'अवङ् स्फोटायनस्ये'त्यवङ् । गवाक् । गवाग् । 'सर्वत्र विभाषे'ति प्रकृतिभावे गोअक् । गोअग् । पूर्वरूपे–गोऽक् । गोऽग् । पूजायां नस्य कुत्वेन ङः–गवाङ् । गोअङ् । गोऽङ् ॥ अम्यपि एतान्येव नव ॥ औङः शी । भत्वादच इत्यल्लोपः । गोची । पूजायां तु गवाञ्ची । गोअञ्ची । गोऽञ्ची । 'जश्शसोः शिः' । शेः सर्वनामस्थानत्वान्नुम् । गवाञ्चि । गोअञ्चि । गोऽञ्चि । गतिपूजनयोस्त्रीण्येव–गोचा । गवाञ्चा । गोअञ्चा । गोऽञ्चा । गवाग्भ्याम् । गोअग्भ्याम् । गोऽग्भ्याम् । गवाङ्भ्याम् । गोअङ्भ्याम् । गोऽङ्भ्याम् । इत्यादि ॥ सुपि तु ङान्तानां पक्षे 'ङ्णोः कु'गिति कुक् । गवाङ्क्षु । गोअङ्क्षु । गोऽङ्क्षु । गवाङ्षु । गोअङ्षु । गोऽङ्षु । गवाक्षु ।

–इति नरपतिसभायां कचित्केनचित्प्राचीनेन कृतस्याक्षेपस्य प्राचीनैरेव पण्डितैः कैश्चित् 'गवाक्शब्दस्ये'त्यादिना 'विभावये'त्यन्तेन श्लोकद्वयेन समाधानमुक्तम् । तदेव श्लोकद्वयं प्रकृतोपयोगादाह–**गवाक्छब्दस्य रूपाणीति** । अञ्चतेर्गतौ नलोपः, पूजायां तु नेत्याशयेनाह–**अर्चागतिभेदत इति** । आद्यादित्वात्तसिः । पूजागत्यर्थभेदेनाऽसन्ध्यवङादिभिर्नवाधिकशतं रूपाणि बोध्यानीत्यर्थः । उक्तसङ्ख्यामेव व्यवस्थापयति–**स्वम्सुप्स्विति** । 'प्रत्येक'मिति शेषः । एवमग्रेऽपि 'षट्' 'त्रीणि' 'चत्वारी'त्यत्रापि बोध्यम् । **रूपाणीति** । सङ्कलनया नवाधिकशतं रूपाणीत्यर्थः । इह 'चयो द्वितीयाः' इति वार्तिकमनाश्रित्य 'नवाधिकशत'मित्युक्तमिति बोध्यम् । तदाश्रयणे तु 'त्रीणि रूपाणि वर्द्धन्ते' इत्यनुपदमेव वक्ष्यमाणत्वात् । **इत्यादीति** । आदिशब्देनाऽन्यान्यपि ज्ञेयानि । तद्यथा–गवाग्भिः । गोअग्भिः । गोग्भिः । गवाङ्भिः । गोऽङ्भिः ।

**'जायन्ते नव सौ तथाऽमि च नव भ्यांभिस्भ्यसां सङ्गमे–**
**षट्सङ्ख्यानि नवैव सुप्यथ जसि त्रीण्येव तद्वच्छसि ।**
**चत्वार्यन्यवचःसु कस्य विबुधाः ! शब्दस्य रूपाणि त-**
**ज्जानन्तु प्रतिभाऽस्ति चेन्निगदितुं षाण्मासिकोऽत्रावधिः ॥'**

–इति प्राचीनस्य शुष्कप्रक्रियातार्किकस्य प्रश्ने तदनुसारेणैव श्लोकद्वयेनोत्तरमाह–**गवाक्शब्दस्येति** । शब्दपरत्वेनाऽपूजार्थकत्वान्नस्य लोपः । **भेदत इति** । आद्यादित्वात्तसिः । भेदेनेत्यर्थः ।

गोअक्षु । गोक्षु । न चेह **चयो द्वितीया** इति पक्षे ककारस्य खकारेण षण्णामाधिक्यं शङ्क्यम्, चर्त्वस्याऽसिद्धत्वात् । कुक्पक्षे तु तस्याऽसिद्धत्वाज्जश्त्वाभावे पक्षे द्वितीयादेशात्त्रीणि रूपाणि वर्द्धन्त एव ॥

**ऊह्यमेषां द्विर्वचनानुनासिकविकल्पनात् ।**
**रूपाण्यश्वाक्षिभूतानि (५२७) भवन्तीति मनीषिभिः ॥ १ ॥**

---

**ङयि**–गोचे । गवाञ्चे । गोअञ्चे । गोऽञ्चे । **भ्यामि** प्राग्वत् । **भ्यसि** गवाग्भ्यः । गोअग्भ्यः । गोग्भ्यः । गवाङ्भ्यः । गोअङ्भ्यः । गोऽङ्भ्यः । **ङसौ**–गोचः । गवाञ्चः । गोअञ्चः । गोऽञ्चः । **भ्यामि भ्यसि** च प्राग्वत् । **ङसि** पञ्चम्येकवचनवत् । **ओसि**–गोचोः । गवाञ्चोः । गोअञ्चोः । गोऽञ्चोः । **आमि**–गोचाम् । गवाञ्चाम् गोअञ्चाम् । गोऽञ्चाम् । **ङौ तु**–गोचि । गवाञ्चि । गोअञ्चि । गोऽञ्चि । **ओसि** प्राग्वत् । **सुपि** तु–गवाङ्क्षु । गवाङ्षु । गोअङ्क्षु । गोअङ्षु । गोऽङ्क्षु । गोऽङ्षु । गवाक्षु । गोअक्षु । गोक्षु । ननु भ्याम्त्रये भ्यस्द्वये ङसिङसोरोस्द्वये च समानरूपत्वात् कथमिह नवाधिकशतमित्युक्तमिति चेत् । अत्राहुः–अर्थभेदेन रूपभेदमाश्रित्य तथोक्तमिति । **षण्णामाधिक्यं शङ्क्यमिति** । नवसु मध्ये ककारस्थाने पाक्षिकखकारप्रवृत्त्या रूपषट्काधिक्यं न शङ्क्यमित्यर्थः । **चर्त्वस्यासिद्धत्वादिति** । तथाच शास्त्रदृष्ट्या ककारो नास्त्येव किंतु गकार एवास्तीति भावः । **तस्यासिद्धत्वादिति** । कुकोऽसिद्धत्वादित्यर्थः । **वर्द्धन्त एवेति** । एवं च त्रयाणामाधिक्यसंभवात्सुपि द्वादश रूपाणि भवन्तीति सङ्कलनया द्वादशाधिकशतं मतं न तु नवाधिकशतमिति भावः । **अश्वाक्षिभूतानीति** । सप्तविंशत्यधिका पञ्चशतीत्यर्थः । सौ नवानामन्त्यस्य द्वित्वे अष्टादश । औङि चतुर्णां मध्ये पूजार्थानां त्रयाणां अद्वित्वे सप्त । 'अणोऽप्रगृह्य'त्यनुनासिकस्तु नास्ति, प्रगृह्यत्वात् । जसि अद्वित्वस्यानुनासिकस्य च विकल्पात् द्वादश । सङ्कलनया सप्तत्रिंशत् । एवं द्वितीयायामपि विभक्तौ सप्तत्रिंशत् । तथा च सङ्कलनया चतुःसप्ततिः । टायां चतुर्णां मध्ये पूजार्थानां त्रयाणां अद्वित्वे सप्त । तेषां च सप्तानामनुनासिकविकल्पे चतुर्दश । सङ्कलनया अष्टाशीतिः । भ्यामि षट्सु रूपेषु

---

**नवेति** । द्वन्द्वान्ते श्रूयमाणत्वात्प्रत्येकं नवेत्यर्थः। अग्रेऽपि प्रत्येकमेव सङ्ख्याऽन्वयः। **गवागिति** । सोर्लुका लुप्तत्वान्नुम्न । **षण्णामिति** । कुक्पक्षे त्रयाणां, गतौ त्रयाणामित्यर्थः । **चर्त्वस्येति** । तेन गतौ त्रयाणामधिक्यं नेत्यर्थः । **कुक्पक्षे इति** । पूजायामित्यर्थः । **अश्वाक्षीति** । सप्तविंशत्यधिका पञ्चशतीत्यर्थः (५२७) ।

तिर्यक् । तिरश्ची । तिर्यञ्चि । पूजायां तु–तिर्यङ् । तिर्यञ्ची । तिर्यञ्चि ॥ यकृत् । यकृती । यकृन्ति । 'पद्'न्निति वा यकन् । यकानि । यक्ना । यकृता । शकृत् । शकृती । शकृन्ति । शकानि । शक्ना । शकृता ॥ ददत् । ददती ॥

**वा नपुंसकस्य** ।७।१।७९। अभ्यस्तात्परो यः शता तदन्तस्य क्लीबस्य नुम्वा स्यात्सर्वनामस्थाने परे । ददन्ति । ददति ॥ तुदत् । **आच्छीनद्योर्नुम्** ।७।१।८०। अवर्णान्तादङ्गात्परो यः शतुरवयवस्तदन्तस्याऽङ्गस्य नुम् वा स्याच्छीनद्योः परतः ।

---

भात्पूर्वस्य द्वित्वे द्वादश, तेषां द्वादशानामपि 'यणो मयः' इति यद्वित्वे चतुर्विंशतिः, तेषामपि मकारस्य द्वित्वेऽष्टचत्वारिंशत् । संकलनया षट्त्रिंशदधिकं शतम् । भिसि चतुर्विंशतिः, भात् पूर्वस्य विसर्गस्य च द्वित्वात्सङ्कलनया षष्ट्युत्तरशतम् । ङयि चतुर्णां मध्ये पूजार्थानां त्रयाणां ञद्वित्वे सप्त । अनुनासिकस्तु नास्ति, एकारस्यानण्त्वात् । सङ्कलनया सप्तोत्तरषष्ट्यधिकं शतम् । भ्यामि प्राग्वदेवाष्टचत्वारिंशत् । तथैव भ्यसि, भात्पूर्वस्य यविसर्गयोश्च द्वित्वात् । सङ्कलनया त्रिषष्ट्यधिकं शतद्वयम् । ङसौ चतुर्णां मध्ये ञद्वित्वे सप्त । तेषां तु सप्तानां विसर्गद्वित्वे चतुर्दश । सङ्कलनया सप्तोत्तरसप्तत्यधिकं शतद्वयम् । भ्याम्भ्यसोः प्राग्वदेव प्रत्येकमष्टचत्वारिंशत् । सङ्कलनया त्रिसप्तत्यधिकं शतत्रयम् । ङसाविव ङसओस्आम्ङिओसित्यत्रापि प्रत्येकं चतुर्दश, चतुर्षु रूपेषु मध्ये ञद्वित्वे सप्तानामप्यन्त्यस्य द्वित्वात् । ङौ तु सप्तानामप्यन्त्यस्य 'अणोऽप्रगृह्यस्ये'ति वैकल्पिकानुनासिकप्रवृत्तेः सङ्कलनया त्रिचत्वारिंशदधिकं शतचतुष्टयम् । सुपि गत्यर्थे त्रयाणां कद्वित्वे षट् । तेषां तु 'शरः खयः' इति षद्वित्वे द्वादश । उकारस्यानुनासिके चतुर्विंशतिः । सङ्कलनया सप्तोत्तरषष्ट्यधिकं शतचतुष्टयम् । पूजायां तु कुगभावे त्रयाणां ङकारद्वित्वेऽनुनासिके च द्वादश । कुक्पक्षे तु चयो द्वितीयादेशे षट् । षण्णां ङषयोर्द्वित्वेऽननुनासिके चाऽष्टचत्वारिंशत् । सङ्कलनया सप्तविंशत्यधिका पञ्चशतीत्यर्थः ॥ **तिरश्ची इति** । भत्वात्–'अचः' इत्यल्लोपः । 'अलोपे' इति वचनात्तिर्यादेशाऽभावः । **ददिति** । पुंलिङ्गेऽप्ययं व्युत्पादितः । **शतेति** । 'ऋदुशने'त्यनङ् । शतृप्रत्यय इत्यर्थः । **आच्छीनद्योः** । नुम्ग्रहणमिह चिन्त्यप्रयोजनं, 'नाभ्यस्ताच्छतुः' 'वा नपुंसकस्ये'त्यत्र 'इदितो नुम्धातो'रित्यतोऽनुवृत्तेरावश्यकतया तदुत्तरत्रापि तत एवानुवर्तने बाधकाऽभावात् । **शतुरवयव इति** । तुदादेः शस्याऽन्तरङ्गत्वाच्छत्रादेशा-

---

यः शतेति । शतृप्रत्यय इत्यर्थः ।

आच्छीन । वेति वर्त्तते, उत्तरसूत्रे नित्यग्रहणात् ... तु नानुवर्त्तते,

तुदन्ती-तुदती । तुदन्ति ॥ भात् । भान्ती-भाती । भान्ति । पचत् । **शप्श्यनोर्नित्यम्** ।७।१।८१। शप्श्यनोरात्परो यः शतुरवयवस्तदन्तस्य नित्यं नुम् स्याच्छीनद्योः परतः । पचन्ती । पचन्ति ॥ दीव्यत् । दीव्यन्ती । दीव्यन्ति ॥ स्वप् । स्वब् । स्वपी । नित्यात्परादपि नुमः प्राक् 'अप्तृ'न्निति दीर्घः, प्रतिपदोक्तत्वात् । 'स्वाम्पि । 'निरवकाशत्वं प्रतिपदोक्तत्व'मिति पक्षे तु प्रकृते तद्विरहान्नुमेव । स्वम्पि । स्वपा ॥ 'अपो भि' । स्वद्भ्याम् । स्वद्भिः ॥ 'अर्तिपृवपी'त्यादिना धनेरुस् । रुत्वम् । धनुः । धनुषी । 'सान्ते'ति दीर्घः । 'नुम्विसर्जनीये'ति षत्वम् । धनूंषि ।

---

ऽकारेण सहैकादेशे कृतेऽवर्णान्तात्परस्य शतुरिति न भवति । 'उभयत आश्रयणे नान्तादिव'दिति वक्ष्यमाणत्वादिति भावः । **भादिति** । 'भा दीप्तौ' । लटः शतर्यदादित्वाच्छपो लुक् । **शप्श्यनोर्नित्यम्** । आरम्भसामर्थ्यान्नित्यत्वे सिद्धेऽपि नित्यग्रहणमिह 'वे'त्यधिकारनिवृत्त्यर्थम् । अन्यथा ह्यारम्भसामर्थ्यादिह नित्यमुत्तरत्र विकल्प इत्याशङ्क्येत ।

**पचन्ती इति** । कर्तरि शपि नित्यं नुम् । **दीव्यन्ती इति** । दिवादिभ्यः श्यनि नित्यं नुम् । पचन्तीति दीव्यन्तीति बहुवचने तु 'नपुंसकस्य झलचः' इति नुम्बोध्यः ।

**स्वविति** । शोभना आपो यस्मिन्सरसीति बहुव्रीहिः । 'ऋक्पूर'न्निति समासान्ते प्राप्ते 'न पूजना'दिति निषेधः । 'ध्यन्तरुपसर्गेभ्य'इति ईन्न भवति, तत्र 'अप इति कृतसमासान्तस्यानुकरण'मिति वक्ष्यमाणत्वात् । **निरवकाशत्वं प्रतिपदोक्तत्वमिति** । अयमेव पक्षः प्रबल इति 'छदिरुपधिबलेर्ढ'ञिति सूत्रे मनोरमायां स्थितम् ॥

**धनेरुसिति** । 'जनेरुसिः' इत्यत 'उसि'रित्यनुवर्तमाने 'अर्तिपृवपियजितनिधनितपिभ्यो नि'दित्यौणादिकेनेत्यर्थः । **धनुर्भ्यामिति** । इह 'र्वोरुपधाया'इत्यादिना दीर्घो

---

निषेधस्य प्राप्तिपूर्वकत्वादत्र च प्राप्त्यभावात् । नुम्ग्रहणन्तु स्पष्टार्थम् । **शतुरवयव इति** । 'परो यः शते'ति तु नोक्तं, तुदन्तीइत्यादावेकादेशे उभयत आश्रयणेऽन्तादिवद्भावाभावेन,तेन व्यपवर्गाऽलाभेन च नुमभावापत्तेः । अवर्णश्च शतृभिन्नाऽवयव एव गृह्यते, शत्रकारेणाऽव्यभिचारात् । **शप्श्यनोः** । आदिति[किम् ?]'भाती'इत्यादौ नित्यनुमभावाय । अन्यथा प्रत्ययलक्षणेन स्यात् । आदित्युक्तौ तु वर्णप्राधान्यान्न प्रत्ययलक्षणं, 'न लुमते'ति निषेधस्तु प्रत्यासत्त्या लुप्तप्रत्ययनिमित्ताऽङ्गस्य कार्ये एवेति भावः ।

**पचन्तीत्यादि** बहुवचने-'नपुंसकस्य झलच' इति नुम् । **निरवकाशत्वमिति** । इदञ्छदिरुपधिबलेर्ढञिति सूत्रे, 'शेपाद्विभाषे'ति सूत्रे च भाष्ये स्पष्टम् । **परे तु**-निरवकाशत्वरूपप्रतिपदोक्तत्वस्य बाधकताप्रयोजकत्वं, प्रकृते तदभावेनाऽबाधकत्वेपि प्रतिपदविधित्वेन शीघ्रोपस्थितिकतया पूर्वं प्रवृत्तौ नियामकत्वे बाधकाऽभावेन पूर्वं दीर्घे ततो नुमि 'स्वाम्पी'त्येवेत्याहुः । **धनुरिति** । 'र्वो'रिति दीर्घस्तु न, रेफान्तस्य धातुत्वाभावात् । 'श्रेयांसी'त्यादौ युगपद्द्वयोरन्त्यादचः परत्वाऽयोगाद्विरोधेन परत्वा-

धनुषा । धनुर्भ्याम् । एवं चक्षुर्हविरादयः । पिपठिषतेः क्विप् । 'र्वो'रिति दीर्घः । पिपठीः । पिपठिषी । अल्लोपस्य स्थानिवत्त्वाज्झलन्तलक्षणो नुम्न । स्वविधौ स्थानिवत्त्वाऽभावादजन्तलक्षणोऽपि नुम्न । पिपठिषि । पिपठीर्भ्यामित्यादि ॥ पयः । पयसी । पयांसि । पयसा । पयोभ्यामित्यादि ॥ सुपुम् । सुपुंसी । सुपुमांसि ॥ अदः । विभक्तिकार्यम् । उत्वमत्वे । अमू । अमूनि । शेषं पुंवत् ॥ इति **हलन्ता नपुंसकलिङ्गाः** ॥

## अथाऽव्ययप्रकरणम् ।

**स्वरादिनिपातमव्ययम्** ।१।१।३७। स्वरादयो निपाताश्चाव्ययसंज्ञाः स्युः ।

---

न शक्ष्यः, रेफान्तस्याऽधातुत्वात् । **एवमिति** । 'चक्षेः शिच्च' । चादुसि । चक्षुः ॥ 'अर्चिशुचिहुसृपि' इत्यादिना जुहोतेरिसिः । 'आदि'शब्देन सर्पिरर्चिरादयो ग्राह्याः ।

**सुपुमांसीति** । 'पुंसोऽसुङ्' इति सूत्रे 'सुटी'ति व्याचक्षाणस्य प्राचो मते जसीष्टसिद्धावपि शसि नैतत्सिध्येत् । औङि चाऽतिप्रसङ्गः । 'इतोऽत्सर्वनामस्थाने' इत्यतोऽनुवृत्तिं पर्यालोच्य सर्वनामस्थान इति यथाश्रुतं ब्रुवतां तु सर्वेष्टसिद्धिः ॥

**इति हलन्तनपुंसकलिङ्गप्रकरणम् ॥**

**स्वरादिनिपातमव्ययम्** । स्वरादयश्च निपाताश्चेति समाहारद्वन्द्वः । ननु चादिष्वेव स्वरादीन्पठित्वा प्रकृतसूत्रं परित्यज्य 'तद्धितश्चासर्वे'त्यादि सूत्रचतुष्टयमपि 'चादयोऽसत्त्वे' इत्यस्मादूर्ध्वं कृत्वाऽव्ययप्रदेशेषु निपातशब्देनैव व्यवह्रियतामिति चेन्न, 'स्वस्ति वाचयति' 'स्वः पश्यति' 'स्वः पतती'त्यादौ कर्मादिकारकयोगेन सत्त्ववाचकत्वात्तेषां निपातसंज्ञाऽनापत्तेः । चादीनां ह्यसत्त्ववाचिनामेव निपातसंज्ञा, न तु सत्त्ववाचिनाम् । स्वरादीनां तु सत्त्ववाचिनामसत्त्ववाचिनां चाऽव्ययसंज्ञेष्यत इति व्यवस्थाऽनापत्तेश्च । अथ 'प्राग्रीश्वरान्निपाताः' 'स्वरादीनि' 'चादयोऽसत्त्वे' इति सूत्र्यतां, तथा हि सति स्वरादीनां सत्त्ववचनानामपि निपातसंज्ञा सेत्स्यतीति चेन्न; एवं हि सति 'निपात एकाजना'ङिति प्रगृह्यसंज्ञा स्वरादीनामप्येकाचां प्रसज्येत । स्तो हि स्वरादिषु 'किमोऽत्' 'दक्षिणादाच्' इत्यादावेकाचौ तद्धितौ । केन्प्रभृतय एकाचः

---

ज्झलन्तलक्षणे नुमि कृते उगिल्लक्षणो न, सकृद्गतिन्यायात् । किञ्चाऽन्त्यादचः परो मित्प्रयोक्तव्य इति 'मिदच' इत्यस्यार्थेन द्वयोर्मितोरन्त्यादचः परप्रयोगाऽसंभवेन नात्र नुम्द्वयप्रसक्तिः पुनःप्रसङ्गविज्ञानेऽपि । किञ्च सत्यपि नुम्द्वये परस्याऽनुस्वारे तस्य झल्ग्रहणेन ग्रहणात्पूर्वस्यानुस्वारे द्वयोरनुस्वारयोः श्रुतौ न विशेष इति 'नपुंसकस्ये'ति सूत्रे भाष्ये स्पष्टम् । * इति **हलन्ता नपुंसकलिङ्गाः** । *

**अथाऽव्ययप्रकरणम् । स्वरादि** । स्वरादीनामपि निपातसंज्ञैव तु न कृता, स्वरादौ 'निपाता

स्वर्, अन्तर्, प्रातर्, पुनर्, सनुतर्, उच्चैस्, नीचैस्, शनैस्, ऋधक्, ऋते, युगपत्, आरात्, पृथक्, ह्यस्, श्वस्, दिवा, रात्रौ, सायम्, चिरम्, मनाक्, ईषत्, जोषम्, तूष्णीम्, बहिस्, अवस्, समया, निकषा, स्वयम्, वृथा, नक्तम्, नञ्, हेतौ, इद्धा, अद्धा सामि। वत्। ब्राह्मणवत्, क्षत्रियवत्। सना, सनत्, सनात्,

---

कृत्प्रत्ययाश्च सन्ति। 'तसिलादिस्तद्धित एधाचपर्यन्तः' इति सूत्रस्य, 'कृन्मकारसन्ध्यक्षरान्तः' इति सूत्रस्य च स्वरादिगणपठितत्वात्। यद्यप्यत्र मूले स्वरादिषु गणसूत्रद्वयमिदं न पठितं, तथापि प्राचां पाठे अस्तीत्यनुपदमेव स्फुटीकरिष्यते ॥

स्वरादीनुदाहरति-**स्वरित्यादिना**। **स्वरिति** स्वर्गे परलोके च। **अन्तरिति** मध्ये। **प्रातरिति** प्रत्यूषे। **पुनरि**त्यप्रथमे विशेषे च। **सनुतरि**त्यन्तर्धाने। स्वराद्याः पञ्च रेफान्ताः। तेन स्वर्याति प्रातरत्रेत्यादावुत्वं न भवति। सान्तत्वे हि स्यादेव दोषः। **उच्चैस्**-महति। **नीचैस्**-अल्पे। **शनैस्**-क्रियामान्द्ये। **ऋधक्**-सत्येऽपि। वियोगशीघ्रसामीप्यलाघवेष्वित्यन्ये। **ऋते**-वर्जने। **युगपदि**त्येककाले। **आराद्**दूरसमीपयोः। **पृथक्**-भिन्ने। **ह्यस्**-अतीतेऽह्नि। **श्वो**ऽनागतेऽह्नि। **दिवा** दिवसे। **रात्रा**विति निशि। **साय**मिति निशामुखे। **चिर**मिति बहुकाले। **मनाक्**, **ईषत्**-इमावल्पे। **जोषं**-सुखे मौने च। **तूष्णी**मिति मौने। **वहिस् अवस्** इमौ बाह्ये। **समये**ति समीपे मध्ये च। **निकषे**त्यन्तिके। **स्वय**मिति आत्मनेत्यर्थे। **वृथे**ति व्यर्थे। **नक्त**मिति रात्रौ। **नञि**ति निषेधे। **हेता**विति निमित्ते। **इद्धे**ति प्राकाश्ये। **अद्धेति** स्फुटावधारणयोः। तत्त्वातिशययोरित्यन्ये। **सामी**त्यर्धजुगुप्सितयोः। **वत्**। 'तेन तुल्य'मित्यादिभिर्विहितो यो वतिप्रत्ययः स इह गृह्यते। तदाह-**ब्राह्मणवत्**। **क्षत्रियवदिति**। प्रत्ययमात्रस्य संज्ञाप्रयोजनाभावात्प्रत्ययान्तमुदाहृतम्। यस्तु 'उपसर्गाच्छन्दसि धात्वर्थे' इति विहितः, स इह न गृह्यते। 'यदुद्वतो निवतो यासी'त्यत्र सत्त्वधर्मस्य लिङ्गसङ्ख्यान्वयस्य दर्शनात्। अत्र वदन्ति-'तद्धितश्चासर्वविभक्ति'रित्यत्र 'तसिवती' इति वतिप्रत्ययोऽपि परिगण्यते, तच्च न कर्तव्यं, स्वरादिपाठेनैव गतार्थत्वात्, स्वरादिषु वा वदिति न पठनीयमिति। **सना, सनत्, सनात्**,-एते नित्ये।

---

आद्युदात्त' इत्यापत्तेः। एतेन चादीनामप्यव्ययसञ्ज्ञैव कार्येत्यपास्तमित्यन्यत्र विस्तरः। **स्वरित्यादि**। अनुकरणान्येतानि। तत्रेत एव निर्देशान्न स्वाद्युत्पत्तिः, तेन विसर्गादिकं न। स्वरादीनामनेकशक्तिप्रधानता। 'स्वरागतः' 'स्वः स्थितः' 'स्वः पश्ये'त्यादिदर्शनात्। गणे च तन्त्रेण सर्वेषामुच्चारणम्। 'उच्चै'रित्यादीन्यधिकरणशक्तिप्रधानानि, शब्दस्वभावात्। **हिरुगादीनि**-क्रियाप्रधानानि।

उपधा, तिरस्, अन्तरा, अन्तरेण, ज्योक्, कम्, शम्, सहसा, विना, नाना, स्वस्ति, स्वधा, अलम्, वषट्, श्रौषट्, वौषट्, अन्यत्, अस्ति, उपांशु, क्षमा, विहायसा, दोषा, मृषा, मिथ्या, मुधा, पुरा, मिथो, मिथस्, प्रायस्, मुहुस्, प्रवाहुकम्, [प्रवाहिका,] आर्यहलम्, अभीक्ष्णम्, साकम्, सार्धम्, नमस्, हिरुक्,

---

**उधेति** भेदे। **तिरस्**–अन्तर्धौ तिर्यगर्थे परिभवे च। **अन्तरेति** मध्ये विनार्थे च। **अन्तरेणेति** वर्जने। **ज्योगिति** कालभूयस्त्वे प्रश्ने शीघ्रार्थे संप्रत्यर्थे च। **कमिति** वारिमूर्धनिन्दासुखेषु। **शमिति** सुखे। **सहसेत्या**कस्मिकाऽविमर्शयोः। **विनेति** वर्जने। **नानेत्य**नेकविनार्थयोः। **स्वस्तीति** मङ्गले। **स्वधा** पितृदाने। **अलं**–भूषणपर्याप्तिशक्तिवारणनिषेधेषु। **वषट्, श्रौषट्, वौषट्,**–एते हविर्दाने। **अन्यद**न्यार्थे। **अस्तीति** सत्तायाम्। **उपांशु**–इत्यप्रकाशोच्चारणरहस्ययोः। **क्षमेति** क्षान्तौ। **विहायसेति** वियदर्थे। **दोषेति** रात्रौ। **मृषा, मिथ्येत्ये**तौ वितथे। **मुधेति** व्यर्थे। इत ऊर्ध्वं 'क्त्वातोसुन्कसुनः' 'कृन्मकारसन्ध्यक्षरान्तः' 'अव्ययीभावश्च' इति गणसूत्रत्रयमष्टाध्यायीस्थत्रिसूत्र्या समानार्थकमिह न पठितं चेदपि प्राचीनगणपाठे तदस्तीति बोध्यम्। वैयर्थ्यं तु परिहरिष्यते। **पुरेत्य**विरते चिरातीते भविष्यदासन्ने च। **मिथो, मिथस्**–एतौ रहःसहार्थयोः। **प्रायसिति** बाहुल्ये। **मुहुसिति** पुनरर्थे। **प्रवाहुकमिति** समानकाले ऊर्ध्वार्थे च। **प्रवाहिकेति** पाठान्तरम्। **आर्यहलमिति** बलात्कारे। शाकटायनस्तु–**आर्येति** प्रतिबन्धे। **हलमिति** प्रतिषेधविवादयोरित्याह। **अभीक्ष्णमिति** पौनःपुन्ये। **साकं, सार्धमेतौ** सहार्थे। **नमस्**–नतौ। **हिरुग्**वर्जने। **धिक्**–निन्दाभर्त्सनयोः। इत ऊर्ध्वं 'तसिलादयस्तद्धिता एधाच्पर्यन्ताः' 'शस्तसी' 'कृत्वसुच्' 'सुच्' 'आस्थालौ' 'च्व्यर्थाश्चे'ति प्राचीनगणपाठेऽस्तीति बोध्यम्। **तसिलादीत्यादेरयमर्थः,**–'पञ्चम्यास्तसि'लित्यारभ्य 'एधाचे'त्येतदन्तैः सूत्रैरुक्ता ये तद्धितास्तदन्ताः स्वरादिषु बोद्धव्याः। तथा 'बह्वल्पार्थाच्छस्' 'प्रतियोगे पञ्चम्यास्तसिः'

---

क्रियाप्राधान्यञ्चैषाङ्क्रियायामेव विशेषणत्वेन। स्पष्टञ्चेदन्तद्धितश्चेति सूत्रे कैयटे। **सायञ्चिरं** मान्ते अव्यये। 'सायचिर'मिति सूत्रस्थभाष्यप्रामाण्याच्चिरमित्यव्ययमप्रामाणिकमिति **परे**। **वदिति**। 'तेन तुल्यं' 'तत्र तस्येव' 'तदर्ह'मिति विहितः। 'उपसर्गाच्छन्दसी'ति विहितस्य च्छान्दसत्वादेव न संज्ञा। वस्तुतस्तद्धितश्चेत्येव सिद्धेर्वद्ग्रहणं व्यर्थम्। **अन्तरान्तरेणेति**। 'अन्तरान्तरेण युक्ते'इति सूत्रे भाष्येऽनयोर्निपातत्वोक्तेः स्वरादिष्वनयोः पाठः प्रक्षिप्तः। **अस्तीति**। धनवानित्यर्थके 'अस्तिमा'नित्यादौ धनवाचिनः सत्त्ववचनस्य विभक्तिप्रतिरूपकत्वेन न सिद्धिरित्यस्य पाठः। विनिगमनाविरहेण विभक्ति[illegible] सिद्धिरिति तु मतुप्सूत्रे भाष्यकैयटयोः।

धिक्, अम्, आम्, प्रताम्, [ प्रशान् ], प्रतान्, मा, माङ्। आकृतिगणोऽयम् ॥

च, वा, ह, अह, एव, एवम्, नूनम्, शश्वत्, युगपत्, भूयस्, कूपत्, कुवित्, नेत्, चेत्, चण्, कच्चित्, किंचित्, यत्र, नह, हन्त, माकिः, माकीम्, नकिः,

---

'तेनैकदिक्' 'तसिश्चे'त्ययमपि तसिः। 'क्रियाभ्यावृत्तिगणने कृत्वसुच्'। 'द्वित्रिचतुर्भ्यः सुच्'। 'इण आसिः' इत्युणादिसूत्रेण विहित 'आसिः'। 'प्रत्नपूर्वविश्वेमात्थाल्छन्दसि'। 'संपद्यकर्तरि च्विः'। 'विभाषा साति कार्त्स्न्ये' 'देये त्रा च' इत्येतदन्ता अपि ग्राह्या इति। अम्-शैघ्र्येऽल्पे च। आम्-अङ्गीकारे। 'अमु च छन्दसि' 'किमेत्तिङव्यय-' इति 'कास्प्रत्ययात्-' इत्यादिभिश्च विहितावपि अमामौ गृह्येते इत्येके। प्रतं नय प्रतरं। ययाचतरां। कारयामास। प्रताम्-ग्लानौ। प्रशान्समानार्थे। प्रतान्-विस्तारे। मा, माङ् एतौ निषेधाशङ्कयोः। आकृतिगण इति। तेनान्येऽपि ज्ञेयाः। तथा हि—कामम्-स्वाच्छन्द्ये। प्रकाममित्यतिशये। भूय इति पुनरर्थे। साम्प्रतमिति न्याय्ये। परमिति किन्त्वर्थे। साक्षात्-प्रत्यक्षे। साचीति तिर्यगर्थे। सत्यमित्यर्धाङ्गीकारे। मङ्क्षु, आशु एतौ शैघ्र्ये। संवत् वर्षे। अवश्यं निश्चये। उपेति रात्रौ। ओमित्यङ्गीकारे ब्रह्मणि च। भूरिति पृथिव्याम्। भुवरित्यन्तरिक्षे। झटिति, झगिति, तरसा-एते शैघ्र्ये। सुष्ठु प्रशंसायाम्। दुष्ठु निकृष्टे।

सु पूजायाम्। कु इति कुत्सितेषदर्थयोः। अञ्जसेति तत्त्वशीघ्रार्थयोः। मिथु इति द्वावित्यर्थे। अस्तमिति विनाशे। स्थाने इति युक्ते। वरमिति ईषदुत्कर्षे। सुदि शुक्लपक्षे। वदि कृष्णपक्षे इत्यादि। चादीनुदाहरति—चेत्यादिना। चेति समुच्चयान्वाचयेतरेतरयोगसमाहारेषु। 'वा स्याद्विकल्पोपमयोरिवार्थेऽपि समुच्चये'। हेति प्रसिद्धौ। अहेति पूजायाम्। एवेत्यवधारणेऽनवक्लृप्तौ च। एवमित्युक्तपरामर्शे। नूनमिति निश्चये तर्के च। शश्वदिति पौनःपुन्ये नित्ये सहार्थे च। युगपदित्येककाले। भूयस् पुनरर्थे आधिक्ये च। कूपदिति प्रश्ने प्रशंसायां च। कुविदिति भूर्यर्थे प्रशंसायां च। नेदिति शङ्कायां प्रतिषेधविचारसमुच्चयेषु च। चेदिति यद्यर्थे। चण्-अयं चेदर्थे। णानुबन्धस्तु 'निपातैर्यदिहन्तकुविन्नेच्चेचण्-' इति विशेषणार्थः। समुच्चयादौ त्वननुबन्धकः। कच्चिदितीष्टप्रश्ने। यत्रेति अनवक्लृप्त्यमर्षगर्हा-

---

सत्ताकर्तृत्वेनैव धनबोधादस्ति कथञ्चिदर्थतः साम्यमिति तद्भावः। स्वधाऽस्तीत्यस्याऽप्रामाणिकः पाठ इति तत्त्वम्। नमसिति। 'महसां' 'नमसा'मिति प्रयोगस्तु सत्त्ववाचकत्वे बोद्धव्यः। प्रताम् प्रशामिति। 'प्रतं'निति [illegible] 'प्रथा'-

नकीम्, माङ्, नञ्, यावत्, तावत्, त्वै, द्वै, [न्वै], रै, श्रौषट्, वौषट्, स्वाहा, स्वधा, तुम्, तथाहि, खलु, किल, अथो, अथ, सुष्ठु, स्म, आदह । ( ग ) उपसर्गविभक्तिस्वरप्रतिरूपकाश्च । अवदत्तम् । अहंयुः । अस्तिक्षीरा ।

---

श्चर्येषु । 'नावकल्पयामि न मर्षये गर्हे आश्चर्यं वा यत्र भवान् वृषलं याजयेत्' । **नहे**ति प्रत्यारम्भे । **हन्ते**ति हर्षे विषादेऽनुकम्पायां वाक्यारम्भे च । **माकिः, माकिं, नकि**रिति त्रयोऽपि वर्जने । **माङ्ञौ** स्वरादिषूक्तौ । इह पाठस्तु निपातत्वार्थः, तेनाद्युदात्तत्वं फलं सिध्यतीति केचित् । तदसत् । फिट्स्वरेणाऽपीष्टसिद्धेः । अन्ये त्वाहुः-सत्त्ववचनानामप्यव्ययसंज्ञार्थं स्वरादिपाठ इति । तदप्यसत् । लक्ष्मीवाचकस्यापि माशब्दस्याऽव्ययत्वापत्तेः । तस्मादुभयत्र पाठश्चिन्त्यप्रयोजनः । **यावत्तावदे**तौ साकल्याऽवधिमानावधारणेषु । **साकल्ये**—यावत्कार्यं तावत्कृतम् । **अवधौ**—यावद्गन्तव्यं तावत्तिष्ठ । **माने**—यावद्दत्तं तावद्भुक्तम् । **अवधारणे**—यावदमत्रं तावद्ब्राह्मणानामन्त्रयस्व । **त्वै**—विशेषवितर्कयोः । **द्वै**—वितर्के । **न्वै**—इति पाठान्तरम् । **रै** दाने अनादरे च । रै करोति । ददातीत्यर्थः । त्वं रै किं करिष्यसि । **श्रौषट्, वौषट्**—एतौ हविर्दाने । **स्वाहा** देवताभ्यो दाने । **स्वधेति** पितृभ्यः । **श्रौषडादी**नामनेकाचामुभयत्र पाठः स्वरभेदार्थः । **तु**मिति तुङ्कारे । 'गुरुं तुङ्कृत्य हुङ्कृत्य' । **तथाही**ति निदर्शने । **खलु** इति निषेधवाक्यालङ्कारनिश्चयेषु । **किले**ति वार्तायामलीके च । **अथो अथे**ति मङ्गलानन्तरारम्भप्रश्नकात्स्न्याधिकारप्रतिज्ञासमुच्चयेषु । अयं स्वरादावपि । तेन मङ्गलवाचकस्य सत्त्वार्थत्वेऽप्यव्ययत्वं सिध्यति । अतएव श्रीहर्षः—'उदस्य कुम्भीरथ शातकुम्भजाश्चतुष्कचारुत्विषि वेदिकोदरे । यथाकुलाचारमथाऽवनीन्द्रजां पुरन्ध्रिवर्गः स्नपयाम्बभूव ताम्' इति । अत्र हि 'अथ स्नपयांबभूवे'त्यस्य मङ्गलस्नपनं चकारेत्यर्थः । निपातस्तु स्वरूपेणैव मङ्गलं मृदङ्गध्वनिवत् ॥ **सुष्ठु**—स्वरभेदार्थ पाठः । **स्मे**त्यतीते पादपूरणे च । **आदहे**त्युपक्रमहिंसाकुत्सनेषु । 'आदह स्वधामन्नि'त्यत्र तु पदकारा 'आ'दिति पृथक् पदं पठन्ति । **अवदत्तमिति** । इह अवस्यानुपसर्गत्वात्

---

निति नान्तपाठोऽसांप्रदायिकः । मान्तानुकरणे नत्वाऽप्राप्तेः, स्वरादौ रुत्वादिवत् । कृन्मेजन्तसूत्रस्थभाष्यस्वरसोऽप्येवमेव । नञः स्वरादिष्वप्रामाणिकः पाठः । 'अव्यये नञ्कुनिपाताना'मित्यत्र पृथङ्-नञ्ग्रहणन्त्वकरणिरित्यादौ परस्यापि कृत्स्वरस्य बाधनार्थमित्याकरः । एवं **माङो**ऽपि स्वरादौ प्रक्षिप्तः पाठः । **यावत्तावच्छब्दावव्युत्पन्नौ** ।

**उपसर्गविभक्ति** । अत्र प्रतिरूपकत्वं [illegible] गृह्यते । 'गेये केन

अ, आ, इ, ई, उ, ऊ, ए, ऐ, ओ, औ । पशु, शुकम्, यथाकथाच, पाट्, प्याट्, अङ्ग, है, हे, भोः, अये, द्य, विषु, एकपदे, युत्, आतः । चादिरप्याकृतिगणः ॥

'अच उपसर्गात्तः' इति न भवति । **अहमिति** सुबन्तप्रतिरूपकमहङ्कारे । एवं 'गेये केन विनीतौ वा'मिति । युवामित्यर्थः । सुबन्तप्रतिरूपकमव्ययम् । **अस्तीति** तु तिङन्तप्रतिरूपकम् । एवं 'त्वामस्मि वच्मी'त्यत्राऽस्मीत्यहमर्थे तिङन्तप्रतिरूपकम् । **आहेत्युवाचेत्यर्थे** । **आसेति** बभूवेत्यर्थे ।-इत्यादि बोध्यम् । **अहंयुरिति** । 'अहं-शुभमोर्युस्' । यदि तु 'त्वाहौ सौ' इति मपर्यन्तस्याऽहादेशे शेषलोपे च कृते निष्पन्नो योऽहंशब्दस्तस्माद्युस्प्रत्ययः क्रियेत तर्हि सुपो लुकि अस्मद्युसिति स्थिते मदीय इत्यत्रेव मपर्यन्तस्य मादेशे सति 'मद्यु'रिति स्यादिति भावः । **अस्तिक्षीरेति** । तिङन्तत्वे तु बहुव्रीहिसमासोऽयं नोपपद्यत इति भावः । **अ** इति संबोधनेऽधिक्षेपे निषेधे च । **आ** इति वाक्यस्मरणयोः । **'इ'** संबोधनजुगुप्साविस्मयेषु । **ई उ ऊ ए ऐ ओ औ**-संबोधने । **पशु** सम्यगर्थे । 'पशु मन्यमानाः' । **शुकं**-शैघ्र्ये । **यथाकथाचे**त्यनादरे । **पाट्**प्रभृतयः सप्त संबोधने । **द्येति** हिंसाप्रातिलोम्यपादपूरणेषु । **विषु**-नानार्थे । **एकपदे**-इत्यकस्मादित्यर्थे । **युत्**-कुत्सायाम् । **आत** इति-इतोऽपीत्यर्थे ॥

**आकृतिगण इति** । तद्यथा-**यत्तदि**ति हेतौ । **आहोस्वि**द्विकल्पे । **सीभ**-सर्वतोभावे । **शुकम्**-अतिशये । **अनुकं** वितर्के । **शम्बट्**-अन्तःकरणे आभिमुख्ये च । **व** पादपूरणे इवार्थे च । **दिष्ट्येत्या**नन्दे । **चटु चाटु** प्रियवाक्ये । **हुमि**ति भर्त्सने । **इवेति** सादृश्ये । **अद्यत्वे** इति इदानीमित्यर्थे इत्यादि । अत्र स्वरादिचाद्योराकृतिगणत्वान्निशेषेऽपि येषां निपातस्वर इष्टस्ते चादिषु, अन्ये तु स्वरादिषु, स्वरद्वयभाजस्तूभयत्र बोध्याः ॥

विनीतौ वा'मित्यत्रापि 'वा'मित्यस्य युष्मत्प्रकृतिकविभक्त्यन्तसमानार्थत्वमस्त्येव । स्वरांशे तु नार्थतः, असंभवात् । एतेन 'युगं पतती'त्यादिव्युत्पत्त्याश्रयणेन 'युगप'दित्यादीनां विभक्तिप्रतिरूपकत्वादेव सिद्धे तेषां गणे पाठो व्यर्थ इत्यपास्तम् । एवन्तादित्यपि लुप्तषष्ठीकं विभक्तिप्रतिरूपकमव्ययम् । अत एव 'अविद्यातच्चितोर्योगः' 'तत्तदर्थविभाग'इत्यादौ 'त्यदादीनो'ति नैकशेषः । **अवदत्तमिति** । अत्र क्रिया-योगेपि **'अवदत्तं विदत्तञ्च प्रदत्तञ्चादिकर्मणि । सुदत्तमनुदत्तञ्च निदत्तमिति चेष्यते'** इति भाष्यवचनेनोपसर्गत्वाभावबोधनद्वारा तादेशाभावो बोद्धयतइत्याशयः । **आकृतीति** । 'अह'इत्य-द्दनीत्यर्थे । **ओमिति** च स्वरादिषु । तच्चाऽश्च उश्च म् चेति व्युत्पत्त्या त्रिगादिवाचकम्-'अवतेष्टि-लोपश्चे'ति सिद्धं-ब्रह्मण्यङ्गीकारे च । उभयोरपि स्वरादित्वं व्याख्यानात् । अन्ये 'कृन्मेजन्त'इति तु न सिद्ध्यति, 'च्विरव्यय'मित्युणादिपठितेन नियमादप्राप्तेः । 'उणादिव्युत्पन्नानां चेचादिस्वराद्यपठितानां

**तद्धितश्चाऽसर्वविभक्तिः** ।१।१।३८। यस्मात्सर्वा विभक्तिर्नोत्पद्यते स

**तद्धितश्चासर्वविभक्तिः । सर्वेति ।** वचनत्रयात्मिकेत्यर्थः । **नोत्पद्यत इति ।** किं त्वेकवचनमेवोत्पद्यत इति भावः । तद्धितः किम् ?, एकः । द्वौ । त्रयः । असर्वेत्यादि किम् ? । औपगवः । ननु पञ्चालाः गोदौ वरणा इत्यादावतिप्रसङ्गः । न च 'लुब्योगाप्रख्याना'दिति वदतां नैषां तद्धितान्तत्वमङ्गीकृतमिति नातिप्रसङ्ग इति वाच्यम्, एवमपि 'पचतिकल्पं' 'पचतिरूप'मित्यादावतिव्याप्तेर्दुर्वारत्वादित्याशङ्क्याह

भवति तर्हि च्व्यन्तानामेवे'ति तदर्थः । अन्यथा च्व्यन्तानां निपातत्वादेव सिद्धे तद्वैयर्थ्यं स्पष्टमेव । 'स्वरादिनिपात'मित्यत्र निपातपदे गौणमुख्यन्यायाऽप्रवृत्तिरनित्यत्वात् । अन्यथौदिति प्रगृह्यत्वमिवेदमपि न स्यात् । एवमतिशयेन साधुरित्यर्थे 'साधीय' इत्यपि । सर्वशब्दोऽत्र 'सर्वः पटो दग्धः'इतिवदवयवकार्त्स्न्ये इत्याशयेनाह–**यस्मात्सर्वेति** । वचनत्रयात्मिकेत्यर्थः । **नेति** । किन्त्वेकवचनमेवेत्यर्थः ।

ननु सङ्ख्याकारकबोधकैरेकवाक्यतया सुपां विधानमिति पक्षेऽव्ययार्थे सङ्ख्याकारकयोरभावात्कथं विभक्तिः ? । 'अव्ययादाप्सुप'इति ज्ञापकाश्रयणे च सर्वापि । किंच 'विहितानां नियम'इतिपक्षेऽपि नास्योपपत्तिः,तत्पक्षे सर्वेष्वर्थेषु विधेयतया प्रधानप्रत्ययानुरोधेन गुणभूतप्रकृतिभेदकल्पनेन सर्वविभक्त्युत्पत्तौ लोपेनेव जातस्य निवृत्तिः । तन्निवृत्तौ च कल्पितगुणस्वरूपं स्वत एव निवर्त्तते । नियमश्च द्विविधः । अर्थनियमः प्रत्ययनियमो वा । अन्त्योऽपि द्विविधः–प्रकृतार्थापेक्षः सामान्यापेक्षो वा । तत्र 'कर्माद्यर्थयोग्यप्रातिपदिकाच्चेत्कर्मणि विभक्तिस्तदा द्वितीयैव' । 'कर्मादिरहिते तद्योग्यप्रातिपदिकार्थे प्रातिपदिकात्प्रथमैवे'त्यादिरर्थनियमः । अत्र पक्षे सर्वाः सप्तापि विभक्तयोऽव्ययेभ्यो, विभक्तीनामनियतत्वात् । 'कर्माद्यर्थयोग्यप्रातिपदिकाच्चेद्द्वितीया तदा कर्मण्येव न करणादौ' । 'कर्मादियोग्ये तद्रहितप्रातिपदिकार्थे एव प्रथमा न कर्मादौ' । 'सङ्ख्यावदर्थयोग्यप्रातिपदिकादेकत्वादावेवैकवचनादि न द्वित्वादा'वित्यादिः प्रकृतार्थापेक्षः प्रत्ययनियमः । अत्रापि पक्षे सर्वाः सप्तापि विभक्तयोऽव्ययेभ्यो लभ्यन्ते । 'अथ प्रातिपदिकाच्चेद्द्वितीया तदा कर्मण्येव नान्यत्र' 'प्रातिपदिकाच्चेत्प्रथमा तदा मात्रग्रहणात्पर्युदासन्यायेन कर्मादियोग्यतद्रहितप्रातिपदिकार्थे एवे'त्यादि सामान्यापेक्षः प्रत्ययनियमः-तदाऽव्ययेभ्यो विभक्तिप्राप्तिरेव नेति पूर्वोक्तज्ञापकादेव सेति सर्वापि । यद्यपि सुपान्तिङां सङ्ख्याकर्माभयार्थकत्वेन कर्मण्येव नान्यत्रेति वक्तुमशक्यं तथापि कर्मण्येव न तु तदभावे इत्याकारो वक्तुं शक्यः । स्पष्टञ्चेदं सर्वं बहुष्वित्यादिसूत्रेषु भाष्ये । तत्र हि अर्थनियमे प्रकृतार्थापेक्षप्रत्ययनियमे च सप्तापि विभक्तयः संपूर्णा उक्ताः । सामान्यापेक्षप्रत्ययनियमे च सुपोऽप्राप्तिरेवोक्ता । 'अव्ययादाप्सुप'इति सूत्रे भाष्येऽपि स्फुटमिदमिति चेत्–अत्र **तद्धितश्चेति** सूत्रे भाष्यकृतः,–'एकवचन'मित्येव सूत्रं कार्यम्, एकग्रहणञ्च न कार्यं, विभक्तिविधावुद्देश्यतावच्छेदकावच्छिन्नादेकवचनमित्युत्सर्गः । तस्य द्वित्वबहुत्वयोरितरे बाधके भविष्यतः । एवञ्चैकत्ववत्यपि भविष्यति । अलिङ्गाऽसङ्ख्येभ्योऽव्ययेभ्यश्चैकवचनम् । द्विवचनादिविधायकयोर्द्विबहुग्रहणसामर्थ्यान्महासंज्ञाबोद्ध्यैकत्वाभावेपि तत्प्रवृत्तेः । द्वित्वबहुत्वयोर्द्विवचनबहुवचनोक्तावर्थादेकवचनस्यैकवचनमित्येतदन्वर्थं नियमं द्विलत्वाद्यभावे कर्मादौ सिद्धत्वेन साम-

तद्धितान्तोऽव्ययं स्यात्। परिगणनं कर्तव्यम्। तसिलादयः प्राक्पाशपः। शस्प्रभृतयः प्राक्समासान्तेभ्यः। अम्। आम्। कृत्वोर्थाः। तसिवती। नानाञाविति।

—परिगणनं कर्तव्यमिति। **तसिलादय इति**। 'पञ्चम्यास्तसि'लिति विहितो यस्तसिल् तदादयो 'याप्ये पाश'विति विहितपाशप्प्रत्ययपर्यन्ता इत्यर्थः। **शस्प्रभृतय इति**। 'बह्वल्पार्थात्—' इति विहितो यः शस्, तदादयः 'समासान्ताः' इति सूत्रपर्यन्ताः। **कृत्वोर्था इति**। 'सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसु'जिति विहिताः कृत्वसुजादयत्त्रयः। **तसिवती इति**। न च तसेः परिगणनं व्यर्थं, शस्प्रभृतित्वादेव 'प्रतियोगे पञ्चम्यास्तसिः' इत्यस्य लाभादिति वाच्यम्। तेनैकदिक्' 'तसिश्चे'त्येतदर्थतया तस्यावश्यकत्वात्। 'तेन तुल्य'मिति वतिः। **नानाञाविति**। 'विनञ्भ्यां नानाञौ

र्थ्यादप्राप्तप्रापणार्थमेतदिति कर्माद्यभावेऽप्येतत्प्रवर्त्तते इति विनिगमनाविरहात्सर्वविभक्त्येकवचनमनेन। अत एवाऽव्ययादाप्सुप इति प्रत्याहारग्रहणं चरितार्थं, तृतीयासप्तम्योरिति च। प्रथमाऽपि मात्रग्रहणाद्यत्र प्रातिपदिकार्थस्य कर्मत्वाद्याधिक्यसंभावना तत्रैवेति तस्या अप्यप्राप्तिरव्ययेभ्यः। 'पचतिकल्प'मित्यादौ तु नाऽनेन सर्वैकवचनम्। सर्वथाऽप्राप्तावेव तस्य विद्धवर्थत्वात्। अत्र च न तथा, कर्तृत्वकर्मत्वसत्त्वेन क्रियायां स्वत एकत्वसत्त्वेन सर्वथा तदप्राप्त्यभावादिति बोद्धव्यम्। यत्तु कैयटेन 'प्रथमातिक्रमे कारणाभावादनेकनियमबाधे गौरवाच्च प्रथमैकवचनस्यैवानेनोत्सर्गत्वं बोद्धयते' इति 'तद्धितश्चे'ति सूत्रे, रूपप्सूत्रे चोक्तम्। तन्न। स्वादिसूत्रे प्रथमायाः प्राथम्येपि नियमशास्त्रपर्यालोचनया द्वितीयाया अपि तत्त्वेन तस्याऽविनिगमकत्वात्। 'निजान्त्रयाणा'मित्यत्र त्रयाणां ग्रहणेनाद्युदात्तश्चेति सूत्रे आदिग्रहणेन च पाणिनिना स्वशास्त्रे एतन्न्यायानाश्रयणज्ञापनाच्च।

अत्रैव 'प्रथमा संपूर्णाऽव्ययेभ्यः' 'प्रथमाया एवैकवचन'मित्यादि पक्षान्तराणि अर्वाचीनग्रन्थे दृश्यन्ते तान्यसङ्गतानि, उक्तरीत्या तेषामुक्तिसंभवाऽभावात्। 'घट' इत्युक्ते एकत्वनिश्चयस्तु द्विवचनाद्यभावेन द्वित्वाद्यप्रतीतौ सङ्ख्यावदर्थत्वेन सत्त्वभूतत्वात्, प्रकरणाच्च। 'बहु'ष्वित्यादिसूत्रभाष्योक्तपक्षास्त्वेकदेशिनो न सिद्धान्तिन इति तत्त्वम्।

'असर्वविभक्ति'रिति बहुव्रीहिलभ्यो विशेष्य इत्याह—**तद्धितान्त इति**। केवलस्य तस्य तद्धितस्य प्रयोगाऽभावेन फलाभावात्संज्ञाविधावपि तदन्तविधिरिति भावः। नन्वेवमपि 'पचतिकल्प'मित्यादावतिव्याप्तिः, उक्तरीत्या तेषामसर्वविभक्तित्वात्। उभयशब्दे चाऽतिव्याप्तिः; ततो द्विवचनानुत्पादादत आह—**परिगणनमिति**। एवञ्च सूत्रं न कार्य्यमिति भावः। **तसिलादय इति**। 'पञ्चम्यास्तसि'लित्यारभ्य 'द्वित्र्योश्च धमु'ञित्यन्ता इत्यर्थः। **शस्प्रभृतय इति**। 'बह्वल्पार्थाच्छ'सित्यारभ्य 'अव्यक्तानुकरणा'दिति डाजन्ताः। यस्त्विवे प्रतिकृताविव्यधिकारे 'प्रत्नपूर्वविश्वेमात्थाल्छन्दसी'ति थाल्—तस्य स्वरादावास्थालाविति पाठेनाऽव्ययत्वम्। तत्र 'इण आसि'रित्युणादिसूत्रविहित **आसिः**। 'अया' इत्युदाहरणम्। आसिविधायके छन्दसीति नानुवर्त्तते। एवञ्च लोके विभक्तिरहितप्रयोगायाव्ययत्वमावश्यकम्। अत्र च स्वरादावास्थ एव तिर्हि ... **अम् आमि**-

तेनेह न,—पचतिकल्पम् । पचतिरूपम् ॥ **कृन्मेजन्तः ।१।१।३९।** कृद्यो मान्त एजन्तश्च तदन्तमव्ययं स्यात् । स्मारंस्मारम् । जीवसे । पिबध्यै ॥ **क्त्वातोसुन्कसुनः ।१।१।४०।** एतदन्तमव्ययं स्यात् । कृत्वा । उदेतोः । विसृपः ॥

---

न सहे'ति विहितौ । **पचतिकल्पमिति ।** अव्ययसंज्ञायां हि सत्यां सुपो लुक् स्यादिति भावः ॥

**कृन्मेजन्तः ।** अत्र 'मेजन्त' इत्येतच्छ्रुतत्वात्कृत एव विशेषणं नतु कृदन्तस्याऽश्रुतस्य । अन्यथा 'प्रतामौ' 'प्रतामः' । लवमाचष्टे णौ क्विपि णिलोपे वस्योठि वृद्धौ च लौः । अत्रापि प्रसज्येतेति भावः । भवति ह्येतत्प्रत्ययलक्षणेन कृदन्तम्, एजन्तं च श्रूयते इति, तदाह-**कृद्यो मान्त एजन्त इति । स्मारंस्मारमिति ।** स्मरतेः 'आभीक्ष्ण्ये णमुल् चे'ति णमुल् । वृद्धिः । रपरत्वम् । 'नित्यवीप्सयोः' इति द्वित्वम् । **जीवसे इति ।** 'तुमर्थे सेसेन्' इत्यसेप्रत्ययः । **पिबध्यै इति ।** 'तुमर्थे' इत्यनेनैव 'शध्यै'प्रत्ययः । 'पाघ्रे'ति पिबादेशः । 'येन विधिस्तदन्तस्ये'त्यनेनैव सिद्धे सूत्रेऽन्तग्रहणमौपदेशिकप्रतिपत्त्यर्थं, तेनेह न–आधये । चिकीर्षवे । लक्षणप्रतिपदोक्तसंनिपातपरिभाषाभ्यां सिद्धे तयोरनित्यत्वज्ञापनायेदमिति मनोरमायां स्थितम् । एतच्च 'अव्ययादाप्सुप'इत्यत्राव्ययात्परस्य सुपो लु'गिति यथाश्रुतव्याख्यानमभिप्रेत्योक्तम् । 'अव्ययाद्विहितस्ये'ति व्याख्याने त्वाधये इत्यादौ अव्ययसंज्ञायामनिष्टान्तरमूह्यम् । **क्त्वातोसुन्कसुनः ।**

---

ति । 'अमु च छन्दसि' 'किमेत्ति'ङितिविहितौ । **कृत्वोर्था इति ।** कृत्वसुच्सुच्धाः । **तसिवतीति ।** 'तेनैकदिक्' 'तसिश्च' 'तेन तुल्य'मित्यादिना विहितौ । एवञ्च स्वरादिषु 'व'दिति पाठे फलं चिन्त्यम् । **नानाञाविति ।** 'विनञ्भ्यां नानाञौ न सहे'ति विहितौ ॥

**कृन्मेजन्तः । कृद्यो मान्त इति ।** 'कारया'मित्यामन्ते 'आम' इति लुकेष्टसिद्धिरिति भाव इत्याकरे विस्तरः । कृदन्तस्य तु नैतद्विशेषणं, गणे प्रशाम्शब्दपाठात् । अन्यथा श्रुत्या मान्तत्वेन प्रत्ययलक्षणात्कृदन्तत्वे चानेनैव सिद्धे तत्पाठवैयर्थ्यं स्पष्टमेव । तेन 'प्रतामौ' लवमाचक्षाणौ 'लौ'रित्यादौ नातिप्रसङ्गः । न चा'ऽऽधये' 'हे आधे' 'कुम्भकारेभ्य' इत्यादौ गुणे एत्वे च कृते एजन्तत्वेन सञ्ज्ञापत्तिः । न च बहिरङ्गत्वं गुणादेः, सञ्ज्ञायाः कार्यार्थत्वात्सञ्ज्ञाकार्यस्य तत्त्वेन सञ्ज्ञाया अपि तत्त्वात्, लिङ्गसङ्ख्याद्यन्वयित्वेऽप्यव्ययीभावादाविवात्राऽप्यस्य प्राप्तेरिति वाच्यं, सन्निपातपरिभाषया बाधात् । न च तया सन्निपातविघातकलुको बाधेऽपि सञ्ज्ञाबाधे मानाभाव इति वाच्यम्, एजिप्रत्ययसन्निपातनिमित्तकाऽऽत्त्वीयसन्निपातविघातकस्य 'क्ङिति चे'ति निषेधस्य तया निवृत्तावपि 'उपादास्ते'त्यत्र कित्त्वापत्तेः। कित्त्वफलन्तु तत्सन्नियोगशिष्टेत्त्वसिद्धिः, एवञ्चोपादितेति स्यात् । तत्रहि 'कि'दिति व्यपदेशातिदेश एव, इत्त्वप्रवृत्तिकाले कित्कार्यस्यातिदेश्यस्याऽभावात् । तस्मादनया सन्निपातविघातकशास्त्रस्येव तत्तच्छास्त्रप्रवृत्तिनिमित्तातिदेशसञ्ज्ञानामपि निवृत्तिः साक्षात् परम्परया वा

अव्ययीभावश्च ।१।१४१। [अव्ययीभावश्चाऽव्ययसञ्ज्ञः स्यात्]। अधिहरि ॥

**क्त्वेति**। 'समानकर्तृकयोः' इत्यादिना क्त्वा। **उदेतोरिति**। उत्पूर्वादिणो 'भावलक्षणे स्थे'णित्यादिना 'तोसुन्'। **विसृप इति**। 'सृपितृदोः कसुन्'। **अव्ययीभावश्च**। अव्ययसंज्ञः स्यात्। इह 'लुकि मुखस्वरोपचारयोर्निवृत्तौ चे'ति परिगणनं कर्तव्यम्। लुक्युदाहरणम्—उपाग्नि। 'अव्यया'दिति सुपो लुक्। मुखस्वरनिवृत्तौ उदाहरणम्—उपाग्निमुखः। प्रत्यग्निमुखः। 'मुखं स्वाङ्ग'मित्युत्तरपदान्तोदात्तत्वे प्राप्ते 'नाव्ययदिक्शब्दे'-त्यादिना प्रतिषेधः। तथाच 'बहुव्रीहौ प्रकृत्ये'ति पूर्वशब्दप्रकृतिस्वर एव भवति, पूर्वपदं च समासस्वरेणाऽन्तोदात्तम्। विसर्गस्थानिकस्य सकारस्य 'उपचार' इति प्राचां संज्ञा,तन्निवृत्तावुदाहरणम्—उपपयःकारः। उपपयःकामः। इह 'अतः कृकमी'ति प्राप्तं सत्वम् 'अनव्ययस्ये'ति पर्युदस्यते। परिगणनं किम्?। उपाग्न्यधीयान। इह 'सुबामन्त्रिते' इति पराङ्गवद्भावेन षाष्ठम् 'आमन्त्रितस्य चे'त्याद्युदात्तत्वं यथा स्यात्। पराङ्गवद्भावे हि अव्ययानां प्रतिषेध उपसङ्ख्यातः 'उपाग्न्यधीयाने'त्यादौ मा भूदिति। तथा 'उपाग्निक'मित्यादौ 'अव्ययसर्वनाम्ना'मित्यकच्च न। उपकुम्भंमन्यः। 'खित्यनव्ययस्ये'ति वर्तमाने 'अरुर्द्विषदजन्तस्ये'ति विहितो यो मुम्तस्येह प्रतिषेधो न। उपकुम्भीभूतः।—इह 'अस्य च्वौ' इतीत्वस्य प्रतिषेधो न। इत्वविधौ हि 'अव्ययस्य च्वावितीत्वं ने'ति प्रतिषेध उच्यते—दोषाभूतमहः दिवाभूता रात्रिरित्यत्र मा भूदिति।

स्यादेतत्—स्वरादित्वेनैव सिद्धत्वात् 'तद्धितश्चे'त्यादि चतुःसूत्री व्यर्था। तत्र हि 'तसिलादिस्तद्धित एधाच्पर्यन्तः' इत्यादिना 'च्व्यर्थाश्चे'त्यन्तेनासिप्रत्ययमौणादिकं वर्जयित्वा 'तद्धितश्चासर्वविभक्तिः' इत्यस्यार्थः सङ्गृह्यते। 'कृन्मकारसन्ध्यक्षरान्तः' इत्यनेन 'कृन्मेजन्तः' इत्यस्यार्थः सङ्गृह्यते। 'क्त्वातोसुन्कसुनः' 'अव्ययीभावश्चे'ति सूत्रद्वयं तु स्वरूपेणैव पठ्यत इति। अत्राहुः—पुनर्वचनमनित्यत्वज्ञापनार्थम्। तेन प्रागुक्तं 'लुङ्मुखस्वरोपचाराः' इति परिगणनं लभ्यते। 'पुरा सूर्यस्योदेतोराधेयः'। 'पुरा क्रूरस्य विसृपो विरप्शि'मित्यासिद्धये 'न लोकाव्यये'त्यत्र 'अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः' इति वक्ष्यते तदप्यनेनैव लभ्यत इति।

---

स्वसन्निपातविघातकस्य स्वमनिमित्तमिति परिभाषार्थः। एतेनाऽत्राऽकजादि स्यादित्यपास्तम्। अकजाद्येकवाक्यतापन्नाऽव्ययसञ्ज्ञायां गुणादेरसिद्धत्वाच्च। लुगेकवाक्यतापन्ना तु न गुणादितो-ऽन्तरङ्गा, उभयोरपि ... ॥

तेनेह न,—पचतिकल्पम् । पचतिरूपम् ॥ **कृन्मेजन्तः** ।१।१।३९। कृद्यो मान्त एजन्तश्च तदन्तमव्ययं स्यात् । स्मारंस्मारम् । जीवसे । पिबध्यै ॥ **क्त्वातोसुन्कसुनः** ।१।१।४०। एतदन्तमव्ययं स्यात् । कृत्वा । उदेतोः । विसृपः ॥

---

न सहे'ति विहितौ । **पचतिकल्पमिति** । अव्ययसंज्ञायां हि सत्यां सुपो लुक् स्यादिति भावः ॥

**कृन्मेजन्तः** । अत्र 'मेजन्त' इत्येतच्छ्रुतत्वात्कृत एव विशेषणं नतु कृदन्तस्याऽश्रुतस्य । अन्यथा 'प्रतामौ' 'प्रतामः' । लवमाचष्टे णौ क्विपि णिलोपे वस्योठि वृद्धौ च लौः । अत्रापि प्रसज्येतेति भावः । भवति ह्येतत्प्रत्ययलक्षणेन कृदन्तम्, एजन्तं च श्रूयते इति, तदाह-**कृद्यो मान्त एजन्त इति** । **स्मारंस्मारमिति** । स्मरतेः 'आभीक्ष्ण्ये णमुल् चे'ति णमुल् । वृद्धिः । रपरत्वम् । 'नित्यवीप्सयोः' इति द्वित्वम् । **जीवसे इति** । 'तुमर्थे सेसेन्' इत्यसेप्रत्ययः । **पिबध्यै इति** । 'तुमर्थे' इत्यनेनैव 'शध्यै'प्रत्ययः । 'पाघ्रे'ति पिबादेशः । 'येन विधिस्तदन्तस्ये'त्यनेनैव सिद्धे सूत्रेऽन्तग्रहणमौपदेशिकप्रतिपत्त्यर्थं, तेनेह न—आधये । चिकीर्षवे । लक्षणप्रतिपदोक्तसंनिपातपरिभाषाभ्यां सिद्धे तयोरनित्यत्वज्ञापनायेदमिति मनोरमायां स्थितम् । एतच्च 'अव्ययादाप्सुप' इत्यत्राव्ययात्परस्य सुपो लु'गिति यथाश्रुतव्याख्यानमभिप्रेत्योक्तम् । 'अव्ययाद्विहितस्ये'ति व्याख्याने त्वाधये इत्यादौ अव्ययसंज्ञायामनिष्टान्तरमूह्यम् । **क्त्वातोसुन्कसुनः** ।

---

ति । 'अमु च छन्दसि' 'किमेत्ति'ङितिविहितौ । **कृत्वोर्था इति** । कृत्वसुच्सुच्धाः । **तसिवतीति** । 'तेनैकदिक्' 'तसिश्च' 'तेन तुल्य'मित्यादिना विहितौ । एवञ्च स्वरादिषु 'व'दिति पाठे फलं चिन्त्यम् । **नानाञाविति** । 'विनञ्भ्यां नानाञौ न सहे'ति विहितौ ॥

**कृन्मेजन्तः** । **कृद्यो मान्त इति** । 'कारया'मित्यामन्ते 'आम' इति लुकेष्टसिद्धिरिति भाव इत्याकरे विस्तरः । कृदन्तस्य तु नैतद्विशेषणं, गणे प्रशाम्शब्दपाठात् । अन्यथा श्रुत्या मान्तत्वेन प्रत्ययलक्षणात्कृदन्तत्वे चानेनैव सिद्धे तत्पाठवैयर्थ्यं स्पष्टमेव । तेन 'प्रतामौ' लवमाचक्षाणौ 'लौ'रित्यादौ नातिप्रसङ्गः । न चा'ऽऽधये' 'हे आधे' 'कुम्भकारेभ्य' इत्यादौ गुणे एत्वे च कृते एजन्तत्वेन सञ्ज्ञापत्तिः । न च बहिरङ्गत्वं गुणादेः, सञ्ज्ञायाः कार्यार्थत्वात्सञ्ज्ञाकार्यस्य तत्त्वेन सञ्ज्ञाया अपि तत्त्वात्, लिङ्गसङ्ख्यायन्वयित्वेऽप्यव्ययीभावादाविवात्राऽप्यस्य प्राप्तेरिति वाच्यं, सन्निपातपरिभाषया बाधात् । न च तया सन्निपातविघातकत्वको बाधेऽपि सञ्ज्ञाबाधे मानाभाव इति वाच्यम्, एजित्रयसन्निपातनिमित्तकाऽऽत्त्वीयसन्निपातविघातकस्य 'क्ङिति चे'ति निषेधस्य तया निवृत्तावपि 'उपादास्ते'त्यत्र कित्वापत्तेः। कित्वफलन्तु तत्सन्नियोगशिष्टेत्त्वसिद्धिः, एवञ्चोपादिस्तेति स्यात् । तत्रहि 'कि'दिति व्यपदेशातिदेश एव, इत्त्वप्रवृत्तिकाले कित्कार्यस्यातिदेश्यस्याऽभावात् । तस्मादनया सन्निपातविघातकशास्त्रस्येव तत्तच्छास्त्रप्रवृत्तिनिमित्तातिदेश्यसञ्ज्ञानामपि निवृत्तिः [illegible] परम्परया वा

अव्ययीभावश्च ।१।१४१। [अव्ययीभावश्चाऽव्ययसञ्ज्ञः स्यात्] । अधिहरि ॥

क्त्वेति । 'समानकर्तृकयोः' इत्यादिना क्त्वा । **उदेतोरिति** । उत्पूर्वादिणो 'भावलक्षणे स्थे'णित्यादिना 'तोसुन्' । **विसृप इति** । 'सृपितृदोः कसुन्' । **अव्ययीभावश्च** । अव्ययसंज्ञः स्यात् । इह 'लुकि मुखस्वरोपचारयोर्निवृत्तौ चे'ति परिगणनं कर्तव्यम् । लुक्युदाहरणम्-उपाग्नि । 'अव्यया'दिति सुपो लुक् । मुखस्वरनिवृत्तौ उदाहरणम्-उपाग्निमुखः । प्रत्यग्निमुखः । 'मुखं स्वाङ्ग'मित्युत्तरपदान्तोदात्तत्वे प्राप्ते 'नाव्ययदिक्शब्दे'-त्यादिना प्रतिषेधः । तथाच 'बहुव्रीहौ प्रकृत्ये'ति पूर्वशब्दप्रकृतिस्वर एव भवति, पूर्वपदं च समासस्वरेणाऽन्तोदात्तम् । विसर्गस्थानिकस्य सकारस्य 'उपचार' इति प्राचां संज्ञा, तन्निवृत्तावुदाहरणम्—उपपयःकारः । उपपयःकामः । इह 'अतः कृकमी'ति प्राप्तं सत्वम् 'अनव्ययस्ये'ति पर्युदस्यते । परिगणनं किम् ?। उपाग्न्यधीयान । इह 'सुबामन्त्रिते' इति पराङ्गवद्भावेन षाष्ठम् 'आमन्त्रितस्य चे'त्याद्युदात्तत्वं यथा स्यात् । पराङ्गवद्भावे हि अव्ययानां प्रतिषेध उपसङ्ख्यातः 'उपाग्न्यधीयाने'त्यादौ मा भूदिति । तथा 'उपाग्निक'मित्यादौ 'अव्ययसर्वनाम्ना'मित्यकच्च न । उपकुम्भंमन्यः । 'खित्यनव्ययस्ये'ति वर्तमाने 'अरुर्द्विषदजन्तस्ये'ति विहितो यो मुम्तस्येह प्रतिषेधो न । उपकुम्भीभूतः ।-इह 'अस्य च्वौ' इतीत्वस्य प्रतिषेधो न । इत्वविधौ हि 'अव्ययस्य च्वावितीत्वं ने'ति प्रतिषेध उच्यते-दोषाभूतमहः दिवाभूता रात्रिरित्यत्र मा भूदिति ।

स्यादेतत्-स्वरादित्वेनैव सिद्धत्वात् 'तद्धितश्चे'त्यादि चतुःसूत्री व्यर्था । तत्र हि 'तसिलादिस्तद्धित एधाच्पर्यन्तः' इत्यादिना 'च्व्यर्थाश्चे'त्यन्तेनासिप्रत्ययमौणादिकं वर्जयित्वा 'तद्धितश्चासर्वविभक्तिः' इत्यस्यार्थः सङ्गृह्यते । 'कृन्मकारसन्ध्यक्षरान्तः' इत्यनेन 'कृन्मेजन्तः' इत्यस्यार्थः सङ्गृह्यते । 'क्त्वातोसुन्कसुनः' 'अव्ययीभावश्चे'ति सूत्रद्वयं तु स्वरूपेणैव पठ्यत इति । अत्राहुः-पुनर्वचनमनित्यत्वज्ञापनार्थम् । तेन प्रागुक्तं 'लुङ्मुखस्वरोपचाराः' इति परिगणनं लभ्यते । 'पुरा सूर्यस्योदेतोराधेयः' । 'पुरा क्रूरस्य विसृपो विरप्शि'मित्यासिद्धये 'न लोकाव्यये'त्यत्र 'अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः' इति वक्ष्यते तदप्यनेनैव लभ्यत इति ।

---

स्वसन्निपातविघातकस्य स्वमनिमित्तमिति परिभाषार्थः । एतेनाऽत्राऽकजादि स्यादित्यपास्तम् । अकजाद्येकवाक्यतापन्नाऽव्ययसञ्ज्ञायां गुणादेरसिद्धत्वाच्च । लुगेकवाक्यतापन्ना तु न गुणादितोऽन्तरङ्गा, उभयोरपि शब्दतः सुबाश्रयत्वात् ॥

**अव्ययादाप्सुपः** ।२।४।८२। अव्ययाद्विहितस्यापः सुपश्च लुक्स्यात् । तत्र शालायाम् । विहितविशेषणान्नेह,–अत्युच्चैसौ । अव्ययसंज्ञायां यद्यपि तदन्तविधिरस्ति तथापि न गौणे । **'आब्ग्रहणं व्यर्थमलिङ्गत्वात्'** ॥

**अव्ययादाप्सुपः** । 'ण्यक्षत्रियार्षे'ति सूत्राल्लुगत्रानुवर्तत इत्याह–**लुक्स्यादिति** । 'अव्यय'मिति महासंज्ञाकरणमन्वर्थसंज्ञाविधानार्थम् । **न व्येति**–विविधं विकारं न गच्छति । सत्त्वधर्मान् लिङ्गसङ्ख्यादीन्न गृह्णातीति यावत् । तेनात्युच्चैसौ अत्युच्चैसः इत्यादिसिद्धिः । अतिक्रान्तप्रधानत्वेन सत्त्वधर्मपरिग्रहादव्ययसंज्ञाया अत्राऽभावात् । नन्वेवमप्युच्चैःशब्दस्याव्ययत्वानपायात्सुपो लुग्दुर्वार इत्यत आह–**विहितविशेषणादिति । अत्युच्चैसाविति** । ननु अत्यादयः क्रान्ताद्यर्थे द्वितीयान्तेन समस्यन्ते, उच्चैःशब्दस्त्वधिकरणशक्तिमत्प्रधान इति कर्मत्वाऽयोगान्न तस्य द्वितीयान्तता । सत्यम् । शक्तिप्रधानान्यपि कानिचिदव्ययानि वृत्तिविषये शक्तिमत्प्रधानानि क्वचिद्भवन्ति । यथा दोषामन्यमहः । दिवामन्या रात्रिरिति । ततश्च प्रक्रियादशायामुच्चैःशब्दस्य द्वितीयान्तत्वं संभवतीति दिक् । ननु स्वरादिषु उच्चैःशब्दः पठ्यते तत्र कथं तदन्तस्य प्रसङ्ग इति चेन्न, अन्वर्थसंज्ञयैव तदन्तविधेरपि ज्ञापनात् । अन्यथा उपसर्जने प्रसङ्गाभावेन तन्निवृत्त्यर्थाया अन्वर्थसंज्ञाया वैयर्थ्यापत्तेः । तेन 'परमस्वः' 'परमोच्चै'रित्यादौ सत्त्वधर्मापरिग्रहादव्ययत्वं सिद्धम् । तदेतदाह–**अव्ययसंज्ञायां यद्यपीत्यादि** । 'अव्ययादापो लुग्वचनानर्थक्यं लिङ्गाऽभावा'दिति वार्तिकं मनसि निधायाह—**आब्ग्रहणं व्यर्थमिति** । सूत्रस्योक्तिसंभवस्तु 'स्त्रिया'मिति सूत्रे

**अव्ययादा** । 'ण्यक्षत्रिये'त्यतो लुगनुवर्त्तते । **विहितेति** । अङ्गसञ्ज्ञायां विहितत्वांऽशप्रवेशेन विहितप्रत्ययनिरूपिताऽङ्गविशेषणादित्यर्थः । आप्सुभ्यामाक्षिप्ताङ्गस्याव्ययरूपस्यैव प्रत्यासत्त्या ग्रहणमिति भावः । तेन 'कुम्भकारेभ्य' इत्यादौ सन्निपातपरिभाषयाऽव्ययसञ्ज्ञानिवृत्तिद्वारा लुङ्निवृत्तिपरभाष्येण न विरोधः । **अत्युच्चैसाविति** । अत्राऽधिकरणशक्तिप्रधानस्याप्युच्चैश्शब्दस्य वृत्तिविषये शक्तिमत्प्रधानत्वाद्द्वितीयान्ततयाऽत्यादयः क्रान्ताद्यर्थे इति समासेऽवयवभूतोच्चैःशब्दादव्ययात्परत्वेन लुक् स्यात् । समुदायस्य तु नाव्ययत्वं, लिङ्गाद्यन्वयित्वादित्यभिमानः । समुदायस्यापि तत्त्वमाशङ्क्य समाधत्ते–**यद्यपीति । तदन्तेति** । शब्दस्य विशेष्यत्वात् । 'प्रयोजनं सर्वनामाव्ययसञ्ज्ञाया'मिति वाचनिकस्तदन्तविधिरिति भावः । **न गौणे इति** । अयं भावः–'सामानाधिकरण्यसंबन्धेन लिङ्गाद्यनन्वय्यर्थबोधकत्वविशिष्टाव्ययपदवत्त्वेनाव्ययपदं बोधकमिति तादृशमहासञ्ज्ञाकरणात्तादृशार्थानां गणेऽनुकरणावश्यकत्वे इतरेषामनुकरणे मानाभावेन समुदायस्य नाव्ययत्वमिति । वस्तुतोऽत्रार्थस्य प्रधानाप्रधानभावेन सर्वनामसञ्ज्ञावदव्ययसंज्ञाया अप्रसिद्धेरङ्गपदान्तरानपेक्षानुपसर्जनी

'सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्॥'

—इति श्रुतिर्लिङ्गसङ्ख्याकारकाऽभावपरा॥

'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः।
आपं चैव हलन्तानां यथा वाचा निशा दिशा॥'

वगाहः। अवगाहः। पिधानम्। अपिधानम्॥ ॥ इत्यव्ययानि॥

---

स्त्रीसमानाधिकरणादिति पक्षं गृहीत्वेति बोध्यः। स च न स्थितः; 'भूतमियं ब्राह्मणी'-त्यादावतिव्याप्तेः। यदि तु 'आमः' इति सूत्रानन्तरं 'सुपो धातुप्रातिपदिकयोरव्यया' दिति सूत्र्यते तदा सुब्ग्रहणमपि व्यर्थं, 'सुप' इत्यनुवृत्तिसंभवादिति नव्याः।

अलिङ्गत्वे आथर्वणप्रणवविद्यागतश्रुतिविरोधमाशङ्क्याह-**सदृशमिति**। एतेषु यन्न व्येति किंतु सदृशम् एकप्रकारं तदव्ययमिति योजना। यद्वा-यस्मान्न व्येति तदव्ययम्। **लिङ्गसङ्ख्याकारकेति**। विभक्तिवचनशब्दौ कारकसङ्ख्यापराविति भावः। यद्यप्यव्ययीभावस्य लिङ्गसङ्ख्याकारकयोगोऽस्ति तथापि वचनादव्ययत्वम्। अव्ययविशेषे कार्यान्तरमाह-**वष्टीति**। भागुरिराचार्यः। **आपं चैवेति**। 'वष्टी'त्यनुषज्यते। **यथा वाचेति**। परिगणनमिदमित्येके। अन्ये तूदाहरणमात्रमित्याहुः। **वगाह इति**। अपिना साहचर्यादादिरेवाकारो लुप्यते नान्त्य इति भावः॥

**इति तत्त्वबोधिन्यामव्ययप्रकरणम्।**

---

भूतस्यैव लिङ्गाद्यनन्वयिनो ग्रहणेन न समुदायस्य नाप्यवयवस्य सञ्ज्ञा। अत एव भाष्ये सर्वनामसञ्ज्ञासूत्रस्थोपसर्जनप्रतिषेधानुवृत्त्याऽत्युच्चैसावित्यादावव्ययत्वाऽभावमुक्त्वा तत्प्रत्याख्यानरीत्यैवाऽत्राप्येतत्प्रत्याख्यानमुक्तम्। एवञ्च विहितविशेषणमङ्गाक्षेपो वा व्यर्थ एव, अव्ययात्परत्वस्याप्यभावात्। 'उच्चैरौ' 'उच्चैराभ्या'मित्यादेरभिधाने तु न मानम्। अत एव भाष्ये एतन्नोक्तम्।

**अलिङ्गत्वादिति**। नन्विदं 'सदृशन्त्रि'ष्विति विरुद्धमत आह-**लिङ्गेत्यादि**। अयं भावः-यथोपक्रमोपसंहाराभ्यां ब्रह्मपराया अप्यस्याः श्रुतेर्भाष्यप्रामाण्यादत्रोपसंहारस्तथा तत्प्रमाण्यादेव लिङ्गाद्यभावपरताऽपीति। विभक्तिवचनशब्दौ-कारकसङ्ख्यापरौ, प्रत्ययपरत्वेऽन्यतरवैयर्थ्यापत्तेः। **लिङ्गेष्वित्यादि** विषयसप्तमी। तत्तद्विषये सादृश्यञ्च-लिङ्गाद्यभावाश्रयत्वेन। लिङ्गाभावेन सादृश्यमव्ययीभावातिरिक्तविषयं, तस्य लिङ्गयोगसत्त्वात्। सङ्ख्याऽभावस्तु सर्वसाधारणः। तदभावादिसादृश्यादेव यद्विविधं रूपं तन्न प्राप्नोतीत्यर्थः।

प्रसङ्गादाह-**वष्टीति**। वशेश्छान्दसत्वेनेह प्रयोगश्चिन्त्यः। **भागुरिराचार्यः**। अपिसाहचर्याद्वस्याप्यादेरकारस्यैव लोपः। इदं भाष्ये न दृश्यते। निर्दिशोरिगुपधलक्षणे केऽदन्तत्वादेव टाप्।

## अथ स्त्रीप्रत्ययप्रकरणम् ।

**स्त्रियाम्** ।४।१।३। अधिकारोऽयम् । 'समर्थाना'मिति यावत् ॥ **अजाद्यतष्टाप्** ४।१।४। अजादीनामकारान्तस्य च वाच्यं यत्स्त्रीत्वं तत्र द्योत्ये टाप्स्यात् ।

---

**अथ स्त्रीप्रत्ययप्रकरणम् । अजाद्यतः ।** अजशब्दः आदिर्यस्येति बहुव्रीहिः । अच् आदिर्यस्येति तु नाऽर्थः, 'ऋची'ति निर्देशात्, गणपाठसामर्थ्याच्च। 'अ'दिति न स्वरूपग्रहणम्, 'सङ्ख्याया'–इति लिङ्गात्, अजादिभ्यः पृथक्पाठसामर्थ्याच्च । इह 'ङ्याप्प्रातिपदिका'दित्यधिकारेऽपि ङ्यापौ न संबध्येते इहैव तयोर्विधेयत्वात्, अपि तु प्रातिपदिकमेव । तच्चाऽकारेण विशिष्यते । विशेषणेन च तदन्तत्वलाभः, तदाह– **अजादीनामकारान्तस्य चेति** । सूत्रे 'अतः' इति षष्ठी । तदर्थश्च वाच्यवाचकभावः । 'स्त्रिया'मिति तु धर्मप्रधानो निर्देश इत्याशयेनाह–**वाच्यं यत्स्त्रीत्वमिति** । एतच्च 'लिङ्गं प्रातिपदिकार्थ'इति पक्षाभिप्रायेणोक्तम्। 'कस्माद्भवती'त्याकाङ्क्षायां संनिधानादजादिभ्योऽकारान्ताच्चेति बोध्यम् । 'इको यणची'त्यत्र कस्मादचि पर इत्याकाङ्क्षायामिक इति यथा । टापः पकारः स्वरार्थः, 'औङ आपः', 'आङि

---

किनि-दिगित्यपि । अत एव 'ङ्याप्प्रातिपदिका'दिति सूत्रे 'आब्ग्रहणं न कार्यम्, अकारान्ताट्टाप्, तत्रान्तवद्भावात्प्रातिपदिकत्वेनैव सिद्धम्। यस्तर्ह्यनकारान्तात् क्रुधा उष्णिहा देवविशेति ?, अत्राप्यकारान्तादेव–'क्रुधानालभेत उष्णिहककुभौ देवविश'मिति । अन्त्ये कप्रत्यय एवं विषय इत्युक्त्वा बहुराजेति डाबन्तार्थमाब्ग्रहण'मिति भाष्ये उक्तं सङ्गच्छते । तस्माद्वाचेत्यसाध्वेवेति शिवम् । **इत्यव्ययानि ।**

**अथ स्त्रीप्रत्ययाः । स्त्रियाम् ।** अचेतनखट्वावृक्षादिसाधारणं लिङ्गन्तु सत्त्वादीनां गुणानामुपचयापचयस्थितिरूपं क्रमेण पुंस्त्रीनपुंसकाख्यम्–'एकार्थे शब्दान्यत्वादृष्टं लिङ्गान्यत्व'मिति भाष्योक्तेरर्थनिष्ठं केवलान्वयि । 'इयं व्यक्ति''रिदं 'वस्त्व''यं पदार्थ'इति त्रिविधव्यवहारस्य पदार्थमात्रे सत्त्वात्। केन चिच्छब्देन किंचिद्वस्तु एकैकलिङ्गविशिष्टमेव,केन चित्पर्यायेण लिङ्गद्वयविशिष्टं, केन चिल्लिङ्गत्रयविशिष्टमिति लिङ्गानुशासनादितो निर्णेयम् । तत्र 'स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृत'इत्यादिलौकिकलिङ्गाऽसम्भवे शास्त्रीयं कार्यं शास्त्रीये उक्त एव । तत्संभवे तु शास्त्रीयविशिष्टे लौकिके। शास्त्रीयमपि शब्दतो बुद्ध्यते, तथाऽनुभवात् । उपचयाऽपचययोः स्थितेरपि सत्त्वेन तन्मात्रविवक्षायां 'सामान्ये नपुंसक'मिति प्रवाद इत्यन्यत्र विस्तरः । 'अत'इति वर्णग्रहणात्तदन्तविधिस्तदाह–**अकारान्तस्य चेति । वाच्यं यत्स्त्रीत्वमिति ।** तद्वाच्याऽर्थगतं यत्तद्वाच्यं स्त्रीत्वमित्यर्थः । एवं व्याख्याने फलमग्रे स्फुटम् । **तत्र द्योत्ये इति ।** प्रत्ययार्थत्वे हि तस्य विशेष्यतापत्तिः । द्योत्यस्य तु विशेषणत्वमेवेति स्पष्टमाकरे । वागादिषु विनापि टाबादिकं तस्य बोधाच्च । अत एव 'व्यावक्रोशी'त्यादौ 'कर्मव्यतिहारे णच्स्त्रिया'मिति णचि 'णचः स्त्रिया'मित्यञि च ङीप्सिद्धिः । व्यतिलुनीते'इत्यादौ 'द्विर्बद्धं सुबद्धं भवती'ति न्यायेन [द्योतक]समुच्चयस्य दृष्टत्वात्। **टाप्स्यादिति ।** स चाऽधिकारात्प्रा-

अजाद्युक्तिर्ङीपो ङीपश्च बाधनाय । अजा । अतः-खट्वा । अजादिभिः स्त्रीत्वस्य

चापः', 'याडापः', इत्यादौ सामान्यग्रहणार्थश्च । तद्विधानार्थष्टकारः । आ'-वित्युक्ते हि तदनुबन्धपरिभाषया 'औङ आपः' इत्यादावयमेव गृह्येत, डाप्चापोस्तु ग्रहणं न स्यात् । नन्वत इत्येव सिद्धे अजादिग्रहणं व्यर्थम्, न च 'क्रुञ्चा' 'उष्णिहा' 'देवविशे'त्यादिषु हलन्तत्वादप्राप्ते विध्यर्थं तदिति वाच्यं, तथा सति 'क्रुञ्चे'त्यादिरेव गृह्येत, न त्वजादिरतो व्याचष्टे-**अजाद्युक्तिर्ङीपो ङीपश्चेति ।**

**खट्वेति ।** 'खट काङ्क्षायाम्' 'अशूप्रुषिलटिखटिकणिविशिभ्यः क्वन्' । नन्वचेतनानां खट्वादिशब्दानां कथं लिङ्गव्यवस्थेति चेत् । उच्यते—लोकप्रसिद्धं स्तनाद्यवयवसंस्थानविशेषात्मकं लिङ्गं न व्याकरणे आश्रीयते, 'दारा'नित्यादौ नत्वाऽभावप्रसङ्गात्, तटस्तटी तटमित्यादौ यथायथं लिङ्गत्रितयनिबन्धनकार्याणामसिद्धिप्रसङ्गाच्च, किन्तु पारिभाषिकमेव लिङ्गत्रयम् । तच्च केवलान्वयि । 'अयमर्थः' 'इयं व्यक्तिः' 'इदं वस्त्वि'ति शब्दानां सर्वत्राऽप्रतिबद्धप्रसरत्वात् । तत्र कश्चिच्छब्द एकस्मिँल्लिङ्गे शक्तः कश्चिद्द्वयोः कश्चित्त्रिष्विति लिङ्गानुशासनादिभ्यो निर्णयम् । कुमारब्राह्मणादिशब्दास्तु लौकिकपुंस्त्वविशिष्टे शास्त्रीये पुंस्त्वे शक्ताः । लौकिकस्त्रीत्वविशिष्टे च शास्त्रीयस्त्रीत्वे । कथमन्यथा कुमारी कुमार इत्यादयः प्रयोगा व्यवतिष्ठेरन् । 'करेणुरिभ्यां स्त्री नेभे' इत्यमरस्याप्ययमेवार्थः । नन्वेवं 'पशुने'ति पुंस्त्वं विवक्षितमिति मीमांसकोद्घोषः कथं योज्यः ? । पारिभाषिकस्याऽव्यावर्तकतया तद्विवक्षाया अकिञ्चित्करत्वात् । लौकिकस्य तु लिङ्गस्य पशुशब्दादप्रतीतेरिति चेत् । अत्राहुः-'छागो वा मन्त्रवर्णा'दिति षष्ठान्त्याधिकरणन्यायेन पुंस्त्वस्य नियमो बोध्यः, छागशब्दस्य लौकिकपुंस्त्वविशिष्टपारिभाषिके शक्तत्वादिति । तच्च जातित्रयमित्येके । उक्तं च हरिणा-

'तिस्रो जातय एवैताः केषांचित्समवस्थिताः ।
अविरुद्धा विरुद्धाभिर्गोमनुष्यादिजातिभिः' ॥

तिपदिकादेव । तच्च सन्निधानादजादिरूपमेव । नन्वजादिष्वकारान्तपाठो व्यर्थोऽत इत्येव सिद्धेरत आह-**अजाद्युक्तिरिति ।** येन नाऽप्राप्तिन्यायादिति भावः । एतेन ङीपि कृतेऽपि लिङ्गविशिष्टपरिभाषया टाप् चरितार्थ इत्यपास्तम् ।

ननु प्रत्ययविधौ पञ्चम्या युक्तत्वेनाऽजादिभ्यष्टाप्स्त्रीत्वे द्योत्ये इत्यर्थ एव युक्तः । स्त्रीत्वञ्च प्रत्यासत्त्या प्रकृत्यर्थनिष्ठमेवेत्यत आह-**अजादिभिरिति ।** व्याख्यानादेतत्पञ्चयन्तमिति भावः । अन्यत्र तु 'स्त्रिया'मिति तदन्तस्यापि विशेषणं, व्याख्यानादेव । एवञ्च पञ्च तुलानो यस्यां सा पञ्चतुल-

विशेषणान्नेह—पञ्चाजी। अत्र हि समासार्थसमाहारनिष्ठं स्त्रीत्वं नत्वजानिष्ठम्। अजा। एडका। अश्वा। चटका। मूषिका। एषु जातिलक्षणो ङीष्प्राप्तः। बाला।

भाष्ये तु प्रकारान्तरमुक्तम्—

'संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्ततः।
संस्त्याने स्त्यायतेर्ड्रट् स्त्री, सूतेः सप् प्रसवे पुमान्॥
उभयोरन्तरं यच्च तदभावे नपुंसकम्॥' इति।

अस्यायमर्थः—संस्त्यानं स्त्री, सत्त्वरजस्तमोलक्षणानां गुणानामपचयः। प्रसवो गुणानामुपचयः। सप्पुमान्। सूतेर्धातोः सप्-सकारस्य पकारादेश इत्यर्थः। औणादिकोम्सुन्प्रत्ययो ह्रस्वश्च बाहुलकादिति कैयटः। 'पूञो डुम्सुन्' इति माधवः। तयोरुपचयापचययोरभावे सति यदुभयोरन्तरं सदृशं तन्नपुंसकं। 'नभ्राणनपा'दिति निपातनादिति भावः। तथाऽत्रस्थितिसाम्यं नपुंसकम्। अतएवाविर्भावतिरोभावयोरपि स्थितिसामान्यविवक्षासंभवान्नपुंसकलिङ्गसर्वनामेति सिद्धान्तः। स्त्रीपुमान्नपुंसकमिति शब्दाश्च शुक्लादिशब्दवद्धर्मे धर्मिणि च वर्तन्ते। **स्वकृतान्तत इति।** वैयाकरणसिद्धान्तत इत्यर्थः। 'कृतान्तौ यमसिद्धान्तौ' इत्यमरः।

**पञ्चाजीति।** पञ्चानामजानां समाहार इति 'तद्धितार्थे'त्यादिना द्विगुः। 'अकारान्तोत्तरपद' इति स्त्रीत्वे 'द्विगो'रिति ङीप्। न चात्र प्रत्ययविधौ तदन्तविधिविरहादेव टापोऽप्रवृत्तौ ङीब्नेव स्यादिति वाच्यम्, अमहत्पूर्वग्रहणेनानुपसर्जनाधिकारेण च स्त्रीप्रत्ययेषु तदन्तविधिज्ञापनाट्टाप्प्राप्तेः सत्त्वात्। **समासार्थसमाहारनिष्ठमिति।** नन्वजहत्स्वार्थायां वृत्तौ समाहारोऽप्यजाद्यर्थ एवेति चेन्मैवम्। तथापि तस्य पदान्तरसमभिव्याहारापेक्षया बहिरङ्गत्वात्। टाब्विधेस्त्वन्तरङ्गे चरितार्थत्वात्। कथं तर्हि परमाजेति चेत्, प्रागुत्पन्नस्यैव टापस्तत्र श्रवणात्। 'अत्यजा'निरजे'त्यत्र त्वदन्तत्वप्रयुक्तष्टावित्यवेहि। न च 'पञ्चाजी'त्यत्रापि तथास्त्विति वाच्यं, 'द्विगो'रिति ङीपा बाधितत्वात्। **चटकेति।** न चाऽत्र 'प्रत्ययस्था'दितीकारः शङ्क्यः, 'चटरी'त्येव।

**पञ्चाजीति।** पञ्चानामजानां समाहार इति द्विगावकारान्तोत्तरपद इति स्त्रीत्वे 'द्विगो'रिति ङीप्। 'अजादिभ्य'इतिव्याख्यानेऽमहत्पूर्वग्रहणेनाऽनुपसर्जनाधिकारेण च 'वनोरचे'त्यत्रेवात्रापि तदन्तविधिसंभव इति भावः। न च तदन्तविधावपि श्रुतत्वात्स्त्रियामित्यजादीनामेव विशेषणमिति वाच्यम्, अनुसर्जनाधिकारेण तदन्तग्रहणस्येव 'स्त्रिया'मित्यस्य तदन्तविशेषणत्वमित्यर्थस्यापि बोधनात्।

**अत्र हीति।** समासेऽजशब्दसत्त्वेपि समाहारनिष्ठं स्त्रीत्वं समुदायवाच्यं नाऽजशब्दमात्रवाच्यम्। सामर्थ्येनाऽजादिमात्रवाच्यस्त्रीत्वस्यैव ग्रहणादिति भावः। **चटकेति।** 'क्षिपकादित्वा'दित्त्वं न।

वत्सा । होडा । मन्दा । विलाता । एषु 'वयसि प्रथमे' इति ङीष्प्राप्तः ॥ ❀ **संभस्त्राजिनशणपिण्डेभ्यः फलात्** ॥ संफला । भस्त्रफला । 'ङ्यापो'रिति ह्रस्वः ॥ ❀ **सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात्** ॥ सत्पुष्पा । प्राक्पुष्पा । प्रत्यक्पुष्पा ॥ ❀ **शूद्रा चाऽमहत्पूर्वा जातिः** ॥ पुंयोगे तु शूद्री । अमहत्पूर्वा किम् ? ।

---

काया ऐर'गिति लिङ्गादिहैव निपातनाद्वा तदप्रवृत्तेः । एवं च क्षिपकादिषु 'चटके'ति पठनं नाऽतीवावश्यकमिति नव्याः । **मूषिकेति** । 'वृश्चिकृषोः किकन्नि'त्यधिकारे 'मुषेर्दीर्घश्चे'ति किकनि इकारमध्यो मूषिकाशब्दः । यस्तु 'मूष स्तेये' इति दीर्घोपधात्संज्ञायां कुनि मूषकशब्दो माधवेनोक्तस्ततोऽप्ययं टाप् । प्रत्ययस्थादितीत्वं तु विशेषः । केचित्तु कुन्नन्तोऽसावजादिगणे पाठं न प्रयुङ्क्ते, गणे तत्पाठस्य जातिलक्षणङीष्बाधनार्थत्वात्संज्ञायाश्चाऽजादित्वात् । तथा चादन्तत्वादेव कुन्नन्ताट्टाप्सिध्यतीत्याहुः । तच्चिन्त्यम् । 'व्याघ्री'त्यादिवत्संज्ञात्वेऽपि जातित्वानपायात् । **भस्त्रफलेति** । भस्त्रेव फलानि यस्या इति विग्रहः । **ङ्यापोरिति** । एतच्च 'फल निष्पत्तौ'विति धातौ माधवग्रन्थे स्थितम् । 'पाककर्णे'त्यत्र भाष्ये तु दीर्घ एव दृश्यते ।

**सदच्काण्डेति** । 'सत्प्राक्काण्डे'ति पाठो नादर्तव्य इति ध्वनयन्नुदाहरति–**प्रत्यक्पुष्पेति** । अत्र नव्याः–'संभस्त्रे'त्यादि वचनद्वयं, 'मूलान्नञः'इति वक्ष्यमाणं च 'पाककर्णे'त्यनेन प्राप्तस्य ङीपो निषेधार्थं तत्रैव सूत्रे भाष्ये पठितमपि फले विशेषाभावादिहैव ग्रन्थकारैः पठितम् । न चैतावताऽजाद्यन्तर्गणसूत्राणीति भ्रमः कार्यः, तथात्वे मानाऽभावात् । किन्तु वार्तिकान्येवेमानीत्याहुः ।

**शूद्रा चेति** । शूद्रशब्दष्टापमुत्पादयति जातिश्चेत् । महत्पूर्वस्तु न, जातिश्चेदितीहापि संबध्यते । तेन महती शूद्रा 'महाशूद्रे'ति भवत्येव । **पुंयोगेत्विति** । पुंयोगश्च

---

**ह्रस्व इति** । असंज्ञायान्तु 'भस्त्राफले'त्येव । 'संभस्त्रे'ति 'सद'जिति 'मूलान्नञ'इति च 'पाककर्णे'ति प्राप्तस्य ङीपो बाधनार्थम् । एवं च 'श्वेतफला' 'त्रिफले'त्यप्यत्र बोद्धव्यम् ।

**शूद्रा चेति** । जातिलक्षणङीपोऽपवादः । जातिश्चेद्वाच्येत्यर्थः । 'पञ्चशूद्री'ति समाहारे जातिवाचकत्वात्, शूद्रशब्दार्थगतस्त्रीत्वाऽभावाच्च न दोषः । 'जातिश्चे'दित्यस्य कृत्यमाह–**पुंयोगे त्विति** । न चात्र गौणत्वम्,–सदृशलाक्षणिकत्वस्यैव गौणत्वात् । गौणमुख्यन्यायस्य पदकार्यविषयत्वाच्चेति भावः । 'अमहत्पूर्वे'त्यत्रापि 'जातिश्चे'दिति संबद्ध्यते । महत्पूर्वो न टापं लभते जातिश्चेद्वाच्येति तदर्थः । तत्फलन्तु जात्यन्तरनिवृत्तिपरत्वे पूर्वजातिमात्रविवक्षया महच्छब्दस्य शूद्रशब्देन मृगक्षीरकुक्कुटाण्डवत्समासे ततः स्त्रीत्वविवक्षायां महती शूद्रेत्यर्थे 'महाशूद्रे'ति टाबेव । 'अमहत्पूर्वे'त्यत्र जातिरित्यस्याऽसंबन्धेऽनुपसर्जनाधिकारेण प्रधानेन तदन्तविधिसत्त्वाज्जातेरितिङीष् स्यात्,

महाशूद्री । क्रुञ्चा । उष्णिहा । देवविशा । ज्येष्ठा । कनिष्ठा । 'मध्यमे'ति पुंयोगेऽपि । कोकिला–जातावपि ॥ ❀ **मूलान्नञः** । अमूला ॥ 'ऋन्नेभ्यो ङीप्' । कर्त्री ।

दाम्पत्यरूप एवेति न नियमः, किन्तु जन्यजनकभावोऽपि गृह्यते । तथा च स्मृतिः– 'वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ' इति । **महाशूद्रीति** । 'आभीरी तु महाशूद्री जातिपुंयोगयोः समे'त्यमरः । इह 'अमहत्पूर्वे'ति व्यर्थं, महाशूद्रशब्दो हि समुदित एवाऽऽभीरत्वजातौ वर्तते । तत्राऽवयवस्यानर्थकतया शूद्रशब्दार्थसमवेतस्त्रीत्वाऽभावेन टापः प्रसक्त्यभावात् । न तदन्तविधिज्ञापनाय तदिति वाच्यम्, अनुपसर्जनाधिकारेणैव तदन्तविधिज्ञापनादिति दिक् । अत्र नव्याः–'शूद्रा चे'त्यादिवचनम् 'अजायत'इति सूत्रस्थं वार्तिकमेव, न त्विदं गणसूत्रमित्याहुः । **क्रुञ्चेत्यादि** । त्रयोऽमी हलन्ता इत्येके । भाष्ये तु 'क्रुञ्चानालभेत' 'उष्णिहककुभौ'इत्यादिप्रयोगमुदाहृत्याऽदन्ता अपि स्वीकृताः । पचाद्यचा इगुपधलक्षणेन कप्रत्ययेन च यथासंभवमदन्तत्वात् ।

**पुंयोगेऽपीति** । यदा ज्येष्ठादयः प्रथमजातादौ वर्तन्ते तदाऽदन्तत्वादेव टाप्सिद्धः । यदा तु ज्येष्ठस्य स्त्रीत्वादिविवक्षा तदा पुंयोगलक्षणो ङीष् प्राप्तः–सोऽप्यनेन बाध्यते इति सूचयितुमपिशब्दः। **मूलान्नञः** । नञः किम् ?, शतमूली । **अमूलेति** । ओषधिजातिरियम् । **उगितश्च** । उगिच्छब्देन प्रातिपदिकं विशेष्यते, विशेषणेन तदन्तविधिः । न च प्रत्ययविधौ प्रतिषेधः शङ्क्यः, 'अनुपसर्जना'दित्यनेन स्त्रीप्रत्ययेषु तदन्तविधिरस्तीति ज्ञापनात्, 'उगिद्वर्णग्रहणवर्ज'मिति 'येन विधि'रिति सूत्र एवोक्तत्वाच्चेत्याशयेनाह–**उगिदन्तादिति** ।

---

शूद्रशब्दे जातिवाचकत्वस्य स्त्रीत्वे शूद्रशब्दार्थसमवेतत्वरयापि सत्त्वेनात्र टाम्निर्बाध इति भाष्यप्रदीपोद्द्योते निरूपितम् । **महाशूद्रीति** । 'आभीरी तु महाशूद्री'त्यमरः । ब्राह्मणादुग्रजातिकन्याया**माभीरः** । नृपाच्छूद्रायामुत्पन्नोग्रजातिकन्या । अत्राऽनुलोमसङ्कराणां मातृजातिवृत्तित्वात्तत्र तां जातिमारोप्य शूद्रशब्दप्रयोग इत्ययं शूद्रशब्दोऽर्थवानेवेति शूद्रशब्दार्थसमवेतस्त्रीत्वमप्यत्रास्ति । तदर्थसमवेतस्त्रीत्वेपि शूद्रशब्दादेव टाप्स्यान्न तदन्तात्, ग्रहणवतेति निषेधादिति तदन्तविधिज्ञापकता नाऽसङ्गता । अत एव शङ्खस्मृतौ 'ब्राह्मणक्षत्रियवैश्यैः क्षत्रियावैश्याशूद्रासूत्पन्नाः क्षत्रियवैश्यशूद्रा एव भवन्ती'त्युक्तमिति भावः । यत्तु 'शूद्राभीर'मित्यादौ सामान्यविशेषवाचित्वाद्द्वन्द्वाभावमाशङ्क्य'आभीरा जात्यन्तराणी'ति 'त्यदादीनी'ति सूत्रे भाष्ये उक्तं, तत्त्वनारोपाभिप्रायेणेति न तद्विरोधः । अजादिराकृतिगणः । तेन 'न मु ने'इति सूत्रे 'टायामादेश'इति भाष्यप्रयोगः सिद्धः । प्रथमाध्यायचतुर्थपादे 'चमसवदविशेषा'दिति सूत्रे शाङ्करभाष्यवाचस्पत्ययोरजाच्छागेति टावन्तप्रयोगो दृश्यतेऽतश्छागशब्दोप्यजादिष्विति केचित् ॥

दण्डिनी ॥ **उगितश्च** ।४।१।६। उगिदन्तात्प्रातिपदिकात्स्त्रियां ङीप्स्यात्। भवन्ती। पचन्ती। दीव्यन्ती। 'शप्श्यनो'रिति नुम्। 'उगिदचा'मिति सूत्रेऽञ्च्ग्रहणेन 'धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवे'ति नियम्यते। तेनेह न—उखास्रत्। क्विप्। 'अनिदिता'मिति नलोपः। पर्णध्वत्। अञ्चतेस्तु स्यादेव—प्राची। प्रतीची॥ **वनोर च** ।४।१।७। वन्नन्तात्तदन्ताच्च प्रातिपदिकात्स्त्रियां ङीप्स्याद्रश्चाऽन्तादेशः। 'व'न्निति-

---

तत्रोगित्प्रातिपदिकं, प्रत्ययश्चेति द्विविधं संभवति। आद्ये उगिदन्ते—भवन्तं महान्तं चातिक्रान्ता अतिमहतीत्युदाहरणम्। सर्वादिगणे 'भवतु' इति पाठाद्भवच्छब्दस्योगित्त्वव्यपदेशः। महच्छब्दस्य तु शतृवद्भावात्। न चैवं 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति निषेधात्केवलाभ्यां भवन्महच्छब्दाभ्यां ङीन्न स्यादिति वाच्यम्। प्रातिपदिकाऽप्रातिपदिकसाधारणेन शब्दमात्रमुगित्पदाभिधेयमित्युक्तनिषेधाप्रवृत्तेरित्याशयेनोदाहरति—**भवन्तीति**। द्वितीयमुगिदन्तमुदाहरति—**पचन्तीति**। पचेर्लटः शतरि 'कर्तरि शप्'। यदि तु सर्वादिगणे 'भवतु' इति य उगित्पठितः सः 'भातेर्डवतु'रिति व्युत्पाद्यते, तदा 'भवती'ति द्वितीयोगिदन्तस्याप्युदाहरणं भवत्येव। शत्रन्तात्तु भवतो ङीपि 'शप्श्यनो'रिति नित्यो नुम्। भवन्ती। **उखास्रदित्यादि**। उखायाः स्रंसते, पर्णेभ्यो ध्वंसते। 'स्रंसु ध्वंसु अवस्रंसने' 'वसुस्रंसु' इति दलम्। **वनो र च**। 'व'न्निति प्रत्ययेन तदन्तं प्रातिपदिकं गृह्यते। वन्नन्तेन त्वधिकृतप्रातिपदिकविशेषणात्तदन्तविधिरित्याह—**वन्नन्तात्तदन्ताच्चेति**। 'येन विधिस्तदन्तस्ये'त्यत्र 'स्वं रूप'मिति सूत्रात्स्वमित्यनुवर्त्य स्वस्य चेति व्याख्यानादुभयं लभ्यत इति भावः। यदि तु वन्नन्तमेव व्यपदेशिवद्भावेन वन्नन्तान्तमित्युच्यते, तर्हि 'येन विधि'रित्यत्र 'स्व'मित्यनुवर्त्य 'स्वस्य चे'ति न व्याख्येयम्। न चात्र 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति निषेधः शङ्क्यः, तस्य प्रातिपदिकमात्रविधिविषयत्वात्, वन्नन्तस्य वस्तुतः प्रातिपदिकत्वेऽपि सूत्रे गृहीतस्य 'वन' इत्यस्य प्रातिपदिकत्वाऽभावाच्चेत्याहुः।

---

**उगितश्च**। उगिच्छब्देन प्रातिपदिकस्य विशेषणात्तदन्तविधिः। प्रत्ययविधाविति निषेधस्तु न, 'उगिद्वर्णग्रहणवर्ज'मित्युक्तेस्तदाह—**उगिदन्तादिति**। **भवतीति**। 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति निषेधस्तु सूत्रोपात्तान्तादिशब्दविषय एवेति भावः। (कैयटमते इति शेषः) भवतु इति उगितः प्रातिपदिकस्यापि सत्त्वात् प्रत्ययमात्रग्रहणाभावेन प्रत्ययग्रहणे इति परिभाषाया अप्रवृत्त्या 'निर्यवमती'त्यादौ न दोषः। **अञ्चतेस्त्विति**। नलोपिनोऽञ्चतेरित्यर्थः। नियमोपि नलोप्यञ्चतिविषय एवेति निरूपितम्। व्यपदेशिवद्भावलब्धमर्थं स्पष्टप्रतिपत्तये आह—**वन्नन्तादिति**। नन्वेवं प्रत्ययग्रहणपरिभाषया 'बहुधीवरी' न सिद्ध्येदत आह—**तदन्ताच्चेति**। तत्परिभाषालब्धवन्नन्तेन

ङ्वनिप्क्वनिब्वनिपां सामान्यग्रहणम् । **प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्** । तेन प्रातिपदिकविशेषणात्तदन्तान्तमपि लभ्यते । सुत्वानमतिक्रान्ता अतिसुत्वरी। अतिधीवरी । शर्वरी ॥ **❀ वनो न हश इति वक्तव्यम्** ॥ हशन्ताद्धातोर्विहितो यो वन् तदन्तात्तदन्तान्ताच्च प्रातिपदिकान्ङीब्रश्च नेत्यर्थः। 'ओणृ अपनयने' । वनिप् । 'विड्वनो'रित्यात्वम् । अवावा ब्राह्मणी। राजयुध्वा ॥ **❀ बहुव्रीहौ वा** ॥ बहुधीवरी । बहुधीवा । पक्षे डाब्वक्ष्यते ॥ **पादोऽन्यतरस्याम्** ।

---

**सामान्यग्रहणमिति** । सूत्रे 'वन' इत्यनुबन्धरहितस्य ग्रहणात्तदनुबन्धपरिभाषा नोपतिष्ठत इति भावः । वन्ग्रहणे वन्नन्तं वन्नन्तान्तं च कथं लभ्यत इत्याशङ्कायामाह—**प्रत्ययग्रहणे इत्यादि** । **तेनेति** । वन्नन्तेनेत्यर्थः ।

**तदन्तान्तमपि लभ्यत इति** । 'स्त्रिया'मित्यधिकारे 'ग्रहणवता प्रातिपदिकेने'ति निषेधो न प्रवर्तते, 'अमहत्पूर्वे'त्यादिज्ञापकादिति भावः । अन्ये त्वाहुः—वन्नन्तस्य वस्तुतः प्रातिपदकत्वेऽपि सूत्रे गृहीतस्य वन इत्यस्य प्रातिपदिकत्वं नास्तीत्युक्तत्वाद्ग्रहणवतेति निषेधशङ्कैव नास्तीति । **सुत्वानमिति** । 'सुयजोर्ङ्वनिप्' । 'अत्यादयः क्रान्ताद्यर्थे' इति समासः । **अतिधीवरीति** । दधातेः 'अन्येभ्योऽपि दृश्यते' इति क्वनिप् । 'घुमास्थे'तीत्त्वम् । भाष्ये तु ध्यायतेः क्वनिपि संप्रसारणमिति स्थितम् । तस्य रेफादेशे कृतेऽप्येकदेशविकृतस्यानन्यत्वात् 'अल्लोपोऽनः' इति प्राप्नोति, अनो नकारान्तविशेषणात्तु न भवतीति 'श्वयुवमघोना'मित्यत्रैव व्युत्पादितम् । **शर्वरीति** । शॄधातोः 'अन्येभ्योऽपी'त्यनेनैव वनिप् । गुणे कृते रपरत्वे च हशन्तात्परत्वेऽपि हशन्ताद्विहितत्वाभावान्ङीब्रयोरत्र निषेधो न । **वनो न हश इति** । अबहुव्रीह्यर्थोऽयमारम्भः। 'बहुयज्वे'त्यादौ तु 'अनो बहुव्रीहे'रिति ङीपो निषेधे रेफस्याऽप्यप्रवृत्तेः । **राजयुध्वेति** । राजानं योधितवती । 'राजनि युधि कृञः' इति ङ्वनिप् । **बहुव्रीहौ वेति** । 'अन्यतरस्या'मिति योगविभागादिदं लभ्यते, नत्वपूर्वं वचनमिति वक्ष्यते ।

**बहुधीवरीति** । 'बहवो धीवानो यस्यां नगर्या'मिति विग्रहः। **पक्षे डाबिति** ।

---

प्रातिपदिकस्य विशेषणादिति भावः । **सामान्येति** । सूत्रेऽनुबन्धानुच्चारणात्तदनुबन्धकपरिभाषाया विषयो नेति भावः । इदं मतुवसोर्जाग्रो वीत्यादिसूत्रेषु भाष्यकैयटयोः स्पष्टम् । इदं सूत्रं न ङीब्विधायकं किं तु 'ऋन्नेभ्य'इति प्राप्तङीबनुवादेन तत्संनियोगशिष्टरभावमात्रविधायकम्,उभयविधौ गौरवात्।

**शर्वरीति** । शॄधातोरन्येभ्योपि दृश्यतेइति वनिप् । एतत्सिद्ध्यर्थमाह—**हशन्ताद्विहित इति** । अर्थवतो ग्रहणान्नेह—मघोनी । कनिप्रत्ययान्तनिपातितस्येदम् । **बहुव्रीहौ वा** । 'अनो बहुव्रीहे'रिति

४।१।८। पाच्छब्दः कृतसमासान्तस्तदन्तात्प्रातिपदिकान्ङीब्वा स्यात् । द्विपदी । द्विपात् ॥ टाबृचि ।४।१।९। ऋचि वाच्यायां पादन्ताट्टाप्स्यात् । द्विपदा ऋक् । एकपदा ॥ 'न षट्स्वस्रादिभ्यः' ॥ पञ्च । चतस्रः । 'पञ्चे'त्यत्र नलोपे कृतेऽपि 'ष्णान्ता ष'डिति षट्संज्ञां प्रति 'नलोपः सुप्स्वरे'ति नलोपस्याऽसिद्धत्वा'न्न षट्स्व-

'डाबुभाभ्या'मिति सूत्रेण । तथा च द्विवचने 'बहुधीवर्यौ' 'बहुधीवानौ' 'बहुधीवे' इति रूपत्रयं भवतीति भावः । द्विपादिति । द्वौ पादौ यस्या इति बहुव्रीहौ 'सङ्ख्यासुपूर्वस्ये'ति पादशब्दस्यान्तलोपः । ङीपि भत्वात् 'पादः पत्' । टाबृचि । पूर्वेण प्राप्तस्य ङीपोऽपवादः । यद्यपि 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु'इति कोशाद्बादसमानार्थकः पदशब्दोऽस्तीति तेनैव 'द्विपदा' 'एकपदे'ति रूपं सिध्यति, तथापि ऋचि वाच्यायां 'द्विपदी' 'द्विपा'दिति प्रयोगनिवृत्तये सूत्रारम्भोऽयमावश्यकः । असिद्धत्वादिति । एतच्चाऽसिद्धत्वोपवर्णनं कार्यकालपक्ष एवोपयुज्यते, न तु यथोद्देशपक्षे, सकृत्कृतायाः संज्ञायाः सर्वार्थत्वेन तस्याः पुनरपेक्षाऽभावात् । न च 'पञ्च'न्निति नान्तस्य कृतयामपि संज्ञायां 'पञ्चे'त्यदन्तस्य न कृतेति शङ्क्यम्, एकदेशविकृतस्याऽनन्यत्वादित्याहुः ।

प्रतिषेधे प्राप्ते इदम् । एतच्च वार्त्तिकम्—'अन उपधे'ति सिद्धङीबनुवादेन रादेशविधायकम् । अत एवेदमनुपधालोपिनि 'सुपर्वे'त्यादौ नेति विकल्पोऽर्थसिद्धः । 'वनोर च'त्येतत्तु 'ऋन्नेभ्य'इत्येतन्ङीब्विषयमेवेत्युक्तम् । पक्षे डाबिति । तेन द्विवचने रूपत्रयम् ।

कृतसमासान्त इति । उत्तरसूत्रे ऋच्यभिधेयायां तस्यैव संभवेनाऽर्थाधिकारानुरोधादिति भावः । तेन पादयतेः क्विबन्तस्य ग्रहणं न । द्विपदीति । द्वौ पादावस्या इति बहुव्रीहौ 'सङ्ख्यासुपूर्वस्ये'ति पादशब्दान्तलोपस्ततो ङीपि 'पादः पत्' । टाबृचि । पूर्वसूत्रप्राप्तङीपोऽपवाद इति प्राचस्तच्चिन्त्यम् । 'शेषाद्विभाषे'ति सूत्रस्थभाष्यविरोधात् । तत्र हि—प्रतिपदविहितसमासान्तानाङ्कपो वैकल्पिकत्वेन कबभावे सावकाशत्वमुक्तम् । तद्रीत्याऽस्यापि पूर्वसूत्रस्य वैकल्पिकत्वेन तदभावे सावकाशत्वात् । 'बहुव्रीहेरूधस' इत्यत्राऽपि भाष्ये स्पष्टमेतत् । अत एव 'ङ्याप्प्रातिपदिका'दिति सूत्रे पादशब्दसमानार्थमकारान्तं पदशब्दमङ्गीकृत्यैतत्प्रत्याख्यातम् । श्रूयते च छन्दसि'तस्याः सप्ताक्षरमेकं पदम्' । एकः पाद इत्यर्थ इति च भाष्योक्तं सङ्गच्छते । तदा हि ऋच्यपि 'एकपदी' 'एकपा'दितीष्यत एव । एवञ्चैकपादृगित्यस्य सूत्रमते सिद्धये 'टाबृची'त्यत्राऽप्यन्यतरस्याङ्ग्रहणमनुवर्त्यम् । पादन्तस्य ऋच्यनभिधानमिति तु न भाष्याशयः, ङीबन्तप्रयोगस्य सूत्ररीत्येष्टस्याऽसिद्ध्यापत्तेरिति बोद्धव्यम् । केवलपाच्छब्दस्य स्त्रियां ऋचि वाऽसंभवेनाऽत्र तदन्तविधिः । असिद्धत्वादिति । आपः परिगणितेष्वभावान्न तत्र नलोपाऽसिद्धत्वम् । इदञ्च कार्यकालपक्षे । अयं निषेधः 'प्रियपञ्चा द्रौपदी'त्यादौ तदन्तेऽपि । 'स्त्रियां यत्प्राप्नोति तन्ने'त्यर्थादन उपधेति ङीबपि नेति बोद्धव्यम् । ध्वनितञ्चेदं भाष्ये । परे त्वत्र बहिरङ्गाऽसिद्धत्वाऽप्राप्तिः, नलोपस्य तत्त्वाऽभावात् । संज्ञाकृतबहि-

स्त्रादिभ्य' इति न टाप् ॥ **मनः** ।४।१।११। मन्नन्तान्न ङीप् । सीमा । सीमानौ ॥

**अनो बहुव्रीहेः** ।४।१।१२। अन्नन्ताद्बहुव्रीहेर्न ङीप् । बहुयज्वा । बहुयज्वानौ ।

**डाबुभाभ्यामन्यतरस्याम्** ।४।१।१३। सूत्रद्वयोपात्ताभ्यां डाब्वा स्यात् । सीमा । सीमे । सीमानौ ॥ दामा । दामे । दामानौ । 'न पुंसि दाम' त्यमरः ॥

---

तदसत् । एकदेशविकृतस्योपसङ्ख्यानं हि 'स्थानिवदादेशोऽनल्विधा'वित्यत्र पठ्यते, तच्चाल्विधौ न प्रवर्तत एवेति यथोद्देशपक्षेऽप्यसिद्धत्ववर्णनस्य युक्तत्वात् ।

**न ङीविति** । पूर्वसूत्रान्नेत्यनुवर्तत इति भावः ।

**अनो बहुव्रीहेः** । ननु 'राजयुध्वे'त्यादिसिद्धयेऽवश्यं वक्तव्येन 'वनो न हशः' इत्यनेनैवेष्टसिद्धेः किमनेन सूत्रेण ? । मैवम् । अन्नन्ताद्बहुव्रीहेः 'डाबुभाभ्या'मिति डाब्विधानार्थमेतत्सूत्रस्याऽवश्यारब्धव्यत्वात् । तथा चाऽनेन ङीपि निषिद्धे तत्संनियोगेन प्राप्तो 'वनो र चे'ति यो रेफः सोऽपि दुर्लभ एवेति 'वनो न हशः' इति वार्तिकमबहुव्रीह्यर्थमिति फलितम् । **बहुयज्वानाविति** । 'न संयोगा'दिति निषेधान्नायमुपधालोपी । तेनाऽत्र 'अन उपधालोपिन' इति वक्ष्यमाणविकल्पो न प्रवर्तते ।

**डाबुभाभ्याम्** । उभाभ्याङ्ग्रहणं व्यर्थं, मन्नन्ताऽन्नन्तयोरनुवृत्त्यैव तत्फलसिद्धेरित्येके । उभयोरप्यनुवृत्तिसूचनाय तद्ग्रहणमावश्यकम्, अन्यथा संनिहितस्यान्नन्तस्यैवानुवृत्तिरिति शङ्का स्यादित्यन्ये । ननु निषेधडापोर्वचनसामर्थ्यात्पर्यायः सिध्यति तत्किमन्यतरस्याङ्ग्रहणेन ? । सत्यम् । 'अन्यतरस्या'मिति योगो विभज्यते, तत्र 'मनः' इति निवृत्तम् । अनो बहुव्रीहेर्डाब्वा स्यात् । पूर्वेणैव डापि सिद्धे पुनर्विधानमिदम् । 'ऋन्नेभ्यः–' इति ङीपा सह विकल्पार्थम् । 'अन उपधालोपिनः–' इति सूत्रं तु नियमार्थम् । 'अनो योऽसौ विकल्पः स उपधालोपिन एवे'ति । एवं च 'बहुधीवर्यौ' 'बहुधीवानौ' 'बहुधीवे'त्युक्तरूपत्रयं सिद्धमिति 'बहुव्रीहौ वे'त्येतन्नाऽपूर्वं वचनमिति बोध्यम् । 'उपधालोपिन एवे'ति नियमात्तु 'सुपर्वा' 'चारुपर्वे'त्यादावनुपधालोपिन ङीप्न

---

रन्नत्वानाश्रयणात् । पथेत्यत्र तु 'स्त्रियां यत्प्राप्नोति तन्ने'त्यर्थाश्रयणबलाद्भूतपूर्वपट्त्वाश्रयो निषेधः । अत एव षट्सञ्ज्ञायां नलोपाऽसिद्धत्वस्य न फलमिति 'नलोपः सु'वित्यत्र भाष्ये उक्तमित्याहुः । **मनः** । **न ङीबिति** । अयम्,अन इति चोक्तरीत्या टाम्ङीपोरुभयोरपि निषेधः । एतेन 'सीमभ्यां' 'बहुयज्वभ्यां' 'बहुधीवभ्या'मित्यत्र डाम्ङीपोरभावे नलोपे टाब्दुर्वार इत्यपास्तम् ॥ **डाबुभा** । उभाभ्याङ्ग्रहणाऽभावे संनिहितस्याऽन एवानुवृत्तिः संभाव्येत । वचनसामर्थ्याड्डाप्निषेधयोः पर्याये सिद्धे 'ऽन्यतरस्या'मिति स्पष्टार्थम् । भाष्ये त्वन्यतरस्याङ्ग्रहणं वाक्यभेदेना'ऽनो बहुव्रीहे'रित्यनुवर्त्य ततः पक्षे 'ऋन्नेभ्य'इति ङीबर्थम् । एवथाऽन उपधेति सूत्रं नियमार्थमिति 'बहुधावर्या'त्यत्र 'ऋन्नेभ्य' इति

बहुयज्वा । बहुयज्वे । बहुयज्वानौ ॥ **अन उपधालोपिनोऽन्यतरस्याम्** ।४।१।२८। अन्नन्ताद्बहुव्रीहेरुपधालोपिनो वा ङीप्स्यात् । पक्षे डाब्निषेधौ । बहुराज्ञी । बहुराज्ञ्यौ । बहुराजे । बहुराजानौ ॥

**प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः**।७।३।४४। प्रत्ययस्थात्ककारात्पूर्वस्या-

---

भवति, किंतु डाब्निषेधावेव भवतः । अयं च योगविभागोऽवश्यमभ्युपेयः । अन्यथा 'बहुधीवरी'त्यत्र प्रकरणान्तरस्थेन 'अन उपधालोपिन'इति वक्ष्यमाणेन पाक्षिके ङीपि कृतेऽपि 'ऋन्नेभ्य' इति प्राप्तं ङीपमनूद्य तत्संनियोगेन हि विधीयमानो यो 'वनो र च'ेति रेफः स न सिध्येत् । ननु 'वनो र च'ेति सूत्रमेव ङीब्रौ विधत्तामिति चेन्न, उभयविधौ गौरवात् । किञ्चोभयविधायकत्वेऽपि 'अनो बहुव्रीहे'रित्यनेन ङीपि निषिद्धे रोऽपि दुर्लभः, संनियोगशिष्टत्वात् । भाष्ये तु 'अनो बहुव्रीहे'रित्यस्याऽनन्तरम् 'उपधालोपिनो वे'ति सूत्रमस्तु, 'अन उपधे'त्यादि प्रदेशान्तरस्थं सूत्रं डाप्सूत्रेऽन्यतरस्याङ्ग्रहणं च मास्त्वित्युक्तम् । **अन उपधा ।** 'बहुव्रीहेरूधसो ङी'षित्यतो बहुव्रीहिग्रहणं 'सङ्ख्याव्ययादेर्ङी'बित्यतो ङीप्चानुवर्तत इत्याशयेनाह—**अन्नन्तादित्यादि ।** नियमार्थमिदमित्युक्तम् । न चैवं पूर्वसूत्रेणैव विकल्पसिद्धाविहान्यतरस्याङ्ग्रहणं व्यर्थमिति वाच्यम्, असति ह्यन्यतरस्याङ्ग्रहणे नित्यार्थो विधिरेवायं स्यान्न तु नियम इति ।

**प्रत्ययस्थात्कात्पूर्वस्य ।** 'का'दित्यकार उच्चारणार्थः, व्यञ्जनमात्रं विवक्षितम् । अन्यथा एतिकाश्चरन्तीत्यादावकचि इत्वं न स्यात् । तत्र हि अकारविशिष्टककारस्य प्रत्ययस्थत्वाऽभावात् । न चाकच्यकारान्तककार एव प्रत्ययस्थो भवतु 'अतो गुणे' इति पररूपे सत्येतिका इत्यादिरूपसिद्धेरिति वाच्यम्, 'पचतकी'त्यादिवक्ष्यमाणरूपाऽसिद्धिप्रसङ्गादित्याशयेनाह—**ककारादिति ।** वर्णनिर्देशे हि कारप्रत्ययो विहितः ।

---

ङीबिति तत्सन्नियोगेन रेफादेशः सिद्ध्यतीति 'बहुव्रीहौ वे'ति वचनं प्रत्याख्यातम् । अन उपधेति ऋन्नेभ्य इत्यस्यैवानुवाद इति नियमस्य विधिमुखेन प्रवृत्तावपि न दोषः । **अन उ ।** 'बहुव्रीहेरूधस' इत्यतो 'बहुव्रीहे'रिति 'सङ्ख्याव्ययादे'रित्यतो ङीबिति चानुवर्त्तते । 'अनुपसर्जना'दित्यनुवृत्तमप्यत्र न संबद्ध्यते, तस्य गृह्यमाणविशेषणतया गृह्यमाणस्य चाऽन्नन्तबहुव्रीहावनुपसर्जनस्याऽसंभवात् । ध्वनितं चेदं 'वनोरचे'ति सूत्रे भाष्ये । तत्र ह्यनो बहुव्रीहेरित्यनन्तरमुपधालोपिनो वेति न्यासो दर्शितः । विद्ध्यर्थमिदम् । अन्यतरस्याङ्ग्रहणन्त्वनुपधालोपिनि सुपर्वेत्यादौ सावकाशयोर्डाप्प्रतिषेधयोरुपधालोपिन्यनवकाशेन ङीपा बाधो मा भूदिति । अन्यथा विधानसामर्थ्येन त्रयाणां पर्यायसिद्धौ तदैयर्थ्यं स्पष्टमेव । **ककारादिति ।** अनेन वर्णमात्रं विवक्षितम्, अकार उच्चारणार्थ इति सूचयति । न च 'कारिके'त्यत्राऽकारेण व्यवधानादाप्परककाराभावेनेत्वानापत्तिः, एकादेशेप्यचः पर-

ऽकारस्येकारः स्यादापि परे स आप्सुपः परो न चेत्। सर्विका। कारिका। अतः

क्वचित्समुदायात्प्रयोगस्तु 'उच्चैस्तरां वा वषट्कारः' इत्यादिनिर्देशरूपयत्नसाध्य इति भावः। **आपि पर इति।** एतच्चाऽकारविशेषणम्। तत्सामर्थ्यात्ककाराकाराभ्यां व्यवायेऽपि भवति, न तु 'पुत्रकाम्या' 'रथकट्ये'त्यादौ त्रिचतुरादिव्यवाये। अतएव 'सर्विके'त्यादावाद्याकारस्य न भवति, तदेतदुक्तम्–**अकारस्येकारःस्यादापि पर इति।** यदि त्वापीति ककारविशेषणं स्यात्तर्हि 'रथकट्ये'त्यादावतिप्रसङ्गः, व्यवहितस्यापि परत्वाऽनपायात्। न च निर्दिष्टपरिभाषया निस्तारः, अनुवादे परिभाषाणामनुपस्थितेः। न चाऽऽपीत्यस्याऽकारविशेषणत्वेऽपि तद्दोषतादवस्थ्यमिति वाच्यम्, अनुवादे परिभाषाणामित्यत्राऽनुवाद इत्यस्याऽनूद्यमानविशेषणेष्वित्यर्थाभ्युपगमात्। 'कात्पूर्वस्यातइ'दित्यत्र हि 'अत' इत्यनूद्येत्वविधानादनुवाद्यत्वमेवाऽत इत्यस्य न त्वनूद्यमानविशेषणत्वम्। 'का'दित्यस्य त्वनूद्यमानविशेषणत्वं स्पष्टमेवेति न तत्र निर्दिष्टपरिभाषोपतिष्ठत इति वैषम्यात्। अनूद्यमानविशेषणे परिभाषा नोपतिष्ठत इत्येतत् 'उदीचामातः' इति सूत्रस्थस्थानेग्रहणेन ज्ञापयिष्यते। यदि 'असुपः' इति पर्युदासः स्यात्तर्हि 'बहुपरिव्राजका नगरी'त्यत्रापि स्यादेव, उत्तरपदस्य सुबन्तत्वेऽपि समुदायस्याऽसुबन्तत्वात्ततः परष्टाविति। तेनाऽत्र प्रसज्यप्रतिषेध इत्याह–**स आप्सुपः परो न चेदिति।** सुबन्तात्परो न चेदित्यर्थः। **सर्विकेति।** 'अव्ययसर्वनाम्ना'-

रिमन्निति स्थानिवत्त्वाद्व्यवधानमेव। आपि परतोऽकारस्य कात्पूर्वस्येत्यर्थेपि निर्दिष्टपरिभाषोपस्थितेर्व्यवहिते न प्राप्नोतीति वाच्यम्, आनन्तर्यांशोपस्थितावपि येन नाव्यवधानमिति न्यायेनाऽकारव्यवधानेपि प्रवृत्तेः। रथकट्यादौ च नातिप्रसङ्गः। 'के'ति सङ्घातग्रहणे त्वेतिका इत्याद्यसिद्धिः। अकच्य-कारस्योच्चारणार्थतया कशब्दाऽभावात्। 'न यासयो'रिति ज्ञापकेन वर्णग्रहणमित्येव ज्ञाप्यते। अकज्विधायकस्थमकारवैशिष्ट्यमादायेत्त्वप्रवृत्तिज्ञापकत्वाश्रयणे तु गौरवम्। तावतापि प्रत्ययस्थत्वांशानुपपत्तेश्च। न च वर्णग्रहणपक्षे 'एतिके'त्यादावकारद्वयव्यवधानादित्वाऽप्राप्तिः, द्वयोरकारयोरेकादेशे टापा सहैकादेशस्य स्थानिवद्भावादेकेनैवाकारेण व्यवधानात्। पुनः स्थानिवत्त्वं तु न, लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेः। टापा सहैकादेशस्य स्थानिवत्त्वं विना पूर्वैकादेशस्य स्थानित्वंतु वक्तुमशक्यम्, तस्य टावेकादेशेनापहारेणाऽदर्शनात्। अत एव 'न यासयो'रिति निषेधसार्थक्यम्। 'स्थ'-ग्रहणन्तु स्पष्टार्थङ्केवलककारस्य प्रत्ययस्याऽभावात्। 'असुप'इति बहुव्रीहिणा नाऽङ्गविशेषणं, 'बहुचर्मिके'त्यादावित्त्वानापत्तेः। प्रत्ययलक्षणेनाऽङ्गस्य सुबन्तत्वात्। 'नलुमते'ति तु नाऽत्र, लुमता लुप्ते प्रत्यये यदङ्गन्तस्य कार्ये तन्निषेधप्रवृत्तेः। इदन्तु टाप्यङ्गमिति दिक्। **सर्विकेति।** 'अव्ययसर्वनाम्ना'मित्यकच्। **कारिकेति।** करोतेर्ण्वुल्। 'नौ'शब्दात्स्वार्थे कः। 'सुपः परो ने'ति प्रसज्यप्रतिषेधेन व्या-

किम् ?। नौका । प्रत्ययस्थात्किम् ?। शक्नोतीति शका । असुपः किम् ?। बहुपरिव्राजका नगरी । कात्किम् ?। नन्दना । पूर्वस्य किम् ?। परस्य माभूत्—कटुका । तपरः किम् ?। राका । आपि किम् ?। कारकः ॥ ❀ **मामकनरकयोरुपसङ्ख्यानम्** ॥ मामिका । नरान्कायतीति नरिका ॥ ❀ **त्यक्त्यपोश्च** ॥ दाक्षिणात्यिका ।

---

मित्यज्ञातार्थेऽकच् । **कारिकेति** । करोतेर्ण्वुल् । णित्त्वाद्वृद्धिः । **नौकेति** । 'नौ' शब्दात्स्वार्थे कः, ततष्टाप् । **शकेति** । शक्नोतीति विग्रहः । पचाद्यच् । ततष्टाप् । **बहुपरिव्राजकेति** । परिपूर्वाद्व्रजेर्ण्वुल् । बहवः परिव्राजका यस्यामिति बहुव्रीहौ तदवयवस्य सुपो लुकि कृतेऽपि प्रत्ययलक्षणेनोत्तरपदस्य सुबन्तत्वाट्टापः सुबन्तात्परत्वमस्तीतीत्वमत्र न भवति। **नन्दनेति** । 'नन्दिग्रही'ति ल्युः । **पूर्वस्य किमिति** । अर्थादिवेदं लभ्यते । टाबेकादेशे कृते परत्र ह्रस्वाकाराभावादिति प्रश्नः। इतरो निर्दिष्टपरिभाषया कात्पूर्वस्येति न लभ्येत, किंतु टाबेकादेशं बाधित्वा कात्परस्यैवाकारस्य स्यादित्याशयेनाह–**परस्येत्यादि** । **कटुकेति** । कटुरत्र कटुरसवति । अज्ञातादौ कः । वस्तुतस्तु सूत्रे 'प्रत्ययस्थे की'ति सप्तमीनिर्देशमेव कृत्वा 'पूर्वस्ये'ति ग्रहणं सुत्यजमित्याहुः । **राकेति** । 'कृदाधारार्चिकलिभ्यः कः' । बाहुलकादित्संज्ञाऽभावः । संज्ञापूर्वकविधेरनित्यत्वात् 'केऽणः' इति ह्रस्वो न । **मामकनरकयोरिति** । ककारस्य प्रत्ययस्थत्वाभावादप्राप्ते वचनम् ॥ **मामिकेति** । ममेयं मामिका । 'युष्मदस्मदोरन्यतरस्यां खञ्'च्'त्यण्, 'तवकममकावेकवचने' इति ममकादेशः, आदिवृद्धिः । 'केवलमामके'त्यादिना 'संज्ञाछन्दसोरेवे'ति नियमान्न ङीप् । **नरकेति** । 'कै शब्दे' 'आदेच उपदेशे' इत्यात्वम्, 'आतोऽनुपसर्गे कः', 'आतो लोप इति चे'त्यालोपः, टाप्, इत्वम् । **त्यक्त्यपोश्च** । 'उपसङ्ख्यान'मित्यनुपज्यते । 'उदीचामातः' इति विकल्पापवादः । **दाक्षिणात्यिकेति** । दक्षिणस्यामदूरे दक्षिणा । 'दक्षिणादाच्' दक्षिणा भवेति विग्रहे 'दक्षिणापश्चात्पुरसस्त्यक्', 'किति च' इत्यादिना

---

ख्याने फलमाह–**बहुपरिव्राजकेति**। पर्युदासे हि समुदायस्य सुब्भिन्नत्वेन, सुबन्तभिन्नत्वेन च ततः परत्वादित्वं दुर्वारमिति भावः। परिपूर्वाद्व्रजेर्ण्वुलि बहुव्रीहौ सुपो लुक्यपि प्रत्ययलक्षणेनाऽऽपः सुबन्तात्परत्वं बोद्धव्यम्। **कटुकेति**। आपा सह सवर्णदीर्घात्पूर्वं वार्णादाङ्गस्य बलीयस्त्वादपवादत्वाच्चान्त्यककारादुत्तरस्याऽकारस्येत्त्वं स्यादिति भावः। **मामकेति** । कस्य प्रत्ययस्थत्वाभावादप्राप्ते वचनम् । ममेयमिति विग्रहे 'युष्मदस्मदोरन्यतरस्या'मित्यणि 'तवकममकावेकवचने' इति ममकादेशे आदिवृद्धिः । **नरानिति** । 'कै शब्दे' इत्यस्यादेच उपदेश इत्यात्वे 'आतोनुपसर्गे'इति के 'आतो लोप इटि चे'त्यालोपः ।

बह्वृची। 'ब्राह्मणी'त्यत्र तु शार्ङ्गरवादिपाठान्ङीना ङीष् बाध्यते। जातेः किम्?

---

ङीषं परत्वादयं बाधते। एवं चापत्याधिकारे 'औपगवी'ति प्रतीकमुपादाय 'टिड्ढाण'-ञित्यादिना ङीबिति व्याचक्षाणा उपेक्ष्या इति भावः। केचित्तु अपत्याधिकारादुत्तरत्रैव लौकिकं गोत्रं गोत्रशब्देन गृह्यते नान्यत्रेति पारिभाषिकगोत्रप्रत्ययान्त एव जातिकार्यं लभते न त्वपत्यप्रत्ययान्तः। 'गोत्रं च चरणैः सहे'ति वचनस्यापत्याधिकारात्पूर्वभावित्वात्। तथा चापत्यार्थे औपगवीति ङीबन्त इति प्राचामुक्तिः सम्यगेवेत्याहुः॥ **कठीति।** कठेन प्रोक्तमधीयाना वा। 'कलापिवैशंपायनान्तेवासिभ्यश्चे'ति वैशंपायनान्तेवासित्वाण्णिनिस्तस्य 'कठचरकाल्लु'गिति लुक्। अध्येत्रणस्तु 'प्रोक्ताल्लु'गित्यनेन।

**बह्वृचीति।** बह्व्य ऋचोऽध्येतव्या यया सेति बहुव्रीहिः। 'अनृचबह्वृचावध्येतर्येवे'ति वचनात् 'ऋक्पूरब्धू'रिति अप्रत्ययः समासान्तः। यद्यपि स्त्रीणामध्ययनं प्रतिषिद्धम्, तथापि पुराकल्पे ह्येतदासीत्। तदाह यमः—'पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते। अध्यापनं च वेदानां सावित्रीवचनं तथा।' इति। यद्वा—'मा नामाऽध्यगीष्ट तद्वंश्यत्वात्ताच्छब्द्यं भविष्यति, यथाऽनधीयानेऽपि माणवके। **ब्राह्मणीत्य**-

---

ऽश्वत्थाम्नि द्रौणायनवद्गोत्रत्वारोप इत्यभिप्रायेण। यूनि तु न शास्त्रीयगोत्रत्वारोपस्तत्र युवैव न गोत्रमिति नियमेन तत्संज्ञानिषेधात्तदाह—**अपत्यप्रत्ययान्त इति।** 'अपत्यं पौत्रप्रभृती'ति परिभाषित इति शेषः। **शाखाध्येत्रिति**—षष्ठीतत्पुरुषः। शाखायामस्त्रीविषयत्वाऽभावात्। **जातिकार्यं लभते इति।** अनेनाऽस्यातिदेशत्वं बोधयति। कठेन प्रोक्तमधीत इति वैशम्पायनान्तेवासित्वात्प्रोक्तार्थे णिनेः 'कठचरका'दिति लुक्। अद्ध्येत्रणः प्रोक्ताल्लुक्। बह्व्य ऋचो ऽध्येतव्या यस्या इति विग्रहे 'ऋक्पू'रित्यसमासान्तः। स्त्रिया अध्ययनाभावे ऽपि तद्वंश्यत्वात्ताच्छब्द्यं, यथाऽनधीयाने माणवके। ब्राह्मणीत्यत्राऽपत्ये ऽणि 'ब्राह्मोऽजाता'वित्युक्तेष्टिलोपाऽभावः। **परे तु** 'आकृतिग्रहणे'त्येव लक्षणम्, आकृतिपदमुपदेशोपलक्षणम्। आकृतिद्वारा साक्षाद्वोपदेशेन ग्राह्या जातिरित्यर्थः। तत्रेदृशाकारो गौरित्याकृत्युपदेशग्राह्या गोत्वादिजातिः। 'अयं ब्राह्मण' इति साक्षादुपदेशग्राह्या ब्राह्मणत्वादिजातिः। यद्वा आकृतिग्रहणं जातिग्राहकोपदेशस्याप्युपलक्षणं, 'लिङ्गानाञ्च न सर्वभा'गिति तत्स्वरूपानुवादकं, तेन शुक्लादिगुणानामेकत्वेऽपि जातित्वाभावो बोधितः। अत एव 'विशेषणानाञ्चे'ति सूत्रे जातेराविष्टलिङ्गत्वं भाष्ये उक्तम्। **आविष्टलिङ्गत्वं**—नियतलिङ्गत्वमिति कैयटः। तच्च प्रायिकमिति **केचित्।** भाष्यप्रामाण्याज्जातेरेकशब्दवाच्याया न त्रिलिङ्गता। तटन्निष्वित्यादि कोशकृतां प्रमाद इत्यन्ये। सकृदाख्यातनिर्ग्राह्येत्यनेनैकत्वमनेकानुगतत्वञ्च बोधितम्। सकृदेकवारं कचिद्व्यक्तौ साक्षादाकृतिद्वारा वोपदिष्टा व्यक्त्यन्तरे ग्रहीतुं शक्येति तदर्थः। 'गोत्रञ्चे'त्यादि प्राग्वदेव। अत एव **'प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः। असर्वलिङ्गां बह्वर्थान्तां जातिं कवयो विदु'**रिति लक्षणान्तरं भाष्ये उक्तम्। सत्त्वस्य द्रव्यस्य प्रादुर्भावविनाशाभ्यां य[illegible] सा जातिरिति

मुण्डा । अस्त्रीविषयात्किम् ? । बलाका । अयोपधात्किम् ? । क्षत्रिया ॥ **॥ योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः ॥** हयी । गवयी । मुकयी । 'हलस्तद्धितस्ये'ति यलोपः। मनुषी ॥ **॥ मत्स्यस्य ङ्याम् ॥** मत्सी ॥ **पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च** ।४।१।६४। पाकाद्युत्तरपदाज्जातिवाचिनः स्त्रीविषयादपि ङीष् स्यात् । ओदनपाकी । शङ्कुकर्णी । शालपर्णी । शङ्खपुष्पी । दासीफली । दर्भमूली । गोवाली । ओषधिविशेषे रूढा एते ॥ **इतो मनुष्यजातेः** ।४।१।६५। ङीष् स्यात् । दाक्षी । योपधादपि-उदमेयस्यापत्यं

---

त्रेति । एवं च प्राचो ङीबुदाहरणं प्रामादिकमिति भावः । **मुण्डेति** । मुण्डगुणयोगान्मुण्डा । '**बलाका** बिसकण्ठिका' । **क्षत्रियेति** । 'क्षत्राद्धः' इत्यपत्ये घविधानाद्गोत्रलक्षणा, 'लिङ्गानां च न सर्वे'त्यादिलक्षणा वा जातिः । **योपधप्रतिषेध इत्यादि** । गौरादिषु गवादय इदानीन्तनैः प्रक्षिप्ता इत्यस्मादेव वार्तिकाद्विज्ञायत इति कैयटादयः । **पाककर्ण** । 'जाते'रित्यनुवृत्तेर्नेह-बहुपुष्पा बहुफला शाखा ।

एवं हि पूर्वेणैव सिद्धे किमनेन सूत्रेणेत्याशङ्क्याह-**स्त्रीविषयादपीति** । **इतो मनुष्य** । इतः किम् ? । विट् । दरद् । विट्शब्दात् 'जनपदशब्दात्क्षत्रियादञ्'इत्यञ् । दरच्छब्दात्तु 'द्व्यञ्मगधे'त्यण् । तयोः 'अतश्चे'ति लुक् । यस्तु वैश्यपर्यायो विट्शब्दः सोऽपि प्रत्युदाहरणमित्याहुः । **दाक्षीति** । 'अत इञ्' । गोत्रलक्षणा जातिः । अदन्तत्वा-

---

लक्षणम् । यावद्द्रव्यभाविनीति तदर्थः । अनेन गोत्वब्राह्मणत्वयोरुभयोरपि सङ्ग्रहः । गुणैर्युगपद् द्रव्येण सम्बध्यते यथा निर्गुणस्य द्रव्यस्य नोपलम्भस्तथा जातिरहितस्यापीत्यर्थ इति **कैयटः** । इदं स्वरूपकथनमेव । अत्र लक्षणे'ऽसर्वलिङ्गा'मित्येतन्मदुक्तार्थकमेव न तु लक्षणान्तरमनुपयोगात् । बह्वर्था-सर्वव्यक्तिव्यापिनीमित्यर्थः । एतदेकवाक्यतया पूर्वलक्षणेऽपि मदुक्तव्याख्यैवोचिता । अत एव 'कः पुनरेतयोर्जातिलक्षणयोर्विशेषः, यथा पूर्वलक्षणं तथा कुमारीभार्य इति भवितव्यं, यथोत्तरं तथा कुमारभार्य' इति भाष्ये 'लक्षण'मित्येकवचनमेव प्रयुक्तम् । अत एवाकडारसूत्रशेषे 'आकृतिग्रहणा जाति'रित्येवोक्तं भाष्ये इत्याहुः ।

**बलाकेति** । अयञ्च बिसकण्ठिकापदवाच्यजातिविशेषवाची । स च बकत्वव्याप्योऽन्यो वेत्यन्यदेतत् । 'अस्त्रीविषया'दित्यस्य प्रवृत्तिनिमित्तैक्ये लिङ्गान्तररहितभिन्नादित्यर्थः । एतेन बलां कायतीति यौगिकस्य सर्वलिङ्गत्वात्, **'बलाका बकपङ्क्तिः स्याद्बलाका बिसकण्टिका । बलाका कामुकी प्रोक्ता बलाकश्च बको मत'** इति कोशे पुंलिङ्गस्याप्यभिधानाच्च नेदं युक्तमित्यपास्तम् । अत एव 'पाककर्णे'ति सूत्रं चरितार्थं, तद्धि स्त्रीविषयार्थमन्यथा तेषामपि यौगिकेऽर्थे लिङ्गान्तरसम्भवेन पूर्वेण सिद्धे तद्वैयर्थ्यं स्पष्टमेव । **पाककर्ण** । जातिवाचिनः किम् ? । बहुपुष्पा शाखा । **स्त्रीविषयादपीति** । अजात्यर्थन्तु न, प्राक्पुष्पादिषु जातिवचनेषु नित्यस्त्रीलिङ्गेषु सिद्धेऽकाण्डेत्या-

औदमेयी । मनुष्येति किम् ? । तित्तिरिः ॥ **ऊङुतः** ।४।१।६६। उकारान्तादयोपधान्मनुष्यजातिवाचिनः स्त्रियामूङ् स्यात् । कुरूः । 'कुरुनादिभ्यो ण्यः' । तस्य 'स्त्रियामवन्ती'त्यादिना लुक् । अयोपधात्किम् ? । अध्वर्युः ॥ ❀ **अप्राणिजातेश्चारज्ज्वादीनामुपसङ्ख्यानम्** । रज्ज्वादिपर्युदासादुवर्णान्तेभ्य एव । अलाबूः । कर्कन्धूः । अनयोर्दीर्घान्तत्वेऽपि 'नोङ्धात्वो'रिति विभक्त्युदात्तत्वप्रतिषेध ऊङः फलम् ॥

---

ऽभावादप्राप्तो ङीप् विधीयते । **योपधादपीति** । 'जाते'रित्यनुवर्तमाने पुनर्जातिग्रहणादिति भावः । **उदमेयस्येति** । उदकं मेयं यस्य उदमेयः । 'उदकस्योदः संज्ञाया'मित्युदादेशः । इञ उपसङ्ख्यानमजात्यर्थम् । सौतङ्गमी । निर्वृत्ताद्यर्थे 'वुञ्छ'णादिसूत्रेण सुतङ्गमादिभ्य इञ्, न चायमिञन्तो जातिः । **ऊङुतः** । ङकारो 'नोङ्धात्वोः' इति विशेषणार्थः । अन्यथा 'यवाग्वा' 'यवाग्वै' इत्यत्रापि स निषेधः स्यात् । दीर्घोच्चारणं तु 'श्वश्रू'शब्दार्थम् । अन्यत्र सवर्णदीर्घेणापि सिद्धेः । **कुरूरिति** । लिङ्गविशिष्टपरिभाषया स्वादयः । अत्र व्याचक्षते—'यद्येकादेशस्य पूर्वान्तत्वेन ग्रहणात्स्वादय इति व्याख्यायेत तर्हि 'काण्डे' 'कुड्ये' इत्यादावपि 'एकवचनमुत्सर्गतः' इति सुः प्रवर्तेत, तद्वारणाय 'अप्रत्ययः' इति प्रसज्यप्रतिषेधाभ्युपगमे तु प्रकृते दोषः । 'श्वश्रू'रित्यत्रैकादेशाभावाल्लिङ्गविशिष्टपरिभाषाया आवश्यकत्वाच्च । अतएव 'रमे' इत्यत्र 'एकादेशस्य पूर्वान्तत्वेन ग्रहणात्स्वादय' इति मनोरमादौ न व्याख्यातमिति ।

**अध्वर्युरिति** । अध्वर्युशाखाध्येत्री, अध्वर्युशाखाध्यायिवंशोद्भवेति वार्थः । चरणलक्षणेयं जातिः । अध्वरं यातीति विग्रहे 'मृगय्वादयश्चे'त्यौणादिकेन अध्वरशब्दस्यान्तलोपः, याधातोः कुप्रत्ययश्च । **पर्युदासादिति** । यदि सूत्रादुत इति गृह्यते तर्हि अलाब्वादावूङः संभवो नेति भावः । **अलाब्वेत्यादि** । प्रथमान्तं द्वितीयान्तं वा नोदाहृतम् । वक्ष्यमाणप्रयोजनस्य तत्राऽसंभवात् ॥

**नोङ्धात्वोरिति** । ऊङ्धात्वोर्यणः परे शसादय उदात्ता न स्युरिति सूत्रार्थः ।

---

दिनिषेधात् । **योपधादपीति** । पुनर्जातिग्रहणादिति भावः । 'अस्त्रीविषया'दिति तु पूर्वसूत्रेण विच्छिन्नम् । **तित्तिरिरिति** । 'स्त्रीपुंसयोरपत्यान्ता द्विचतुःषट्पदोरगा' इत्यमराद्यं स्त्रियामपीति भावः । इतः किम् ? । दरत् । 'द्व्यञ्मगधे'त्यणो 'ऽतश्चे'ति लुक् । **ऊङुतः** । ङकारो 'नोङ्धात्वो'रिति विशेषणार्थः । अन्यथा यवाग्वेत्यादावपि निषेधःस्यात् । दीर्घोच्चारणं प्रश्लेषेणोकारद्वयविधानद्वारा ब्रह्मबन्धूरित्यादिबहुव्रीहौ परकब्निवृत्त्यर्थम् । रूपाणां सवर्णदीर्घेण सिद्धेरिति भाष्ये स्पष्टम् । 'श्वश्रू'रिति तु 'श्वशुरः श्वश्र्वे'ति निर्देशात् । **कुरूरिति** । [illegible] पूर्वान्तवत्त्वात्स्वादयः । **अध्वर्युरिति** ।

प्राणिजातेस्तु—कृकवाकुः। रज्ज्वादेस्तु—रज्जुः हनुः॥ **बाह्वन्तात्संज्ञायाम्** ।४।१।६७। स्त्रियामूङ् स्यात्। भद्रबाहूः। संज्ञायां किम्?। वृत्तबाहुः॥ **पङ्गोश्च** ।४।१।६८। पङ्गुशब्दात्स्त्रियामूङ् स्यात्। पङ्गूः॥ ॐ **श्वशुरस्योकाराकारलोपश्च** ॥ चादूङ्। पुंयोगलक्षणस्य ङीषोऽपवादः। लिङ्गविशिष्टपरिभाषया स्वादयः। श्वश्रूः॥ **ऊरूत्तरपदादौपम्ये** ।४।१।६९। उपमानवाचिपूर्वपदमूरूत्तरपदं यत्प्रातिपदिकं तस्मादूङ् स्यात्। करभोरूः॥ **संहितशफलक्षणवामादेश्च** ।४।१।७०। अनौपम्यार्थं सूत्रम्।

---

**पङ्गोश्च**। अजात्यर्थमिदम्। पङ्गुशब्दो हि गुणवाची। **श्वशुरस्येति**। पुंयोगलक्षणे ङीषि प्राप्ते ऊङ् तत्संनियोगेन च विधीयमानो लोपः संनिहितत्वादन्तस्यैवाकारस्य न त्वादेः। एतच्च वचनं 'श्वशुरः श्वश्र्वे'ति निर्देशसिद्धार्थकथनपरम्। अतोऽपि प्रथमाकारस्य लोपो न शङ्क्यः। **ऊरूत्तरपदात्**। उपमीयतेऽनयेत्युपमा तस्या भाव औपम्यम्। उत्तरपदेन पूर्वपदमिहाक्षिप्यते। तदेतत्फलितमाह—**उपमानवाचिपूर्वपदमिति**। **करभोरूरिति**। 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः'। तद्वदूरू यस्याः सा। 'धात्री कराभ्यां करभोपमोरु'रित्यत्र तूङ् न, करभशब्दस्योपमानवाचित्वेऽपि पूर्वपदत्वाभावात्। औपम्ये किम्?। वृत्तोरुः। 'उर्वन्ता'दिति वक्तव्ये उत्तरपदग्रहणं 'हस्तिस्वाम्यूरु'रित्यत्र माभूदित्येवमर्थम्। अत्र हि हस्तिन इव स्वाम्यूरू अस्या इति विग्रहः। तथा चोर्वन्तत्वेऽपि ऊरूत्तरपदत्वमिह नास्ति। 'स्वाम्यूरु'शब्दस्यैवोत्तरपदत्वात्। **संहित**। संहितादिपूर्वपदमूरूत्तरपदं यत् प्रातिपदिकं तस्मादूङ् स्यात्।

**शफाविति**। यद्यप्यमरेण 'शफं क्लीबे खुरः पुमान्'इति नपुंसकतोक्ता, तथापि शफशब्दस्य पुंस्त्वमपि प्रामाणिकमेव। 'शफाविव जर्भुराणे'ति श्रुतेः। 'शफः खुरे गवादीनां मूले विटपिनामपि' इति हेमचन्द्रकोशाच्च।

---

अध्वर्युशाखाध्यायिवंशोद्भवेत्यर्थः। **रज्ज्वादीति**। 'उत' इति तु नेह सम्बध्यते, 'अलाबू'रिति भाष्योदाहरणादिति भावः। 'कृकवाकु'रित्यत्र मनुष्यजातित्वाभावात्पूर्वेणापि न।

**पङ्गोश्च**। पङ्गुशब्दो गुणवाचीति पूर्वेणाऽप्राप्तिः। **श्वशुरस्येति**। 'श्वश्र्वे'ति निर्देशादन्त्याकारस्य लोपः। तन्निर्देशसिद्धमेवैतत्। भाष्ये त्विदं न दृश्यते, ङ्याविति सूत्रस्थभाष्यस्वरसस्त्वयमनूङन्तोऽव्युत्पन्नं प्रातिपदिकमिति। **ऊरूत्त**। उपमीयतेऽनयेत्युपमा- उपमानं, तद्भाव औपम्यम्—उपमानत्वम्। एवं च तद्बोधकोरूत्तरपदादित्यर्थः। उत्तरपदाक्षिप्तपूर्वपदं प्रत्यासत्त्योपमानवाच्येव, अतः करभोपमोरुरित्यत्र न। तदाह—**उपमानवाचीति**। **करभेति**। मणिबन्धादाकनिष्ठं करबहिर्भागः करभस्तद्वदूरू यस्या इत्यर्थः। **उपचारादिति**। शफशब्दप्रवृत्तिनिमित्तस्योरुपदार्थे

---

१ संहितादिपूर्वपदमूरूत्तरपदं यत्प्रातिपदिकं तस्मादूङ् स्यादिति वृत्तिः।

संहितोरूः। सैव शफोरूः। शफौ खुरौ, ताविव संश्लिष्टत्वादुपचारात्। लक्षणशब्दादर्शआद्यच्। लक्षणोरूः। वामोरूः॥ ॐ **सहितसहाभ्यां चेति वक्तव्यम्**॥ हितेन सह इति सहितौ उरू यस्याः सा सहितोरूः। सहेते इति सहौ ऊरू यस्याः सा सहोरूः। यद्वा विद्यमानवचनस्य सहशब्दस्य ऊर्वतिशयप्रतिपादनाय प्रयोगः॥ **संज्ञायाम्** ।४।१।७२। कद्रुकमण्डल्वोः संज्ञायां स्त्रियामूङ् स्यात्। कद्रूः। कमण्डलूः। संज्ञायां किम् ?, कद्रुः। कमण्डलुः। अच्छन्दोर्थं वचनम्॥ **शार्ङ्गरवाद्यञो ङीन्** ।४।१।७३। शार्ङ्गरवादेरञो योऽकारस्तदन्ताच्च जातिवाचिनो ङीन्

---

**वामोरूरिति**। वामौ सुन्दरौ ऊरू यस्या इति विग्रहः। कथं तर्हि 'पीवरोरु! पिबतीव बर्हिणः' इति कुमारः। ऊङभावे हि 'पीवरोरो' इति स्यात्। ऊङश्चेह विधायकं नास्ति। अत्राहुः—संज्ञापूर्वकविधेरनित्यतया संबुद्धिगुणाभावादिति स्थितस्य गतिरुन्नेयेति। **हितेन सहेति**। अत्राहुः—'समो वा हिततयोः' इति व्युत्पादितः 'सहित'शब्दस्तु नेह गृह्यते, एकदेशविकृततया संहितग्रहणादेव तत्सिद्धेरिति भावः। **कमण्डलुरिति**। चतुष्पाज्जातिवाचकोऽयम्। अतएव 'चतुष्पाद्भ्यो ढञ्' इत्यत्र 'कामण्डलेय' इत्युदाहरिष्यते। पात्रपर्यायस्तु न प्रत्युदाहरणं, तस्य स्त्रीलिङ्गाऽभावात्। **अच्छन्दोर्थमिति**। वेदे तु 'कद्रुकमण्डल्वोश्छन्दसी'त्यनेन संज्ञायामसंज्ञायां चोङ् सिध्यतीति भावः। **अञो योऽकार इति**। अञा अकार विशेषणं किम् ?। शूरसेनी। 'जनपदशब्दा'दित्यञः 'अतश्चे'ति लुकि जातिलक्षणोऽत्र ङीष्। **शार्ङ्गरवीति**। शृङ्गरुशब्दादपत्येऽण्। आदिवृद्धिः। 'ओर्गुणः'। 'टिड्ढाणञ्–' इति ङीपं बाधित्वा परत्वात् 'जातेः' इति ङीषि प्राप्ते ङीन् विधीयते। तेन नित्वादाद्युदात्तः। ङीषि तु प्रत्ययस्वरेणाऽन्तोदात्तः स्यात्॥

---

आरोपादित्यर्थः। एवञ्च समासस्योपमानोपमेयभावाऽवोधकत्वेन न पूर्वसूत्रप्राप्तिः। तदारोपे च स निमित्तमित्यन्यदिति भावः। ननु 'सह'शब्दग्रहणं व्यर्थं, सर्वस्योरुमत्त्वेन सहशब्दप्रयोगस्य तत्समभिव्याहारे व्यर्थत्वेन 'सहोरू'रिति प्रयोगस्यैवाभावादत आह—**सहेते इति**। 'रतिश्रम'मिति शेषः। सह विद्यमानावूरू यस्या इत्यर्थ इति **कैयटः**। अतिरमणीयावित्यर्थ इति तदाशयः। 'कमलानि कमलानी'तिवत्। **कद्रूरिति**—नागमातुः संज्ञा। **अच्छन्दोर्थमिति**। छन्दसि 'कद्रुकमण्डल्वोश्छन्दसी'त्यनेनैव सिद्धिरिति भावः। **अञो य इति**। 'शार्ङ्गरवादी'ति लुप्तपञ्चम्यन्तम्। अञ इति च षष्ठी। अनुपसर्जनादिति विभक्तिविपरिणामेनाऽस्य विशेषणम्। एवं 'टिड्ढे'त्यत्रापि सुवचम्। तद्वदत्र पञ्चम्यन्तत्वमपि सुवचम्। 'अञ्योऽकार' इत्यपि पाठः क्वचित्। ... ङीपि प्राप्ते

स्यात्। शार्ङ्गरवी। बैदी। जातेरित्यनुवृत्तेः पुंयोगे ङीषेव। नृनरयोर्वृद्धिश्चेति

**बैदीति**। विदस्यापत्यं स्त्री। 'अनृष्यानन्तर्ये बिदादिभ्योऽञ्'। पूर्ववज्जातिलक्षणे ङीषि प्राप्ते ङीन् विधीयते। शाङ्गरव कापटव ब्राह्मण गौग्गुलव गौतम इत्यादि। शृङ्गरु-कपटुब्रह्मन्गुग्गुलुशब्देभ्यः प्राग्दीव्यतोऽण्। गौतमशब्द ऋष्यणन्तः। अयं गौरा-दिष्वपि पठित इति पक्षे अत्र ङीषपि भवति। **ङीषेवेति**। 'जाते'रित्यननुवृत्तौ तु शार्ङ्गरवस्य स्त्री विदस्य स्त्रीति पुंयोगविवक्षायामपि परत्वान्ङीनेव स्यादिति भावः। **नृनरयोरिति**। नृशब्दात् 'ऋन्नेभ्यः' इति ङीपि नरशब्दाज्जातिलक्षणे ङीषि प्राप्ते वचनं वृद्धिविधानार्थम्। ननु नरशब्दे 'अलोऽन्त्यस्ये'ति वृद्धिः स्यात्। अत्राहुः— 'वार्णादाङ्गं बलीयः' इत्यकारस्य 'यस्येति चे'ति लोपेनापहारादनन्त्यस्याप्यकारस्य वृद्धिर्भवतीति। यद्वा नरस्य–अः नरः। कतन्तवत्पररूपम्। ना च नरश्च तयोर्नृनरयोः। परस्य च प्रथम एवाकारो गृह्यते न तु द्वितीयः, प्रश्लेषसामर्थ्यादिति। इह नरस्ये-त्यर्थवतो ग्रहणाद्वानरशब्दे नातिप्रसङ्ग इति बोध्यम्। यद्यप्यन्यतरोपादानेनापि 'नारी'ति रूपं सिध्यति तथाप्यन्यतरस्यानिष्टरूपनिवृत्त्यर्थं द्वयोरुपादानम्। कथं तर्हि 'किंनरीणां नरीणा'मित्यादिप्रयोगः? । अत्राहुः-नरस्य स्त्री नरी। पुंयोगलक्षणो ङीप्। एवं च किंनरी-त्यपि सिद्धम्। किंचिन्नरीति विग्रहादिति। केचित्तु अनिर्दिष्टस्थानिकत्वादिक्परिभाषोप-स्थितौ नृशब्दस्यैव वृद्धेर्नारीति भवति। नरशब्दस्य ग्रहणं तु ङीनर्थमेव। तत्राऽनिको वृद्ध्यभावान्नरीत्येव भवितव्यमित्याहुः। तदपरे न क्षमन्ते। यदि ङीनर्थमेव नरशब्द-ग्रहणं स्यात्तर्हि शाङ्गरवादिगणे पृथगेव पठेत्। वृद्धिविधायके तद्गणसूत्रे तत्पा-ठस्य वैयर्थ्यापत्तेरिति। पुत्रशब्दोऽत्र गणे पठ्यते। ततः स्त्रियां ङीन्। पुत्री। न च पुत्रशब्दः कन्यायां नास्तीति शङ्क्यम्। 'आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी। आहुर्दुहितरं सर्वे' इत्यमरोक्तेः। तेन 'पुत्रीव हर्षं हृदये तनोति'। 'कुर्वे तदुर्वीपति-पुत्रि! सर्वम्' इत्यादिप्रयोगा निर्बाधा एव। यत्त्वत्र हरदत्तेनोक्तम्–'केवलः पुत्रशब्दः स्त्रियां नास्ती'ति। तदुपेक्ष्यम्। उदाहृतकोशविरोधात्। 'सूतिकापुत्रिके'त्यत्र स्वग्रन्थ-

वचनम्। अणिआदिवृद्ध्योर्गुणौ। पुत्रशब्दोऽत्र पठ्यते तस्य पाठसामर्थ्याज्जातित्वाभावेऽपि ङीन्। **नृनरयोरिति**। यद्यपि नारीति 'नृ'शब्देन सिद्धं, नरीति तु पुंयोगे ङीपा दुर्वारं, जातिग्रहणानुवृत्त्या तत्रास्याप्रवृत्तेरिति नरग्रहणं व्यर्थं, तथाऽपि नरत्वजातिमात्रप्रतिपिपादयिषायां 'नरी'ति व्यावृत्त्यर्थं तद्ग्रहणम्। अत्राद्याकारस्यैव वृद्धिर्लक्ष्यानुसारिव्याख्यानात्। वस्तुत इदं गणसूत्रमनार्षं, नुर्नरस्य च धर्म्या नारी 'ऋतो ऽ'मिति सूत्रेण नरस्य चेति वक्तव्यमिति वार्तिकेन चाद्यदात्तनार्याः सिद्धेः।

गणसूत्रम् । नारी ॥ **यङश्चाप्** ।४।१।७४। यङन्तात् स्त्रियां चाप् स्यात् । यङिति ष्यङ्ष्यञोः सामान्यग्रहणम् । आम्बष्ठ्या । कारीषगन्ध्या ॥ ❀ **षाच्यञश्चाप् वाच्यः** ॥ पौतिमाष्या ॥ **आवट्याच्च** ।४।१।७५। अस्माचाप् स्यात् । 'यञश्चे'ति ङीपोऽपवादः । अवटशब्दो गर्गादिः । आवट्या ॥ **तद्धिताः** ।४।१।७६। आपञ्च-मसमाप्तेरधिकारोऽयम् ॥ **यूनस्तिः** ।४।१।७७। युवन्शब्दात्तिप्रत्ययः स्यात्स च तद्धितः । लिङ्गविशिष्टपरिभाषया सिद्धे तद्धिताधिकार उत्तरार्थः । युवतिः । अनु-

---

विरोधाच्च । एवं च 'सूतोग्रराजभोजकुलमेरुभ्यो दुहितुः पुत्रड्वा' इति 'कारे सत्यागदस्ये'-तिसूत्रस्थवार्तिकं व्यर्थमिति मनोरमायां स्थितम्। **यङश्चाप्** । पकारोऽत्र 'हल्ङ्याब्भ्यो दीर्घात्—'इति सामान्यग्रहणार्थः। चकारस्य तदविघातेन चरितार्थत्वेऽपि परत्वाच्चित्स्वरः पित्स्वरं बाधते। **आम्बष्ठ्येति** । आम्बष्ठस्यापत्यं स्त्री । 'वृद्धेत्कोसला—'इति ञ्यङ् ।

**कारीषगन्ध्येति** । करीषस्येव गन्धोऽस्य करीषगन्धिः । 'उपमानाच्चे'ति गन्धस्येदन्तादेशः । तस्य गोत्रापत्यं स्त्री । अण् । 'अणिञोरनार्षयोः—' इति ष्यङा-देशः । स च यद्यपि स्त्रियामेव विहितस्तथापि ङित्करणसामर्थ्यात्तदन्तादप्ययं चाप् ।

**षाच्यञ इति** । एतच्च 'आवट्याच्चे'ति चकारस्यानुक्तसमुच्चयार्थत्वाल्लभ्यत इत्याहुः । **पौतिमाष्येति** । पूतिमाषशब्दो गर्गादिः । **तद्धिताः** । बहुवचन-मनुक्तानामुपसङ्ख्येयानां सङ्ग्रहार्थम् । महासंज्ञाकरणं तु—तेभ्यः प्रयोगेभ्यो हितास्त-द्धिता इत्यन्वर्थलाभाय । तेन यथाप्रयोगमेव स्युः । ननु टापः प्रागेवायमधिकारोऽस्तु, ष्फविधौ तद्धितग्रहणं यस्येतिलोपे, ईद्ग्रहणं च मास्त्विति चेन्मैवम् ; 'पट्वी' 'मृद्वी'त्या-दावोर्गुणप्रसङ्गात्। यदि तु 'यस्येति चे'त्यत्र ईद्ग्रहणमेव ङीषि तद्धितकार्याभावं ज्ञापय-तीति स्वीक्रियेत, तर्हि टापः प्राक्तद्धिताधिकारेऽपि न कश्चिद्दोष इति केचित् । तच्चिन्त्यम् । 'कुरू'रित्यादौ ओर्गुणादिप्रसङ्गादिति नव्याः । **यूनस्तिः** । 'ऋन्नेभ्यः' इति ङीपोऽपवादः । **युवतिरिति** । 'स्वादिषु—' इति पदत्वान्नलोपः । कथं तर्हि

---

रूढ्या योग्यतया च तद्धर्म्या नरत्वजातिविशिष्टैव बुद्ध्यते। अत एव 'वसेस्तव्यत्कर्त्तरि णिच्चे'ति वचनं वास्तुनि भवो वास्तव्य इति दिगादित्वात्संसाद्ध्य प्रत्याख्यातं भाष्ये। नित्यानां शब्दानां यथाकथं चिदन्वाख्यानं कार्यमिति **कैयटः** । रूढ्या सर्वदोषपरिहार इति तदाशयः । **यङश्चाप्** । पकारो 'याडाप' इत्यत्र सामान्यग्रहणार्थः । चकारस्य द्व्यनुबन्धकत्वसम्पादनद्वारा सामान्यग्रहणावि-घातकत्वेन चारितार्थ्येऽपि 'आम्बष्ठ्या' 'आवट्ये'त्यादौ परत्वाच्चित्स्वरः पित्स्वरं बाधते इति बोद्धव्यम् । **षाच्यञ इति** । एवञ्च गौकक्ष्यशब्दस्य गर्गादियञन्तस्योदीचां मतेऽनेनैव चापः सिद्धेः स क्रौड्यादिषु न पाठ्यः । संप्रसारणन्तु तस्य नेष्यमिति स्पष्टं भाष्ये । **यूनस्तिः** । 'ऋन्नेभ्य' इति

पसर्जनादित्येव। बहवो युवानो यस्यां सा बहुयुवा। 'युवती'ति तु यौतेः शत्रन्तात् ङीपि बोध्यम्॥ इति स्त्रीप्रत्ययाः॥

'युवतीकरनिर्मथित'मिति प्रयोगः। अत्र केचित्—'सर्वतोऽक्तिन्नर्था'दिति बह्वादिगण-सूत्राद्वैकल्पिकोऽत्र ङीष्। न च तिप्रत्ययेनैव स्त्रीत्वस्योक्तत्वान्ङीष् न भविष्यतीति शङ्क्यम्,—'उक्तेऽपि हि भवन्त्येते' इति भाष्यात्। न चैवमपि युवतीनां समूहो 'यौवत'-मिति न सिध्येत्। किं तु 'तस्य समूहः' इत्यणि 'भस्याढे तद्धिते' इति पुंवद्भावेन 'यौवन'मित्येव स्यादिति वाच्यम्, बाहुलकाद्यौतेरौणादिके कतिप्रत्यये सति युवति-शब्दस्तमादाय तत्सिद्धेरिति। इमं क्लेशं परिहरन्नाह—**शत्रन्तादिति**। यौति मिश्री-करोति पत्येति विग्रहे 'लटः शतृशानचौ' इति शतरि 'उगितश्च' इति ङीप्। एवं हि 'यौवत'मिति प्रयोगोऽपि सुलभः। त्यन्तादणि तु पुंवद्भावाद्यौवनमित्येव। 'भिक्षादि-पाठसामर्थ्यात् पुंव'दिति वृत्तिकारोक्तिरयुक्तेति 'भिक्षादिभ्योण्' इत्यत्रैवोपपादयिष्यामः।

**॥ इति तत्त्वबोधिन्यां स्त्रीप्रत्ययप्रकरणम्॥**

ङीपोऽपवादः। **उत्तरार्थं इति**। इह करणं तदनित्यत्वज्ञापनार्थमिति केचित्।

**इति लघुशब्देन्दुशेखरे स्त्रीप्रत्ययाः।**

# अथ प्रश्नपत्राणि ।



## सन् १९९८ ई०

१ पुंस्कोकिलः, चतुर्मुखः, वर्णाश्रमेतराणाम्, क्रोष्टूनाम्, प्रर्णाम्, एते सशङ्कासमाधि वाच्याः ।

२ लिट्सु, राज्ञः, षण्णाम्, अमुना, असुकः, एषां सिद्धिः प्रदर्शनीया ।

३ तादृक्, तक्, विविट्, स्वाम्पि, एषां सिद्धिः प्रदर्शनीया ।

४ पञ्चाजी, शूद्री, उपाध्यायी, नागा, अनासिका, एतेषां साधुत्वं प्रदर्शनीयम् ।

## १८९९

१ तवल्कारः, उपोपति, सुगर्ण्णाशः, एतान् संसाध्य 'संस्कर्तेति' कति रूपाणि कथं च तत्र सन्धिकार्यं तदपि लेख्यम् ।

२ सर्वेषाम्, विश्वपः, सखी, कति, उत्तरपूर्वस्यै, तिस्रः, कतरत्, अजरांसि, एतानि रूपाणि साधयत ।

३ अनड्वान्, अनेन, शुनः, अष्टौ, युष्मान्, असुमुयङ्, इयम्, विदुषः, ददन्ति, अमूनि । एतेऽपि साधयत ।

४ द्विपदी, द्विपदा, सीसा, गङ्गिका, गङ्गाका, पौंस्नी, लौहित्यायनी । अत्र कथं प्रत्यया जाताः ? ।

## १९००

१ सन् शम्भुः, उ इति, ब्रह्म ऋषिः—इत्यत्र किं किं कथं प्राप्नोति तच्च कुतो नेति उक्त्वा 'गव्यूतिः', 'मातुः कृपा' इत्यत्र किं किं कथं प्राप्नोति तच्च कुतो नेति सशङ्कासमाधि वाच्यम् ।

२ बहुश्रेयस्याम्, गाः, निच्शु, जरसौ, वारि, प्रियक्रोष्टूनि, प्रर्णाम् एते सशङ्कासमाधि वाच्याः ।

३ प्रियाष्ट्नः, वृत्रघ्नः, त्वं स्त्री, अतितुभ्यम्, पुमान्, असृग्, बेभिदि । सशङ्कासमाधि वाच्याः ।

४ अवावा, पुत्रिका, कुण्डोध्नी, द्विदाम्नी, दृढपत्नी । एषु प्राप्तिप्रदर्शनपूर्वकं कार्याणि निरूपणीयानि ।

✽ श्रीः ✽

# वैयाकरण-सिद्धान्त-कौमुदी ।

## ✽ अथ कारकप्रकरणम् ✽

**प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा** ।२।३।४६। नियतोपस्थितिकः प्रातिपदिकार्थः । मात्रशब्दस्य प्रत्येकं योगः । प्रातिपदिकार्थमात्रे

---

'स्वौजसमौट्'–इत्यादिना तावत् स्वादयो ङ्याप्प्रातिपदिकाद्दर्शिताः । तेषामर्थविशेषे व्यवस्थां दर्शयितुमारभते–**प्रातिपदिकार्थेत्यादिना** । प्रथमादयः सप्तम्यन्ताः प्राचां सञ्ज्ञास्तासिरिहापि व्यवहार इति 'स्वौजसमौट्'–इति सूत्रे मूलकृतोक्तम् ॥ कौस्तुभे तु–इह प्रथमादयः शब्दाः सुपां त्रिकेषु वर्तन्ते, 'समं स्यादश्रुतत्वात्' इति न्यायादित्युक्तम् । तथा च न्यायसिद्धत्वादस्मिञ्शास्त्रे प्रथमादिसञ्ज्ञानामकरणेऽपि न क्षतिरिति ज्ञेयम् ॥ यदा हि 'पञ्चकं प्रातिपदिकार्थः' इति गृह्येत ततो लिङ्गवचनग्रहणमनर्थकम्, 'प्रातिपदिकार्थे' इत्येव सिद्धेः, मात्रग्रहणाच्च कर्मादिव्यवच्छेदो न स्यात्, प्रातिपदिकार्थादनतिरिक्तत्वात् ॥ त्रिकपक्षेऽपि लिङ्गग्रहणमनर्थकमेवेत्याशङ्क्य विवक्षितं दर्शयति—**नियतोपस्थितिक इति** । यस्मिन्प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स प्रातिपदिकार्थ इत्यर्थः । शक्य इति यावत् ॥

नन्वेवं सिंहो माणवक इत्यादौ प्रथमा न स्यात् । अत्राहुः–शक्यार्थमादाय प्रथमाविभक्तेरुत्पत्तौ सत्यां पश्चात् पदान्तरसमभिव्याहारे लक्ष्यार्थबोधेऽपि क्षत्यभावादिति ॥ **मात्रशब्दस्येति** । तस्य चाऽत्राऽवधारणमर्थः । 'मात्रं कात्स्न्र्येऽवधारणे' इत्यमरः ॥ प्रातिपदिकार्थलिङ्गपरिमाणवचनान्येव प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रमित्येवकारेणाऽस्वपदविग्रहः । समासस्तु मयूरव्यंसकादित्वाद्बोध्यः ॥ **प्रत्येकमिति** । द्वन्द्वान्ते श्रूयमाण-

---

'स्वौजसमौ'डितिविहितस्वादीनामर्थविशेषव्यवस्थां दर्शयितुमाह–**प्रातिपदिकार्थेति** ॥ इदमपि सूत्रं क्रियायोग एव प्रवर्त्तते, अन्ततोऽस्तिक्रियायाः सर्वत्र सत्त्वात् । आख्यातार्थकर्त्रादिनाऽभेदान्वयेन तद्द्वारकः क्रियायोगो बोद्धव्यः । प्रथमान्तार्थस्याऽपि क्रियाजनकत्वादस्याः कारकविभक्तित्वेन भाष्ये व्यवहारः । ननु कृष्णादिशब्देषु लिङ्गस्याऽपि प्रातिपदिकार्थत्वाल्लिङ्गग्रहणमनर्थकमत आह–**नियतेति** । यस्मिन्प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स तदर्थ इत्यर्थः । अन्वया-

लिङ्गमात्राद्याधिक्ये परिमाणमात्रे सङ्ख्यामात्रे च प्रथमा स्यात् । उच्चैः । नीचैः । कृष्णः। श्रीः। ज्ञानम्। अलिङ्गा नियतलिङ्गाश्च 'प्रातिपदिकार्थमात्र' इत्यस्योदाहरणम्। अनियतलिङ्गास्तु लिङ्गमात्राद्याधिक्यस्य। तटः। तटी। तटम् । परिमाणमात्रे,–द्रोणो व्रीहिः । द्रोणरूपं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरित्यर्थः । प्रत्ययार्थे परिमाणे प्रकृत्यर्थोऽभेदेन संसर्गेण विशेषणम् । प्रत्ययार्थस्तु परिच्छेद्यपरिच्छेदकभावेन व्रीहौ

---

त्वादिति भावः । ननु वीरः पुरुष इत्यादावभेदसंसर्गस्याऽधिकस्य भानात्प्रथमा न स्यात् । न च 'पूर्वाऽपरे'त्यादिना वीरशब्दस्य समासविधानं प्रथमोत्पत्तौ लिङ्गमिति वाच्यं, द्वितीयाद्यन्तानामपि वीरं पुरुषमानयेत्यादौ तद्विधानस्य चरितार्थत्वादिति चेन्न; संसर्गस्य वाक्यार्थत्वेन वहिरङ्गत्वात्प्रथमप्रवृत्तसंस्कारबाधाऽनुपपत्तेः। पदसंस्कारपक्षस्यैवेहाभ्युपगमात् । मात्रपदेन कर्माद्याधिक्ये प्रथमा न भवेत्तथापि लिङ्गपरिमाणग्रहणाल्लिङ्गाधिक्ये परिमाणाधिक्ये च भवेदेवेत्याह-**लिङ्गमात्राद्याधिक्ये इति**। यद्यपि 'लिङ्गमात्रे' 'परिमाणमात्रे' इत्येवाऽक्षरार्थस्तथापि प्रातिपदिकार्थं विना लिङ्गादिप्रतीतेरसम्भवादिति 'तदाधिक्य' इत्युक्तम्। **उच्चैरिति**। पदत्वादिह रुत्वविसर्गौ भवतः। किञ्च अस्य प्रथमान्तत्वाद्ग्राम उच्चैस्तव स्वम् ,ग्राम उच्चैस्ते स्वमिति 'सपूर्वायाः' इति सूत्रेण तेमयादेशयोर्विकल्पसिद्धिरपि फलम् ॥ **कृष्ण इति** । यद्यपि नीलद्रव्येऽयमनियतलिङ्गः, तथापि वासुदेवे भगवति नियतपुंलिङ्ग इति भावः ॥ **ज्ञानमिति** । भावे ल्युट् ॥ **तटः तटी तटमिति** । द्विकपक्षे नियतलिङ्गं न प्रकृत्यर्थः, त्रिकपक्षे तु यद्यपि प्रकृत्यर्थः, तथापि तत्तल्लिङ्गस्य पाक्षिकोपस्थितिकत्वान्न 'प्रातिपदिकार्थे'त्यनेन गतार्थता ॥ **द्रोण इति** । न चेह 'प्रातिपदिकार्थमात्र' इत्येव प्रथमाऽस्त्विति वाच्यं, तथा सति परिच्छेद्यपरिच्छेदकभावस्य संसर्गविधया भानाऽयोगात् । नामार्थयोरभेदसंसर्गस्य व्युत्पन्नत्वात् ॥

**व्रीहिरिति**।जातावेकवचनम्। व्यक्तिविवक्षायां तु 'द्रोणो व्रीहयः' इति भवत्येव॥ **अभेदेनेति** । न च प्रकृतिप्रत्ययार्थयोरभेदान्वयो दुर्लभः, 'पचति' 'पाचकः' 'औप-

---

नुपपत्तिपूर्विका लक्षणा पदे एव। प्रत्ययोत्पत्तिः सर्वत्र शक्यार्थे एव। शक्यतावच्छेदकारोप एव च लक्षणेति न लक्ष्याऽसङ्ग्रहो दोषः। तटादिशब्दानान्तत्तत्प्रत्ययसमभिव्याहारे सकललिङ्गबोधकतया न किमपि लिङ्गन्ततो नियतोपस्थितिकमिति न तद्बोध्यलिङ्गस्याऽत्र प्रातिपदिकार्थशब्देन ग्रहणमिति लिङ्गग्रहणमिति भावः। **लिङ्गमात्रेति**। लिङ्गस्यैवाधिक्ये इति क्रमेणाऽर्थः। यद्यपि विशेष्यविशेषणभावोऽप्यधिको भासते तथापि तस्य वाक्यार्थत्वेन बहिरङ्गतया न स्वार्थमात्रनिमित्तकप्रथमप्रवृत्तसंस्कारबाधकत्वमिति बोध्यम्। **अभेदेन संसर्गेणेति** । इतरसम्बन्धानवच्छिन्न-

विशेषणमिति विवेकः। वचनं—सङ्ख्या। एकः। द्वौ। बहवः। इहोक्तार्थत्वा-

गव' इत्यादौ सर्वत्र भेदान्वयस्यैव दृष्टत्वादिति वाच्यं, देवतार्थकतद्धितादावभेदान्वयस्य दृष्टत्वात्। 'ऐन्द्रं हवि'रित्यत्र हि इन्द्रदेवताकं हविरिति बोधः सर्वैरेवाभ्युपगम्यत इति नास्ति शङ्कावसर इति भावः॥ **वचनं सङ्ख्येति**। वाच्यवाचकयोरभेदा-

विशेषणविशेष्यभावसंसर्गेणेत्यर्थः। अभेदस्तु न संसर्ग इत्यन्यत्र प्रपञ्चितम्।

**इहोक्तार्थत्वादिति**। उक्तार्थानामप्रयोगात, प्रातिपदिकप्रतिपादितसङ्ख्याविशिष्टे सङ्ख्यान्तराऽभावाच्च तदप्राप्तिः। अनन्वितार्थकविभक्त्यपेक्षयाऽनुवादकविभक्तेरेव न्याय्यत्वान्न द्व्यादिभ्यः सर्वविभक्त्यापत्तिरिति भावः। लिङ्गविशिष्टपरिभाषयेन्द्राणीत्यादौ प्रथमासिद्धिः। 'परिमाण'शब्दश्च परिच्छेदकपर इत्युन्मानादिष्वपि प्रथमासिद्धिरिति बोध्यम्।

परे त्वत्र सूत्रे **प्रातिपदिकार्थ**शब्देन प्रवृत्तिनिमित्तं, तदाश्रयश्च। स च मुख्य इवारोपिततदाश्रयोऽपि। अत एव 'गोपी'त्यादौ स्वादिप्रकृतेर्लाक्षणिकत्वेऽपि न दोषः। अत एव लिङ्गग्रहणं सार्थकम्, अन्यथा 'स्वमोर्नपुंसका'दित्यादिशास्त्रप्रामाण्येन लिङ्गस्यापि प्रातिपदिकार्थतया तद्वैयर्थ्यं स्पष्टमेव। अत एव 'स्त्रिया'मिति सूत्रे स्त्रीत्वे द्योत्य इत्यर्थ इति भाष्ये सिद्धान्तितम्। 'तस्माच्छस' इत्यत्र 'पुंसी'त्यस्य पुम्शब्दस्य प्रकृतित्वे इत्येवाऽर्थः। 'अभिहिते प्रथमे'ति वार्तिकस्य तत्तत्प्रातिपदिकार्थगतकारकशक्तावन्येनाभिहितायां स्वार्थे प्रातिपदिकात्प्रथमेत्यर्थ इति न तद्विरोधः। एतेन तन्मये कारकस्य प्रत्ययार्थत्वं, तव तु तन्नेति विरोध इत्यपास्तम्। तटादिशब्दानामपि लिङ्गं वाच्यमेव, द्योतकास्तु विसर्गादयः। पूर्वं तत्तल्लिङ्गं बुद्धिस्थीकृत्यैव तस्य तस्य विसर्गादेः साधुत्वान्वाख्यानम्। नियमांऽशनिवेशे तु न मानम्, इदमेवाभिप्रेत्य **वृत्तौ** 'प्रातिपदिकार्थः सत्ते'त्युक्तम्। **सत्तेति** प्रवृत्तिनिमित्तोपलक्षणम्। आश्रयस्तु तदाक्षिप्तत्वान्न पृथगुक्तः। एवञ्च 'प्रातिपदिकार्थ' इत्यस्याऽलिङ्गा लिङ्गप्रवृत्तिनिमित्तकाश्चाऽव्ययपुमादय उदाहरणम्। लिङ्गविशिष्टपरिभाषया स्त्रीशब्दोऽप्यस्यैवोदाहरणम्। अन्ये सर्वे 'लिङ्गाधिक्ये' इत्यस्य। द्रोणत्वादिप्रवृत्तिनिमित्तकानान्द्रोणादिशब्दानां परिमाणत्वेन परिमाणमपि लिङ्गवद्विशेष्यान्वय्यर्थः। एवञ्च तस्य लिङ्गवत्प्रातिपदिकार्थत्वाऽभावात्परिमाणग्रहणम्। 'द्रोणः परिमाण'मित्येष तु 'द्वौ ब्राह्मणा'विति वत्प्रयोगः, द्रोणशब्दस्याऽनेकार्थत्वाद्वा। मूलोक्तं तु न युक्तम्। 'द्रोणो व्रीहिमानये'त्यस्याप्यापत्तेः। किञ्च 'तिङ्समानाधिकरणे प्रथमे'ति वार्त्तिकैकवाक्यतया भेदान्वये 'द्रोणो व्रीहि'रित्यनिष्टम्। न च यदा परिमेये द्रोणादीनां वृत्तिस्तदा तस्याऽनेकत्वेन, परिमाणमात्रपरत्वे तदबोधेन च व्यभिचारान्मेयस्य नियतोपस्थितिकत्वाऽभावेन प्रातिपदिकार्थत्वादसिद्धौ कर्मव्युत्पत्त्या प्रमेयार्थकं परिमाणग्रहणमिति कैयटोक्तं युक्तमिति वाच्यम्। 'सिंहो माणवक' इत्यस्याऽसिद्ध्यापत्तेः। तद्वदस्यापि सिद्धेश्च। नियमांऽशनिवेशे मानाऽभावाच्च। 'एको द्वा'वित्यादिसिद्धये तु **वचनग्रहणम्**। अन्यथैतत्सूत्रोपस्थिताऽनभिहितइत्यस्याऽत्र फलाऽभावादेतदेकवाक्यतापन्नसङ्ख्यावाक्यान्वयित्वेन तदप्राप्तेः। रामावित्यादौ सङ्ख्याधिक्ये प्रथमा तु 'द्व्येकयो'रित्याद्येकवाक्यतयेति बोध्यम्। मात्रग्रहणाऽभावे तु यथा 'कर्मणि द्वितीये'ति नियमेन कर्मत्वांऽशानसमान-

द्विभक्तेरप्राप्तौ वचनम् ॥

ध्यवसायेन तथैव पूर्वाचार्याणां व्यवहारादिति भावः ॥ **अप्राप्तौ वचनमिति।** सूत्रे वचनग्रहणमित्यर्थः। वस्तुतस्तु सूत्रे मात्रग्रहणं व्यर्थम्। विशेषविहितैः 'कर्मणि द्वितीये'त्यादिभिर्बाधितत्वेन कर्मादौ प्रथमाया अप्रवृत्तेः। 'कर्मणि द्वितीये'त्यादिषु 'कर्मणि द्वितीयैव' 'कर्तृकरणयोस्तृतीयैव नान्या विभक्ति'रित्येवमर्थनियमाभ्युपगमात्। न च 'कर्मण्येव द्वितीया, कर्तृकरणयोरेव तृतीया नान्यत्रे'ति प्रत्ययनियमपक्षे प्रथमाया अपि कर्मादौ प्रवृत्तिसम्भवान्मात्रग्रहणमावश्यकमेवेति वाच्यं, प्रत्ययनियमपक्षे हि 'प्रातिपदिकार्थ एव प्रथमा, नान्यत्रे'त्यर्थपर्यवसानात्कर्मादौ प्रथमाया अप्रवृत्तौ वचनग्रहणमपि व्यर्थं, 'न केवला प्रकृतिः प्रयोक्तव्ये'इति निषेधादेव प्रथमोत्पत्तिसिद्धेः। न चैवं 'द्विशब्दाद्बहुशब्दाच्चैकवचनम्, एकशब्दाद्द्विवचनम्' इत्यवेमव्यवस्था स्यादिति वाच्यम्। अनन्वितार्थकविभक्तिप्रयोगाऽपक्षेया अनुवादकविभक्तिप्रयोगस्य न्याय्यत्वात्। 'गौर्वाहीक' इतिवद्द्रोणब्दस्य तत्परिमिते उपचाराद्द्रोणो व्रीहिरित्यपि सिद्धमिति मनोरमायां परिमाणग्रहणमपि प्रत्याख्यातम्॥ नन्वस्मिन् पक्षे द्रोणपरिच्छिन्नाऽभिन्नो व्रीहिरित्यभेदान्वयः, नामार्थयोरभेदान्वयात्। 'परिमाणं प्रत्ययार्थः' इति पक्षे तु द्रोणरूपं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरिति प्रत्ययार्थनामार्थयोरभेदान्वयस्तथा च फलभेदे कथं प्रत्याख्यानमिति चेदत्राहुः—शाब्दबोधप्रयुक्तं वैलक्षण्यमिहाऽनादृत्य परिमाणग्रहणं प्रत्याख्यातम्। अतएव औपगवादौ 'तस्येदम्' इत्यनेनैवाऽण्प्रत्ययसिद्धेः 'तस्यापत्य'मिति सूत्रं किमर्थमित्याक्षेपः, मत्वर्थीयेनिनैव सिद्धेः 'परिवृतो रथः' इत्यधिकारे 'पाण्डुकम्बलादिनिः' इतीनिप्रत्ययविधानं किमर्थमित्याक्षेपश्च वक्ष्यमाणः सङ्गच्छते। यदि तु सर्वत्रैव शाब्दबोधप्रयुक्तं वैलक्षण्यं स्वीक्रियते तर्हि 'बाधनार्थं कृतं भवे'दिति समाधानस्याऽणो बाधनार्थमिनिप्रत्ययविधानमिति समाधानस्य च वैयर्थ्यापत्तेरिति ॥ ननु क्वचित् पञ्चकं प्रातिपदिकार्थः, क्वचित्त्रिकं, क्वचिद्द्विकं प्रातिपदिकार्थ इत्यादि व्यवह्रियते। त एते पक्षाः केषामभिमताः, कथं वाऽमीषामुपपत्तिरिति चेत्। अत्र व्याचख्युः—स्वार्थद्रव्यलिङ्गसङ्ख्याकारकात्मकः पञ्चकं प्रातिपदिकार्थः, दधि मध्वित्यादौ विनापि विभक्तिं प्रातिपदिकादेव तावतामर्थानां प्रतीतेः।

कालिकार्थान्तरस्यैव व्यावृत्तिर्न तु तज्ज्ञानसमानकालिकार्थान्तरस्य। अत एव 'गान्दोग्धि पय' इत्यादावपादानत्वादिबोधेऽपि द्वितीया। एवञ्च 'कर्मणि सत्येव द्वितीया न तु तदसत्त्वे' इति नियमाकारस्तथानेनापि 'प्रातिपदिकार्थसत्त्वे एव प्रथमा न तु तदसत्त्वे' इत्येव नियमः स्यात्। एवञ्चाऽनर्थक-

**सम्बोधने च** ।२।३।४७। इह प्रथमा स्यात्। हे राम॥ [इति प्रथमा॥]

वृक्षौ वृक्षाः वृक्षं वृक्षेणेत्यादौ यद्यपि विभक्त्यन्वयेऽपि प्रतीयन्ते नेयता प्रकृत्यर्थत्वहानिर्द्योतकत्वेनैवोपयोगादिति भाष्यकारो मन्यते। आदितश्चतुष्कमिति **कैयटः**। 'तत्रोपपदं सप्तमीस्थ'मित्यत्र चतुष्कपक्षे, पञ्चकपक्षे वा कारकं प्रातिपदिकार्थ इत्यभिधानात्। आदितस्त्रिकमिति **वृत्तिकारः**। अन्वयव्यतिरेकाभ्यां सङ्ख्यकारकादेर्विभक्त्यर्थत्वनिश्चयात्। यद्यपि 'दधि' 'मधु' इत्यादौ विनापि विभक्तिं सङ्ख्या कारकं च प्रतीयते, नेयता वृक्षौ वृक्षा इत्यादावपि विभक्त्यर्थत्वं हीयते। न हि 'गर्गा' इत्यादौ विनापि यञा अपत्यं गम्यत इति तदपि प्रकृत्यर्थः। न चाऽबिभरित्यादौ अन्तरेणाऽपि प्रत्ययं कर्ता प्रतीयत इति भेत्तेत्यादावपि कर्ता प्रकृत्यर्थ एवेति युज्यते वक्तुम्। अतस्त्रिकमेव प्रातिपदिकार्थः, सङ्ख्याकर्मादयस्तु विभक्त्यर्था इति। लिङ्गं टावादिवाच्यमिति पक्षे आदितो द्विकमेवेत्यन्ये। तत्र स्वार्थो-विशेषणम्। **द्रव्यं**-विशेष्यम्। **लिङ्गं**-स्त्रीत्वादि। **सङ्ख्या**-एकत्वादिः। **कारकं**-कर्मादि॥

**सम्बोधने च**। मात्रग्रहणात्तत्प्रत्याख्यानपक्षेऽपि प्रातिपदिकार्थे एव प्रथमेति नियमाद्वा सम्बोधनाधिक्येऽप्राप्तावस्यारम्भः। इह सम्बोधनं प्रकृत्यर्थं प्रति विशेष्यं, क्रियां प्रति विशेषणम्। तथा च 'व्रजानि देवदत्त' इत्यादौ 'एकतिङ् वाक्य'मिति वाक्यत्वे सिद्धे 'आमन्त्रितस्य चे'ति निघातो भवति, क्रियां प्रत्यविशेषणत्वे तु भिन्नवाक्यत्वान्नैतत्सिध्येत्, 'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः' इति वार्तिकात्। तथा चोक्तं-'संबोधनपदं यच्च तत् क्रियायां विशेषणम्। व्रजानि देवदत्तेति निघातोऽत्र तथा सति' इति। एवं च 'राम मां पाही'ति वाक्यस्य राम-

---

निपातेभ्यः प्रथमा नैव स्यात्। एवञ्च तत्समभिव्याहारे 'सपूर्वायाः प्रथमाया'इत्यादिशास्त्रप्रवृत्तिर्न स्यात्। तत्सत्त्वे 'कर्मादियोग्यार्थकप्रातिपदिकाच्चेत्तद्रहितस्वार्थे' इत्यर्थान्न दोषः। इदमेव 'मात्र'ग्रहणं कर्मणि द्वितीयेत्यादेर्मदुक्ताकारनियमत्वे मानम्। मात्रग्रहणाच्च सूत्रकारस्य प्रत्ययनियमपक्ष एवाभिमत इति गम्यते। तदकरणलाघवेन तु 'कर्मणि द्वितीयैवे'त्यर्थनियम उक्तो भाष्यादौ। स्पष्टञ्चेदं सर्वं भाष्ये इति **भाष्यप्रदीपोद्द्योते** निरूपितमित्याहुः॥

**सम्बोधने** च। तत्र वर्त्तमानादित्यर्थः। **सम्बोधन**मभिमुखीकरणं, तत्फलं प्रवृत्तिनिवृत्ती। सम्बोध्यतावच्छेदकरूपेण सम्बोद्धव्यस्य सिद्धिं विना तत्त्वाऽसम्भवादनुवाद्ये एवैषा विभक्तिः। अत एव विधेयभूतक्रियायामेवैतदर्थान्वय उद्देश्यतया। अत एव 'राजा भव युद्ध्यस्व' 'राजन्युद्ध्यस्वे'त्यनयोर्व्यवस्थयैव प्रयोगः। 'राम मां पाही'त्यादौ चाभिमुखीभवद्रामाद्युद्देश्यकप्रवर्तनाविषयो रक्षणमिति बोधः। 'व्रजानि देवदत्ते'त्यादावपि 'जानीही'त्यादिः शेषो बोध्यः। तत्र व्रजनस्य कर्मत्वाद्देवदत्त-

**कारके ।१।४।२३। इत्यधिकृत्य ॥ कर्तुरीप्सिततमं कर्म ।१।४।४९।**

सम्बन्धिसम्बोधनविषयो मत्कर्तृकं रक्षणमर्थः । 'व्रजानि देवदत्ते'त्यत्र तु देवदत्त-सम्बन्धिसंबोधनविषयो मत्कर्तृकं गमनमर्थः ॥ **इति प्रथमा ॥**

**कर्तुरीप्सिततमं कर्म ।** कर्तुरिति 'क्तस्य च वर्तमाने' इति कर्तरि षष्ठी । आप्नोतेः सन् । द्वित्वम् । आप्ज्ञप्यृधामीत्', 'अत्र लोपोऽभ्यासस्ये'त्यभ्यासलोपः । 'मति-बुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तः । मतिरिहेच्छा, नतु बुद्धिः, पुनर्बुद्धिग्रहणात् । ततः 'अतिशायने तमबिष्ठनौ' इत्यतिशये तमप् । एवं च कर्त्रा आप्तुमिष्यमाणतमं कर्मे-त्यर्थः । कर्ता च धातूपात्तव्यापाराश्रयः । स च केनाऽऽप्तुमिच्छतीति करणाकाङ्क्षायां

---

स्योद्देश्यत्वादुभयोः समानवाक्यस्थत्वम् । 'एकतिङ् वाक्य'मित्यस्य च श्रूयमाणैकतिङ्क्त्यर्थ इति न दोषः । उद्देश्यविधेयभावो वाक्यार्थः । अभिमुखीभवनानुकूलव्यापारश्च सम्बोधनविभक्त्यन्तशब्द-प्रयोगरूपः । 'व्रजानी'ति प्राप्तकाले लोट् । अत एव 'गच्छे'त्याद्यध्याहारे धिङ्मूर्खेत्यादौ प्रथमा, अनध्याहारे तु द्वितीयैवेति दिक् ॥ **इति प्रथमा ॥**

**कारके । कारकत्वं**—क्रियाजनकत्वम् , भाष्ये—'करोति क्रियां निर्वर्त्तयती'ति व्युत्पत्तिप्रदर्श-नात् । 'ब्राह्मणस्य पुत्रं पन्थानं पृच्छती'त्यादौ ब्राह्मणस्य न कारकत्वं, पुत्रेणाऽन्यथासिद्ध्या तत्त्वाऽ-भावात् । अत एवैषां क्रियायामेवाऽन्वयः । 'क्रियाजनक'मिति ज्ञाते का सा क्रियेत्याकाङ्क्षोदयेन, क्रियाया जनकाकाङ्क्षया च तत्रैवाऽन्वयस्यौचित्यात् । सर्वेषां च कारकाणां स्वस्वाऽवान्तरक्रियाद्वारा प्रधानक्रियानिष्पादकत्वं बोद्धव्यम् । असन्निहितसम्प्रदानस्याऽपि दातृबुद्धिस्थत्वावश्यकत्वेन स्वज्ञान(स्य) पूर्वकालत्वेनैव जनकत्वम् । एवं 'स्तोकम्पचती'त्यादौ फलस्यापि, 'घटं करोति' 'स्मरती'त्यादौ बौद्धघटादेः पूर्वकालत्वेन स्मृत्यादिनिष्पादकत्वं बोद्धव्यम् ॥

**कर्तुरीप्सित ।** 'ईप्सित'शब्दोऽत्र क्रियापरो, नाभिप्रेतपरो रूढः । स्पष्टञ्चेदं **वारणार्थाना-मित्यत्र भाष्यकैयटयोः ।** 'कर्तु'रिति 'क्तस्य च वर्त्तमान' इति कर्तरि षष्ठी । आप्नोतेः सन्नन्ता-न्मतिबुद्धीति वर्त्तमाने कर्मणि क्तः । **मतिरिच्छेति** तत्राकरः । एवञ्च—कर्त्राऽऽप्तुमिष्यमाणं कर्मेत्यर्थः । आप्तिश्चाऽत्र सम्बन्धः । स च कर्तृपदार्थविशेषणीभूतव्यापारद्वारक एव । उपस्थितपरित्यागेनाऽनु-पस्थितकल्पने मानाऽभावात् । एवञ्च कर्त्रा स्वनिष्ठव्यापारप्रयोज्यफलेन सम्बन्द्धुमिष्यमाणमित्यर्थः । यथा 'तण्डुलं पचती'त्यादौ । फलस्यापि व्यपदेशिवद्भावेन फलसम्बन्धित्वात्कर्मत्वम् । अत एव तत्समानाधिकरणे 'स्तोकम्पचती'त्यादौ कर्मत्वसिद्धिः । क्तप्रत्ययोपात्तवर्त्तमानत्वन्तु न विवक्षितं, तेन कटं कृतवान्करिष्यतीत्यादिसिद्धिः । **कारकं कर्मसञ्ज्ञं स्यादिति ।** 'कारक'इति प्रथमार्थे सौत्री सप्तमी । तेन कारकं सत्कर्मसञ्ज्ञमित्यर्थः । सञ्ज्ञिनः क्रियाजनकत्वन्तु महासञ्ज्ञयाऽऽक्षिप्तम् । यद्वा सप्तमी यथाश्रुतैव, कारकपदञ्च क्रियापरं, 'करोति कर्तृकर्मादिव्यपदेशा'निति व्युत्पत्तेः । 'जनक'-मित्यध्याहारः । विषयत्वं सप्तम्यर्थः। कारकग्रहणे च स्वरितत्वप्रतिज्ञया एतदधिकारोक्तकर्त्रादिषट्कमेव [गृह्यते], तेन 'तत्पुरुषे तुल्यार्थ...' [illegible] ...पदप्रकृतिस्वरः । ग्रामवासी'त्यादौ च तत्स्वरसिद्धिरित्यन्यत्र

कर्तुः क्रियया्ऽऽप्तुमिष्टतमं कारकं कर्मसञ्ज्ञं स्यात्। कर्तुः किम्?। मापेष्वश्वं बध्नाति। कर्मण ईप्सिता माषा नतु कर्तुः। तमब्ग्रहणं किम्। पयसा ओदनं

---

विशेषणीभूतेन व्यापारेणेत्यर्थाल्लभ्यते, तदाह—**क्रिययेति**। क्तप्रत्ययेनोपस्थितं वर्तमानत्वं चेह न विवक्षितम्। तेन कटं कृतवान् करिष्यतीत्यादि सिद्धम्॥ **कारकमिति**। एतच्च 'कारके' इत्यधिकाराल्लभ्यते। तत्र हि व्यत्ययेन प्रथमार्थे सप्तमी। प्रतिसूत्रं वाक्यं भित्त्वा कारकसंज्ञाऽनेन विधीयते। तद्यथा-अपाये ध्रुवं कारकसञ्ज्ञं स्यात्। ततो'ऽपादानम्'। उक्तं कारकमपादानं स्यात्। पुनः कारकशब्दानुवृत्तिसामर्थ्याद्विशेषसञ्ज्ञाभिः सह समावेशसिद्धिः। तेन 'स्तम्बेरम' इत्यत्राधिकरणत्वात्सप्तमी। कारकत्वाद्गतिकारकोपपदात्कृदिति कृदुत्तरपदप्रकृतिस्वरश्च सिध्यति। अन्यथा 'तत्पुरुषे तुल्यार्थे'त्यादिना पूर्वपदप्रकृतिस्वरः स्यात्। नचाऽत्रोपपदस्वरेणान्यथासिद्धिः शङ्क्या, 'स्तम्बकर्णयोः' इति निर्देशात्। प्रातिपदिकस्योपपदत्वेऽपि सप्तम्यन्तस्याऽतथात्वात्। यद्यपीह थाथादिस्वरेणैवाऽन्तोदात्तत्वं सिध्यति, तथाप्यप्प्रत्ययसाहचर्येण एरच एव तत्रोपादानान्नास्ति थाथादिस्वरेण तत्सिद्धिरित्याहुः॥ अन्वर्था चेयं सञ्ज्ञा—करोतीति कारकमिति। तेन 'ब्राह्मणस्य पुत्रं पन्थानं पृच्छती'त्यत्र क्रियानन्वयिनो न भवति। ब्राह्मणो ह्यत्र पुत्रविशेषणं, न तु क्रियान्वयीति॥ **पयसेति**। भुजिक्रियां प्रति पयसः प्रकृष्टोपकारकत्वेऽपि ओदन एवाऽत्र ईप्सिततमः, पयस्तु संस्कारत्वात्करणम्। नह्यसौ केवलपयसः पानेन सन्तुष्यति, किं तु तत्संस्कृतेनौदनेन। यदा तु पय एव ईप्सिततममस्य भवति,

---

विस्तरः। **कर्तुः किमिति**। तदभावेऽपि केनाऽऽप्तुमित्याकाङ्क्षायां कारकाधिकाराद्व्यापारलाभ इति प्रश्नः। **मापेष्विति**। माषेषु प्रसक्तमश्वं मापनाशो मा भूदित्यन्यत्र बध्नातीत्यर्थः। तदाह—**कर्मण इति**। **तमब्ग्रहणं किमिति**। अवयवद्वारा समुदायस्य प्रश्नः। 'कर्तुरुद्देश्यं कर्मे'त्येवास्त्विति भावः। **पयसौदनमिति**। यदा कृतभोजनोऽपि पयोलाभेनौदनभोजने प्रवर्तते तदेदं प्रत्युदाहरणं, तत्क्रियायाः पयउद्देश्यकत्वात्। 'ईप्सिततम'शब्दस्य तु क्रियाशब्दत्वात्पयस्तदा फलाश्रयत्वेनाऽविवक्षणान्न दोष इति भावः। **तमस्य** फलं त्वग्नेर्माणवकं वारयतीति। तदभावे हि 'वारणार्थाना'मिति सूत्रमस्याऽपवादः स्यात्। एवञ्च माणवकस्य कर्मत्वन्न स्यात्। न चाऽग्नौ तच्चरितार्थं, तस्यापि तदुपस्थाप्यसंयोगरूपफलाश्रयत्वात्, वारयतेश्च संयोगाद्यनुकूलव्यापाराऽभावानुकूलव्यापारोऽर्थः। एष एव **प्रवृत्तिविघातः**। 'ईप्सित'शब्द उभयत्रापि क्रियाशब्द एव। न च संयोगो न तत्कर्तृव्यापारजन्य इति तत्र कर्मत्वाऽप्राप्तिरिति वाच्यं, कर्तृव्यापारवाचकधातूपात्तफलाश्रयत्वमित्यर्थस्यैव तेन लाभात्। तमब्ग्रहणे त्वीप्सितमात्रे सावकाशस्य परत्वादीप्सिततमे ऽनेन बाधः। **ईप्सिततमत्वञ्च** प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वम्। तच्च नाऽग्न्यादौ। फल-

भुङ्क्ते । कर्मेत्यनुवृत्तौ पुनः कर्मग्रहणमाधारनिवृत्त्यर्थम् । अन्यथा 'गेहं प्रविशती'-त्यत्रैव स्यात् ॥ **अनभिहिते** ।२।३।१। इत्यधिकृत्य ॥ **कर्मणि द्वितीया** ।२।३।२।

तदा कर्मत्वं भवत्येव—पयः पिबतीति ॥ **कर्मेत्यनुवृत्ताविति** । 'अधिशीङ्स्थासां कर्मे'ति सूत्रात् ॥ **अनभिहित इति** । ननु 'बहुपटु'रित्यादौ बहुच्प्रत्ययेनोक्तार्थत्वात् कल्पबादयो यथा न प्रवर्तन्ते तथा 'क्रियते कट'इत्यादावपि तिङादिभिरुक्तार्थत्वाद्द्वितीया न भविष्यति । किञ्च 'कटं करोती'त्यादौ सावकाशा द्वितीया 'कृतः कट' इत्यादौ निरवकाशया प्रथमया बाधिष्यते । न च वृक्षः प्लक्ष इत्यादौ प्रथमाया अवकाशः । तत्रापि प्रतीयमानामस्तिक्रियां प्रति कर्तृत्वेन तृतीयाप्रसङ्गात् । अथोच्यते—'नीलमिदं न तु रक्त'मित्यादौ विशेषणान्तरनिवृत्तितात्पर्यके अस्तिक्रियाया अनावश्यकत्वात् प्रथमाया अस्त्येवाऽवकाश इति, तर्हि उभयोः सावकाशत्वे परत्वात् प्रथमैव स्यात् । तथा चाऽनभिहिताधिकारो वृथैवेति चेत् । अत्राहुः—'सङ्ख्या विभक्त्यर्थः' इति पक्षे सूत्रारम्भ आवश्यकः । तथाहि सूत्रारम्भे 'कर्मणि द्वितीये'त्यस्याऽनभिहिते कर्मणि यदेकत्वं तत्र द्वितीयैकवचनमित्यर्थः । सूत्राऽनारम्भे च कर्मणि यदेकत्वं तत्र द्वितीयैक-

व्यापारयोः प्रकृतधात्वर्थत्वन्तु प्रत्यासत्तिलभ्यं, तेन यदा पुष्ट्यर्थं माषभक्षणाय माषक्षेत्रे एवाऽश्वबन्धनन्तदा 'माषेष्वश्वं बध्नाती'त्यादौ माषाणां न कर्मत्वम्, बन्धनप्रयोज्यभक्षणफलाश्रयत्वेऽपि भक्षणस्य बध्नात्यर्थत्वाऽभावात् । प्रयोज्यत्वनिवेशाद्गां पयो दोग्धीत्यादौ विभागानुकूलव्यापारानुकूलव्यापारार्थकदुहियोगे पयसः कर्मत्वसिद्धिरिति स्पष्टं भाष्ये । **कर्मेत्यनुवृत्ताविति** । 'अधिशीङ्स्थासां कर्मे'ति सूत्रात् । **आधारेति** । कर्तृकर्मद्वारा क्रियाश्रयो हि सः । तदाह,—**गेहमित्यादि** । **अनुक्ते कर्मणीति** । कर्मपदेनैतच्छास्त्रबोधितकर्मसंज्ञकं कर्मत्वशक्तिमद्गृह्यते । सर्वकर्मविहितद्वितीयादीनां कर्मत्वशक्तिमानर्थः । क्रियाकारकभावः सम्बन्धश्च तदर्थः । 'राज्ञः पुरुष' इत्यत्र राजपुरुषयोः सम्बन्धस्य षष्ठी वाचिका, 'कष्टं श्रित' इति क्रियाकारकयोः सम्बन्धस्य द्वितीया वाचिकेति समर्थसूत्रस्थभाष्यात् । एवञ्च 'हरिं भजती'त्यादौ हरिकर्मकं भजनमिति बोधः। **अभिहितेष्विति** । अनभिहिताऽधिकारादिति भावः । 'पञ्चकं प्रातिपदिकार्थ' इति पक्षे 'कर्मणि द्वितीये'त्यादेर्द्व्येकयोरित्यादेश्च नियमत्वम्, एतदभावेऽपि स्वादिसूत्रेणाऽनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे इति कर्मादौ, सङ्ख्यायाञ्च स्वादीनां सिद्धेः । तत्र यदा कर्मणीत्यादेर्द्व्येकयोरित्यादेश्चैकवाक्यतायामेकस्मिन्कर्मणीत्यन्वयेन सूत्रजबोधे कर्माद्यर्थस्य प्राधान्यन्तदा नार्थोऽनेन, सूत्रजबोधविषयप्रधानविपर्ययेणोक्तार्थानामिति न्यायेन सिद्धेः । यद्यपि 'द्विर्बद्धं सुबद्ध'मिति न्यायेन 'द्वौ ब्राह्मणौ' 'व्यतिलुनीते'इत्यादौ द्योतकवाचकयोर्द्योतकयोश्च समुच्चयो दृष्टस्तथापि प्रकृते लक्ष्यानुसारादुक्तार्थानामिति न्यायानुसरणस्यैव वक्तुं शक्यत्वात् । एवञ्च कर्मादीनां द्योत्यत्वमेव, यदा तु कर्मगतएकत्वइत्यन्वयेन सङ्ख्यायास्तत्त्वं तदा सूत्रमारब्धव्यम् । भाष्ये एषु 'विभक्त्यर्थत्व'व्यवहारो द्योत्यतयैव, न त्वेतावता तच्छक्यत्वमेषां भ्रमि-

अनुक्ते कर्मणि द्वितीया स्यात्। हरिं भजति।

वचनमिति हि वाक्यार्थः। तथा च सति कृतः कट इत्यादौ क्तेन कर्ममात्रोक्तावपि तदेकत्वस्याऽनुक्ततया अम् दुर्वारः स्यात्। न च परत्वात् प्रथमैव स्यादिति वाच्यम्। 'कर्तव्यः कट' इत्यादौ ततोऽपि परत्वेन कृद्योगलक्षणषष्ठीप्रसङ्गात्। 'कारकं विभक्त्यर्थः' इति पक्षे तु कारकस्य क्तप्रत्ययादिनैवोक्तत्वात् प्रातिपदिकार्थे प्रवृत्तायाः प्रथमाया एकत्वादिबोधनसम्भवाच्चाऽमादिविभक्तेरप्रवृत्तौ 'अनभिहिते' इति सूत्रं प्रत्याख्यातमाकरे इति। 'कारकं प्रातिपदिकार्थ' इति पक्षे तु 'अनभिहिते' इत्यस्य 'अद्योत्ये' इत्यर्थः। तथा च क्तप्रत्ययादिभिरद्योत्ये कर्मणि द्वितीयेत्यादिवाक्यार्थः। तत्राप्येकेन द्योतिते द्योतकान्तरं न प्रवर्तत इत्यभ्युपगमे त्वनभिहिताऽधिकारो नातीवोपयुज्यत इति दिक्॥

**हरिं भजतीति।** भजनक्रियया हरौ प्रीतेरुत्पादात्प्रीतिविशिष्टतया क्रियाव्याप्यत्वेन हरिः कर्म, तद्विशिष्टं भजनं वाक्यार्थः। हरिनिष्ठप्रीत्यनुकूल एकदेवदत्तादिनिष्ठो वर्तमानो व्यापार इति निष्कृष्टोऽर्थः। 'हरिः सेव्यत' इत्यत्राप्येवमेव, 'क्रियाप्रधानमाख्यातम्' इति सिद्धान्तात्। धातूपस्थिता क्रिया तिङर्थं प्रति विशेष्या, न तु कृदर्थं प्रतीव विशेषणमिति हि तस्यार्थः। अतएव 'पाचको व्रजती'तिवत्पचति व्रजतीति नैकं वाक्यम्। पाककर्तृकर्तृकं गमनं हि 'पाचको व्रजती'त्यस्यार्थः। एककर्तृका पचिक्रिया, एककर्तृका गमिक्रियेति पचतिव्रजत्योः पृथगेवाऽर्थः। एवं च प्रथमान्तविशेष्यको बोध इति नैयायिकोद्घोषो भाष्याद्यनुसारिभिर्नादर्तव्यः। तन्मते हि पाककर्ता व्रजनानुकूलकृतिमानिति 'पाचको व्रजती'त्यस्यार्थः। पचतिव्रजत्योस्तु पाकानुकूला कृतिर्व्रजत्यर्थ इत्येवंरूपेण वाक्यार्थपर्यवसानात्, तस्य च भाष्यादिग्रन्थविरोधात्। किञ्च हरिं भजति देवदत्तः, हरिः सेव्यते देवदत्तेनेत्यत्र चैकरूप एव शाब्दबोध इत्युक्तम्। नैयायिकानां मते तु भिद्यत एव, 'हरिनिष्ठप्रीत्यनुकूलकृत्याश्रयो देवदत्तः', 'देवदत्तनिष्ठकृतिजन्यप्रीत्याश्रयो हरि'रित्युभयत्र भेदेन वाक्यार्थपर्यवसानात्। तस्मात् प्रथमान्तविशेष्यक-

तव्यं, नियमत्वानुपपत्तेरिति स्पष्टं बहुष्विति सूत्रे **भाष्यादिषु।** द्योतकविषयेऽप्युक्तार्थानामिति न्यायो 'ऽधिपरी'ति सूत्रे भाष्ये दृश्यते। तत्र हि—अध्यागच्छतीत्यादावागच्छतीत्यतोऽनधिकार्थयोरधिपर्योः प्रयोगस्योक्तार्थानामिति-न्यायेनाऽभावमाशङ्क्याऽपूपौ द्वावित्यादावुक्तार्थानां प्रयोगदर्शनेन समाधानं कृतम्। तत्र हि द्विशब्दाऽपूपशब्दयोर्वाचकयोः, प्रकृतिप्रत्यययोर्वाचकद्योतकयोर्द्वावित्यत्र तयोर्वाचकानुवादकयोश्च समुच्चयः। अत एव 'द्विदशा' इत्यादौ समासेन सुजर्थस्योक्तत्वान्न सुजिति भाष्ये उक्तम्। तत्र हि समासः सुचेत्युभयमपि द्योतकं, सुजर्थश्च [क्रियायाः] पुनर्जन्मेति तत्रैव वक्ष्यते। तथा तद्धितद्विर्वचनयोर्द्योतकयोस्तद्धितेनोक्तत्वाद्वीप्सायां न द्विर्वचनं 'माषश' इत्यादावपि

अभिहिते तु कर्मणि 'प्रातिपदिकार्थमात्र' इति प्रथमैव । अभिधानं तु प्रायेण तिङ्कृत्तद्धितसमासैः । तिङ्,–हरिः सेव्यते । कृत्,–लक्ष्म्या सेवितः । तद्धितः,–शतेन क्रीतः शत्यः ।

बोधो भाष्याद्यनुसारिभिर्नादर्तव्य एव । **यास्कोऽप्याह**—'भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि' इति । 'पश्य मृगो धावती'त्यादौ तु मृगकर्तृकं गमनं दृशिक्रियायां कर्म, प्रधानं तु दृशिक्रियैव । उक्तं च—'सुबन्तं हि यथाऽनेकं तिङन्तस्य विशेषणम् । तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणम्' इति । न च लौकिकप्रयोगेषु तिङन्तस्य तिङन्तविशेषणत्वं दुर्लभमिति मन्तव्यम् । 'पुरीमवस्कन्द लुनीहि नन्दनम्' इति माघश्लोकस्य पुर्यवस्कन्दननन्दनलवनादिरूपा अस्त्रास्थ्यक्रियेत्यर्थ इति 'समुच्चयेऽन्यतरस्याम्' इति सूत्रे मूले स्फुटीभविष्यमाणत्वात् । एवं च 'पचति–भवती'त्यस्य पचिक्रिया भवतीत्यर्थो भाष्यमते बोध्य इति दिक् ॥ **अभिहिते त्विति** । नन्वेवं 'पक्वमोदनं भुङ्क्ते' इत्यत्रापि द्वितीया न स्यादिति चेत् । मैवम् । इह हि पचिभुजिनिरूपिते द्वे कर्मत्वशक्ती, तत्र प्रधानीभूतभुजिक्रियानिरूपितामनभिहितां शक्तिमादाय द्वितीयोत्पत्तेः । अतएव 'आसने आस्ते' इत्यत्र सप्तमी सङ्गच्छते । ल्युटाऽधिकरणत्वस्योक्तत्वेऽपि तिङन्तोपस्थाप्यक्रियानिरूपिताधिकरणत्वस्यानुक्तत्वात् ॥ **शत्य इति** ।

'सर्वस्य द्वे' इति सूत्रे **भाष्ये** उक्तम् । एवं धातोरपि क्रियात्वक्रियाकालकारकसङ्ख्यारूपं पञ्चकमर्थः । अत एव तद्विषये ऽपि ब्येकयोरित्यादेर्भावकर्मणोरित्यादेश्च नियमत्वं भाष्यसम्मतं सङ्गच्छते । अत एव 'दधि' 'अजर्घा' 'अवे'दित्यादौ प्रातिपदिकधातुभ्यामेव सर्वबोधः । अत एव 'भावकर्मणो'रित्यस्य तद्वृत्ताद्धातोरित्यर्थः 'स्तुक्रमो'रिति सूत्रे **भाष्ये** दर्शितः । द्योत्यत्वादेवोभयत्रापि प्रत्ययार्थस्य विशेषणत्वमेवेत्यन्यत्र विस्तरः । **प्रथमैवेति** । सा हि प्रातिपदिकार्थस्य तेनोक्तत्वेऽपि भवत्येवेति भावः । अत एवा'ऽभिहिते प्रथमे'ति वार्तिकं सङ्गच्छते । 'तिङ्क्'दित्यादिपरिगणनादेव 'कटं भीष्मं कुर्वि'त्यादौ विशेष्यादुत्पन्नद्वितीयया गतार्थत्वेऽपि विशेषणात्सा, यदा तु प्रक्रियादशायाङ्कटो ऽपि कर्म भीष्मादयोपीत्याश्रयणात् कटत्वविशिष्टकटनिष्ठकर्मत्वोक्तावपि भीष्मादिगुणविशिष्टनिष्ठस्यं तस्य बोधार्थं ततोऽपि सा । बोधस्तु परस्परं तयोर्विशेष्यविशेषणभावेनैव । कारकाणां भावनान्वयव्युत्पत्तिः साक्षात्स्वाश्रयद्वारा वाऽन्वयविषयेति तदा परिगणनं भाष्ये प्रत्याख्यातम् । तिङ्कृतौ स्वप्रकृत्यर्थं प्रति यस्य (यस्य) कर्मता तस्य सर्वस्यापि कर्मतामाहतुरिति 'कृतः कटः सुन्दर' इत्यादौ न क्वापि द्वितीयेति दिक् । **शत्य इति** । अत्र वदन्ति । कर्मादिपद इवाऽत्रापि न विभक्तिवाच्यतावच्छेदकरूपेण कर्मादेर्भानम्, अत औपगवश्चित्रगुरिति युक्तं प्रत्युदाहर्तुम् । तत्र च सम्बन्धस्य येन रूपेण षष्ठ्या भानं तेनैव तद्धितान्तादिभिस्समुदायशक्त्या, एतदधिकाराऽभावे च 'घट'इत्यादौ

१ 'स्वशब्दैरभिधाने तु स धर्मोनाऽभिधीयते । विभक्त्यादिभिरेवासावुक्तः [illegible] प्रतीयते' इत्युक्तेः ।

समासः,-प्राप्त आनन्दो यं स प्राप्तानन्दः ।

'शताच्च ठन्यतावशते' इति यत् ॥ **प्राप्तानन्द इति** । इह 'गत्यर्थाकर्मके'ति

षष्ठ्यवाच्यत्वेन दृष्टानामेव प्रातिपदिकार्थपदेन ग्रहणं स्यात्, तद्भिन्नस्यैव च षष्ठीविधायके शेषपदेन ग्रहणं स्यादित्यत्रत्यसम्बन्धस्य षष्ठीवाच्यत्वेन दृष्टतया प्राप्तां षष्ठीं वारयितुं सः । वस्तुतस्तु 'कटं भीष्म'मिति परिगणनफलमुक्त्वा तत्प्रत्याख्यानायाऽशेषत्वान्नाऽत्र शेषलक्षणा षष्ठी । अन्याऽनभिहितकर्मादीनामभावाच्च नाऽन्येत्याशङ्क्य 'न केवला प्रकृति'रिति समयः कृतो, 'न चाऽन्योत्पद्यमाना एतमभिसम्बन्धमुत्सहते वक्तुमिति कृत्वा द्वितीये'त्युक्तं भाष्ये । तेनैवोपगवादावपि षष्ठी वारितैवेति तयोरप्यप्रत्युदाहरणत्वमेव । तदुक्तमनेकमित्यत्र भाष्येऽपि-'चित्रगुरित्यत्र षष्ठ्यर्थस्य नियमेन भानात्षष्ठी प्राप्नोती'त्याशङ्क्याऽभिहितः सोर्थोऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्न इति प्रथमेत्युक्तम् । अनेनाऽशेषत्वरूपं षष्ठ्यप्राप्तिबीजमुक्तम् । **'अन्तर्भूत'** इत्यनेन चित्रग्वादौ सम्बन्धस्यैव प्रवृत्तिनिमित्तत्वेन प्रातिपदिकार्थपदेन ग्रहणयोग्यतोक्तेति बोध्यम् । **परे तु** 'शत्य'इत्यादौ कारकान्वययोग्यतावच्छेदकसाध्यत्वेन न क्रियादेर्भानम्, अत एव न तत्रेतरकारकाणामन्वयः । इदञ्च 'कर्तृकर्मणो'रित्यत्र निरूपयिष्यते । एवं 'प्राप्तानन्द' इत्यादौ यत्कर्मकप्राप्तिकर्त्ताऽऽनन्द इति विग्रहतो बोधे, समासतश्चाऽऽनन्दकर्तृकप्राप्तिकर्मेति बोधे विशेष्यविशेषणभावव्यत्यासेनैकार्थीभावः कल्प्यः स्यात्, वृत्तिविग्रहयोः समानार्थत्वभङ्गश्च । किञ्च तथा सति बहुव्रीह्युपजीव्यस्यैकधर्मिबोधकत्वरूपसामानाधिकरण्यस्य हानिः । किञ्चैवं प्राप्ता भार्या यं स प्राप्तभार्य इत्यादौ पुंवत्त्वाऽनापत्तिः, पूर्वोत्तरपदयोरेकविशेष्यकप्रतीतिजनकत्वरूपवक्ष्यमाणसामानाधिकरण्याऽभावात्[1] । तस्मात्काला: **परिमाणिने**त्यादिसूत्रभाष्योक्तस्य वृत्तिविग्रहयोः समानार्थत्वस्य निर्वाहार्थं वृत्तिविग्रहयोः 'प्राप्तिकर्त्रानन्दकर्मे'त्येव बोधः । विशेष्ये तन्निरूपकत्वबाधेन तु विशेषणभूतप्राप्तौ तत्पर्यवसानं, 'स्वर्गो ध्वस्त' इतिवत् । शाब्दबोधस्तु विशिष्टे तदारोपेणोपपाद्यः । एवञ्चाऽत्र शब्दात्कर्मादेः क्रियाजनकत्वेन विभक्तिवाच्यतावच्छेदकोद्भूतशक्तिमत्त्वेन च न भानमतो न विभक्तिप्रसक्तिः । अत एव **'गतिकारकोपपदा'**दिति सूत्रे 'गतिकारकोपपदादिति किमर्थं, परमं कारकं परमकारक'मिति प्रतीकमुपादाय-"यथा सम्प्रदानादयः शब्दा न कारकरूपतां प्रतिपादयन्ति तथा कारकशब्दोऽपीति-कृदन्ता हि क्रियायोग्यताविशिष्टद्रव्यवाचिनो न तूद्भूतां कारकशक्तिं प्रतिपादयन्ती' ति **कैयटेनोक्तम्**[2] । अत एव तस्य[3] कर्मत्वस्य न क्रियान्वयनियमः । अन्यथा कारकशक्तेः क्रियाविशेषणत्वनियमेन कर्मादिप्राधान्याऽनापत्तिः । एवं-कर्मादिपदैरिव पकादिपदैरपि न विभक्तिप्रयोजकरूपेण कर्मादीनां भानम् । **'तिङ्कृत्तद्धितसमासैरभिधाने'** इत्यस्याऽयमर्थः, यत्तैरभिधाने तत्तच्छक्त्यावेशेन न भानमिति विभक्त्यप्रसक्तिरत्रैवाऽनभिहित इति

१ **सामानाधिकरण्यं** च-स्वप्रयोज्याऽभेदीयोपस्थितीयमुख्यविशेष्यतासमानाधिकरणाया विषयता, तादृशविषयतया साक्षान्निरूपिता या उपस्थितीयमुख्यविशेष्यतासमानाधिकरणा विषयता, तादृशविषयताश्रयबोधजनकत्वरूपं नागेशभट्टानां मते । स्वप्रयोज्यविषयतानिरूपिताऽभेदीयविषयताप्रयोजकत्वरूपं च प्राचां मते इत्यन्यत्र विस्तरः ।

२ एतदग्रे च "परमित्येतच न करोतिक्रियाविशेषणं-यतः कर्मकारकमेतत्स्यात्, अपितु द्रव्यविशेषणं, तथा च समानाधिकरणसमास उपपद्यते' इत्यपि कैयटेनोक्तम् । ३ तस्य-तिङादिबोध्यस्य ।

क्वचिन्निपातेनाऽभिधानं, यथा—विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्। 'साम्प्रत'-मित्यस्य हि युज्यत इत्यर्थः ॥ **तथा युक्तं चानीप्सितम्** । १।४।५०। ईप्सिततमवत्क्रियया युक्तमनीप्सितमपि कारकं कर्मसञ्ज्ञं स्यात्। ग्रामं गच्छंस्तृणं स्पृशति।

---

कर्तरि क्तः। आनन्दकर्तृकप्राप्तिकर्मीभूत इत्यर्थः ॥ यदुक्तं 'प्रायेणे'ति तस्य फलमाह—**क्वचिन्निपातेनेति । विषवृक्ष इति ।** 'संवर्ध्ये'त्यत्र छेत्तुमित्यत्र चार्थाद्विषवृक्षमिति गम्यत इति ध्येयम् ॥ **युज्यत इत्यर्थ इति ।** एतेन निपातानां द्योतकत्वमेवेति नियमो नास्तीति ध्वनितम् ॥

**तथा युक्तम्।** तथेत्युक्ते कथं युक्तमिति जिज्ञासायामाह—**ईप्सिततमवदिति।** सूत्रे चशब्दोऽपिशब्दार्थे वर्तत इति ध्वनयन्नाह—**अनीप्सितमपीति ।** ईप्सितादन्यदनीप्सितमिति पर्युदासोऽयं, तेन यदुपेक्ष्यं, यच्च द्वेष्यं, तद्द्वयपीह गृह्यत इत्या-

---

तात्पर्यग्राहकम्। ध्वनितश्चेदं **सुप आत्मन** इति सूत्रे **भाष्ये।** तत्र 'हीष्टः पुत्र' 'इष्यते पुत्र' इत्यर्थे क्यचमाशङ्क्य—'स्वशब्देनोक्तत्वान्ने'ति समाहितम्। इष्टशब्दसामानाधिकरण्यात्पुत्रार्थे कर्मत्वाऽवगतावपि 'पुत्र' इति सुबन्तं न कर्मवाचीति न ततः क्यजिति तद्भावः स्वं कर्मत्वं। तद्वाच कशब्देन पुत्रगतं कर्मत्वमुक्तं न तु पुत्रशब्दस्य तत्र वृत्तिरित्यक्षरार्थः। 'सुप आत्मन' इति सूत्रस्य कर्मत्वविशिष्टबोधकसुबन्तादित्यर्थ इति तदाशयः। वस्तुतः कर्मत्वविशिष्टो योऽर्थस्तद्बोधकादित्यर्थे 'इह भवन्त'इत्यादिना समाध्यन्तरमुक्तं। वाक्ये फलं विशेष्यं, वृत्तौ व्यापार इति समानार्थत्वाऽभावात्तत्रार्थे वृत्तिर्नेतीत्याहुः। प्राचीनानुसारेणोक्तस्य **प्रायेणे**त्यस्य फलमाह,—**क्वचिदिति । परे** त्वत्र तुमुनः साधुत्वायेष्यतइत्यध्याहार आवश्यकः। अन्यथा क्रियार्थक्रियोपपदत्वाऽभावाच्छकादियोगाऽभावाच्च स दुर्लभः स्यात्। अध्याहारे तु 'इच्छार्थेषु तुमु'निति सुलभः। विषवृक्षो ऽपि संवर्द्ध्य स्वयं छेत्तुमिष्यत इति यत्तदसाम्प्रतम्, अन्याय्यमित्यर्थः। एवञ्चाऽध्याहृततिङाऽभिधानान्न द्वितीया। तादृशेच्छाया अन्याय्यत्वञ्च—तद्विषयस्याऽन्याय्यत्वेन। एवममुं **नारद इत्यबोधिस** इत्यादौ 'नारद इति' इति श्रीकृष्णीयज्ञानाकारानुकरणम्। 'नारद' इत्येतच्छब्दाभिलप्यमानाकारो बोध इत्यर्थ इति प्रथमान्तस्याऽप्रातिपदिकत्वान्न तत्र द्वितीया। अत एव 'अधिहरी'त्यादौ समासः। तद्वचनसामर्थ्येन ह्रस्य परिगणनत्वकल्पनैव युक्ता। अत एवा'ऽभ्रआँ अप' इत्यादौ सप्तमी। किञ्च निपातेनाऽभिधानेऽपि प्रातिपदिकादुद्धृततत्तच्छक्तिमत्त्वेनैव भानमिति तत्र विभक्तिः सुलभा ॥ शब्दशक्तिस्वभावादस्यैवार्थस्य द्योतकोऽधिर्निपातः। अत एव परिगणनाप्रत्याख्याने ऽपि न दोष इत्याहुः ॥

**तथा युक्तम्** ॥ तत्त्वञ्च समभिव्याहृतधात्वर्थप्रधानव्यापारप्रयोज्यतद्धात्वर्थफलाश्रयत्वरूपम्। पराधीनतया विषं भुञ्जाने ऽपि भुजिक्रियाफलाश्रयत्वेनोद्देश्यत्वात्पूर्वसूत्रेणैव सिद्धं। तदुक्तं भाष्ये—'आतश्च विषमीप्सितं यत्तद्भक्षयती'ति। तस्माच्चोरान्पश्यतीति द्वेष्योदाहरणं। विषयेन्द्रियसम्बन्धाद्दृश्यमाना अपि ते न दर्शनोद्देश्या, अपि तु अनिष्टदर्शना एवेति स्पष्टं **भाष्यकैयटयोः।** एवञ्च

ओदनं भुञ्जानो विषं भुङ्क्ते ॥ अकथितं च ।१।४।५१। अपादानादिविशेषै-

शयेनायमुदाहरति—**ग्रामं गच्छन् तृणं स्पृशतीति**। यथा स्पृश्यमानस्य ग्रामादेरीप्सितस्य क्रियायोगस्तज्जन्यसंयोगादिफलाधारत्वात्, तथैवानीप्सितस्य तृणादेरपीति भावः ॥ इह हि ग्रामं गच्छतस्तृणस्पर्शनं नान्तरीयकं, तृणस्याऽनीप्सितत्वात्। यदा तु तृणमपीप्सिततमं भवति तदा पूर्वेणैव सिद्धम्। उपेक्ष्यं च—नोपेक्षाबुद्धिविषयः, नदी कूलं कषतीत्यचेतने तदसम्भवात्। किन्तु यत्रेप्साद्वेषयोरभावस्तदुपेक्ष्यमिति विवक्षितम्। **विषमिति**। अत्र विषं हेयमप्योदनवद्भुजिना सम्बन्धात्कर्म। ननु य एव पुरुषो व्याध्यादिना पीड्यमानो मरणमेव श्रेयो मन्यते तस्य विषमपीप्सितमेव। योऽपि भ्रान्त्या भुङ्क्ते तस्यापि गुडादिवद्बुद्ध्या व्यवसीयमानं विषमीप्सितमेव। कथमन्यथा प्रवर्तेत। तस्मादिदमुदाहरणमयुक्तमेवेति चेत्। अत्राहुः—यदा कश्चिन्मरणकातरोऽपि वैरिणा निगृह्यमाणो विषं भुङ्क्ते तदेदमुदाहरणमिति। अनीप्सितग्रहणं स्पष्टप्रतिपत्त्यर्थं, 'तथा युक्तम्—' इत्यस्यारम्भादेवेष्टसिद्धेः। स्यादेतत्—'धातूपस्थाप्यफलाश्रयः कर्म' इत्येवास्तु, किमनेन 'कर्तुरीप्सिततमम्-'इत्यादिसूत्रद्वयकथनेनेति चेत्। अत्राहुः—'अग्नेर्माणवकं वारयती'त्यत्र 'वारणार्थानामीप्सितः' इति सूत्रेण माणवकस्यापादानत्वं प्राप्तं तद्बाधनाय 'कर्तुरीप्सिततम'मिति वक्तव्यमेव। एवञ्च द्वेष्योदासीनयोः सञ्ज्ञार्थं 'तथा युक्तम्—' इत्यपि आवश्यकमेवेति ॥

**अकथितञ्च**। केनाऽकथितमित्याकाङ्क्षायामाह—**अपादानादिविशेषैरिति**। अपादानं सम्प्रदानम् अधिकरणं कर्म करणं कर्ता हेतुरित्येतैर्विशेषैरित्यर्थः ॥ **अविव-**

तत्र पूर्वेणाऽप्राप्तौ वचनम्। **अनीप्सितमनुद्देश्यम्**। तच्च द्वेष्यमुदासीनञ्च। **तृणमिति**। यथा स्पृश्यमानस्य गङ्गादेः स्पर्शादिजन्यसंयोगादिफलाधारत्वं तथैव तृणादेरपीति भावः। अनीप्सितपदाऽभावे ईप्सितस्य प्रकर्षहीनस्याप्यनेन सञ्ज्ञाप्राप्तौ **वारणार्था**नामित्यनवकाशं स्यात्। तथायुक्तमिति किम्?। विषेणौदनं भुङ्क्ते इत्यादौ करणत्वमात्रविवक्षायां विषस्य माभूत्। 'प्रयागात्काशीं गच्छती'त्यत्र प्रयागस्य च मा भूत्। तत्सत्त्वे तु प्रकृतधात्वर्थफलाश्रयत्वरूपतत्त्वाऽभावान्न दोषः। **अपादानादिविशेषैरिति**। तत्तद्रूपेणाऽभासमानमित्यर्थः। 'अकथित'शब्दोऽत्राऽसङ्कीर्तितपरो नाऽप्रधानपर इति भावः। एवञ्च पूर्वविधिविषयप्रसक्तिपूर्वकं तदविवक्षायां, सर्वथा पूर्वविधेरप्रसक्तौ चैतत्प्रवृत्तिरिति बोध्यम्। अपादानत्वादिविवक्षायां पञ्चम्याद्येव। केन रूपेण तर्हि विवक्षेति चेत्?। कर्मत्वेनेति गृहाण। कारकत्वव्याप्यसञ्ज्ञानां स्वबोध्येऽर्थे कर्मत्वादिशक्तिमत्त्वबोधकत्वात्। बोधोऽपि तथैव। तत्तच्छास्त्राऽभावे सर्वत्र षष्ठीप्राप्त्या सर्वासान्तदपवादत्वेन तदपवादत्वमात्रेण सम्बन्धार्थकत्वं

१ ननु केनाऽपि रूपेणाऽविवक्षितस्य तु तत्त्वं दुर्लभमत आह—**अपादानेति**।

रविवक्षितं कारकं कर्मसञ्ज्ञं स्यात् ।

दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् ।
कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥

दुहादीनां द्वादशानां तथा नीप्रभृतीनां चतुर्णां कर्मणा यद्युज्यते तदेवाऽकथितं

---

क्षितमिति । अपादानादिविशेषविवक्षायां तु–गोर्दोग्धि पयः । बलेर्याचते वसुधाम् । व्रजेऽवरुणद्धि गाम्–इत्येवं पञ्चम्यादय एव भवन्तीति भावः । एतेन 'पाणिना कांस्यपात्र्यां दोग्धी'त्यत्र करणाधिकरणयोरतिप्रसङ्गः । तयोस्तु दण्डेन करोति, कटे तिष्ठतीत्यादिरवकाशो दुहादिपरिगणना'दित्याक्षेपो निरस्तः । करणाधिकरणसञ्ज्ञयोरिह विवक्षितत्वात् । यदि तु सूत्रेऽकथितशब्दोऽप्रधानपर्यायो न त्वनुक्तपर्याय इत्यभ्युपगम्येत, तदा स्यादेवाऽयमाक्षेपो न त्वन्यथा ॥ **कारकमिति** । ततश्च 'ब्राह्मणस्य पुत्रं पृच्छती'त्यत्र नातिप्रसङ्गः ॥ **दुह्याजिति** । 'दण्ड दण्डनिपातने' चुरादिः । इह तु दण्डिर्ग्रहणार्थो न तु निग्रहार्थः । प्रच्छीत्यागन्तुकेनेकारेण निर्देशो न त्विका । 'ग्रहिज्ये'ति सम्प्रसारणप्रसङ्गात् ॥ **कर्मयुगिति** । कर्मणा युज्यते कर्मयुक् । 'सत्सूद्विषे'त्यादिना क्विप् ॥ **कर्मणा यद्युज्यत इति** । मुख्यकर्मणा सह क्रियया सम्बध्यमानं कारकमेवाऽपादानादिविशेषैरकथितं सत् कर्मसञ्ज्ञकं भवतीत्यर्थः । एतेन दुहादीनां द्विकर्मकत्वं स्फोरितम् ॥ अन्ये त्वाहुः–'कर्मयु'गित्यत्र कर्मशब्देन क्रियोच्यत इति ।

---

न युक्तम् । अतः 'कर्मणि द्वितीये'त्यस्य न वैरूप्यम् । अत एवैतत्सूत्रशेषे भाष्ये–'अनेनैव सिद्धे आद्यसूत्रद्वयवैयर्थ्यमाशङ्क्येप्सितमात्रस्याप्यनेन सञ्ज्ञाया वारणार्थानामिति सूत्रस्याऽनवकाशत्वे माणवकादपि पञ्चमी स्यादिति ईप्सिततममित्याद्यारब्धव्यमित्युत्तरितम् । एतेन दुहादीनां व्यापारद्वयार्थकत्वे कर्तुरिति कर्मत्वे तत्त्वेनाऽविवक्षायामप्यनेन कर्मत्वमिति परास्तं, वदतो व्याघातात् । अत एव 'कर्तु'रित्यनेन सिद्धिमाश्रित्याऽस्य वैयर्थ्यं भाष्ये नाशङ्कितम् । **कारकमिति** । क्रियाजनकमित्यर्थः । नन्वेवं 'नटस्य शृणोती'त्यादावतिप्रसङ्गः । सर्वथा तत्र तदप्राप्तेः । गीतद्वारा च तस्य क्रियाजनकत्वम् । न च तस्य कर्मयुक्त्वाऽभावः, तदंशस्यापि परिगणनलभ्यत्वात् । नटस्याऽपादानत्वविवक्षा तु न कदापि, आख्यातेति सूत्रे उपयोगग्रहणेनाऽनुपयोगे आख्यातुरपादानत्वाऽविवक्षाया बोधनात् । अतः परिगणनमाह–**दुह्याजिति** । **कर्मयुगिति** । **कर्मयुक्त्वं** धात्वर्थव्यापारात्प्राक्तदनन्तरं वा तत्सम्बद्धत्वम् । तत्र ब्रुविशास्यतिरिक्ते धात्वर्थव्यापारात्प्रागेव तत्सम्बद्धत्वम् । तद्विषये तु तदनन्तरन्तत्सम्बद्धत्वं बोध्यम् । तत्र सति सम्भवे प्राक्तत्सम्बद्धत्वमेव ग्राह्यम् । एतेन 'स्थाल्यादेरपि तद्व्यापारादनन्तरं पयःसम्बद्धत्वेन कर्मत्वन्तेषां दुर्वार'मित्यपास्तम् । तेन 'गां पयो दोग्धि स्थाल्या'मित्यादौ स्थाल्यादेरधिकरणत्वाऽविवक्षायामपि नाऽनेन कर्मत्वम् । एवञ्चाऽपादानादीत्यादिशब्देनाऽपादानसम्प्रदानाऽधिकरणान्येव । करणन्तु न गृह्यते, हस्तादेः करणस्य पयआदिकर्मयुक्त्वाऽभावात् ।

—कर्मेति परिगणनं कर्तव्यमित्यर्थः। गां दोग्धि पयः।

तेन क्रियान्वयीत्यर्थः॥ **परिगणनमिति**। तेन 'नटस्य शृणोति गाथा'मित्यादौ नातिप्रसङ्ग इति भावः। इह हि गाथाकर्मकं नटसम्बन्धि श्रवणं वाक्यार्थः। तेन क्रियान्वयित्वान्नटस्य कारकत्वमस्त्येव॥ **गां दोग्धीति**। पयःकर्मकं गोसम्बन्धि दोहनमर्थः। पयोऽत्र मुख्यं कर्म, कर्तुरीप्सिततमत्वात्। गौस्तु पयसो निमित्ततामात्रेणोपात्ता, न तु वस्तुसताऽप्यवधिभावेनेत्यपादानसञ्ज्ञाया अप्रवृत्तेरनेन कर्मसञ्ज्ञिका भवति। तदुक्तं हरदत्तेन—'यद्यपि गोरवधिभावो विद्यते, तथाप्यविवक्षिते तस्मिन्निमित्तमात्रविवक्षायामुदाहरणोपपत्ति'रिति। एतेनाऽवधित्वविवक्षायां गोरिति पञ्चम्येवेति स्पष्टम्। यदा तु गौरित्येतत्पयसा सम्बध्यते तदा गोशब्दात्षष्ठ्येव भवतीत्यपि बोध्यम्॥

यत्तु प्राचा—'दुह्याच्पच्दण्डरुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्। कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम्' इति पठितं, तत्र ग्रहेः पाठोऽप्रामाणिकः। इतरेषां तु द्विकर्मकत्वं यद्यपि प्रामाणिकं, तथापि सन्दर्भाऽशुद्धिः। तथाहि दुह्यादीन्न्यादींश्च द्वैराश्येन पठित्वा भावकर्मप्रक्रियाशेषे 'लकृत्यक्तखलर्थाः किं द्विकर्मकेभ्यो मुख्ये कर्मणि स्युर्गौणे वा' इत्याशङ्कायां स्वयमेव पठितं—'न्यादयो ण्यन्तनिष्कर्मगत्यर्था मुख्यकर्मणि। प्रत्ययं यान्ति दुह्यादिर्गौणेऽन्ये तु यथारुचि' इति। एवञ्च दण्डिमन्थिभ्यामपि मुख्ये स्यात्। न चेष्टापत्तिः। 'गर्गाः शतं दण्ड्यन्ता'मिति भाष्यविरोधात्। शतं ह्यत्र प्रधानं न तु गर्गाः, 'अर्थिनश्च राजानो हिरण्येन भवन्ति' इति वाक्यशेषात्। दण्डिरत्र ग्रहणार्थः न तु निग्रहार्थ इत्युक्तम्। अतएवाऽत्र समुदाये वाक्यपरिसमाप्तिः, गुणानुरोधेन प्रधाना-

यद्यपि–'गान्दोग्धी'त्यादौ गौः पयस्त्यजति, गवा पयस्त्याजयतीत्याद्यर्थप्रतीत्या 'कर्तुरीप्सिततम'मित्येव सिद्धं, प्रधानकर्मत्वञ्च गवादीनामिति तत्रैव लादिसिद्धिः। प्रधानकर्मत्वञ्च कर्तृप्रत्ययसमभिव्याहारे कर्तृनिष्ठप्रधानव्यापारविशेषणफलाश्रयत्वम्। ण्यन्तविषये ईदृशप्राधान्यस्यैव ग्रहात्। प्रकृते च पयोनिष्ठविभागानुकूलो यो गोनिष्ठव्यापारस्तदनुकूलव्यापारस्य शब्दतः प्राधान्यात्। 'गर्गाः शतं दण्ड्यन्ता'मित्यत्र गर्गाणामेव तत्त्वम्, उद्देश्यत्वरूपमार्थं प्राधान्यन्तु शतस्येत्यनुद्देश्यत्वेनाऽप्रधानगर्गानुरोधान्न शतावृत्तिरिति न वृद्धिसूत्रस्थभाष्यविरोधः। एवमेव 'शकारमसि चोदित' इत्याद्युपपत्तिः। अत एव 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्। अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मण' इति उक्त्वोत्तरार्द्धोपात्ताऽतिरिक्ता द्विकर्मकाः के इति प्रश्ने 'नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च। द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चय'इत्युक्तम्। तत्र न्यादिग्रहणं तत्र कृषिवन्मम व्यापारद्वयार्थकधातूपलक्षणम्। एवञ्चेदं सूत्रं व्यर्थं, तथापि यदा पयोनिष्ठविभागानुकूलव्यापारादिरेव धात्वर्थस्तदाऽपादानाद्यविवक्षायामन्येनाऽसिद्धकर्मत्वार्थमिदमावश्यकं। तदा चाऽ**प्रधाने दुहा-**

बलिं याचते वसुधाम् । अविनीतं विनयं याचते । तण्डुलानोदनं पचति । गर्गान्

वृत्तेरसम्भवात् । तथा मन्थेरपि प्रधाने स्यात्, इष्यते तु गौणे । तथा च **भारविः**— 'येनापविद्धसलिलस्फुटनागसद्मा देवासुरैरमृतमम्बुनिधिर्ममन्थे' इति । अत्राऽमृतं मुख्यम्—उद्देश्यत्वात्, अम्बुनिधिस्तु गौणः ॥ **बलिं याचत इति ।** अत्र प्रार्थनार्थस्य याचेर्वसुधा मुख्यं कर्म, तेन युक्तो बलिर्वस्तुतोऽवधिरपि तदविवक्षायामनेन कर्म भवति ॥ **अविनीतमिति ।** अनुनयार्थस्य याचेरविनीतो मुख्यं कर्म, अविनीतं विनयायाऽनुनयतीत्यर्थः। विनयस्य तादर्थ्याऽविवक्षायाम् 'अकथितञ्चे'ति कर्मसञ्ज्ञा ॥ **तण्डुलानिति ।** निर्वर्तनार्थस्य पचेरोदनो मुख्यं कर्म, ओदनं निर्वर्तयतीत्यर्थः । तण्डुलास्तु करणत्वाऽविवक्षायामकथितं कर्म ॥ अन्ये त्वाहुः—'द्व्यर्थः पचिः' इति भाष्यपर्यालोचनया 'तण्डुलानोदनं पचती'त्यस्य तण्डुलान्विक्लेदयन्नोदनं निर्वर्तयतीत्यर्थः। दुह्यादिषु पचेः परिगणनमप्रामाणिकं, भाष्यकैयटयोरनुक्तत्वादिति ॥ **गर्गानिति ।** ग्रहणार्थस्य दण्डेः शतं मुख्यं कर्म, गर्गास्त्वपादानत्वाऽविवक्षायामकथितं कर्म ॥

दीनामित्युक्तेरप्रधाने गवादावेव लादयः । अप्रधानकर्मत्वं चोक्तप्रधानकर्मभिन्नकर्मत्वं, तच्चोक्तार्थे गवादीनामस्त्येव, फलानाश्रयत्वात् । **गान्दोग्धीति ।** अन्तःस्थितद्रवद्रव्यनिष्ठविभागानुकूलव्यापारो दुहेरर्थः । तत्र गोरपादानत्वाऽविवक्षायामनेन कर्मत्वम् । तद्विवक्षायां पञ्चमी, गोः पयस्यन्वये षष्ठी । द्विकर्मकेषु गवादीनां कर्मत्वाऽविवक्षायां क्रियान्वये षष्ठी न, अनभिधानात् । षष्ठ्यन्तस्य स्वाऽन्वययोग्यनामसमभिव्याहारे तत्रैवान्वयस्योत्सर्गतो व्युत्पत्तेश्च । अत एव 'तण्डुलानामोदनं पचती'त्यत्र' द्व्यर्थश्चैव पचिर्विकारयोगे षष्ठी'त्येव कर्तुरिति सूत्रे भाष्ये उक्तमिति दिक् ।

**बलिं याचतइति ।** यदा परस्वत्वनिवृत्ति—स्वस्वत्वोत्पत्त्युभयानुकूलो व्यापारो याचेरर्थः । स्वत्वे बलेर्निरूपकतयाऽन्वयस्तदाऽनेन कर्मत्वम् । पूर्वविषयस्य कस्याऽप्यभावात् । न चाऽत्राऽपादानत्वप्रसक्तिः, विभागस्य धात्वर्थत्वाऽभावात्, 'न हि याचनादेवाऽपायो भवति याचितो यदि ददाति तदाऽपायेन युज्यत' इति भाष्योक्तेः । 'असङ्कीर्तितपर्यायाऽकथितग्रहणे गान्दोग्धि गोर्दोग्धीति च, याचिपृच्छिभिक्षयोगे कर्मसञ्ज्ञैवेत्येषा व्यवस्थे'ति सिद्धान्ते कैयटोक्तेश्च । व्यापारद्वयार्थत्वे तु 'कर्तु'रिति कर्मत्वं बोध्यम् । वसुधायाः स्वामित्वसम्बन्धात् कर्मयुक्तत्वम् ।

**अविनीतमिति ।** याचेः स्वीकाराऽनुकूलव्यापारोऽर्थः । स्वीकारश्च इदमवश्यं करिष्यामीति शब्दप्रयोगजनको ज्ञानविशेषः । विनयेन च तद्विषयज्ञानवत्त्वं संबन्धः । **तण्डुलानिति ।** तण्डुलान्विक्लेदयन्नोदनं निर्वर्त्तयतीत्यर्थस्य 'कर्तु'रिति सूत्रस्थभाष्यकैयटसंमतत्वेन 'कर्तु'रित्येव कर्मत्वसिद्धेरस्यैतदुदाहरणत्वं चिन्त्यम् । एवं स्वसम्प्रदानकदानानुकूलव्यापारानुकूलशासनरूपव्यापारार्थदण्ड्यादियोगे ऽपि तेनैव सिद्धम् । एवं व्यापारद्वयार्थत्वेन सति प्रयोगे बहूनां [धातूनां]द्विकर्मकत्वं

शतं दण्डयति । व्रजमवरुणद्धि गाम् । माणवकं पन्थानं पृच्छति । वृक्षमवचिनोति फलानि । माणवकं धर्मं ब्रूते शास्ति वा । शतं जयति देवदत्तम् । सुधां क्षीरनिधिं मथ्नाति । देवदत्तं शतं मुष्णाति । ग्राममजां नयति हरति कर्षति वहति वा । अर्थ-निबन्धनेयं सञ्ज्ञा । बलिं भिक्षते वसुधाम् । माणवकं धर्मं भाषते अभिधत्ते वक्ती-

---

**व्रजमिति** । अत्र गौर्मुख्यं कर्म, व्रजं त्वधिकरणत्वाऽविवक्षायाम् 'अकथितञ्च' इति कर्म भवति । एवमग्रेऽप्यूह्यम् । **अर्थनिबन्धनेति** । न तु स्वरूपाश्रया, 'अहम-पीदमचोद्यं चोद्ये' इति 'तद्राज' सूत्रभाष्ये पृच्छिपर्यायस्य चुदेरपि द्विकर्मकत्वदर्शना-दिति भावः । अतएव 'स्थातुं रणे स्मेरमुखो जगाद मारीचमुच्चैर्वचनं महार्थम्' इति भट्टिः प्रायुङ्क्त । एवञ्च नाथत्यादयो बहवो द्विकर्मका ज्ञेयाः ॥ स्यादेतत्—यद्यर्थनिब-न्धनेयं सञ्ज्ञा तर्हि नीवह्योरन्यतरो न पठनीयः, उभयोरप्येकार्थत्वादिति चेत्सत्यम् । भारं वहति, भारं नयतीत्यत्र यदि विलक्षणोऽर्थोऽनुभूयते, तदा द्वयमपि पठनीयमेव, यदि तु नानुभूयते तर्ह्यन्यतरो न पठनीयः, उभयथापि लक्ष्यस्य निर्बाधत्वात् । अत्र वदन्ति—'जग्राह द्युतरुं शक्रम्' इत्युदाहरणमप्ययुक्तमिति मनोरमोक्तं चिन्त्यमेव । सञ्ज्ञाया अर्थनिबन्धनत्वाद्दण्डेर्ग्रहणार्थत्वाच्चेति । **बलिं भिक्षत इति** । 'भिक्ष भिक्षाया-

---

बोध्यम् । **व्रजमिति** । निर्गमप्रतिबन्धपूर्वकयत्किंचिदधिकरणकचिरस्थित्यनुकूलव्यापारो रुधेरर्थः । व्रजे गौस्तिष्ठति, तत्र तां निर्गमप्रतिबन्धकपूर्वकं चिरं स्थापयतीति सम्प्रत्ययात् । अधिकरणत्वा-ऽविवक्षायामनेन कर्मत्वम् । व्यापारद्वयार्थत्वे 'कर्तु'रिति कर्मत्वम् । **पन्थानमिति** । जिज्ञासाविष-यार्थज्ञानानुकूलः 'केन पथा गन्तव्य'मित्यभिलापादिरूपो व्यापारः पृच्छेरर्थः । ज्ञानविषयत्वेन पथः कर्मत्वं । माणवकेन च तज्ज्ञानाश्रयत्वं सम्बन्धः । अपादानत्वन्तु नात्र, 'न प्रश्नादेवाऽपायो भवति पृष्टोऽसौ यदाचष्टे तदाऽपायेन युज्यत'इति भाष्योक्तेः । सम्प्रदानत्वमपि न, कर्मसम्बन्धवत्त्वेनेच्छावि-षयत्वाऽभावात् । व्यापारद्वयार्थत्वे तु 'कर्तु'रितिकर्मत्वम् । **वृक्षमिति** । विभागपूर्वकाऽऽदाने चिञ्, वृक्षात्फलान्यादत्ते इत्यर्थात् । अपादानत्वाऽविवक्षायामनेन कर्मत्वम् । **धर्मं ब्रूते इत्यादि** । ज्ञाना-नुकूलः शब्दप्रयोगरूपो व्यापारो ब्रूञर्थः । प्रवृत्तिपर्यवसायी स शासेः । स च 'धर्मं कुर्वि'त्यादि विधिघटितोपदेशरूपः । विषयता च फलताऽवच्छेदकः सम्बन्धः । वचनादिकर्मणा धर्मेण माणवक-स्याभिप्रेयमाणत्वात्तस्य सम्प्रदानत्वम् । तदविवक्षायाञ्चाऽनेन कर्मत्वम् । अत्र कर्तृव्यापारानन्तरं तज्ज्ञानाश्रयत्वरूपो माणवकस्य धर्मेण सम्बन्धः । **नयतेः** संयोगानुकूलव्यापारानुकूलव्यापारोऽर्थः । स एव स्कन्धग्रहणादिपूर्वो **वहेरर्थः** । गत्यनुकूलव्यापारविशेषः कृषेः, बलाद्ग्रहणपूर्वकं देशान्तर-प्रापणं **हरतेः** । एषु 'कर्तु'रिति कर्मत्वं बोध्यम् । एवञ्च भाष्यानुक्तानामत्र ग्रहणं प्राचामनुरोधेनेति तत्त्वम् । भाष्योक्ता हि–दुहियाचिरुधिप्रच्छिभिक्षिचिञ्ब्रुविशासयः । **अर्थनिबन्धनेयमिति** । इदमपि कैयटानुरोधेन । वस्तुतस्तु येषामेतदर्थानान्द्विकर्मकत्वमिष्टन्तेषां व्यापारद्वयार्थत्वेन 'कर्तु'-

 

त्यादि । कारकं किम् । माणवकस्य पितरं पन्थानं पृच्छति ॥ *अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसञ्ज्ञक इति वाच्यम् ॥ कुरून् स्वपिति । मासमास्ते । गोदोहमास्ते । क्रोशमास्ते ॥ गतिबुद्धिप्रत्यवसानार्थ-

---

मलाभे लाभे च' । भिक्षते याचत इत्यर्थः । **देश इति** । कुरुपञ्चालादिरेवेह गृह्यते, तेन 'अधिशीङ्स्थासां कर्म' इत्यस्य न वैयर्थ्यम्, अधिपूर्वाणामेवैषामाधारः कर्मेति नियमार्थत्वाभ्युपगमेऽपि वैकुण्ठे वर्तते इत्यादिष्वतिप्रसङ्गः स्यादेवेत्याशयेन तथैवोदाहरति-**कुरूनिति । गोदोहमिति** । न चेह कालत्वात्सिद्धिः, लोके कालत्वेन प्रसिद्धस्य मासादेरेव कालशब्देन ग्रहणात् । तेन 'घटमास्ते' इत्यादि न भवति, जन्यमात्रं कालोपाधिरिति घटादेरपि कालत्वात् । यत्तु प्राचा 'अकर्मकधातुभिर्योगे देशकालाध्वभावेभ्यो द्वितीयेति केचि'दित्युक्त्वा 'नदीमास्त' इत्युदाहृतम् । तदसङ्गतम् । 'ग्रामसमूहः कुर्वादिरेव देशो गृह्यते, न तु प्रदेशमात्रम्, तेन ग्रामं स्वपितीति न भवती'त्याकरात् । अध्वेति च न्यूनम्, 'अध्वानं स्वपिती'त्यस्यापि प्रसङ्गात् । अतएव आकरेऽध्वा गन्तव्यत्वेन विशेषितः । गन्तव्यत्वेन प्रसिद्धो नियतपरिमाणः क्रोशादिरिति च व्याख्यातम् । द्वितीयेत्यप्यसङ्गतम्, कर्मसञ्ज्ञाया अविहितत्वात्कर्मणि लादयो न स्युरित्यास्यते

---

रित्येव सिद्धम्, अन्यथा 'आख्यातोपयोगे' इति सूत्रभाष्योक्तपरिगणनभङ्गापत्तिः । किं चै भाष्ये भिक्षिग्रहणवैयर्थ्यापत्तिः, उभयाऽर्थकयाचिग्रहणेनैवं सिद्धेरित्यन्ये ।

*अकर्मकधातुभिरिति । तेषां स्वकरणकव्यापने वृत्त्या व्याप्तिरूपफलाश्रयत्वेन 'कर्तु'रिति कर्मत्वम् । मासमास्त इत्यादेर्मासमासनेन व्याप्नोतीत्यादिक्रमेणाऽर्थ इति भावः । यत्त्विदमेव कर्मसंज्ञाविधायकमिति, तन्न, भाष्ये तादृशवचनाऽनुपलम्भात् । 'अकथितञ्चे'ति सूत्रेऽकर्मकप्रकृतिकण्यन्तानां कथं द्विकर्मकत्वमिति शङ्कायां 'कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणां, देशश्चे'ति भाष्ये उक्तम्, तच्च न विधायकं, 'हि'शब्दघटितत्वात् । किं च 'कालाध्वनो'रिति सूत्रे 'कालाऽध्वानौ कर्मवदिति वक्तव्य'मिति वार्तिकप्रत्याख्याने 'प्राकृतमेवैतत्कर्म, यथा घटं करोती'त्युक्तम् । अस्य वचनत्वे 'उक्तं वा' 'प्राकृतं वे'ति वदेत् । तस्मादुक्तरीत्या कालादीनान्तद्योगे कर्मतया द्विकर्मकत्वमित्येवैतत्तात्पर्यम् । अत एव 'समां समां विजायत' इति सूत्रे समायां 'समायां विजायत' इति विग्रहकथनपरं भाष्यं सङ्गच्छते । अन्यथाऽनेन द्वितीयाया एव तत्र साधुत्वेन तदसङ्गतिः स्पष्टैव । अत एवोक्तभाष्यार्थानुवादिका हरेः कारिका-'कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः । सर्वैरकर्मकैर्योगे कर्मत्व-

---

१ ननु तदर्थकयोग एव कर्मसंज्ञेत्यर्थं तत्परिगणनमित्यरुचेराह-किञ्चेति । २ ननु याचेर्याचनार्थेऽपि लाभाऽलाभयोर्वृत्तेरभावात्-भिक्षिग्रहणेनैव सिद्धे याचिग्रहणमेव ज्ञापकमिति चेन्न, उभयार्थकयाचिग्रहणेनैव सिद्धेः ( किं ) भिक्षिग्रहणं व्यर्थम् ?, अपि तु नेति काका तादृशोऽर्थो लभ्यते ।

शब्दकर्माऽकर्मकाणामणि कर्ता स णौ।१।४।५२। गत्याद्यर्थानां शब्दकर्मकाणा-

मास इत्यादिप्रयोगाऽभावप्रसङ्गात्। 'केचि'दित्युक्तिस्तन्मतदौर्बल्यसूचनायेति कथञ्चिद्व्या-ख्याय पूर्वोक्तदोषपरिहारेऽपि नदीमास्त इत्युदाहरणस्याऽसाङ्गत्यदोषस्तदवस्थ एवेति ध्येयम्। **गतिबुद्धि**। प्रत्यवसानं भक्षणम्। **शब्दकर्मकाणामिति**। शब्दः कर्म कारकं येषां तेषामित्यर्थः। कर्मशब्दो ह्यत्र कारकपरः, न तु 'कर्तरि कर्मव्यतिहारे' इत्यत्रेव क्रियापरः, कृत्रिमे कार्यसम्प्रत्ययात्, कर्मग्रहणसामर्थ्याच्च। अन्यथा हि 'गतिबुद्धिप्रत्य-वसानशब्दार्थाऽकर्मकाणाम्' इत्येव ब्रूयात्। **अणौ यः कर्तेति**। अनुत्पन्ने णिचि शुद्धधातुवाच्यां क्रियां प्रति यः कर्ता स ण्यन्तधातुवाच्यां क्रियां प्रति कर्मसञ्ज्ञः स्या-दित्यर्थः। नियमार्थमेतत्सूत्रमिति प्राञ्चः। 'णिजर्थेनाप्यमानस्य यदि भवति तर्हि गत्यर्थादीनामेव कर्तु'रिति। तेन पाचयति देवदत्तो यज्ञदत्तेनेत्यत्र प्रयोज्ये कर्तरि प्रकृ-त्यर्थं प्रति कर्तृत्वस्यैव निरपवादत्वेनाऽवस्थानात्तृतीया सिध्यति। उक्तं च—'गुणिक्रियायां स्वातन्त्र्यात्प्रेषणे कर्मतां गतः। नियमात्कर्मसञ्ज्ञायाः स्वधर्मेणाभिधीयते' इति। कर्तुः स्वधर्मेण—तृतीययेत्यर्थः। ननु णिजर्थं प्रति कर्तृत्वं बाधित्वा प्रकृत्यर्थं प्रति कर्तृत्वं परत्वादेव सिद्धम्, अन्तरङ्गत्वाच्च। स्वकारकविशिष्टा हि क्रिया णिजर्थेन सम्बध्यते, हेतुमति णिज्विधानात्। कर्तृप्रयोजकस्य हेतुत्वात्। अतएव उपजीव्याऽपि कर्तृसञ्ज्ञा। एवञ्च—'परत्वादन्तरङ्गत्वादुपजीव्यतयाऽपि च। प्रयोज्यस्यास्तु कर्तृत्वं गत्यादेर्विधि-

---

मुपजायते'इति। सकर्मकविषयेऽप्यनेन प्रकारेण कालादिकर्मणा सकर्मकत्वं, तुल्यन्यायात्। तेन 'मासमोदनं पचतो'ति भवति। तत्र कालादिकर्माऽप्रधानं, द्रव्यकर्म तु प्रधानं, कालस्याधारत्वेन द्रव्यद्वारा क्रियासम्बन्धात्। किं च कठिनपाक्यस्य महापरिमाणस्य बहुसङ्ख्यस्य च चिरेण पाको-ऽन्यस्याचिरेणेति द्रव्यधर्मं पर्यालोच्य क्रियासु कालयोग इति स च बहिरङ्गः। अपि च साधन-सम्बन्धे जाते क्रियायाः परिच्छेदकबाह्यकालाकाङ्क्षेति स बहिरङ्गः। अकर्मकव्यवहारस्तु धातूना-न्द्रव्यकर्माऽभावनिमित्त एव। अत्र बीजं वक्ष्यते। तदुक्तम्—'अतस्तैः कर्मभिर्युक्तो धातुर्द्रव्यैरक-र्मकः। लस्य कर्मणि भावे च निमित्तत्वाय कल्पते'इति॥

**गतिबुद्धिप्र**। शब्दः कर्म कारकं येषामित्यर्थो, व्याख्यानात्। तेन ह्वाययति क्रन्दयत्योर्न। **अणाविति**। णिच्यनुत्पन्ने इत्यर्थः। अत्र णिज् हेतुमण्णिजेव, [स]णावित्यत्रापि स एव व्याख्यानात्। अत एव भक्षेर्निषेधश्चरितार्थः। स हि नित्यण्यन्तश्चुरादिरिति बोध्यम्। अन्यानधीनत्वलक्षणार्थप्रा-धान्यशाब्दप्राधान्ययोः प्रयोजकव्यापारे सत्त्वेन तदनुरोधिकर्मत्वस्यान्तरङ्गादपि कर्तृत्वाद्बलवत्त्वेन कर्तुरित्येव सिद्धे णिजर्थेनाऽप्यमानस्य चेद्गत्यर्थादीनामेवेति नियमार्थमिदम्। तेन पाचयत्यादियोगे नेति हेतुमति चेति सूत्रे भाष्यकृतः। प्रधानकार्यं सर्वतो बलवदिति आकडारसूत्रे कैयटे स्पष्टम्। तेन

मकर्मकाणां चाणौ यः कर्ता स णौ कर्म स्यात् ॥ शत्रूनगमयत्स्वर्गं वेदार्थं स्वानवेदयत् । आशयच्चाऽमृतं देवान्वेदमध्यापयद्विधिम् ॥ १ ॥ आसयत्सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः ॥ गतीत्यादि किम् । पाचयत्योदनं देवदत्तेन । अण्यतानां किम् । गमयति देवदत्तो यज्ञदत्तं, तमपरः प्रयुङ्क्ते, गमयति देवदत्तेन यज्ञदत्तं विष्णु-

तोचिता' । यद्यपि विधिपक्षेऽपि लक्ष्यं निर्बाधमेव, तथापि नियमसूत्रमिदमिति प्राचां ग्रन्थो विरुध्यत इति चेत् । अत्राहुः–णिजर्थस्य शाब्दं प्राधान्यं पुरस्कृत्य प्रधानानुरोधिन्याः कर्मसञ्ज्ञायाः प्राबल्याद्विप्रतिषेध एव नास्तीति परत्वात्कर्तृत्वसिद्धिरित्येतन्न सङ्गच्छते । अन्तरङ्गत्वोपजीव्यत्वे अपि प्रधानं प्रति प्राबल्यं न प्रयोजयतः, ततश्च नियमार्थत्वोक्तिः प्राचां निर्बाधैवेति । गत्यादिण्यन्तान् क्रमेणोदाहरति–**शत्रूनिति** । शत्रवः स्वर्गमगच्छन्, तान् श्रीहरिः स्वर्गमगमयदिति—गमेरण्यन्तावस्थायां शत्रवः कर्तारस्ते ण्यन्तावस्थायां कर्म अभवन्। स्वर्गकर्मकं शत्रुनिष्ठं यद्गमनं तदनुकूलो यन्निष्ठो व्यापारः स श्रीहरिर्मे गतिरिति वाक्यार्थः । एवमग्रेऽप्यूह्यम् । **वेदार्थमिति** । स्वे स्वकीया वेदार्थमविदुस्तान् श्रीहरिर्वेदार्थमवेदयत् । तथा देवा अमृतम् आश्नन्, तानाशयत् । विधिः वेदमध्यैत, तं ब्रह्माणं वेदमध्यापयत्–अपाठयत् । सलिले पृथ्वी आस्त, तां यो हरिरासयत् स्थापयतिस्म स हरिर्मे गतिरित्यन्वयः । ननु शत्रूणामनेन कर्मत्वे कृते कर्मण ईप्सिततमः स्वर्गो, न तु कर्तुरिति कर्तुरीप्सिततमत्वाऽभावात् स्वर्गस्य कर्मत्वं न स्यात् । अत्र केचित्–'गतिबुद्धि–' इति कर्मत्वस्य बहिरङ्गत्वेन ततः पूर्वमेव धात्वर्थव्यापारप्रयुक्तं कर्मत्वं स्वर्गस्य निर्बाधमित्यदोष इति । अन्ये तु–'कर्तुरीप्सिततमम्–'इत्यत्र कर्तृग्रहणं स्वतन्त्रस्योपलक्षणम् । स्वातन्त्र्यं च धातूपात्तव्यापाराश्रयत्वमेव । तच्च प्रयोजकसन्निधानेऽपि प्रयोज्यस्याऽस्त्येवेति न काप्यनुपपत्तिः । न च स्वतन्त्रे सङ्केतितस्य कर्तृपदस्य तत्रैव लक्षणा न सङ्गच्छते, एकस्यैकस्मिन्नेवार्थे शक्तिलक्षणोभयाभ्युपगमस्य शास्त्रकाराऽसम्मतत्वादिति वाच्यम् । सञ्ज्ञान्तरानुपहितस्वतन्त्रे सङ्केतितस्याऽसञ्ज्ञान्तरोपहितानुपहितसाधारणे स्वतन्त्रे लक्षणाभ्युपगमे बाधकाऽभावात्। अतएव जिधातोर्जये शक्तिः, प्रकृष्टजये लक्षणा। 'शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा' इति । तेन प्रजयतीत्यत्र प्रशब्दो द्योतकः, प्रकृष्टजयस्तु जिधातोरेवार्थ इति नैयायिकोक्तिः सङ्गच्छते । नापि कर्तृपदस्य स्वतन्त्रलक्षणायां प्रमाणाऽभावः शङ्क्यः । 'प्रधान-

गत्यादियोगे प्रयोज्यस्य कर्मत्वशक्तिमत्त्वं, पाचयत्यादियोगे कर्तृत्वशक्तिमत्त्वमेवेति बोद्धव्यम् । **गमयति देवदत्तेनेति** । यज्ञदत्तकर्मकगमनानुकूलदेवदत्तकर्तृकव्यापारानुकूलो विष्णुमित्रकर्तृको

मित्रः ॥ ❀ **नीवह्योर्न** ॥ नाययति वाहयति वा भारं भृत्येन ॥ ❀ **नियन्तृकर्तृकस्य वहेरनिषेधः** ॥ वाहयति रथं वाहान् सूतः ॥ ❀ **आदिखाद्योर्न** ॥ आदयति खादयति वाऽन्नं बटुना ॥ ❀ **भक्षेरहिंसार्थस्य न** ॥ भक्षयत्यन्नं बटुना अहिंसार्थस्य किम्? । भक्षयति बलीवर्दान् सस्यम् ॥ ❀ **जल्पतिप्रभृतीनामुप-**

कर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्। अप्रधाने दुहादीनाम्' इत्युक्त्वा 'ण्यन्ते कर्तुश्च कर्मणः' इतिवदतो भाष्यकारस्यैव प्रमाणत्वात्। न हि लक्षणां विना णिजन्तानां द्विकर्मकता लभ्यते, येन 'ण्यन्ते कर्तुः' इति वचनं सावकाशं स्यादित्याहुः। **नीवह्योरिति**। यद्यप्यनयोः प्रापणमर्थो न गतिः, तथापि गतिरपि विशेषणीभूय प्रापणमध्ये प्रविष्टेत्येतावन्मात्रेण प्राप्तिं मत्वा प्रतिषेध उक्तः। **नियन्त्रिति**। नियन्ता पशुप्रेरकः, न तु सारथिरेवेति। तेन वाहयति बलीवर्दान् यवानिति सिध्यति। अस्मादेव भाष्योदाहरणात् 'रूढिर्योगमपहरति' इति न्यायोऽत्र न स्वीक्रियते। **अनिषेध इति**। 'प्रयोज्यः कर्मे'ति वक्तव्यमिति फलितोऽर्थः। यैस्तु प्रापणं गतिशब्देन गृह्यते यैर्वा न गृह्यते उभयेषामपीदं वचनमावश्यकम्। 'नीवह्योर्ने'ति वचनं तु यैः प्रापणं गतिशब्देन न गृह्यते तेषामनावश्यकमिति बोध्यम्। **सूत इति**। 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः' इत्यमरः। प्रत्यवसानार्थत्वात्कर्मत्वे प्राप्ते निषेधमाह—**अदिखाद्योरिति**। 'अद भक्षणे' 'खाद्ट भक्षणे'। प्राचा तु आदीति पठ्यते, तत्तु ण्यन्ता[व-स्था]नुकरणमिति बोध्यम्। **आदयतीति**। इह 'निगरणचलनार्थेभ्यश्च' इति परस्मैपदनियमो न प्रवर्तते, 'अदेः प्रतिषेधः' इति तस्य निषिद्धत्वात्। तेनाऽकर्त्रभिप्राये क्रियाफले 'शेषात्कर्तरि'—इति परस्मैपदम्, कर्त्रभिप्राये तु 'णिचश्च' इत्यात्मनेपदं भवत्येवेति बोध्यम्। **भक्षेरिति**। ननु 'गतिबुद्धि—' इति सूत्रेणाऽणौ कर्तुर्णौ कर्मत्वं विधीयते न तु णौ कर्तुरिति प्राप्तेरेवाऽभावान्निषेधोऽयं व्यर्थ इति चेत्। अत्राहुः—हेतुमण्णिजन्ते विधिरिति निषेधोऽप्यणाविल्ययं सन्निधानाद्धेतुमण्णिज्विषय एव, तेन चुरादिणिजन्तेऽपि भक्षयतौ प्राप्तिसत्त्वात्तन्निषेध उपसङ्ख्यात इति। **भक्षयतीति**।

व्यापार इति बोधः। अत्र देवदत्तस्य न कर्मत्वम्। **नियन्त्रिति**। नियन्तृकर्तृकण्यन्तप्रकृतिभूतस्येत्यर्थः। प्रापणार्थवहेर्गत्यर्थत्वाऽभावेऽपि 'ग्रामं प्राप्त'इत्यादौ तत्प्राप्तेर्गतिं विनाऽसम्भवादाक्षिप्तगत्याऽपि गत्यर्थत्वमित्यभिमानेन वार्तिकारम्भः। 'सुखं प्राप्त' इत्यादौ न तदाक्षेपः। तत्र कर्तरि क्त आदिकर्मणि बोद्धव्यः। अत एव 'ग्रामं प्रापयति देवदत्तेने'त्येवेति ध्वनितं 'नगती'ति सूत्र, 'न वे'ति सूत्रे च भाष्ये। नयतेस्तु 'या प्रापणे'इत्यादेरिव गत्युपसर्जनं प्रापणं वाच्यमिति तस्य गत्यर्थत्वमेवेति बोद्धव्यम्। **आदिखाद्योरिति**। प्रत्यवसानार्थत्वात्प्राप्तिः। **प्रत्यवसानं—**भक्षणम्। भक्षयति

**सङ्ख्यानम्** ॥ जल्पयति भापयति वा धर्मं पुत्रं देवदत्तः ॥ ॐ **दृशेश्च** ॥ दर्शयति हरिं भक्तान् । सूत्रे ज्ञानसामान्यार्थानामेव ग्रहणं न तु तद्विशेषार्थानामित्यनेन ज्ञाप्यते । तेन स्मरतिजिघ्रतीत्यादीनां न । स्मारयति घ्रापयति वा देवदत्तेन ॥ ॐ**शब्दायतेर्न** ॥ शब्दाययति देवदत्तेन । धात्वर्थसङ्गृहीतकर्मत्वेनाकर्मकत्वात्प्राप्तिः॥ येषां देशकालादिभिन्नं कर्म न सम्भवति तेऽत्राकर्मकाः । न त्वविवक्षितकर्माणोऽपि ।

---

बलीवर्दाः सस्यं भक्षयन्ति । तान् भक्षयतीत्यर्थः । क्षेत्रस्थानां यवानां भक्ष्यमाणानां हिंसा ज्ञेया, तस्यामवस्थायां तेषां चेतनत्वात् । **जल्पतिप्रभृतीनामिति** । 'जप जल्प व्यक्तायां वाचि' । पुत्रो धर्मं जल्पति, तं देवदत्तो जल्पयतीत्यण्यन्तावस्थायां पुत्रः कर्ता, ण्यन्तावस्थायां कर्म अभवत् । तथा पुत्रो धर्मं भाषते तं भाषयति देवदत्तः । न च जल्पतिभाषत्योः शब्दक्रियत्वेन 'गतिबुद्धि–' इति सूत्रेणैव सिद्धे उपसङ्ख्यानमिदं व्यर्थमिति भ्रमितव्यम् । 'शब्दकर्मणा'मित्यस्य शब्दः कर्म कारकं येषामित्यर्थात् । अन्यथा 'वेदमध्यापयद्विधिम्' इत्यादेरसिद्धिप्रसङ्गात् । एवं पुत्रो यत्किञ्चिद्विलपति तं विलापयतीत्याद्यप्यूह्यम् । **स्मारयतीति** । आध्यानार्थकस्यैव स्मरतेः 'घटादयो मितः' इति मित्त्वं, न चिन्तार्थकस्येति भावः । **देवदत्तेनेति** । 'स्मारयत्येनं वनगुल्म' इत्यत्र तु 'णेरणौ–' इति सूत्रे भाष्ये प्रयोगादेव कर्मत्वं बोध्यम् । **शब्दाययतीति** । शब्दं करोतीत्यर्थे 'शब्दवैर–' इत्यादिना क्यङ् । ततो हेतुमण्णिच् । **धात्वर्थसंगृहीतेति** । एतेन 'शब्दाययति सैनिकै रिपू'निति कर्म प्रयुञ्जानाः परास्ताः । **न त्वविवक्षितकर्माणोऽपीति** । यथा 'लः कर्मणि च–' इति सूत्रे

---

**बलीवर्दानिति** । हिंसाऽङ्गे भक्षणे भक्षेर्वृत्तिः । परकीयसस्यभक्षणे परो हिंसितो भवतीति तत्स्वामिनो ऽत्र हिंसा द्रष्टव्या । **जल्पयतीति** । पुत्रो धर्मं जल्पति, तद्बोधकवाक्यानि कथयति, देवदत्तो जल्पयति धर्मं पुत्रमित्यर्थः । **शब्दायतीति** । शब्दं करोतीत्यर्थे 'शब्दवैरे'त्यादि क्यङन्ताण्णिच् । परे तु शब्दक्रियाणामित्यर्थे ह्वाययतिशब्दाययतिक्रन्दयतीनां प्रतिषेध उक्तो भाष्ये, न तु 'शब्दकर्मकाणा'मिति पक्षे । एवञ्च तत्र पक्षे भाष्ये शब्दाययतौ प्रतिषेधाऽनुक्त्याऽकर्मकशब्दायतिसत्त्वे न मानं, शब्दस्य धात्वर्थसंगृहीतत्वेऽपि बहिर्भूतपुत्रादिकर्मणोऽभावे मानाऽभावात्, ह्वयताविवेति चिन्त्योऽयं निषेध इत्याहुः । **येषामिति** । अयं भावः–गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्तासणाविति सूत्रं नियमस्य सजातीयापेक्षत्वात्सकर्मकाणाञ्चेदेषामेवेति नियमपरम् । एवं सिद्धेऽकर्मकग्रहणं सामर्थ्याद्देशकालादिभिन्नकर्माऽभाववतोऽकर्मकग्रहणेन ग्रहणार्थं, तच्च सामान्यापेक्षं ज्ञापकं–'शास्त्रेऽकर्मकपदेन ईदृशानामेव ग्रहण'मिति । तेन 'मासमास्यत'इत्यादौ भावे लो भवति । न त्विति । तदविवक्षा हि द्वेधा, तदन्वययोग्यधात्वर्थत्यागात्, सत्येव तस्मिन्नर्थे यत्र सम्बन्धित्वेना-

तेन मासमासयति देवदत्तमित्यादौ कर्मत्वं भवत्येव ।
देवदत्तेन पाचयतीत्यादौ तु न ॥

अविवक्षितकर्माणोऽप्यकर्मका इति गृह्यन्ते, तथैवेहापि यदि गृह्येरन् तदा ओदनादि-कर्मणोऽविवक्षायां 'पाचयति देवदत्त'मिति स्यात्, न तु देवदत्तेन पाचयतीति । एवं 'गत्यर्थाकर्मक--' इति सूत्रेऽप्यविवक्षितकर्माणोऽकर्मका इति न गृह्यते । दत्तवान् पक्ववान् इत्यर्थे दत्तः पक्व इत्यापत्तेः । यत्तु प्राचा–'अयक्रन्दशब्दायह्वेञां न' इत्युक्तं, तदयुक्तम् । अयतेर्निषेधस्य निर्मूलत्वेन अणौ कर्तुर्णौ कर्मत्वस्य तत्रेष्टत्वात् । क्रन्द-ह्वेञोस्तु शब्दक्रियत्वेऽपि शब्दः कर्म कारकं नेति प्राप्तेरेवाऽभावाच्चेतिस्थितं मनोरमा-याम् । यद्यपि 'श्रुग्रहदृशाम्' इति कर्मत्वमुक्तं, तत्र दृशिग्रहणं प्रामाणिकमेव । शृणोतेस्तु शब्दकर्मकत्वात्सिद्धम् । ग्राहेर्द्विकर्मकत्वं यद्यपि 'अजिग्रहत्तं जनको धनुस्तत्' इति भट्टिप्रयोगस्य, 'अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाके'ति कालिदासप्रयोगस्य चाऽनुगुणं, तथापि बहूनामसम्मतमेव । अतएव 'तं धनुरजिग्रहत्'–बोधितवान्, 'सुतां ग्राहयितुम्'–उद्वाह्यत्वेन बोधयितुम्'इत्येव-मुक्तप्रयोगं समर्थयाञ्चक्रिरे । न च बुध्यर्थत्वं विनापि यथाश्रुतार्थे एव ग्राहेर्द्विकर्मकत्व-मस्त्विति वाच्यम्, तथा हि सति 'जायाप्रतिग्राहितगन्धमाल्या'मित्यत्र क्तप्रत्ययेनाऽभि-धानं प्रयोज्यकर्मीभूतधेनोः स्यान्न तु गन्धमाल्यकर्मणः, 'ण्यन्ते कर्तुश्च कर्मणः' इत्युक्तेः । जायाप्रेरिता हि धेनुर्गन्धमाल्ये प्रतिगृह्णातीति भवत्येव धेनुः प्रयोज्यकर्म । ततश्च जायया गन्धमाल्ये प्रतिग्राहितामिति स्यात् । क्तप्रत्ययानभिहितत्वेन गन्धमाल्य-कर्मणि द्वितीयायाः प्रवृत्तेः । सिद्धान्ते तु जायया प्रतिग्राहिते गन्धमाल्ये ययेति

ऽन्वयविवक्षणाद्वेति भावः । इदं कैयटानुरोधेन । परे त्वविवक्षितकर्मणामपि अकर्मकपदेन ग्रहणं, क्तादीनामविवक्षितकर्मकेभ्यः कृतपूर्वीकटमित्यादौ भाष्यकृता कैयटेन चाङ्गीकारात् । लुनातेर्निवृत्त-प्रेषणाण्णिचि 'लावयति केदारं देवदत्त' इत्यादौ केदारस्य कर्मद्वितीयान्तस्य णेरणावित्यत्र कैयटेन प्रयोगाच्च । न चाऽत्रार्थान्तरे वृत्त्याऽकर्मकत्वं न त्वविवक्षयेति वाच्यम्, तत्त्वप्रत्यभिज्ञयाऽर्थान्त-रत्वाऽभावात् । तदुदाहरणं तु स्यन्दतइत्याद्यर्थकं 'नदी वहती'त्याधाकरे स्पष्टम् । 'अधीगर्थे'ति सूत्रे कर्मणः शेषत्वविवक्षयाऽकर्मकत्वे 'मातुः स्मर्यते'इत्यत्र भावे लस्य भाष्ये उदाहृतत्वाच्च । यत्तु प्रकृतसूत्रे भाष्ये "कालकर्मणामुपसङ्ख्यानं कर्त्तव्यं, न च केचित्कालभावाध्वभिरकर्मकास्त एवं विज्ञास्यामः क्व चिद्येऽकर्मका इती"त्युक्तं । क्व चिदित्यस्य कालादेः कर्मसंज्ञाप्रयोजकव्याप्त्यादिरहिते-ऽर्थे इत्यर्थः । तस्यायं भावः,–उक्तरीत्याऽकर्मकपदसामर्थ्यादत्र शास्त्रेऽकर्मकपदस्याऽवस्थान्तरे कर्मरहिता इत्यर्थं इति, तादृशत्वञ्च सर्वथा द्रव्यकर्माऽभावात्तदविवक्षणाद्वेत्युभयविधमपि कृतपूर्वी-

**हृक्रोरन्यतरस्याम्** । १।४।५३। हृक्रोरणौ यः कर्ता स णौ वा कर्म स्यात् । हारयति कारयति वा भृत्यं भृत्येन वा कटम् ॥ ❀ अभिवादिदृशोरात्मनेपदे

---

विग्रहः । द्विकर्मकत्वाऽभावेन गन्धमाल्यस्यैव क्तप्रत्ययेनाऽभिहितत्वात् । 'यये'ति तृतीया तु णिजर्थं प्रति जायायाः कर्तृत्वेऽपि णिच्प्रकृत्यर्थं ग्रहणं प्रति धेनोः कर्तृत्वादुपपद्यते । एवञ्चेह जायानिष्ठप्रेरणविषयीभूतं गन्धमाल्यकर्मकं यत् प्रतिग्रहणं तत्कर्त्रीमिति वृत्त्यर्थः । यद्यपि धेनुकर्तृकं जायानिष्ठप्रेरणाविषयीभूतं यत्प्रतिग्रहणं तत्कर्मीभूते गन्धमाल्ये इति विग्रहार्थः, तथाप्यन्यपदार्थान्तर्भावेणैव विशेषणविशेष्यभाववैपरीत्येनैकार्थीभावः कल्प्यत इति नास्त्यत्राऽनुपपत्तिरिति दिक् ॥

**हृक्रो** । हा च का च हृकरौ, तयोरिति विग्रहः । हृश्च कृश्च हृक्रोरिति वा । प्रथमान्तेन, परिनिष्ठितविभक्त्या वा विग्रह इति सिद्धान्तात् । 'गतिबुद्धी'त्यादीह नानुवर्तते । तेन उभयत्रविभाषेयम् । अभ्यवपूर्वस्य हरतेर्भक्षणार्थकत्वाद्विकारार्थस्य करोतेश्चाऽकर्मकत्वात् 'गतिबुद्धि' इत्यादिना अणौ कर्तुः णौ कर्मत्वे प्राप्ते, अर्थान्तरे चाऽनयोः सकर्मकत्वादप्राप्तेऽस्यारम्भात् । अप्राप्तावुदाहरणमाह—**हारयतीति** । हरति करोति वा कटं भृत्य इत्यण्यन्तावस्थायां भृत्यः कर्ता, स एव ण्यन्तावस्थायां कर्माऽभूत् । प्राप्ते तूदाहरणम्—तृणमभ्यवहारयति सैन्धवान्, तृणमभ्यवहारयति सैन्धवैः । विकारयति सैन्धवान्, विकारयति सैन्धवैरिति बोध्यम् ॥ ननु यदि 'गतिबुद्धी' त्यादिरिह नानुवर्तेत तदैतदेवं स्यात्, तत्रैव मानं न पश्याम इति चेन्मैवं, 'न वेति विभाषा'इति सूत्रे उभयत्रविभाषासु भाष्यकृताऽस्यापि सूत्रस्य गणितत्वेनोक्तशङ्काया अनवतारात् ॥ **अभिवादीति** । 'वद सन्देशवचने' चुरादिराधृषीयः । अभिपूर्वकत्वा-

---

त्यादिभाष्याद्ग्राह्यं, विनिगमनाविरहाच्च । अत एवाऽकर्मकाधिकारे श्रुदृश्यादिभ्य आत्मनेपदविधानं सङ्गच्छते । अकर्मकशब्दे च धातुरेवान्यपदार्थः । अर्थभेदेन च शब्दभेदः । कर्मत्वेन कालाद्यतिरिक्तकर्मानन्वय्यर्थकत्वञ्च तत्त्वमिति बोध्यम् । **न च केचिदिति**भाष्येण धातुमात्रस्य कालकर्मकार्थवृत्तित्वमिति दर्शितम् । "यद्वा यत्कर्म भवति न च भवति तेनाकर्मकाणां, न चैतत्कर्म क चिदपि न भवती'ति भाष्योक्तपक्षान्तरेण तत्सामर्थ्याद्व्यभिचारिद्रव्यकर्मरहितेत्यर्थो बोधितः । एवञ्च मासादिप्रयोगेऽपि तदवस्थायामेवाऽकर्मकत्वं बोध्यम् । एतेनाऽत्र सूत्रे **न च केचिदिति** प्रतीकमुपादाय कालादेरविवक्षया तैरकर्मकत्वसम्भवोऽस्त्येवेत्याशङ्क्यात्यन्ताविद्यमानकर्मकाणामेवात्र शास्त्रेऽकर्मकपदेन ग्रहणमन्यथा पचादीनामविवक्षितकर्मत्वे लादयः स्युरिति कैयटेनोक्तं, तत्परास्तम् । अतिप्रसङ्गस्त्वनभिधानाद्वारणीय इति वदन्ति ॥

**हृक्रोरन्य** ॥ तत्राऽभ्यवपूर्वस्य हरतेर्भक्षणार्थत्वाद्विकारार्थकरोतेश्चाकर्मकत्वात्प्राप्ते, अर्थान्तरे

वेति वाच्यम् ॥ अभिवादयते दर्शयते देवं भक्तं भक्तेन वा ॥

**अधिशीङ्स्थासां कर्म** ।१।४।४६। अधिपूर्वाणामेषामाधारः कर्म स्यात् । अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः ॥ **अभिनिविशश्च** ।१।४।४७। 'अभिनो'रित्येतत्संघातपूर्वस्य विशतेराधारः कर्म स्यात् । अभिनिविशते सन्मार्गम् । 'परिक्रयणे संप्रदान'मिति सूत्रादिह मण्डूकप्लुत्याऽन्यतरस्याङ्ग्रहणमनुवर्त्य व्यवस्थित-विभाषाश्रयणात्क्वचिन्न । पापेऽभिनिवेशः ॥ **उपान्वध्याङ्वसः** ।१।४।४८। उपादि-पूर्वस्य वसतेराधारः कर्म स्यात् । उपवसति अनुवसति अधिवसति आवसति वा वैकुण्ठं हरिः ॥ ॐ **अभुक्त्यर्थस्य न** ॥ वने उपवसति ॥ ॐ **उभसर्वतसोः**

नमस्कारार्थता । अभिवादयतेरप्राप्तौ, दृशेस्तु प्राप्तावयं विकल्पः । अभिवदति देवं भक्तस्तं प्रेरयत्यन्यः अभिवादयते । 'णिचश्चे'त्यात्मनेपदम् । परस्मैपदे तु अभिवा-दयति देवं भक्तेनेत्येव । तथा पश्यति देवं भक्तः, दर्शयते देवं भक्तमित्यादि ॥

**अभिनिवि**। नेरल्पाच्तरत्वेन पूर्वनिपाते कर्तव्ये विपरीतोच्चारणमीदृशसङ्घातविव-क्षार्थमित्याह—**सङ्घातपूर्वस्येति**। तेनेह न—'निविशते यदि शूकशिखा पदे' इति॥

**क्वचिन्नेति**। 'एष्वर्थेष्वभिनिविष्टाना'मिति समर्थसूत्रस्थभाष्यप्रयोगोऽत्र मानमिति भावः ॥ **उपान्व** । 'लुग्विकरणादलुग्विकरणं बलीय' इति 'वस निवासे' इति भौवादिक एव गृह्यते, न तु 'वस आच्छादने' इत्यादादिक इत्यभिप्रेत्य शपा निर्देश-माह—**उपादिपूर्वस्य वसतेरिति** । 'वसेरश्यर्थस्य प्रतिषेधः' इति वार्तिकम-र्थतो व्याचष्टे—**अभुक्त्यर्थस्य नेति** । वार्तिके अर्थशब्दो निवृत्तिवचनः । भोजन-निवृत्तिवाचकस्य वसेराधारः कर्म नेत्यर्थः ॥ **वने उपवसतीति** । कथं तर्हि 'गत्य-र्थाऽकर्मके'ति सूत्रे 'हरिदिनमुपोषितः' इत्युदाहरणं सङ्गच्छत इति चेत् । अत्राहुः—

चाऽप्राप्ते उभयत्र विभाषेयम् । **अभिवादि** । हेतुमण्ण्यन्तस्याभिवादेर्दृशिप्रकृतिकण्यन्तस्य चेत्यर्थः॥

**अधिशीङ्** । 'आधार' इत्यनुवर्त्तते । तस्यैव कर्मत्वशक्तिमत्ताऽनेन बोध्यते । **अभिनिविश** । व्याख्यानादभिनीति द्वन्द्वे तत्पूर्वो विशिरिति समासः । अभिनिवेश आग्रहः, सन्मार्गविषयका-ग्रहवानित्यर्थः । **व्यवस्थितेति** । परिक्रयण इत्यतोऽन्यतरस्याङ्ग्रहणस्यानुवृत्तेरस्य वैकल्पिकत्वम् । अतिप्रसङ्गस्त्वनभिधानाद्वारणीयः । एतच्चैष्वर्थेष्वभिनिविष्टानामिति प्रतीके समर्थसूत्रे कैयटे । परे त्वेतद्भाष्यप्रयोगादभिनिविशित्यानुपूर्व्या अविकृताया यत्र श्रवणं तत्रैवैतत्सूत्रप्रवृत्तिः, अन्यतरस्याङ्ग्-हणानुवृत्तौ व्यवस्थितविभाषाश्रयणे च न मानमित्याहुः ॥ **उपान्व** ॥ अलुग्विकरणत्वाद्भ्वादेरेव ग्रहणमित्याह-**वसतेरिति** । भाष्ये 'अश्यर्थस्य ने'त्युक्तं । 'मशकार्थो धूम' इतिवदशिनिवृत्त्यर्थस्येति तदर्थः । तत्फलितमाह-**अभुक्त्यर्थस्य नेति** । 'उपोष्य रजनीमेका'मित्यादौ 'कालाध्वनोरि'ति

कार्या धिगुपर्यादिषु त्रिषु ॥ द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥ उभयतःकृष्णं गोपाः । सर्वतः कृष्णम् । धिक् कृष्णाभक्तम् । उपर्युपरि

---

वसेरत्र स्थितिरर्थः, भोजननिवृत्तिस्त्वार्थिकीति न दोष इति ॥ उपपदविभक्तिमाह—**उभसर्वतसोरि**त्यादिना । उभसर्वयोस्तसौ उभसर्वतसौ, तदन्तयोर्योगे द्वितीया कार्येत्यर्थः । प्रकृतिद्वित्वेन तसोरिति द्वित्वनिर्देशः । अत्र उभशब्दादयच् न कृतः, अनुकरणशब्दत्वेनाऽसङ्ख्यावाचित्वात् । तथाच उभशब्देन उभयशब्दो लभ्यते, केवलात् परत्र तसिलोऽसम्भवादित्येके । वस्तुतस्तु वृत्तिविषये अयच्प्रवृत्तावपि उभशब्दाद्विहितो यस्तस् तदन्तमस्त्येवेति यथाश्रुतं साधु इति तु मनोरमायां स्थितम् । **धिगिति** । धिक्शब्दयोगेऽपि द्वितीया कार्येत्यर्थः । अत्र प्राञ्चः—'धि'गित्यविभक्तिको निर्देशो गवित्ययमाहेतिवत् इत्याहुः । तन्न । तथा सत्यपदान्ततया दृष्टान्ते 'लोपः शाकल्यस्य' इत्यस्येव दार्ष्टान्तिके जश्त्वस्याप्यप्रवृत्तिप्रसङ्गात् । न चायं गकारान्त एवास्त्विति शङ्क्यम् । 'कस्य च दः' इति सूत्रे 'धकि'दित्युदाहरणस्याऽसङ्गतिप्रसङ्गात् । 'कस्य च दः' इत्यनेन हि कान्ताव्ययस्याकच्सन्नियोगेन दत्वं विधीयते, तस्माद्धिगिति विभक्त्यन्तमेव । परन्तु 'प्रकृतिवदनुकरण'मित्यतिदेशेनाऽव्ययत्वात्सुपो लुक् । यदि तु धिगित्यविभक्तिको निर्देश इत्येतावानेव प्राचां ग्रन्थस्तदा सम्यगेव । अव्ययत्वात्सुपो लुक्यविभक्तिको निर्देश इति वक्तुं शक्यत्वात् । **उभयतः कृष्णमिति** । कृष्णस्य पार्श्वद्वयेऽपीत्यर्थः । आद्यादित्वात्तसिः ।, षष्ठ्यर्थे द्वितीया । एवमुपपदविभक्तौ सर्वत्र बोध्यम् । अत्र व्याचक्षते—'उभसर्वतसो'रित्यत्र उभसर्वयोर्गणे परस्परसाहचर्यात्तसिलेव गृह्यते, न त्वाद्यादिभ्य इति तसिः । तथा चोभयत इत्यादौ 'तसेश्चे'त्यनेन तसिलादेशोऽवगन्तव्यस्तेन यत्र सञ्ज्ञायां तसेस्तसिलादेशाऽभावस्तत्र न द्वितीया, किन्तु षष्ठ्येवेति । तसिलभावस्तु 'तसेश्चे'त्यत्र 'किंसर्वनामबहुभ्यः' इत्यनुवर्तनादिति ।

**धिक् कृष्णाभक्तमिति** । तस्य निन्द्यत इत्यर्थः । षष्ठ्यर्थे द्वितीया । स निन्द्य

---

द्वितीया । 'ग्रामे उपवसती'त्यत्र ग्रामे वसन् त्रिरात्रमुपवसतीत्यर्थ इतीदं न कार्यमिति भाष्ये स्पष्टम् ॥

उपपदविभक्तिमाह—**उभेति** । उपपदविभक्तीनां सम्बन्धोऽर्थः । विशिष्याऽनुक्तेः, षष्ठ्यपवादत्वाच्च । उभसर्वयोस्तसाविति विग्रहः । उभांशे उभयशब्दनिष्ठं प्रकृतित्वमुभशब्दे आरोप्य तत्प्रकृतिकत्वं षष्ठ्यर्थः । उभयशब्दसर्वशब्दप्रकृतिकतसन्तयोगे इत्यर्थः । **आम्रेडितान्तेष्विति** । कृतद्विर्वचनेष्वित्यर्थः । **धिक् कृष्णेति** । धिगर्थो निन्दा । कृष्णाभक्तसम्बन्धिनिन्देत्यर्थः । उपर्यादीनां समीपोर्ध्वदेशादिवृत्तित्वमर्थः । **अभितः परित** इत्यत्र 'पर्यभिभ्यां चे'ति तसिल् । तत्राद्य

लोकं हरिः। अध्यधि लोकम्। अधोऽधो लोकम्॥ ॐ अभितःपरितःसमया-निकषाहाप्रतियोगेऽपि॥ अभितः कृष्णम्। परितः कृष्णम्। ग्रामं समया। निकषा लङ्काम्। हा कृष्णाभक्तम्। तस्य शोच्यते इत्यर्थः। बुभुक्षितं न प्रति-भाति किंचित्॥

**अन्तराऽन्तरेण युक्ते**।२।३।४। आभ्यां योगे द्वितीया स्यात्। अन्तरा त्वां

---

इत्यर्थः। प्रथमार्थे द्वितीयेत्येके। कथं धिङ् मूर्खेति?। सम्बोधनपदस्य क्रियान्वय इति प्रागेवोक्ततया धिक्शब्दयोगाऽभावाद्द्वितीया न प्रवर्तत इति 'सम्बोधने चे'ति प्रथमैव भवतीति। क्रियापदं च क्वचिच्छ्रुतं, क्वचिदाक्षिप्तम्। तथा च धिङ् मूर्ख निषिद्धाचरणमिदमित्येतदिह कल्प्यम्। मूर्खसम्बोध्यकनिषिद्धाचरणस्य निन्द्यत इति तु वाक्यार्थः। 'प्रथमार्थे धिग्योगे द्वितीये'ति वादिमते तु मूर्खसम्बोध्यकं निषिद्धा-चरणं निन्द्यमिति वाक्यार्थः॥ यत्तु 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'ति सम्बोधने प्रथमैव भवति, सम्बोधनपदस्य कर्तृकारकवाचित्वादित्याहुः। तच्चिन्त्यम्। सम्बोधनस्य कर्तृकारकत्वे उक्तिसम्भवाऽभावात्। न च 'देव प्रसीदे'त्यादौ वस्तुगत्या देव एव कर्तेत्यस्त्येवोक्तिसम्भव इति वाच्यम्। वास्तवकर्तृत्वेऽपि कारकविभक्तित्वस्या-ऽलाभात्। किञ्च 'देव त्वां भजे, त्वां भजन्ति भक्ता' इत्यादौ सम्बोध्यदेवस्य वास्तवमपि कर्तृत्वं नास्तीति आस्तां तावत्॥ **उपर्युपरीति**। कथं तर्हि 'उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः' इति?। अत्राहुः—उपरिबुद्धीनामुत्तानबुद्धीनामुपरि चरन्तीत्यर्थः। तेनाऽऽम्रेडितत्वाऽभावान्न द्वितीया। यद्वा—प्रतिपदोक्तस्य 'उपर्यध्यधसः सामीप्ये' इति कृतद्वित्वस्य वार्तिके ग्रहणादिह च वीप्साद्विर्वचनत्वान्नास्ति द्वितीयाप्रसक्तिरिति॥

**अभितःपरित इति**। एच्च 'अन्यत्रापि दृश्यते' इति पूर्वोक्तस्यैव प्रपञ्चभूतमिति व्याचख्युः॥ **अभितःकृष्णमिति**। 'पर्यभिभ्यां चे'ति तसिल्। समया-निकषा-शब्दौ सामीप्यवचनावव्ययौ। 'विलङ्घ्य लङ्कां निकषा हनिष्यती'ति माघः। 'हे'ति खेदे, तदेतदाह—**तस्य शोच्यते इति**। **बुभुक्षितमिति**। बुभुक्षितस्येत्यर्थः। एष प्रतिशब्दः क्रियाविशेषकत्वादुपसर्गः, न तु कर्मप्रवचनीयः। तेनाऽत्र 'कर्मप्रवच-नीययुक्ते—' इत्यनेन गतार्थता न शङ्क्या॥ **अन्तरान्तरेण**। प्रतिपदोक्तत्वान्निपा-

---

स्योभयत इत्यर्थोऽन्त्यस्य सर्वत इत्यर्थ इति पर्यभिभ्याचेत्यत्र भाष्ये॥ **अन्तरान्तरेण**॥ 'अन्त-रेणे'त्यटाबन्तसाहचर्यादन्तरेत्यटाबन्तम्, 'अन्तरे'त्यतृतीयान्तसाहचर्यादन्तरेणेत्यतृतीयान्तम्। साहचर्यं सादृश्यं,'तद्यथाऽस्य गोर्द्वितीयेनार्थ इति गौरेवानीयते नाश्वो न गर्दभ' इति दृष्टान्तपरभाष्येण

मां हरिः । अन्तरेण हरिं न सुखम् ॥ **कर्मप्रवचनीयाः** ।१।४।८३। इत्यधिकृत्य । **अनुर्लक्षणे** ।१।४।८४। लक्षणे द्योत्येऽनुरुक्तसंज्ञः स्यात् । गत्युपसर्गसंज्ञापवादः ॥

---

तयोरेव ग्रहण न तु टावन्ततृतीयान्तयोः, परस्परसाहचर्याच्च । तद्यथा गुरुभार्गवावित्युक्ते ग्रहयोरेव प्रतीतिर्न त्वाचार्यपरशुरामयोः । तेन किमनयोरन्तरेणावगतेनेति सिद्धम् । किमनयोर्विशेषेण ज्ञातेनेत्यर्थः ॥ **अन्तरा त्वां मामिति** । तव मम च मध्ये इत्यर्थः । हरिशब्दात्तु द्वितीया न भवति, अन्तरङ्गतया प्रथमाया एवोत्पत्तेः ॥ **अन्तरेण हरिमिति** । हरिं विनेत्यर्थः । 'मध्ये' इत्यर्थेऽप्यन्तरेणशब्दो वर्तते 'मृणालसूत्रामलमन्तरेण स्थितश्चलच्चामरयोर्द्वयं सः' इति । चलच्चामरयोर्द्वयस्य मध्ये इत्यर्थः । युक्तग्रहणान्नेह—'अन्तरा त्वां मां कृष्णस्य मूर्तिः' । इह कृष्णान्न द्वितीया, अन्तराशब्दप्रयोगेऽपि अन्तरेत्यनेनाऽनन्वयात् ॥ **कर्मप्रवचनीयाः इत्यधिकृत्येति** । रीश्वरात्प्रागिति बोध्यम् । गुरुसंज्ञाकरणमन्वर्थत्वाय । कर्म क्रियां प्रोक्तवन्तः कर्मप्रवचनीयाः । बाहुलकाद्भूते कर्तर्यनीयर् । तेन संप्रति क्रियां न द्योतयन्तीति लभ्यते । तथा च हरिः—'क्रियाया द्योतको नायं संबन्धस्य न वाचकः । नापि क्रियापदाक्षेपी संबन्धस्य तु भेदकः' इति । तथाहि 'जपमनुप्रावर्ष'दित्यत्र अनुना न क्रियाविशेषो द्योत्यते, अनुभूयते सुख'मित्यादौ यथा । नापि षष्ठ्येव संबन्ध उच्यते, द्वितीययैव तस्योक्तत्वात् । नापि 'प्रादेशं विपरिलिखति' 'विमाय परिलिखती'त्यत्र विशब्देन मानक्रियैव क्रियान्तरमाक्षिप्यते, कारकविभक्तिप्रसङ्गात् । किं तु जपसंबन्धि वर्षणमिति द्वितीययावगतः संबन्धो लक्ष्यलक्षणभाव एवेत्यवगमात् संबन्ध एवानुना विशेषेऽत्रस्थाप्यते । क्वचित्तु क्रियागतविशेषद्योतकेऽपि इयं संज्ञा वचनात् प्रवर्तते । 'पूजायाम्' 'अतिरतिक्रमणे च' इति यथा ॥ **उक्तसंज्ञ इति** । कर्मप्रवचनीयसंज्ञ इत्यर्थः ॥ **गत्युपसर्गसंज्ञापवाद**

---

सदृशानामेव प्रयोगे सहायतेत्यर्थस्य प्रतिपादनात् । तेन 'किमनयोरन्तरेण ज्ञातेने'ति सिद्धम् । **अन्तरेण** । विशेषेणेत्यर्थः । एवञ्च तयोरव्यययोरेव ग्रहणम् । यद्वाऽन्तराशब्दस्य प्रथमैकवचनान्तस्याऽनभिधानादन्तरा इत्यानुपूर्वीकमव्ययमेव प्रयोगेषु दृश्यते इति तत्साहचर्यादन्तरेणेत्यप्यव्ययमेव । तदुक्तं भाष्ये— अन्तराशब्दोऽयमदृष्टापचारो निपात एवेती'ति बोध्यम् । अवधित्वरूपः सम्बन्धो मध्यत्वान्वयी मध्यार्थान्तराशब्दयोगे द्वितीयार्थः । तस्यैव सम्बन्धत्वेन बोधे षष्ठी । हर्यादिपदात्तु न द्वितीया, 'उपपदविभक्ते'रिति न्यायेन तत्र प्रथमाया एव प्राप्तेः । युक्तग्रहणन्तु स्पष्टार्थम् ।

**अधिकृत्येति** । 'विभाषा कृञि'त्यन्तमिति बोध्यम् । महासंज्ञाकरणन्त्वन्वर्थत्वाय । कर्म क्रियां प्रोक्तवन्तः कर्मप्रवचनीयाः । बाहुलकात्कर्तरि भूतेऽनीयः । तेन सम्प्रति क्रियां न द्योतयन्ति, किन्तु क्रियानिरूपितं सम्बन्धविशेषं द्योतयन्ति । क्वचित्सम्बन्धविशेषाऽद्योतकेऽपि वचनसामर्थ्यात्संज्ञा,

**कर्मप्रवचनीययुक्ते द्वितीया** ।२।३।८। एतेन योगे द्वितीया स्यात् । जपमनु प्रावर्षत् । हेतुभूतजपोपलक्षितं वर्षणमित्यर्थः । पराऽपि हेताविति तृतीयाऽनेन बाध्यते, 'लक्षणेत्थंभूते'त्यादिना सिद्धे पुनः संज्ञाविधानसामर्थ्यात् ॥

**तृतीयार्थे** ।१।४।८५। अस्मिन् द्योत्येऽनुरुक्तसंज्ञः स्यात् । नदीमन्ववसिता सेना । नद्या सह संबद्धेत्यर्थः ॥ षिञ् बन्धने । क्तः ॥

---

**इति** । ननु 'जपमनु प्रावर्ष'दित्यत्र वृष्टिं प्रत्यनोर्योगाऽभावेन क्रियायोगाऽभावादेतयोः संज्ञयोः प्राप्त्यभावइति चेत् । अत्राहुः—गम्यमाननिशमनक्रियामपेक्ष्य तयोः प्राप्तिरस्तीति संभावनामात्रेण मूलस्य निर्बाधत्वात् । न चैवं कर्मत्वादेव द्वितीयासिद्धौ किमनया संज्ञयेति वाच्यम् । जपस्य निशमनप्रयुक्तहेतुत्वाख्यसंबन्धविवक्षायां कर्मत्वाऽभावेन तृतीयायां प्राप्तायां तदारम्भात् । न चैवमपि 'जपमनु निशम्य देवः प्रावर्षत्' इत्यर्थावगमाल्ल्यबन्तलोपे पञ्चम्यपवादार्थैवेयं संज्ञाऽस्त्विति वाच्यम् । ल्यबन्तलोपे हि कर्मणि अधिकरणे च पञ्चमी, जपस्य तु कर्मत्वादिना विवक्षाऽभावादिति । **परापि हेताविति तृतीयेत्यादि** । अयं भावः-लक्षणे कर्मप्रवचनीयसंज्ञाया अवकाशः, यो न हेतुः 'वृक्षमनु विद्योतते विद्यु'दिति, हेतुतृतीयाया अवकाशो 'धनेन कुल'मित्यादि । 'जपमनुप्रावर्ष'दित्यत्र तु हेतुभूते लक्षणे परत्वात्तृतीया स्यात्तां बाधित्वा 'अनुर्लक्षणे' इति पुनः संज्ञाविधानसामर्थ्याद्द्वितीयैव भवतीति । न च 'तृतीयार्थे' इति सूत्रेणेह गतार्थता शङ्क्या, तस्य पुरस्तादपवादन्यायेन 'सहयुक्तेऽप्रधाने' इत्येतावन्मात्रबाधकत्वात् । **सामर्थ्यादिति** । अत एव हेतुत्वपर्यन्तमपि शाब्दबोधे विषय इति स्वीक्रियते इति । **नदीमन्विति** । द्वितीयायाः संबन्धोऽर्थः, षष्ठ्यपवादत्वादेतद्द्वितीयायाः । स चेह संबन्धः, साहित्यरूप एवेत्यनुना द्योत्यते ॥

---

यथाधिपरी अनर्थकौ, सुः पूजायामिति च । निपातसञ्ज्ञासमावेशस्त्वस्या अप्युक्तः । **लक्षण इति** । तत्सम्बन्धे लक्ष्यलक्षणभावरूपेऽनुना द्योत्ये इत्यर्थः । **अपवाद इति** । तद्द्योत्यसम्बन्धस्य क्रियान्वयात्तयोः प्राप्तिः, तेन प्रकृतेऽनोर्गतिर्गताविति निघातो न । द्वितीयार्थो लक्ष्यलक्षणभावः सम्बन्धो हेतुश्चेत्यनुना द्योत्यते । लक्षणत्वञ्च-ज्ञानजनकज्ञानविषयत्वं, जपज्ञानेन हि कालविशेषविशिष्टा वृष्टिर्ज्ञाप्यते । जपाऽभिन्नहेतुज्ञानजन्यज्ञानविषयो वर्षणमिति बोध इत्याह–**हेतुभूतेति** । **परापीति** । कर्मप्रवचनीयसंज्ञावकाशो हेतुत्वाऽविवक्षायां, हेतुतृतीयावकाशो–धनेन कुलमिति, प्रकृते च हेतुत्वविवक्षायां परत्वात्तृतीयाप्राप्तिरिति भावः । **पुनः संज्ञेति** । 'लक्षणेत्थंभूते'त्येव सिद्धे पुनःसंज्ञाकरणबोधितपुनर्द्वितीयाविधानसामर्थ्यादित्यर्थः । एतेन संज्ञया विजातीयत्वाद्विभक्तिर्बाधः कर्तुमशक्य इति परास्तम् । स्पष्टश्चेदं भाष्ये ॥ **तृतीयार्थे** ॥ 'तृतीया'शब्देन तन्निमित्तशब्दः

**हीने** ।१।४।८६। हीने द्योत्येऽनुः प्राग्वत् । अनु हरिं सुराः । हरेर्हीना इत्यर्थः ।

**उपोऽधिके च** ।१।४।८७। अधिके हीने च द्योत्ये उपेत्यव्ययं प्राक्संज्ञं स्यात् । अधिके सप्तमी वक्ष्यते । हीने—उप हरिं सुराः ॥

**लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः** ।१।४।९०। एष्वर्थेषु विषयभूतेषु प्रत्यादय उक्तसंज्ञाः स्युः । लक्षणे—वृक्षं प्रति पर्यनु वा विद्योतते विद्युत् । इत्थंभूताख्याने,—भक्तो विष्णुं प्रति पर्यनु वा । भागे—लक्ष्मीर्हरिं प्रति पर्यनु वा । हरेर्भाग इत्यर्थः । वीप्सायां,—वृक्षं वृक्षं प्रति पर्यनु वा सिञ्चति । अत्रो-

---

**हीने** । उत्कृष्टादेव द्वितीया न त्वपकृष्टात्, शक्तिस्वभावादित्याशयेनोदाहरति—**अनु हरिमिति** । **उपोऽधिके च** । चकारेण हीने इत्यनुकृष्यते, तदाह—**अधिके हीने चेति** । अधिके संज्ञाविधानं न द्वितीयार्थमित्याह—**सप्तमी वक्ष्यत इति** । 'यस्मादधिक'मित्यनेनेति भावः । तस्मिन्नपि सूत्रे 'कर्मप्रवचनीययुक्ते' इत्यनुवृत्तेरधिके संज्ञाविधानमावश्यकमेवेति ज्ञेयम् । **उप हरिमिति** । पूर्ववदुत्कृष्टादेव द्वितीया । **लक्षणेत्थं। वृक्षं प्रतीति** । वृक्षसंबन्धि द्योतनमर्थः । संबन्धश्च लक्ष्यलक्षणभाव इति प्रत्यादयो द्योतयन्ति । **भक्तो विष्णुं प्रतीति** । विष्णोर्भक्तेश्च विषयविषयिभावः प्रत्यादिद्योत्यः । भक्तः कंचित् प्रकारं प्राप्त इत्यर्थः । **लक्ष्मीर्हरिं प्रतीति** । लक्ष्मीरूपस्य भागस्य हरिणा सह स्वस्वामिभावः संबन्धः । **वृक्षं वृक्षमिति** । इह वीप्सा द्विर्वचनेनैव द्योत्यते । प्रत्यादिशब्दस्तु क्रियया संबध्यते । कर्मण्येव द्वितीया । कर्मप्रवचनीयसंज्ञया उपसर्गसंज्ञाया बाधात् षत्वं न, एतदर्थमेव 'लक्षणादयो विषयतयोपात्ता' इति व्याख्यातमाकरे । 'पञ्चम्यपाङ्परिभिः' इति तु न भवति, वर्जनार्थेनाऽपेत्यनेन

---

सहयुक्तं इत्यत्रोपात्तोऽनन्तरत्वात्सहशब्दो लक्ष्यते, तदर्थे साहित्ये द्योत्ये इत्यर्थः । साहित्यरूपः सम्बन्धोऽनुद्योत्यो द्वितीयार्थस्तदाह—नद्येति । क्त इति । कर्तरीति भावः ॥ **उपोऽधिके च** ॥ चाद्धीने । **सप्तमीति** । 'यस्मादधिक'मित्यनेनेति भावः । उपखार्यान्द्रोण इति यथा । खार्यपेक्षाधिकत्ववान् द्रोण इत्यर्थः । तेनोभयमस्तीति फलति । इत्थंभूतः—कश्चित्प्रकारं प्राप्तः, स आख्यायतेऽनेनेति **इत्थंभूताख्यानं**—प्रकारविशेषनिरूपकम् । भागशब्देनांशआद्यजन्तेन तत्स्वामी उच्यते । वीप्साया द्विर्वचनविशिष्टवृक्षशब्दबोध्यत्वादाह—**विषयभूतेष्विति** । **वृक्षं प्रतीति** । वृक्षप्रकाशेन विद्युद्विद्योतनदेशज्ञानाद्वृक्षो लक्षणम् । **वृक्षं वृक्षमिति** । वृक्षस्य व्यापकतासम्बन्धेनान्वयो यद्यपि द्विर्वचनबलादेव तथापि प्रत्यादिसत्वे सोऽपि तन्निर्णायक इति सम्बन्धपरिच्छेदकत्वं बोध्यम् । वृक्षादीनां सेचने कर्मत्वेऽपि तत्त्वेनाऽविवक्षायामनेन द्वितीया । किं च यद्यत्र कर्मणि द्वितीया

---

१. स्वाधिकरणदेशवृत्तित्वरूपसम्बन्धस्य परिच्छेदकोऽपि भवति ।

पसर्गत्वाऽभावान्न षत्वम् । एपु किम् ? । परिपिञ्चति ॥

**अभिरभागे** ।१।४।९१। भागवर्जे लक्षणादावभिरुक्तसंज्ञः स्यात् । हरिमभि वर्तते । भक्तो हरिमभि । देवं देवमभि सिञ्चति । अभागे किम् ? । यदत्र ममाभिष्यात्तद्दीयताम् ॥

**अधिपरी अनर्थकौ** ।१।४।९३। उक्तसंज्ञौ स्तः । कुतोऽध्यागच्छति । कुतः पर्यागच्छति । गतिसंज्ञाबाधात् 'गतिर्गता'विति निघातो न ॥

**सुः पूजायाम्** ।१।४।९४। [ पूजायां सुरुक्त सञ्ज्ञः स्यात् ॥ ] सु सिक्तम् । सु स्तुतम् । अनुपसर्गत्वान्न षः । पूजायां किम् ? । सुषिक्तं किं तवाऽत्र । क्षेपोऽयम् ॥

---

साहचर्यात् । **परिषिञ्चतीति** । सर्वतः सिञ्चतीत्यर्थः । 'उपसर्गात्सुनोती'ति षत्वम् । **समाऽभिष्यादिति** । मम भागः स्यादित्यर्थः । प्राञ्चस्तु-मामभिष्यादिति प्रत्युदाहरन्ति, तत्र मां प्राप्नुयादित्यर्थः । उपसर्गवशेनाऽस्तेः सकर्मकत्वान्मामिति द्वितीया । अत्र च मम भाग इत्यर्थतः पर्यवसानात् 'अभागे' इति कर्मप्रवचनीयत्वे निषिद्धे 'उपसर्गप्रादुर्भ्या'मिति षत्वम् । **कुतोऽध्यागच्छतीति** । इह प्रजयति, पराभवति, 'वृक्षं प्रति विद्योतते' इत्यत्र प्रादेर्विशेषद्योतकत्ववदधिपर्योरिह विशेषद्योतकत्वाऽभावादानर्थक्यं, धात्वर्थमात्रद्योतकत्वेन त्वर्थवत्ताऽस्त्येवेति बोध्यम् । 'गतिर्गतौ' इत्यत्र पदादित्यधिक्रियत इति पदात्परत्वसंपत्तये 'कुत' इत्युक्तम् । **अतिरतिक्रमणे च** । चकारेण 'पूजाया'मित्यनुकृष्यत इत्याह–**पूजायां चेति** । अतिक्रमणमुचितादधिकस्यानु-

---

स्यात्तदा प्रतिना सामर्थ्याऽभावात्प्रतिवृक्षमिति समासानापत्तिः । किं च प्रत्यादेः क्रियाविशेषकत्वेऽन्वर्थतया कर्मप्रवचनीयसंज्ञाया एवाऽनापत्तिः । अत एव भाष्ये 'किमर्थं पुनरिदमुच्यते, न चोपसर्गसंज्ञाबाधनार्थं, क्रियाऽयोगाभावा'दित्युक्त्वा 'द्वितीयार्थ'मिति सिद्धान्तितम् । अत एव 'प्रत्यर्थं शब्दनिवेश'-इत्यादावर्थस्य निवेशनक्रियानिरूपिताधिकरणत्वेप्यर्थमर्थं प्रतीति विग्रहो भाष्ये दर्शितः, वृत्तिविषये प्रतिरेव वीप्साया अपि द्योतक इत्यन्यदित्यास्ताम् । फलान्तरमप्याह–**अत्रेति** । **यदत्रेति** । यद्वस्तु मम भागः स्यादित्यर्थः । **कुतोधीति** । 'कुत' इत्यपादाने पञ्चमी । द्वितीया तु न, कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वरूपस्य कर्मप्रवचनीययुक्तत्वस्याऽभावात् । **गतिसंज्ञाबाधादिति** । धात्वर्थमात्रद्योतकत्वेन क्रियायोगाद्गतित्वं प्राप्तं, विशेषद्योतकत्वाऽभावात्त्वनर्थकत्वव्यवहारोऽपीति भावः । **सुसिक्तमिति** । सेकगतपूज्यत्वद्योतकः सुः । क्रियापूज्यत्वकृते तत्तत्क्रियाकर्तुः पूज्यत्वे-गम्ये एवैषा संज्ञा । अत एव 'सुषिक्तं किं तवे'त्यत्र न । अतिक्रमणमुचितादधिकानुष्ठानं, चात्पूजा-

---

१. कर्मत्वरूपमित्यर्थः ।

**अतिरतिक्रमणे च** ।१।४।९५। अतिक्रमणे पूजायां चाऽतिः कर्मप्रवचनीय-संज्ञः स्यात् । अति देवान् कृष्णः ॥

**अपिः पदार्थसंभावनाऽन्ववसर्गगर्हासमुच्चयेषु** ।१।४।९६। एषु द्योत्ये-ष्वपिरुक्तसंज्ञः स्यात् । सर्पिषोऽपि स्यात् । अनुपसर्गत्वान्न षः । संभावनायां लिङ् । तस्या एव विषयभूते भवने कर्तृदौर्लभ्यप्रयुक्तं दौर्लभ्यं द्योतयन्नपिशब्दः 'स्या'दित्यनेन संबध्यते । 'सर्पिष' इति षष्ठीत्वपिशब्दबलेन गम्यमानस्य बिन्दो-रवयवावयविभावसंबन्धे । इयमेव ह्यपिशब्दस्य पदार्थद्योतकता नाम । द्वितीया तु

---

ष्टानम् । अर्थद्वयेऽप्येकमेवोदाहरति—**अति देवान् कृष्ण इति** । अन्ये तूदाहरन्ति अतिसिक्तम्, अतिस्तुतमिति । बहुतरं समीचीनं वा सिक्तं स्तुतं चेत्यर्थः । बहुतरार्थे अतिक्रमणं, समीचीने पूजेति विवेकः । **अपिः पदार्थ । सर्पिषोऽपि स्यादिति** । सर्पिर्बिन्दुः स्यादित्यर्थः । अपेः कर्मप्रवचनीयत्वे फलमाह—**अनुपसर्गत्वान्न ष इति** । उपसर्गसंज्ञाऽभावात् 'उपसर्गप्रादुर्भ्यामस्ति'रितीह न प्रवर्तत इति भावः ।

**संभावनायामिति** । संभाव्यत इति संभावना । 'ण्यासश्रन्थो युच्' । भवन-क्रिया संभावनायां भवनस्य विषयत्वादाह—**तस्या एवेति** । संभावनाया एवेत्यर्थः । **कर्तृदौर्लभ्येत्यादि** । कर्तृदौर्लभ्याद्भवनक्रियाया दौर्लभ्यं, द्योतयन्नपिशब्दो भवन-क्रियावाचिना 'स्या'दित्यनेन संबध्यत इत्यर्थः । **अवयवावयविभावेति** । सर्पिरवयवी, बिन्दुरवयवः । **इयमेवेति** । बिन्दुदौर्लभ्यप्रयुक्तदौर्लभ्यद्योतकतैवेत्यर्थः ।

---

यामित्यनुकृष्यते । **अतिदेवानिति** । देवेभ्योऽधिको देवपूज्य इति वाऽर्थः । द्वितीये 'कुगती'ति-समासस्याऽभावस्तु, अनभिधानात् । आद्ये तु प्राप्तिरेव न, 'स्वती पूजायामेवे'त्युक्तेः ॥ **अपिः पदार्थ** ॥ **पदस्याऽ**प्रयुज्यमानपदान्तरस्यार्थः **पदार्थः** । **सर्पिषोपीति** । अत्र 'बिन्दु'रित्यादेः पदस्यार्थोऽपिद्योत्यः । तदुक्तं वृत्तिकृता—'मात्रा बिन्दुः स्तोकमित्यस्यार्थेऽपिर्वर्तत'इति । **सम्भा-वनायां लिङिति** । 'उपसंवादाशङ्कयोश्चे'ति सूत्रभाष्ये पठितेनोपपसंवादाशङ्कयोर्लिङित्यनेन । तच्च लोकसाधारणमित्यपि तत्रैव भाष्ये स्पष्टम् । तत्राऽऽशङ्कोत्प्रेक्षा । **सम्भावनाप्युत्कोटिका-ऽऽशङ्कैवेति** भावः । कर्मप्रवचनीयत्वात्तद्द्योत्यसम्बन्धमाह—**तस्या एवेति** । सम्भावनाया एवेत्यर्थः । **कर्तृदौर्लभ्यमिति**-षष्ठीतत्पुरुषः । कर्तृपदं प्रकृताभिप्रायं, 'सर्पिषोऽपि पिबे'दित्यादौ कर्मदौर्ल-भ्येत्यादि बोद्धयम् । तत्र बिन्दोस्तद्दौर्लभ्यप्रयुक्तदौर्लभ्यसम्बन्धस्य च द्योतकोऽपिः । **सम्बध्यत इति** । 'स्या'त्पदब्रह्म्यक्रियायामपिद्योत्यबिन्दोः कर्तृतया द्योत्योक्तसम्बन्धेन चाऽन्वयादिति भावः । तदाह—**अपिशब्दबलेनेत्यादि** । एवञ्च सर्पिरवयवबिन्दुदौर्लभ्यप्रयुक्तदौर्लभ्यवती तत्कर्तृका सम्भावना-विषया सत्तेति बोधः । विशिष्टसत्तायाः सम्भावनाविषयत्वबोधे दौर्लभ्यस्यापि सम्भावनाविषयत्वमनुभव-

श्यना निर्देशात्तानादिकयोगे न। न त्वां तृणं मन्ये। अप्राणिष्वित्यपनीय-॥ ॐनौकाकान्नशुकशृगालवर्ज्येष्विति वाच्यम्॥ तेन न त्वां नावमन्नं वा मन्ये इत्यत्राऽप्राणित्वेऽपि चतुर्थी न। 'न त्वां शुने श्वानं वा मन्ये' इत्यत्र प्राणित्वेऽपि भवत्येव॥ **गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि** ।२।३।१२। अध्वभिन्ने गत्यर्थानां कर्मणि एते स्तश्चेष्टायाम्। ग्रामं ग्रामाय वा गच्छति। चेष्टायां

---

ह्याह-**तस्मै प्रभवतीति**। **न त्वां तृणमित्यादि**। ननु तृणादिवत् युष्मच्छब्दादपि पक्षे चतुर्थ्या भाव्यम्। मैवम्, 'अनादरे' इत्यस्य कर्मविशेषणत्वेन अनादरद्योतकं यत् कर्म तत्र चतुर्थीति व्याख्यानात्। तृणं ह्यत्रानादरद्योतकं न तु युष्मदर्थः॥ स्यादेतत्—त्वां तृणं मन्ये तृणाय वेत्युदाह्रियतां, किमनेन नञः प्रयोगेण ?। अत्राहुः-'प्रकृष्य कुत्सितग्रहणं कर्तव्यम्' इति वार्तिकमस्ति, तेन यद्वाचिनश्चतुर्थी विधीयते ततो निकृष्टत्वेन यदि कुत्सा प्रतिपाद्यते, तदा चतुर्थी भवति न तु साम्यविवक्षायाम्। तादृशी च कुत्साप्रतीतिर्नञः प्रयोगे झटित्येव भवतीति 'न त्वा'मित्युक्तमिति। **श्यना निर्देशादिति**। न च मन्य इति यका निर्देशः किं न स्यादिति वाच्यम्, अनभिहित इत्यधिकारात्। न हि यका योगे अनभिहितं कर्म संभवति। श्यन्नपि दैवादिकधातूपलक्षणमात्रं, न तु स्वयं विवक्षितः। तेन 'तृणाय मत्वा रघुनन्दनोऽपि बाणेन रक्षः प्रधनान्निरास्थत्' इति भट्टिप्रयोगः संगच्छते। **नौकाकान्नेति**। व्यवस्थितविभाषा विज्ञातव्येति भावः। **गत्यर्थकर्मणि**। गत्यर्थेति किम्। ओदनं पचति। कर्मणीति किम्। अश्वेन व्रजति। 'अनध्वनि' इत्यत्राध्वनीति न स्वरूपग्रहणम्। तथा हि सति 'अनध्वनः' इत्येवाऽवक्ष्यत्। किं त्वर्थग्रहणं, सप्तमीनिर्देशात्, कर्मणीत्यनेन सामानाधिकरण्यात्। अर्थस्यैव हि कर्मत्वं संभवति

---

मन्यकर्मविशेषणं, तद्द्योतकं यत्कर्मेत्यर्थः। तेन युष्मच्छब्दाच्चतुर्थी न। तिरस्कारश्च व्याख्यानादपकृष्टनिरूपितोपमेयत्वस्याप्यभावरूप उपमेयेऽत्र गृह्यते, न त्वपकृष्टसादृश्यरूपः, तत्प्रतीतिश्च नञ्समभिव्याहार एव। तृणतुल्यमपि न मन्ये इत्यर्थः। 'तृणाय मत्वा रघुनन्दनोपी'त्यादौ नञोऽध्याहारः। तदाह-**न त्वां तृणमिति**। कर्माऽत्र चतुर्थ्यर्थः। **श्यनेति**। ननु यका, व्याख्यानादिति भावः। श्यंस्तूपलक्षणम्। तेन लिडादावपि भवति। तद्ध्वनयन्नाह-**तानादिकयोगे नेति**। 'नौकाके'ति भाष्ये 'येषु प्राणिषु नेष्यते ते नावादयो भविष्यन्ती'ति येष्विति बहुवचनेन, वृत्त्युदाहरणबलेन चैष्वेवाऽनिष्टनिर्णय इति भावः। **गत्यर्थकर्म**। कर्माऽत्रापि चतुर्थ्यर्थः। गत्यर्थेति किम् ?, ओदनं पचति। कर्मणीति किम् ? अश्वेन गच्छति। **चेष्टायां किमिति**। धात्वर्थस्य क्रियारूपत्वा-

किम् ?। मनसा हरिं व्रजति । अनध्वनीति किम् ?। पन्थानं गच्छति । गन्त्राधिष्ठितेऽध्वन्येवायं निषेधः । यदा तूत्पथात्पन्था एवाक्रमितुमिष्यते तदा चतुर्थी भवत्येव । उत्पथेन पथे गच्छति ॥ इति चतुर्थी ॥

**ध्रुवमपायेऽपादानम् ।१।४।२४।** अपायो विश्लेषस्तस्मिन्साध्ये ध्रुवमवधि-

---

न शब्दस्वरूपस्य, तेनाऽध्ववाचिनां सर्वेषामेव निषेधः । तथा च वार्तिकम्—**अध्वन्यर्थग्रहणमिति** । **गन्त्राधिष्ठित एवेति** । 'आस्थितप्रतिषेधो वक्तव्यः' इति वार्तिकादिति भावः । आस्थितः—संप्राप्तः । पन्थानं गच्छतीत्यत्र हि पन्थाः प्राप्त एवेति न पक्षे चतुर्थी । यदा त्वप्राप्तत्वेन विवक्षा तदा पक्षे भवत्येव सा । इह अनध्वनीत्यपनीय 'असंप्राप्ते' इति पूर्यते । तेन 'स्त्रियं गच्छती'त्यत्र स्त्री प्राप्तैवेति न चतुर्थी । अत्र व्याचक्षते—'अजां नयति ग्राम'मित्यत्र तु न भवत्येव चतुर्थी, अगत्यर्थत्वात् । आक्षेपादिना ह्यत्र प्रतीयते गतिर्न त्वसौ नयतेरर्थः, प्रापणवाचित्वादिति । 'गत्यर्थकर्मणि चतुर्थी वा' इति वक्तव्ये द्वितीयाग्रहणमपवादविषयेऽपि द्वितीया यथा स्यादित्येतदर्थं, तेन 'ग्रामं गन्ते'त्यत्र कृद्योगलक्षणा षष्ठी न भवतीति वृत्तिकृतोक्तम् ।

इति चतुर्थी ।

**ध्रुवमपाये** । 'ध्रु गतिस्थैर्ययोः' अस्मात् पचाद्यचि कुटादित्वान्ङित्त्वे उवङ् । 'ध्रुव स्थैर्ये' इति केचित् । तत्र 'इगुपध—' इति कः । ध्रुवं स्थिरम् । अपायशब्देन विवक्षितमाह—**विश्लेष इति** । एवं च प्रकृतधात्वर्थानाश्रयत्वे सति तज्जन्य-

---

त्प्रश्नः । शरीरक्रियाया एव ग्रहणमित्युत्तरम् । **पन्थानमिति** । 'अध्व'शब्दोऽर्थपरो, व्याख्यानादिति भावः । **अधिष्ठित इति** । शब्दप्रयोगसमकालिकगन्तृव्यापारजन्यफलाश्रय इत्यर्थः । 'अध्व'पदेन गन्तृव्याप्तोऽर्थ उच्यते, तेन गन्तृयुक्तस्त्रियां 'स्त्रियं गच्छती'त्यादौ न, स्पष्टञ्चेदं भाष्ये । **उत्पथादिति** । उत्पथं सन्त्यज्येत्यर्थः । **इष्यत इति** । न त्वाक्रान्त इत्यर्थः । **उत्पथेनेति** । 'गन्तुमशक्त' इति शेषः । इति चतुर्थी ।

**ध्रुवमपायेऽपा** । ध्रुवं—स्थिरम् । अपायो विभागजनको व्यापारः । तदनाश्रयमिति यावत् । विभागश्च न वास्तवसम्बन्धपूर्वको वास्तव एव, किं तु बुद्धिपरिकल्पितसम्बन्धपूर्वको बुद्धिकल्पितोऽपि । 'माथुराः पाटलिपुत्रकेभ्य आढ्यतरा' इत्यादौ बुद्धिकल्पिताऽपायाश्रयेणैव भाष्ये पञ्चमीसाधनात् । कर्तृवारणाय—**ध्रुवमिति** । अन्यथा कर्तृसंज्ञाया इयमपवादः स्यात् । अपायविषये यत् कारकं तद्रूपक्रियाजनकं तदपादानमित्यर्थसम्भवात् । कर्तृसंज्ञा तु पचत्यादियोगे चरितार्था । **हरिरप्याह**—**'अपाये यदुदासीनञ्चलं वा यदि वाऽचलम् । ध्रुवमेवाऽतदावेशात्तदपादानमुच्यते'** इति । स्पष्टञ्चेदं कैयटादौ । **भाष्यानुसारिणस्तु**—एवं हि 'वस्तादश्वात्पतितः' 'धावतः पतित' इत्यादौ ध्रुव-

भूतं कारकमपादानं स्यात् ॥ **अपादाने पञ्चमी** ।२।३।२८। ग्रामादायाति। धावतोऽश्वात्पतति । कारकं किम् ?। वृक्षस्य पर्णं पतति ॥ ❀ **जुगुप्साविराम-**

---

विभागाश्रयो ध्रुवमिति फलितम्। तच्चाऽर्थादवधिरेवेत्याह–**अवधिभूतमिति। धावत इति।** इह धावनक्रियाविशिष्टस्याऽप्यश्वस्य प्रकृतपतनधातूपात्तक्रियां प्रत्यवधित्वं न विरुध्यते, 'परस्परस्मान्मेषावपसरतः' इत्यत्र तु सृधातुना गतिद्वयस्याप्युपादाना-देकनिष्ठां गतिं प्रति इतरस्याप्यपादानत्वं न विरुध्यते । उक्तं च हरिणा–'अपाये यदु-दासीनं चलं वाऽचलम् । ध्रुवमेवाऽतदावेशात्तदपादानमुच्यते । पततो ध्रुव एवाश्वो यस्मादश्वात्पतत्यसौ । तस्याप्यश्वस्य पतने कुडयादि ध्रुवमिष्यते । मेषान्तरक्रियापेक्ष-मवधित्वं पृथक् पृथक् । मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक् पृथक्' इति । 'पर्वता-

---

त्वाऽभावादपादानत्वं न स्यादित्याशङ्क्या'ऽध्रौव्यस्याऽविवक्षितत्वमत्र । यतः सतोऽप्यविवक्षा भवती'ति समाहितं भाष्ये, तदसङ्गतं स्यात् । त्वदुक्ताऽध्रुवत्वस्य पतधात्वर्थव्यापाराश्रयत्वस्यात्राऽसत्त्वेन 'सतोऽध्रौव्यस्याऽविवक्षे'त्यस्याऽसङ्गतेः। सिद्धान्ते ऽपि त्वदुक्तध्रुवपदार्थकथनमेवोचितमिति तदस-ङ्गतिश्च । लोकसिद्धाऽतिरिक्तार्थे ध्रुवपदस्य शक्तिकल्पने गौरवञ्च । **अतदावेशा**दित्यस्य हरिकारि-कायां–तदावेशाऽविवक्षणादित्यर्थः। तस्मा**दपाये** गतिविशेषे सति **यद्ध्रुवम**वधिभावोपगमाश्रयत्वे सति तदतिरिक्तस्यावधित्वोपयोगिव्यापारस्यानाश्रयं, **तदपादान**मिति सूत्रार्थः । त्रासादेरवधित्वोपयो-गित्वाश्रयणेन शङ्का, 'वृक्षात्पर्ण'मित्यादौ तस्याऽसत्त्वान्न तदुपयोगित्वन्तस्य, प्रकृते विद्यमानस्यापि तस्याऽविवक्षितत्वान्न तदुपयोगित्वन्तस्येत्युत्तरम्। 'अपाये' इति तु 'वृक्षस्य पर्णं पतती'त्यादौ वस्तुतस्तस्य पर्णद्वारा पातजनकत्वात्प्राप्ताऽपादानत्ववारणाय। एवञ्चाऽपायेइति 'कारके' इत्यस्य क्रिया-जनकत्वेन विवक्षितइत्यर्थे तात्पर्यग्राहकं बोद्धव्यम्। ध्रुवग्रहणन्तु कारकान्तराणामिवाऽपादानस्याऽ-वधिभावोपगमातिरिक्तव्यापाराऽभावबोधनायेत्याहुः । अपादानत्वशक्तिश्च प्रकृतधात्वर्थविभागाश्रयत्व-समानाधिकरणेत्यपादानसमभिव्याहारे विभागोऽपि धात्वर्थ इति बोद्धव्यम्। एवञ्च 'वृक्षात्पतती'-त्यादौ तदपादानकविभागपूर्वकः संयोगः पर्णवृत्तिरिति बोधः। 'वृक्षाद्भूमिं पतती'त्यादौ वृक्षाऽपादानक-विभागपूर्वकसंयोगानुकूलो व्यापार इति बोधः। 'परस्परस्मान्मेषावपसरत' इत्यादौ मेषपदोपा-त्तयोरेव क्रियाश्रयत्वात्कर्तृत्वं, परस्परपदोपात्तयोरेव विभागाश्रयत्वादपादानत्वं, मेषपदोपात्ते तदविव-क्षणात्, प्रयोगानुसारित्वाद्विवक्षायाः। विभागपूर्वकं पृष्ठतो गमनमपसरणम्। 'आत्मानमात्मने'त्यादा-वन्तःकरणाद्युपाधिकृतभेदवच्छब्दरूपोपाधिकृतभेदाऽग्रहणे मानाऽभावात्। शब्दालिङ्गितार्थभानस्यैव सत्त्वाच्चेत्यन्यत्र विस्तरः। **यत्त्वपसरत इति** सृधातुना गतिद्वयस्याप्युपादानादेकनिष्ठाङ्गतिम्प्रति इतरस्याऽपादानत्वमविरुद्धमिति, तन्न। वस्तुतस्तन्निष्ठव्यापारयोर्भेदे ऽपि सृधातुना निवृत्तभेदस्यैवापा-यस्योपादानादुभयोरपि तत्क्रियाश्रयत्वेन परत्वात्कर्तृत्वापत्तेः। अत एवैकशेषसूत्रे भाष्ये उक्तं 'न वै तिङन्तान्येकशेषारम्भं प्रयोजयन्ति, क्रियाया एकत्वा'दिति। 'धनुषा विद्ध्यती'त्यत्र निःसरच्छर-जन्यवेधनार्थत्वा[illegible] प्राप्तौ परत्वात्करणत्वं बोद्धव्यम्। **ग्रामादायातीति।**

**प्रमादार्थानामुपसंख्यानम्** । पापाज्जुगुप्सते । विरमति । धर्मात्प्रमाद्यति ॥

**भीत्रार्थानां भयहेतुः** ।१।४।२५। भयार्थानां त्राणार्थानां च प्रयोगे भयहेतुरपा-

---

त्पततोऽश्वात्पतती'त्यत्र तु पर्वतावधिकपतनाश्रयो योऽश्वस्तदवधिकं देवदत्तादिनिष्ठं पतनमर्थः, पञ्चम्यर्थोऽत्रधौ अभेदेन संसर्गेण प्रकृत्यर्थः पर्वतादिर्विशेषणम् ,प्रत्ययार्थस्तु पतनक्रियायाम् , स चाऽवधिरूपो धर्मी, न तु धर्ममात्रम् , 'उद्धृतौदना स्थाली'त्यत्रौ-दनकर्मकोद्धरणावधिभूता स्थालीति सामानाधिकरण्यदर्शनात् । एतच्च मनोरमायां स्थितम् । नन्विह ध्रुवग्रहणं किमर्थम् ? । न च 'ग्रामादागच्छति शकटेने'त्यत्र शकटेऽतिव्याप्तिवारणाय तदिति वाच्यम् । परत्वात्तत्र करणसंज्ञाप्रवृत्तेः । न च संज्ञिनिर्देशार्थं ध्रुवग्रहणम्, कारकाऽधिकारात् कारकमिति लभ्यत इति ध्रुवग्रहणं चिन्त्यप्रयोजनमिति चेत् । अत्र वदन्ति—कारकत्वरूपव्यापकधर्ममात्रविवक्षायां साधकतमत्वेन विवक्षाऽभावदशायां करणसंज्ञाप्रसङ्गेन शकटस्याऽपादानत्वं स्यात्तन्मा भूदित्येतदर्थं ध्रुवग्रहणमिति । **जुगुप्सेति** । जुगुप्सा—निन्दा, विरामो विरतिः, प्रमादोऽनवधानता, एतदर्थकानां धातूनां कारकमपादानसंज्ञं स्यादित्यर्थः । संयोगपूर्वको विश्लेषो विभागः, स चेह नास्ति, बुद्धिकृतस्तु गौणत्वान्नेह गृह्यत इति सूत्रेणाऽप्राप्तौ वार्तिकारम्भः । भाष्यकारस्तु—कारकप्रकरणे गौणमुख्यन्यायो नाश्रीयत इति तमब्ग्रहणेन ज्ञापितत्वाज्जुगुप्सादीनां तत्पूर्वकनिवृत्तिवाचित्वमाश्रित्येदं वार्तिकं, 'भीत्रार्थानाम्–' इत्यादि सूत्राणि च प्रत्याचख्यौ । पूर्वं हि बुद्ध्याऽपायं संप्राप्य ततो दोषदर्शनान्निवर्तेत इत्यस्त्येवाऽत्र बुद्धिकृतोऽपायः । **भीत्रा** । 'कस्य बिभ्यति देवाश्च

---

आयातेर्विभागपूर्वकोत्तरदेशसंयोगानुकूलो व्यापारोऽर्थः । 'वृक्षन्त्यजती'त्यादौ व्यापारव्यधिकरण-विभागस्यैव धात्वर्थत्वेन कर्मसंज्ञयाऽपादानत्वस्य बाधः । स्पन्देस्तु न विभागो ऽर्थ इति 'वृक्षे स्पन्दत' इत्येव । चलतेस्त्वासनाच्चलित इति प्रयोगादस्त्येव विभागार्थत्वं । सार्थाद्धीयत इत्यत्र सार्थस्य धात्वर्थ-प्रधानव्यापाराश्रयत्वेऽप्यपादाने चाऽहीयरुहोरिति ज्ञापकात्कर्मप्रत्ययान्तहाधातुप्रयोगेऽपादानत्वं, कर्मसंज्ञायाश्च कर्तृपदं स्वतन्त्रोपलक्षणमिति कर्मणि लकारः । सार्थेन त्यज्यते देवदत्त इत्यर्थः ।

**धावत इति** । क्रियाविशिष्टस्याप्यश्वस्य प्रकृतधातूपात्तगत्यनावेशाद्धावनस्याऽविवक्षणाद्वा ध्रुवत्वं बोद्धव्यम् । **जुगुप्सेत्यादि** । जुगुप्सादीनां यद्विषयकत्वेन विवक्षा तदपादानं, तस्यैव विषयस्य क्रियाजनकत्वरूपकारकत्वेनाऽविवक्षायां, सम्बन्धित्वेन च विवक्षायां 'पापस्य जुगुप्सते' इति षष्ठी भवत्येव सत्यभिधाने । एवमुत्तरसूत्रेष्वपि बोद्धव्यम् । एषां धातूनां स्वार्थपूर्वकबौद्धविश्लेषजनक-निवृत्तिलक्षणया, सूत्रेणैव सिद्धयेदं वार्तिकमुत्तरसूत्राणि च प्रत्याख्येयानीति स्पष्टं भाष्ये । भयं–भीः, त्राणं त्राः । तदाह—**भयार्थानामिति** । हेतुतृतीयाऽप्यवादोऽयम् । **अरण्ये इति** । भयाद्यर्थानां

दानं स्यात्। चोराद्बिभेति। चोरात्त्रायते। भयहेतुः किम्?। अरण्ये बिभेति त्रायत इति वा॥ **पराजेरसोढः**।१।४।२६। पराजेः प्रयोगेऽसह्योऽर्थोऽपादानं स्यात्। अध्ययनात्पराजयते। ग्लायतीत्यर्थः। असोढः किम्?। शत्रून्पराजयते। अभिभवतीत्यर्थः॥ **वारणार्थानामीप्सितः**।१।४।२७। प्रवृत्तिविघातो वारणम्। वारणार्थानां धातूनां प्रयोगे ईप्सितोऽर्थोऽपादानं स्यात्। यवेभ्यो गां वारयति। ईप्सितः

जातरोषस्य संयुगे' इति रामायणे तु 'कस्ये'त्यस्य संयुगेनान्वयान्नास्ति भयहेतुत्वमिति षष्ठीप्रयोगः सङ्गच्छत एव। न चैवं संयुगस्याऽपादानत्वापत्तिरिति वाच्यम्। परया अधिकरणसंज्ञया अपादानसंज्ञा[या]बाधात्। अधिकरणत्वाऽविवक्षायां तु इष्टापत्तेः॥ भीत्रार्थेति किम्। व्याघ्रं पश्यति। न च कर्मत्वेन बाधः शङ्क्यः, कर्मत्वाऽविक्षायां शेषषष्ठीं बाधित्वा पञ्चमीप्रसङ्गादित्याहुः। भयहेतुग्रहणं चिन्त्यप्रयोजनम्। अरण्ये बिभेतीत्यत्र परत्वादधिकरणसंज्ञाप्रवृत्तेरिति चेत्। अत्र वदन्ति—भयहेतुग्रहणाऽभावे कारकशेषत्वविवक्षायामतिप्रसङ्गः स्यात्। तथा च 'अरण्यस्य चोराद्बिभेती'ति प्रयोगो न स्यादिति। **पराजेः**। **अध्ययनादिति**। अध्ययनसंबन्धिनी ग्लानिरित्यर्थः। कारकशेषत्वेन षष्ठ्यां प्राप्तायामिदम्॥ **पराजयत इति**। 'विपराभ्यां जेः' इति तङ्। 'असोढ' इति क्तार्थो भूतकालो न विवक्षितः। तेनाऽध्ययनात् पराजेष्यत इत्यादि सिद्धम्। नन्वसोढग्रहणं व्यर्थं, शत्रून् पराजयत इत्यत्र परत्वात् कर्मसंज्ञासिद्धेः। अत्रापि वदन्ति—कर्मत्वाऽविवक्षायां शेषषष्ठीं बाधित्वा पञ्चमी स्यात्, सा मा भूदिति कर्तव्यमेवाऽसोढग्रहणम्। **वारणार्था**। **यवेभ्य इति**। यवसंयोगात्प्रागेव गां निवारयतीति 'ध्रुवमपाये—' इत्यनेनाऽसिद्धावयमारम्भः। बुद्धिपरिकल्पिताऽपायमङ्गीकुर्वतो भाष्यकारस्य मते तु वैयर्थ्यमेतस्य स्फुटमेव। **गां वारयतीति**। 'वृञ् वरणे' चुरादिः। 'गा'मित्यत्र ईप्सितत्वप्रयुक्ताऽपादानसंज्ञा न भवति। ईप्सिततमत्वविवक्षायां परत्वात्कर्मसंज्ञाप्रवृत्तेः। नन्वेवमीप्सितग्रहणमेव व्यर्थं, क्षेत्रे वारयतीत्यत्र परत्वादधिकरणसंज्ञाप्रवृत्तेः। सत्यम्। अधिकरणस्य शेषत्वविवक्षायामिदं प्रत्युदाहरणमिति पूर्वोक्तरीत्या पदप्रयोजनस्येहापि कल्पयितुं शक्यत्वात्॥

योगे कारकमपादानमित्यर्थेऽविशेषात्सर्वसंज्ञापवादः स्यादिति भावः। **पराजे**। असोढो ग्लानिविषयः। एवञ्च पराजेरकर्मकत्वे उदाहरणत्वम्। तदाह—ग्लायतीत्यर्थ इति। **अभिभवतीति**। तिरस्कारानुकूलो व्यापारो धात्वर्थ इति भावः। **प्रवृत्तिविघात इति**। भक्षणसंयोगादिजनकव्यापाराऽभावानुकूलो व्यापार इत्यर्थः। **ईप्सित इति**। वारणार्थधात्वर्थफलाश्रय इत्यर्थः। उदाहरणे च तद्धात्वर्थव्यापारजन्यसंयोगादिरूपफलाश्रयत्वाद्यवानामपादानत्वम्। 'ईप्सित'इत्यनेन प्रधानाऽप्र-

किम् ?। यवेभ्यो गां वारयति क्षेत्रे ॥ **अन्तर्धौ येनाऽदर्शनमिच्छति** ।१।४।२८। व्यवधाने सति यत्कर्तृकस्यात्मनो दर्शनस्याऽभावमिच्छति तदपादानं स्यात्। मातुर्निलीयते कृष्णः। अन्तर्धौ किम् ?। चौरान्न दिदृक्षते। इच्छतिग्रहणं किम् ?। अदर्शनेच्छायां सत्यां सत्यपि दर्शने यथा स्यात् ॥ **आख्यातोपयोगे** ।१।४।२९। नियमपूर्वकविद्यास्वीकारे वक्ता प्राक्संज्ञः स्यात्। उपाध्यायादधीते। उपयोगे किम् ?। नटस्य गाथां शृणोति ॥ **जनिकर्तुः प्रकृतिः** ।१।४।३०। जायमानस्य

---

**अन्तर्धौ**। येनेति कर्तरि तृतीया। न च कृद्योगषष्ठीप्रसङ्गः,'उभयप्राप्तौ कर्मण्येवे'ति नियमात्। अत्र ह्यात्मन इति गम्यमानत्वादस्त्युभयोः प्राप्तिः। **निलीयत इति**। 'लीङ् श्लेषणे' दैवादिकः। नन्वन्तर्धाविति व्यर्थं, 'न दिदृक्षते चोरा'नित्यत्र परत्वात्कर्मसंज्ञासिद्धेः। अत्राहुः—चोराः आत्मानं मा द्राक्षुरिति बुद्ध्या चोरान्न दिदृक्षत इत्ययमर्थोऽत्र विवक्षितस्तत्र कर्मणः शेषत्वविवक्षायामिदं पूर्ववत्प्रत्युदाहरणमिति ॥ शब्दकौस्तुभे तु 'अन्तर्धौ' इत्येतच्चिन्त्यप्रयोजनमिति स्थितम् ॥

**आख्यातोप। नियमपूर्वकेति**। तत्रैवोपयोगशब्दो रूढ इति भावः। आख्यातेत्येतत्तृजन्तमित्याह—**वक्तेति। उपाध्यायादिति**। उपेत्य अस्मादधीयत इति उपाध्यायः, 'इङश्च' इति घञ्। अध्ययनं तु गुरूच्चारणोत्तरोच्चारणं नियमपूर्वकम्। **नटस्येति**। गाथाकर्मकं नटसंबन्धि श्रवणमित्यर्थः। नटस्य गाथाऽन्वये तु कारकत्वाऽभावादेवाऽप्राप्तेरुपयोगग्रहणं समर्थितं न स्यात्। **जनिकर्तुः**। जननं जनि-

---

धानान्यतरव्यापाराश्रयमात्रस्याक्षेपः। कर्मलक्षणे तु तमब्ग्रहणात्प्रकृतधात्वर्थप्रधानभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयस्य ग्रहणमिति भावः। **अन्तर्धौ**। अन्तर्द्धिरन्यकर्तृकस्वकर्मकदर्शनाऽभावानुकूलो व्यवहितदेशस्थितिरूपः, तद्घटकं यत्कर्तृकदर्शनाऽभावमिच्छति तदपादानमित्यर्थः। तत्फलितमाह—**व्यवधाने सतीति**। येनेत्यत्र कर्तृकर्मणोरिति षष्ठी न, सौत्रत्वात्। 'आत्मन'इति प्रत्यासत्तिलब्धम्। 'मातुर्निलीयत'इत्यादावाक्षेपलभ्येच्छा बोद्धया। **चोरानिति**। चोरकर्मकदर्शनेच्छाऽभाव इति शाब्दोऽर्थः। स च चोरकर्तृकस्वदर्शनाऽभावायेति प्राप्तिः। इच्छामात्रस्याक्षेपलभ्यत्वइव विशिष्टस्याक्षेपलभ्यत्वेऽपि स्यादिति भावः। प्रकृते नाऽन्तर्द्धिरिति न दोषः। 'येने'त्यस्याऽभावे हि 'स्वकर्मकदर्शनाऽभावं य इच्छति'इत्यर्थे कर्तुरेव स्यादतस्तत्। **इच्छतिग्रहणं किमिति**। अन्तर्धौ सति यत्कर्तृकदर्शनस्याऽभावस्तदपादानमित्यर्थोऽस्त्विति भावः। **सत्यपीति**। अदर्शनेच्छया तदनुकूलव्यापारकरणे दैववशाद्दर्शने सत्यपीत्यर्थः। अन्यथा यत्र दर्शनाऽभाव एव तत्रैव स्यादिति भावः। **नियमेति**। उपयोगशब्दस्य तत्रैव रूढेः। **नियमो**—ब्रह्मचर्यादिः। **नटस्येति**। नटजन्यं श्रवणमिति श्रोधात् कारकत्वं। नियमपूर्वकविद्यावक्तृत्वाऽभावान्नेत्युत्तरम्। **जनिक**। प्रकृतिरुपादानकारणं, ब्रह्म च

हेतुरुपादानं स्यात्। ब्रह्मणः प्रजाः प्रजायन्ते॥ **भुवः प्रभवः।१।४।३१। भवनं भूः।**

रुत्पत्तिः। 'इणजादिभ्यः' इति जनेर्भावे इण्। 'जनिवध्योश्च' इति वृद्धिप्रतिषेधः। तस्याः कर्तेति शेषषष्ठ्या समासो, न तु कारकषष्ठ्या, 'तृजकाभ्याम्–' इति निषेधात्। एवं चोत्पत्त्याश्रयस्य यो हेतुस्तदपादानमित्यर्थाद्धात्वन्तरयोगेऽप्यपादानत्वं भवत्येव। 'अङ्गादङ्गात्संभवसि–' इति यथा। तदेतदाह–**जायमानस्येति**। एतेन 'इक्श्तिपौ धातुनिर्देशे' इति इका निर्देशोऽयं जनिरित्याश्रित्य 'गमहन–' इत्युपधालोपमर्थाऽसङ्गतिं समासानुपपत्तिं चोद्भाव्य व्याकरणाधिकरणे गर्जन्तो मीमांसकाः समाहिता इति भावः। इह प्रकृतिग्रहणं हेतुमात्रपरमिति वृत्तिकृन्मतम्। 'पुत्रात् प्रमोदो जायते' इत्युदाहरणात्। उपादानमात्रपरमिति तु भाष्यकैयटमतं, तदुभयसाधारणमुदाहरणमाह–**ब्रह्मण इति**। ब्रह्मा हिरण्यगर्भः। स च हेतुरेव न तूपादानम्। किंच मायोपहितं चैतन्यं ब्रह्म, तद्धि सर्वकार्योपादानमिति वेदान्तसिद्धान्तः। **भुवः। भवनं भूरिति**। संपदादित्वाद्भावे क्विप्। पूर्वसूत्रे समासनिर्दिष्टमपि कर्तृग्रहणमनुवर्तते, स्वरितत्वादित्याह–**भूकर्तुरिति**। प्रभवत्यस्मादिति प्रभवः, 'अकर्तरि च कारके' इत्यधिकारादपादानार्थे 'ऋदोरप्'। जनिकर्तुरित्येव सिद्धे निरर्थकमिदमित्याशङ्क्य परिहरन्नाह–**तत्र प्रकाशत इति**। प्रथमं दृश्यत इत्यर्थः। एष चाऽर्थो धातूनामनेकार्थत्वाल्लभ्यते। तथा चाऽभूतप्रादुर्भावो जनिः। अन्यतः सिद्धस्य प्रथममुपलम्भः प्रभव इत्यर्थभेदोऽस्तीति भावः। 'भीत्रार्थानाम्–' इत्यारभ्येयं सप्तसूत्री भाष्ये प्रत्याख्याता। तत्रेत्थमुपपत्तिसंभवः– चौरेभ्यो बिभेति, भयान्निवर्तत इत्यर्थः। त्रायते-रक्षणेन चौरेभ्यो निवर्तयतीत्यर्थः। पराजयते-ग्लान्या निवर्तत इत्यर्थः। वारयतीति, प्रतिबन्धान्निवर्तयतीत्यर्थः। निलीयते, निलयनेन निवर्तत इत्यर्थः। अधीते, उपाध्यायान्निःसरन्तं शब्दं गृह्णातीत्यर्थः। ब्रह्मणः प्रपञ्चो जायत इत्यत्रापि ततोऽपक्रामन्निर्गच्छतीत्यर्थः। प्रभवतीत्यत्रापि भवनपूर्वकं निःसरणमर्थः, तथा च 'ध्रुवमपाये–' इत्यनेनैवेष्टरूपसिद्धिरिति। वस्तुतस्तु निवृत्तिविस्मरणादिधात्वन्तरार्थविशिष्टे स्वार्थे वृत्तिमाश्रित्य यथाकथंचिदुक्तप्रयोगाणां समर्थनेऽपि मुख्यार्थपुरस्कारेण षष्ठीप्रयोगो दुर्वारः-नटस्य शृणोतीतिवत्। न ह्युपाध्यायनटयोः क्रियानु-

मायाशबलब्रह्म जगदुपादानकारणम्। वृत्तौ हेतुपदमप्युपादानकारणपरमेवेति बोद्धव्यम्। 'विभाषे'त्येव-सिद्धे इदमपादानत्वेन बोधनार्थम्। तत्र हि 'गुणेऽस्त्रिया'मिति प्रायिकं, 'बाहुलकं प्रकृतेस्तनुदृष्टे'-रिति वार्तिकप्रयोगात्। **भुवः**। प्रभवनं प्रथमप्रकाशः, प्रग्रहणात्। तदधिकरणमपादानमित्यर्थः। 'प्रभवो जलमूलस्यादिः स्थानम् ... जन्महेतौ ... ' इति विश्वः। प्रकाशत इत्यस्य

भूकर्तुः प्रभवस्तथा । हिमवतो गङ्गा प्रभवति । तत्र प्रकाशत इत्यर्थः । ❀ **ल्यब्लोपे कर्मण्यधिकरणे च** ॥ प्रासादात्प्रेक्षते । आसनात्प्रेक्षते । प्रासादमारुह्य आसने उपविश्य प्रेक्षत इत्यर्थः । श्वशुराज्जिह्रेति । श्वशुरं वीक्ष्येत्यर्थः । गम्यमानापि क्रियाकारकविभक्तीनां निमित्तमित्युक्तम् । कस्मात्त्वं ?, नद्याः ॥ ❀ **यतश्चाऽध्वकालनिर्माणं तत्र पञ्चमी** ॥ ❀ **तद्युक्तादध्वनः प्रथमासप्तम्यौ** ॥ ❀ **कालात्सप्तमी च वक्तव्या** । वनाद्ग्रामो योजनं योजने वा । कार्तिक्या आग्रहायणी मासे ॥ **अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते** ।२।३।२९। एतैर्योगे पञ्चमी स्यात् । अन्य इत्यर्थग्रहणम् । इतरग्रहणं प्रपञ्चार्थम् । अन्यो भिन्न इतरो वा

---

कूलव्यापारांशे विशेषो वक्तुं शक्यः । अनभिधानब्रह्मास्त्रमाश्रित्य प्रत्याख्यानं तु नाऽतीव मनोरमम् । एवं 'जुगुप्साविरामे'त्यादिवार्तिकमप्यारम्भणीयम् । तथा च सूत्रवार्त्तिकमतमेवेह प्रबलम् । तथा 'ध्रुवं' 'भयहेतुः' 'असोढः' इत्यादिसंज्ञिनिर्देशोऽपि सार्थकः । परत्वात्तत्संज्ञाप्राप्तावपि शेषत्वविवक्षायां 'न माषाणामश्नीयात्' इत्याविव षष्ठ्या इष्टतया तत्रापादानसंज्ञाया वारणीयत्वात् । एतच्च शब्दकौस्तुभे स्पष्टम् । **ल्यब्लोप इति** । ल्यबन्तस्य गम्यमानार्थत्वादप्रयोग इत्यर्थः । ल्यब्ग्रहणमिह ल्यबर्थपरम् । तेन क्त्वोऽपि लोपे सिध्यति। आसने स्थित्वा प्रेक्षते । आसनात्प्रेक्षते इति । **यतश्चेति** । यदवधित्वेनाश्रित्याध्वनः कालस्य वा निर्माणं परिच्छेदः प्रतिपाद्यते ततः पञ्चमीत्यर्थः । तेन पञ्चम्यन्तार्थेनार्थद्वारा युक्तान्निर्मीयमाणाध्ववाचिनः प्रथमासप्तम्यौ स्तः । **कालादिति** । इहापि तद्युक्तादित्यपेक्ष्यते । **आग्रहायणीति** । अग्रे हायनमस्याः सा । प्रज्ञादेराकृतिगणत्वात्स्वार्थिकोऽण् । 'पूर्वपदात्संज्ञायाम्' इति णत्वम् । **अन्यारा** । **अर्थग्रहणमिति** ।

---

योगे तु न, प्रथमप्रकाशार्थत्वाऽभावात्तदाद–तत्र प्रकाशतइत्यर्थ इति । **ल्यब्लोपइति** । ल्यबन्तशब्दाऽज्ञाने इत्यर्थः । **कर्मणीति** । प्रत्यासत्त्या ल्यबन्तधात्वर्थस्येति भावः । **प्रासादादिति** । फलेभ्यो यातीत्यत्रेव बोधप्रक्रिया । 'आजघ्ने विषमविलोचनस्य वक्ष' इत्यत्र कर्मणः शेषत्वविवक्षया षष्ठी । 'वक्ष'इत्यस्य 'प्राप्ये'तिशेषः । **गम्यमानापीति** । विशिष्य तद्वाचकपदानुपात्ताऽपीत्यर्थः । 'कस्मात्त्व'मित्यादौ 'फलेभ्योयाती'त्यत्रेव बोधक्रिया । **अन्येत्यर्थेति** । तदर्थश्च भेदवान् । अत एव 'घटाद्भिन्न इत्यादि सिद्धिः । **परेतु** 'ध्रुव'मिति सूत्रेऽपायशब्देन भेदस्यापि ग्रहणं । 'पञ्चमी विभक्ते' इत्यत्र विभागार्थकविभक्तपदेन भेदस्य व्याख्यानात् । 'भिदिर विदारणे'इत्यत्र भेदज्ञानविषयत्वमपि विदारणम् । एकत्वेन गृहीतस्य तथाबोधे बुद्धिविदारणस्य तत्रापि सत्त्वात् । अत एव घटाद्भेदइति सिद्धं, तद्योगेप्यपादानत्वात् । तस्यैव सम्बन्धत्वेन विवक्षायाङ्घटयो भेद इत्यपि । अन्यशब्दार्थस्याऽक्रियात्वात्तद्योगे एतद्विधानम् । अत एव 'घटः पटो ने'त्यादौ न पञ्चमी । नञो भेदवदर्थकत्वेऽपि

कृष्णात् । आराद्वनात् । ऋते कृष्णात् । पूर्वो ग्रामात् । दिशि दृष्टः शब्दो दिक्शब्दः । तेन संप्रति देशकालवृत्तिना योगेऽपि भवति । चैत्रात्पूर्वः फाल्गुनः । अवयववाचियोगे तु न, 'तस्य परमाम्रेडित'मितिनिर्देशात् । पूर्वं कायस्य । अञ्चूत्तरपदस्य तु दिक्शब्दत्वेऽपि 'षष्ठ्यतसर्थे'ति षष्ठीं बाधितुं पृथग्ग्रहणम् । प्राक्प्रत्यग्वा ग्रामात् । आच् ,–दक्षिणा ग्रामात् । आहि,–दक्षिणाहि ग्रामात् । 'अपादाने पञ्चमी'·

---

व्याख्यानादिति भावः । **प्रपञ्चार्थमिति** । न च 'इतरस्त्वन्यनीचयोः' इत्यमरोक्तेर्नीचार्थस्येदं ग्रहणमस्तीति वाच्यम् । 'अस्मात्तारो मन्द्रो वा' इतिवत् 'पञ्चमी विभक्ते' इत्यनेनैव सिद्धत्वात् । **अन्यो भिन्न इतरो वेति** । न चैवं 'घटः पटो ने'त्यत्रातिप्रसङ्गः, नञोऽपि भेदे शक्तत्वादिति वाच्यम्, निपातानां द्योतकत्वमेव न तु वाचकत्वमित्यभ्युपगमात् । **आराद्वनादिति** । इह 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' इति प्राप्ता । **ऋते कृष्णादिति** । कथं तर्हि 'फलति पुरुषाराधनमृते' इति प्रयोग इति चेत् । प्रमादोऽयमिति हरदत्तः । अन्ये तु–'ततोऽन्यत्रापि दृश्यते' इति दृशिग्रहणाचैत्रं यावच्छीतमित्यादाविव ऋतेयोगे द्वितीयाऽपि साधुरित्याहुः । अस्मिन् व्याख्याने 'ऋते द्वितीया च' इति चान्द्रसूत्रमनुकूलम् । **दिशि दृष्ट इति** । 'रूढ्ये'ति शेषः । तेनैन्द्र्यादयो नात्र गृह्यन्ते । नन्वेवं ककुबादिग्रहणप्रसङ्ग इति चेत् । अत्राहुः–अन्यतरसाहचर्याद्व्याख्यानाद्वा दिग्भिन्नेऽर्थे यो न दृष्टः सोऽत्र गृह्यत इति । **दिक्शब्दत्वेऽपीति** । यद्यपि अदिक्शब्दोऽप्यञ्चूत्तरपदमस्ति सध्र्यङित्यादिः, तथापि दिक्शब्दसाहचर्यादञ्चूत्तरपदेन प्रागित्यादिदिक्शब्द एव गृह्यते । तेन सध्र्यङ् देवदत्तेनेत्यत्र नातिप्रसङ्ग इति भावः । **दक्षिणा ग्रामादिति** । दिक्शब्दत्वेनैव सिद्धे आजाहिग्रहणं

---

अक्रियात्वात् । 'घटादेक' इत्याद्यसाध्वेव । अत एवेतरग्रहणचरितार्थम् । अत एव भाष्ये ऽर्थग्रहणं नोक्तमित्याहुः । 'आराद्दूरसमीपयोः' । एतद्योगे दूरान्तिकार्थैरिति प्राप्तम् । नन्वयं देशवाची न दिक्शब्दोऽत आह–**दिशि दृष्टइति** । शब्दग्रहणादिति भावः । ते च रूढ्या दिग्विशेषवाचकाः पूर्वादय एव गृह्यन्ते, नैन्द्रीककुबादयो, व्याख्यानात् । **अवयववाचीति** । तद्वाचिपूर्वादियोगे ऽवयविवाचकान्नेत्यर्थः, ज्ञापकस्य सजातीयापेक्षत्वात् । अत एवा'ऽस्मादयं पूर्वो भागः कायस्ये'ति सिद्धम् । अवयवे पूर्वत्वमवयवान्तरापेक्षया प्रथमकालोत्पत्तिकत्वेन बोद्धयम् । **अञ्चूत्तरपदस्येति** । दिक्शब्दसाहचर्येण तस्य दिग्वाचकस्यैव ग्रहणम् । तेन सध्र्यङ् इत्याद्यर्थं तन्नेति भावः । **बाधितुमिति** । 'परत्वात्प्राप्त'मित्यादिः । यदि तु षष्ठ्यतसर्थेत्यत्र प्रत्ययग्रहणात्तस्य श्रूयमाणप्रत्ययएव प्रवृत्तिस्तदेदं माऽस्त्विति तत्त्वमिति भाष्ये स्पष्टम् । **दक्षिणा ग्रामादिति** । दक्षिणस्यान्दिश्योत्यर्थे दक्षिणादाच् ।,

ति सूत्रे 'कार्तिक्याः प्रभृती'ति भाष्यप्रयोगात् प्रभृतियोगे पञ्चमी। भवात्प्रभृति आरभ्य वा सेव्यो हरिः। 'अपपरिबहि'रिति समासविधानाज्ज्ञापकाद्बहिर्योगे पञ्चमी। ग्रामाद्बहिः ॥ **अपपरी वर्जने** ।१।४।८८। एतौ वर्जने कर्मप्रवचनीयौ स्तः ॥ **आङ्मर्यादावचने** ।१।४।८९। आङ्मर्यादायामुक्तसंज्ञः स्यात्। वचनग्रहणादभिविधावपि ॥ **पञ्चम्यपाङ्परिभिः** ।२।३।१०। एतैः कर्मप्रवचनीयै-

---

चिन्त्यप्रयोजनमित्याहुः। **प्रभृतियोग इति**। प्रभृत्यर्थैर्योग इत्यर्थः। तथा च 'कार्तिक्याः प्रभृति' इति भाष्यं विवृण्वता कैयटेन 'तत आरभ्य इत्यर्थ' इति प्रयुक्तम्। **ग्रामाद्बहिरिति**। 'ज्ञापकसिद्धं न सर्वत्र'। तेन 'करस्य करभो बहिः' इति सिद्धम्। **अपपरी**। वर्जने किम्? । परिषिञ्चति। सर्वत्र इत्यर्थः। अत्रोपसर्गत्वात् षत्वम्। **वचनग्रहणादिति**। विना तेनेति मर्यादा, सह तेनेत्यभिविधिरित्यत्र य उपात्तो विशेषो विशेषणांशरूपः सोऽत्र न गृह्यते, वचनग्रहणसामर्थ्यात्, किंतु अवधिमात्रं विवक्ष्यते इत्यर्थद्वयसङ्ग्रहः। यद्वा मर्यादा-

---

आहि च दूरे इत्याजाही। पष्ठ्यतसर्थेत्यस्यापवादः। **प्रभृतियोगे इति**। प्रभृत्यर्थयोगइत्यर्थः। 'अपादाने पञ्चमी'ति सूत्रे 'यतश्चाऽध्वकालनिर्माणं ततः पञ्चमी। कार्तिक्या आग्रहायणी मास'इति वार्तिकप्रत्याख्यानाये'दमत्र प्रयोक्तव्यं सन्न प्रयुज्यते कार्तिक्याः प्रभृत्याग्रहायणी मास'इति भाष्येण प्रभृतिशब्दाऽभावे ऽपि तदर्थसत्तामात्रेण पञ्चमीत्यर्थकेन प्रभृत्यर्थयोगे पञ्चमीति वचनसत्त्वस्य भगवता बोधितत्वात्।अन्यथा प्रभृतिपदाऽभावे पञ्चम्यर्थं वचनस्यावश्यकत्वेन तत्प्रत्याख्यानाऽसङ्गतिरिति भावः। एवञ्च तदर्थकारभ्यशब्दयोगे ऽपि पञ्चमी, 'यथा अवीचिमारभ्य मेरुपृष्ठपर्यन्तं भूलोको, मेरुपृष्ठादारभ्य ध्रुवपर्यन्तङ्ग्रहणनक्षत्रतारागणचित्रितोन्तरिक्षलोक'इति पातञ्जलभाष्यप्रयोगे। 'प्रभृती'त्यस्य चावधिमादायेत्यर्थः। आरभ्येत्यस्यैतदर्थकतापि। अवधौ पञ्चम्यन्तार्थस्याभेदेनाऽन्वयः। तद्विशेषणत्वे ऽपि न द्वितीया, प्रभृत्यर्थयोगे पञ्चमीति भाष्यकृद्बोधितवचनात्, आरभ्येत्यस्य गृहीत्वेत्यर्थेनावीचिमारभ्येत्यादौ द्वितीया। वस्तुतो ऽवधित्वन्तस्य समभिव्याहृतपदार्थनिरूपितं गम्यमानक्रियापेक्षमित्यपादानत्वादेवाऽत्र पञ्चमी सिद्धा। कार्तिकीतो विभक्ते अत एव कार्तिक्यवधिके आग्रहायणीघटिते मासे कार्तिकीमादाय गते आग्रहायणीति बोधः। 'भवात्प्रभृति आरभ्य वे'त्यत्र भवकालाद्विभक्ते अत एव भवावधिके मरणान्ते काले भवकालमादाय हरिः सेव्य इति बोधः। एवमन्यत्राप्यूह्यमित्यलं विस्तरेण। **ज्ञापकादिति**। पञ्चम्यन्तेन समासविधानाज्ज्ञापकादित्यर्थः। अयं भावः,—परस्परसाहचर्यात्त्राऽपपरी वर्जनार्थौ कर्मप्रवचनीयावेव। तद्योगे पञ्चम्यपाङ्परिभिरिति वचनात्, लक्षणप्रतिपदोक्तपरिभाषयाऽपपरिनिमित्तकसुबन्तस्यैव ग्रहणाच्च, पञ्चम्यैव सिद्धः समासः, तत्साहचर्यादुक्तपरिभाषया चाप्युत्तरपदेनापि तन्निमित्तपञ्चम्यैव सिद्धः समास इति व्यर्थं तत् बहिःशब्देन पञ्चम्यन्तेन समासविधानद्वारा तद्योगे पञ्चम्या अपि ज्ञापनार्थमिति। इदमपपरिबहिरिति सूत्रे भाष्ये स्पष्टम्। **पञ्चमीति**।

योगे पञ्चमी स्यात्। अप हरेः, परि हरेः संसारः। परिरत्र वर्जने। लक्षणादौ तु हरिं परि। आमुक्तेः संसारः। आसकलाद्ब्रह्म॥ **प्रतिः प्रतिनिधिप्रतिदानयोः** ।१।४।९२। एतयोरर्थयोः प्रतिरुक्तसंज्ञः स्यात्॥ **प्रतिनिधिप्रतिदाने च यस्मात्** ।२।३।११। अत्र कर्मप्रवचनीयैर्योगे पञ्चमी स्यात्। प्रद्युम्नः कृष्णात्प्रति। तिलेभ्यः प्रतियच्छति माषान्॥ **अकर्तर्यृणे पञ्चमी** ।२।३।२४। कर्तृवर्जितं यदृणं हेतुभूतं ततः पञ्चमी स्यात्। शताद्बद्धः। अकर्तरि किम्?। शतेन बन्धितः। **विभाषा गुणेऽस्त्रियाम्** ।२।३।२५। गुणे हेतावस्त्रीलिङ्गे पञ्चमी वा स्यात्। जाड्याज्जाड्येन वा बद्धः। गुणे किम्?। धनेन कुलम्। अस्त्रियां किम्?। बुद्ध्या मुक्तः। 'विभाषे'ति योगविभागादगुणे स्त्रियां च क्वचित्। धूमादग्निमान्। नास्ति घटोऽनुपलब्धेः॥

---

शब्दो यस्मिन्नुच्यते तन्मर्यादावचनं, तद्धि 'आङ्मर्यादाभिविध्योः' इति सूत्रं, तत्र य आङ् दृष्टः स उक्तसंज्ञ इत्यर्थः। **परिहरेरिति**। हरिं वर्जयित्वेत्यर्थः। 'परेर्वर्जने वा वचनम्' इति वार्तिकात् पक्षे द्विर्वचनाऽभावः। **परिरत्रेति**। अत्र पञ्चमीविधौ वर्जनार्थनाऽपेन साहचर्यादिति भावः। **आमुक्तेरिति**। मुक्तिं मर्यादीकृत्येत्यर्थः। **आसकलादिति**। सकलमभिव्याप्येत्यर्थः। **प्रतिनिधिप्रतिदाने**। अस्मादेव निर्देशाल्लिङ्गादाभ्यां योगे पञ्चमी। 'ज्ञापकसिद्धं न सर्वत्र' इति 'कृष्णस्य प्रतिनिधि'रित्यपि सिद्धमित्याहुः। मुख्यस्याऽभावे सति तत्सदृश उपादीयते स प्रतिनिधिः। दत्तस्य प्रतिनिर्यातनं प्रतिदानम्। **अकर्तरि**। **हेतुभूतमिति**। 'हेतौ' इत्यनुवर्तते इति भावः। **पञ्चमी स्यादिति**। तृतीयापवादोऽयम्। **शतेनेति**। शतमिह उत्तमर्णाय धार्यमाणत्वादृणं, 'तत्प्रयोजको हेतुश्च' इति चकारात् कर्तृसंज्ञं च। **बन्धित इति**। ण्यन्ते प्रयोजककर्तुः शतस्य हेतुसंज्ञाप्यस्तीति पञ्चम्यत्र स्यादेवातोऽत्राकर्तरीत्युक्तमिति भावः। **योगविभागादिति**। एतच्च 'हेतुमनुष्येभ्यः—' इति सूत्रे पदमञ्जर्यां स्पष्टम्। **स्त्रियां चेति**। 'बाहुलकं प्रकृतेस्तनुदृष्टेः' इति वार्तिकनिर्देशोऽ-

---

सापीत्यर्थः। तेन करस्य करभो बहिरिति सिद्धम्। **प्रतिनिधि**। यस्मादिति पञ्चम्यर्थः सम्बन्धः। अस्मादेव निपातनात्षष्ठ्यर्थे पञ्चमी। प्रतिनिधिप्रतिदानशब्दौ कर्मकिभावल्युडन्तौ। प्रतिनिधिप्रतिदाने यत्सम्बन्धिनां ततः कर्मप्रवचनीययुक्तात्पञ्चमीत्यर्थः। प्रतिनिधिः सदृशः। प्रतिदानम् दत्ततुल्यमूल्यस्य वस्तुनः प्रत्यर्पणम्। **कर्तृवर्जितमिति**। कर्तृसञ्ज्ञारहितमित्यर्थः। ऋणत्वं वस्तुसन्निमित्तं न तु पञ्चमीवाच्यकोटिनिविष्टम्। **हेतुभूतमिति**। तेन करणत्वविवक्षायान्तृतीयैवेति भावः। **विभाषागुणे**। **योगविभागादिति**। 'बाहुलकं प्रकृतेस्तनुदृष्टे'रित्युक्तवार्तिकप्रयोगाद्गुणेऽस्त्रियामिति प्रायिकमित्यन्ये।

**पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्** ।२।३।३२। एभिर्योगे तृतीया स्यात्पञ्चमीद्वितीये च । अन्यतरस्याङ्ग्रहणं समुच्चयार्थम् । पञ्चमीद्वितीये अनुवर्तेते । पृथग्रामेण रामाद्रामं वा । एवं विना नाना ॥ **करणे च स्तोकाल्पकृच्छ्रकतिपयस्याऽसत्त्ववचनस्य** ।२।३।३३। एभ्योऽद्रव्यवचनेभ्यः करणे तृतीयापञ्चम्यौ स्तः । स्तोकेन स्तोकाद्वा मुक्तः । द्रव्ये तु स्तोकेन विषेण हतः । **दूरान्तिकार्थेभ्यो द्वितीया च** ।२।३।३५। एभ्यो द्वितीया स्याच्चात्पञ्चमीतृतीये ।

---

पीह ज्ञापकः । **पृथग्विना** । ननु तृतीयाऽभावपक्षे 'एनपा द्वितीया' इति प्रकृता द्वितीयैव स्यात् । यदि तु द्वितीया विकल्पेन भवेत्, तदा पञ्चम्यपि स्यात् । सा तु नित्यैव । तस्माद्विभक्तित्रयसमावेशो दुरुपपाद इत्यत आह—**अन्यतरस्याङ्ग्रहणं समुच्चयार्थमिति** । निपातानामनेकार्थत्वादिति भावः । **पञ्चमीति** । तत्र मण्डूकप्लुत्या पञ्चमी, द्वितीया तु संनिहितैव । इह पृथगर्थैरिति सूत्रयितव्ये पर्यायत्रयोपादानं पर्यायान्तरनिवृत्त्यर्थम्, तेन हिरुग्देवदत्तस्येत्यत्र नेत्याहुः । 'पृथङ्नानाञ्भिस्तृतीयान्यतरस्याम्' इति सुवचनम् । नानाञिति प्रत्ययग्रहणे तदन्तयोर्विनानानाशब्दयोर्लाभात् । **नानेति** । 'हिरुङ् नाना च वर्जने' इत्यमरः । 'नाना नारीं निष्फला लोकयात्रा' इति प्रयोगः ।

**करणे च** । अन्यतरस्यामिति वर्तते, पञ्चमीति च, तेन करणे तृतीयायां प्राप्तायां पक्षे पञ्चमी विधीयते, तया मुक्ते करणत्वादेव तृतीया सिद्धेत्याशयेनाह—**तृतीयापञ्च-**

---

**धूमादिति** । धूमपदं स्वज्ञाने, ऽग्निमत्पदं स्वज्ञानविषये लाक्षणिकं बोद्धव्यम् । **समुच्चयार्थमिति** । स्पष्टञ्चेदं भाष्ये । एतेनान्यतरस्य-आम्—अङ्गीकार इत्यर्थकं पदद्वयमेतदित्यपास्तम् । विकल्पविषयेऽप्यर्थासङ्गतिश्च । परे तु द्वितीयासमुच्चयो न फलं, 'विना वातं विना वर्षं' मित्यादौ ऋतेशब्दयोगइव ततोन्यत्रापि दृश्यत इत्यनेन द्वितीयासिद्धेः । अतएव एव भाष्ये द्वितीयासमुच्चयो नोक्तः । 'पञ्चम्या अधिकारे द्वितीयाषष्ठीविषये प्रतिषेधो वक्तव्यः दक्षिणेन ग्रामं दक्षिणतो ग्रामस्ये'ति प्रकृतसूत्रस्थभाष्येण एनपा द्वितीयेति सूत्रं षष्ठ्यतसर्थेत्यतः प्रागिति च सूचितम् । अन्यथा सौत्रक्रमत्यागे न्यायविपरीतपूर्वनिपातकरणे च बीजानापत्तिः। अत एव करणे चेति सूत्रे द्वितीयासमुच्चयो नेत्याहुः । **करणे च** ॥ करणे तृतीयायाः सिद्धत्वेन पक्षे पञ्चम्यर्थं वचनमिदम् । चकारः तृतीयान्यतरस्यामित्यनुकर्षणार्थः । षष्ठी गापोष्टगितिवत् । **अद्रव्येति** । द्रव्यभिन्नवचनेभ्य इत्यर्थः । द्रव्यपदेनाऽत्र सर्वनामपरामर्शयोग्यं, लिङ्गनिरूपितविशेष्यं वा । स्तोकशब्दो यद्धर्मावेशाद्द्रव्ये स्तोकव्यवहारस्तद्धर्मपरः । स च धर्मोऽल्पादिशब्दप्रवृत्तिनिमित्तमेवशुक्लादिवच्चैते धर्मवचना अपि । करणत्वञ्च परम्परया । ईदृशार्थएव च साधुत्वं सूत्रबलादिति स्पष्टमलुगुत्तरपदइत्यत्र कैयटे । करणे किम् । स्तोकम्पचति । असत्त्वरूपफलसमानाधिकरणविशेषणत्वादत्र स्तोकशब्दस्याऽसत्त्ववचनत्वमिति दिक् । **दूरान्तिका** । अत्र 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्या'मित्यतः समुच्चयार्थकान्यतरस्यांग्रहणानुवृत्त्यैवार्थाधिकारात्पञ्चम्याः

प्रातिपदिकार्थमात्रे विधिरयम् । ग्रामस्य दूरं दूरात् दूरेण वा । अन्तिकम् अन्तिकात् अन्तिकेन वा । असत्त्ववचनस्येत्यनुवृत्तेर्नेह—दूरः पन्थाः ॥ इति पञ्चमी ॥

**षष्ठी शेषे** ।२।३।५०। कारकप्रातिपदिकाऽर्थव्यतिरिक्तः स्वस्वामिभावादिसंबन्धः शेषस्तत्र षष्ठी स्यात् । राज्ञः पुरुषः । कर्मादीनामपि संबन्धमात्रविवक्षायां

---

**स्यौ स्त इति । स्तोकेनेति ।** अनायासेन मुक्त इत्यर्थः । **दूरं दूराद् दूरेण वेति ।** इह सप्तम्यपि वक्ष्यते । किंच 'दूरान्तिकार्थेभ्यः' इति सूत्रस्य 'सप्तम्यधिकरणे च' इत्युत्तरसूत्रेऽप्यनुवर्तनादधिकरणेऽप्येभ्यो विभक्तिचतुष्टयं बोध्यम् । तथा च प्रयुज्यते 'दूरादावसथान्मूत्रं दूरात्पादावसेचनम्' इति । आवसथस्य दूरे इत्यर्थः । **असत्त्ववचनस्येति** । सत्त्ववचनत्वमिह सत्त्वविशेषकत्वम् । एवं च सामानाधिकरण्येन प्रातिपदिकार्थविशेषकं व्युदस्यते । तदाह—**दूरः पन्था इति** । एतेन 'करणे च स्तोके'ति सूत्रे—करणे किम् ? क्रियाविशेषणे कर्मणि मा भूत् । स्तोकं पचति । 'क्रिया न द्रव्यम्' इति प्राचां ग्रन्थोऽपि व्याख्यातः । न च क्रियाया विशेष्यत्वेन द्रव्यत्वाऽवश्यंभावात् नैतत् प्रत्युदाहरणं युक्तमिति वाच्यम् , धातुवाच्यायाः क्रियायाः असत्त्वरूपत्वस्याकरे प्रसिद्धत्वात् । न च विशेष्यत्वे तदनुपपत्तिः । कर्तृकर्मेतरकारकलिङ्गानन्वयित्वमात्रेणाऽसत्त्वरूपत्वोपपत्तेः । उक्तं च—'क्रिया न युज्यते लिङ्गक्रियानाधारकारकैः । असत्त्वरूपता तस्या इयमेवावधार्यताम्' इति । फलं व्यापारश्च क्रिया, फलाधारकारकं कर्म, व्यापाराधारकारकं कर्तेति विवेकः । **इति पञ्चमी ।**

**षष्ठी शेषे ।** उक्तादन्यः शेषः। कर्मादयश्च प्रातिपदिकार्थपर्यन्ता उक्ताः,तत्र द्वितीयादीनां विधानात्, अतो व्याचष्टे—**कारकप्रातिपदिकार्थव्यतिरिक्त इति । राज्ञः पुरुष इति।** प्रत्ययार्थस्य प्रकृत्यर्थं प्रति प्राधान्यादप्रधानादेव षष्ठी । प्रत्ययार्थस्त्विह पुरुषविशेषणम् । राजनिरूपितसेवकत्वसंबन्धवान् पुरुष इत्यर्थविवक्षायां प्रधानात् पुरुषशब्दान्न षष्ठी,

---

सिद्धौ चकारो व्यवहिततृतीयासमुच्चयार्थो व्याख्यानादित्याह—**चादित्यादि । प्रातिपदिकार्थमात्रे इति ।** व्याख्यानादिति भावः । **इति पञ्चमी ॥**

**षष्ठी शेषे ।** शेष उक्तादन्यः, स च तत्तद्रूपेण स्वत्वादिः, सम्बन्धत्वेन रूपेण च । कारकविभक्तीनां क्रियाजनकत्वसमानाधिकरणकर्तृत्वादिशक्तिरूपेण बोधकत्वं तत्रापि तन्मूलके सम्बन्धे विवक्षिते षष्ठी । तदाह—**कारक इति । स्वस्वामिभावादिरिति ।** स्वत्वस्वामित्वसमूहः सम्बन्ध इत्यन्यत्र विस्तरः । एवं सर्वत्र बोध्यम् । षष्ठ्यर्थस्य संसर्गविधयैव भानं, कारकविभक्तिभ्योऽपि क्रियाकारकभावस्य संसर्गविधया भानमित्युक्तम् । **सम्बन्धमात्रविवक्षायामिति ।** सम्बन्धत्वेन

**षष्ठ्येव । सतां गतम् । सर्पिषो जानीते । मातुः स्मरति । एधो दकस्योपस्कुरुते ।**

उक्तन्यायविरोधात्, शेषत्वाऽभावाच्च। 'राज्ञः पुरुषस्तिष्ठती'त्यादौ पुरुषशब्दो हि प्रातिपदिकार्थमात्रवृत्तिः । 'राज्ञः पुरुषेण कृत'मित्यादौ तु कारकार्थः । यदा तु पुरुषनिरूपितसेव्यत्वसंबन्धवान् राजेत्यर्थविवक्षा तदा पुरुषशब्दादपि षष्ठी भवत्येव पुरुषस्य राजेति। यत्तु 'अप्रधानं शेष' इति कैश्चिदुक्तम् । तन्न, प्रातिपदिकार्थमात्रे शुक्लः पटः श्यामो घट इत्यादौ विशेषणे षष्ठीप्रसङ्गात् । न च प्रथमया बाधः, तस्याः प्रधाने चरितार्थत्वात् । **कर्मादीनामपीति** । यथा विशेषाऽविवक्षायां रूपवानिति प्रयुज्यते, विशेषविवक्षायां तु नीलः पीत इत्यादि, तथेदमपि न्यायसिद्धमिति भावः । **सतां गतमिति** । सत्पुरुषसंबन्धि गमनमित्यर्थः । सन्तो गच्छन्तीत्यत्र त्वाख्यातेन कर्तृत्वसंबन्धस्योक्तत्वात् संबन्धमात्रविवक्षा कर्तुं न शक्यते इति षष्ठीह न भवति, किंतु प्रातिपदिकार्थमात्रे प्रथमैवेत्याहुः । **सर्पिषो जानीते इति** । वस्तुतः करणस्य संबन्धमात्रविवक्षायां षष्ठी । सर्पिःसंबन्धि प्रवर्तनमित्यर्थः । 'अकर्मकाच्च' 'अनुपसर्गाज्ज्ञः' इत्यनेन वा जानातेस्तङ् । अन्ये तु व्याचख्युः—कर्मणः शेषत्वविवक्षया षष्ठी । सर्पिः संबन्धि ज्ञानमित्यर्थ इति ।

**एधोकस्येति** । एधाश्च उदकं चैषां समाहार एधोदकम् । 'जातिरप्राणिनाम्' इत्येकवद्भावः । यद्वा एधांसि च दकं चेति विग्रहे पूर्ववदेकवद्भावः। उदकपर्यायो दकशब्दोऽप्यस्ति । तथा च हलायुधः—'भुवनममृतं जीवनीयं दकं चे'ति । **उपस्कुरुते इति** । गन्धनादिसूत्रेणात्मनेपदम् । 'उपात्प्रतियत्ने'ति सुट् । नचैवं 'ज्ञोऽविदर्थस्य करणे', अधीगर्थदयेशां कर्मणि', 'कृञः प्रतियत्ने', 'रुजार्थानां भाववचनानामज्वरेः', 'आशिषि नाथः', 'जासिनिप्रहणनाटक्राथपिषां हिंसायाम्', 'व्यवहृपणोः समर्थयोः', 'कृत्वोर्थप्रयोगे कालेऽधिकरणे' इति शेषषष्ठीविधानार्थेयमष्टसूत्री निष्फला स्यादिति वाच्यम्, 'सर्पिषो ज्ञान'मित्यादौ तस्याः समासनिवृत्तिफलकत्वात् । तथा हि 'ज्ञोऽविदर्थस्य—' इत्यादौ 'शेष' इत्यनुवर्तते, शेषत्वेन विवक्षिते तु करणादौ षष्ठी सिद्धैव । तद-

---

भाने इत्यर्थः । यद्वा क्रियाकारकभावमूलकसम्बन्धस्यैव विवक्षायां, न तु तद्विवक्षायामित्यर्थः । कर्तुरपि तथा विवक्षा क्तस्य च वर्तमानइति सूत्रे छात्रस्य हसितमित्यादौ भाष्ये स्पष्टा । संयोगसम्बन्धावच्छिन्नाधारस्य न तथा विवक्षा, अत एव 'घटवद्भूतल'मिति प्रयोगसाधकं मतुप्सूत्रेऽस्मिन्निति चरितार्थमिति तत्रैव भाष्ये स्पष्टम् । 'लोहितोष्णीषा' इत्यादावपि सप्तम्यर्थे बहुव्रीहिर्बोध्यः । **एधोदकस्येति** । एधः—कर्तृ कर्ता वा । दकस्योदकस्येत्यर्थः । 'एध'शब्दोऽदन्तः पुँल्लिङ्गः कारक

भजे शम्भोश्चरणयोः । फलानां तृप्तः ॥ **षष्ठी हेतुप्रयोगे** ।२।३।२६। हेतुशब्द-प्रयोगे हेतौ द्योत्ये षष्ठी स्यात् । अन्नस्य हेतोर्वसति ॥ **सर्वनाम्नस्तृतीया च** ।२।३।२७। सर्वनाम्नो हेतुशब्दस्य च प्रयोगे हेतौ द्योत्ये तृतीया स्यात्, षष्ठी च । केन हेतुना वसति । कस्य हेतोः ॥ ***निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्** ॥ किं निमित्तं वसति । केन निमित्तेन । कस्मै निमित्तायेत्यादि । एवं–किं कारणं को

यमर्थः–इह षष्ठ्येव न तु तल्लुक्। तथा च लुकः प्रयोजकीभूतः समास एव न भवतीति। न चाष्टसूत्र्या लुङ्मात्रनिवृत्तिफलकत्वमेवास्तु, समासस्तु स्वीक्रियतामिति वाच्यम्। इष्टानुरोधेन समास एव न भवतीति व्याख्यानस्योचितत्वात्। तथा च वार्तिकं 'प्रतिपदविधाना षष्ठी न समस्यते' इति । हरिश्चाह–'कारकैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः। प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये' इति । एवं च शेषत्वविवक्षायां सर्पिषो ज्ञानं, मातुः स्मरणमित्यादीन्यसमस्तान्येव साधूनि । हरिस्मरणमित्यादीनि तु शेषत्वाऽविवक्षायां कृद्योगषष्ठ्याः समासे बोध्यानि । तत्र च कारकपूर्वकत्वात् 'गतिकारक–' इत्यादिना कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तत्वं भवति । शेषषष्ठ्या समासे तु अन्तोदात्तत्वं स्यात्तच्चाऽनिष्टम्। तथा च स्वरार्थेयमष्टसूत्रीति निष्कर्षः। किं च 'मातुः स्मृत'मित्यादौ समासाऽभावोऽपि फलम्, न हि तत्र कारकषष्ठी लभ्यते, 'न लोके'ति निषेधात्। आह च–'निष्ठायां कर्मविषया षष्ठी च प्रतिषिध्यते । शेषलक्षणया षष्ठ्या समासस्तत्र नेष्यते' इति । एतच्च मनोरमायां स्थितम् । **षष्ठी हेतु** । अत्र 'हेतौ' इत्यनुवर्तते तदाह- **हेतौ द्योत्य इति । अन्नस्येति** । 'हेतौ' इति तृतीयायां प्राप्तायामनेन षष्ठी। हेतुप्रयोगे किम् । अन्नेन वसति । हेतौ द्योत्ये किम् । अन्नशब्दात् षष्ठी यथा स्यादित्येके । 'अन्नस्य हेतोस्तुभ्यं नम' इत्यत्र युष्मच्छब्दान्मा भूदित्यन्ये । **सर्वनाम्नस्तृतीया च** । इह सर्वनाम्न इति प्रयोगापेक्षया षष्ठी, पञ्चम्यां तु हेतुशब्दात् षष्ठीतृतीये न स्यातामित्याशयेनाह–**सर्वनाम्नो हेतुशब्दस्य चेति** । कस्माद्भवतीत्यपेक्षायाम् अर्थात् सर्वनामहेतुभ्यामिति संबध्यते ।अत्र व्याचख्युः–यद्यपि सर्वनाम्न इति पदस्य पञ्चम्यन्तत्वेऽपि हेतुशब्दस्य विशेषणत्वे सामानाधिकरण्यादप्युपपद्यत इति न क्षतिः, तथापि विशेष्यत्वे त्वयं विधिर्न स्यादिति बोध्यमिति । **निमित्तपर्यायेति** ।

इति सूत्रे भाष्ये प्रयुक्तः। एधाः पक्ष्यन्ते इति सान्तः क्लीबोऽपि । **हेतौ द्योत्ये इति**। हेताविति वर्तते। हेतुहेतुमद्भावेनेतरान्वये इत्यर्थः। तेनाऽन्नं हेतुं पश्येत्यादौ न। षष्ठीति। हेतुवाचकादित्यर्थः। [illegible] समानाधिकरणशब्देभ्यश्चेत्यर्थः। **किंनिमित्तमिति**। निमित्तेत्यादि। निमित्त[illegible]

हेतुः किं प्रयोजनमित्यादि । प्रायग्रहणादसर्वनाम्नः प्रथमाद्वितीये न स्तः । ज्ञानेन निमित्तेन हरिः सेव्यः । ज्ञानाय निमित्तायेत्यादि॥ **षष्ठ्यतसर्थप्रत्ययेन**।२।३।३०। एतद्योगे षष्ठी स्यात् । 'दिक्शब्दे–' इति पञ्चम्या अपवादः । ग्रामस्य दक्षिणतः । पुरः पुरस्तात् । उपरि उपरिष्टात् ॥ **एनपा द्वितीया**।२।३।३१।एनबन्तेन योगे द्वितीया स्यात् । एनपेति योगविभागात्षष्ठ्यपि । दक्षिणेन ग्रामं, ग्रामस्य वा । एवमुत्तरेण ।

**दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्**।२।३।३४। एतैर्योगे षष्ठी स्यात्पञ्चमी च ।

---

पर्यायग्रहणस्य फलमाह–**एवमित्यादिना** । एतद्वार्तिकेन 'षष्ठी हेतुप्रयोगे', 'सर्वनाम्नस्तृतीया च' इति सूत्रद्वयं गतार्थमिति बोध्यम् । **षष्ठ्यतसर्थ** । 'दक्षिणोत्तराभ्यामतसुच्' इत्यस्य योऽर्थो दिग्देशकालरूपः सोऽर्थो यस्य प्रत्ययस्य सोऽतसर्थप्रत्ययः, अस्तातिप्रभृतयः पञ्च, तदन्तेन योगे इत्यर्थः । अतसुचोऽस्तात्यनन्तरत्वेऽपि लाघवानुरोधेन अस्तात्यर्थेति नोक्तमित्याहुः । **पञ्चम्या अपवाद इति** । 'ततः पश्चात् स्रंस्यते ध्वंस्यते च' इति भाष्यप्रयोगात् पश्चाच्छब्दयोगे तु पञ्चम्यपि साधुः । अस्मादेव भाष्यप्रयोगात् पश्चाच्छब्देनाऽव्ययीभावो न भवतीति वक्ष्यते । प्रत्ययग्रहणं किम् । इह मा भूत्, प्राग् ग्रामात् । प्रत्यग् ग्रामात् । कृतेऽपि प्रत्ययग्रहणे कुतो नेति चेत् । अत्राहुः कैयटादयः–प्रत्ययग्रहणमधिकं क्रियमाणं श्रूयमाणप्रत्ययग्रहणार्थं विज्ञास्यत इति लुप्ते अस्तातौ षष्ठ्यभावः । 'अन्यारात्–'इत्यत्राञ्चूत्तरपदस्यापीदं प्रयोजनमुक्तम् । तत्रान्यतरच्छक्यमवक्तुम्, अप्रयोजनत्वादिति । प्रत्ययग्रहणं चिन्त्यप्रयोजनमिति तु मनोरमायां स्थितम् । **पुर इति** । 'पूर्वाधरावराणाम्' इत्यसिप्रत्यये पुरादेशः । **पुरस्तादिति** । 'दिक्शब्देभ्यः' इत्यादिनाऽस्तातिः, 'अस्ताति च' इति पूर्वस्य पुरादेशः । **एनपा** । कथं तर्हि 'तत्रागारं धनपतिगृहादुत्तरेणास्मदीयम्' इति । उत्तरेणेत्येतत् 'दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन' इति तोरणसमानाधिकरणं तृतीयान्तं न त्वेनबन्तमित्याहुः । 'धनपतिगृहानुत्तरेणास्मदीयम्' इति कैश्चित्पठ्यते, तदा तु सम्यगेव । **दक्षिणेनेति** । दक्षिणस्यामदूर इत्यर्थे 'एनबन्यतरस्याम्' इत्यादिना एनप् । **दूरान्तिकार्थैः** । षष्ठ्यां प्राप्तायां पक्षे पञ्चम्यर्थं वचनम् ।

---

प्रथमान्तं द्वितीयान्तञ्च । **प्रायग्रहणादिति** । एवञ्च षष्ठी हेतुप्रयोगे, सर्वनाम्नस्तृतीया चेति सूत्रे व्यर्थे इति बोध्यम् । **षष्ठ्यत** । दिक्शब्दा(त्वा)त्पञ्चम्यां प्राप्तायामिदम् । 'ततः पश्चा'दित्यत्र तु सार्वविभक्तिकः पञ्चम्यन्तात्तसिः । **षष्ठ्यपीति** । स्पष्टञ्चेदं वृत्तौ । भाष्ये तु न दृश्यते । विपरीतं 'षष्ठ्यतसर्थे'ति सूत्रात्पूर्वमेनपेत्यस्य पाठ इति लभ्यते इति पृथग्विनानानेति सूत्रे उक्तम् । **दूरान्तिकार्थैः** । यद-

दूरं निकटं ग्रामस्य ग्रामाद्वा ॥ **ज्ञोऽविदर्थस्य करणे २।३।५१।** जानातेर ज्ञानार्थस्य करणे शेषत्वेन विवक्षिते षष्ठी स्यात् । सर्पिषो ज्ञानम् ॥ **अधीगर्थदयेशां कर्मणि ।२।३।५२।** एषां कर्मणि शेषे षष्ठी स्यात् । मातुः स्मरणम् । सर्पिषो दयनम्, ईशनं वा ॥ **कृञः प्रतियत्ने ।२।३।५३।** कृञः कर्मणि शेषे षष्ठी स्याद्गुणाधाने । एधो दकस्योपस्करणम् ॥

**रुजार्थानां भाववचनानामज्वरेः ।२।३।५४।** भावकर्तृकाणां ज्वरिवर्जितानां

---

इहान्यतरस्यां ग्रहणं समुच्चयार्थं, तेन विप्रकृष्टापि पञ्चमी समुच्चीयते व्याख्यानात्, न तु सन्निहिते अपि द्वितीयातृतीये, तदाह—**पञ्चमी चेति** ।

**सर्पिषो ज्ञानमिति ।** वस्तुतः करणीभूतं यत्सर्पिः तत्सम्बन्धिनी प्रवृत्तिरित्यर्थः । ज्ञानपूर्विकायां प्रवृत्तौ जानातेर्लक्षणा ।

**अधीगर्थ ।** अधिशब्दोच्चारणम् 'इङिकावध्युपसर्गं न व्यभिचरतः' इति ज्ञापनार्थम् । अन्यथा 'स्मृत्यर्थदयेशाम्' इत्येव ब्रूयात्, 'इगर्थेति वा । इङंशे नेदं ज्ञापकमिति चेत्तर्हि तदंशे 'णेरध्ययने वृत्तम्' इत्यत्राऽधिशब्दोच्चारणं ज्ञापकमस्तु । अत्र व्याचख्युः—कर्मणि किम् । करणे शेषत्वविवक्षायां मा भूत् । मातुर्गुणस्मरणम् । अत्र माता कर्म, गुणास्तु करणम् , उभयत्र शेषत्वविवक्षायामपि मातृशब्दादेवानेन सूत्रेण षष्ठी, गुणशब्दात्तु 'षष्ठी शेषे' इत्यनेन । तेन गुणस्मरणमिति समासो भवतीति ॥

**रुजार्थानाम् ।** 'रुजो भङ्गे' भिदादिपाठादत एव निपातनाद्वा अङि टाप् । रुजा व्याधिरर्थो येषां तेषां रुजार्थानां धातूनां भाववाचकत्वाऽव्यभिचाराद्भावशब्देनाऽत्र घञादिवाच्यः सिद्धरूपो भाव उच्यते । वक्तीति वचनः । बाहुलकात् कर्तरि ल्युट् । प्रकृत्यर्थस्तु न विवक्षितः । नहि भावो वक्ता सम्भवति, तस्मात् प्रत्ययस्य साधुत्वनिर्वाहायैव वचिरिति बोध्यम् । तथा चायमर्थः,—भावो वचनः कर्ता येषां तेषां भाववचनानामिति, तदेतद्व्याचष्टे—**भावकर्तृकाणामिति** । 'रुजार्थानां भाव-

---

पेक्षं दूरत्वादिकन्ततः षष्ठीत्यर्थः । **पञ्चमी चेति ।** तस्या एव समुच्चयो न द्वितीयातृतीययोरपीति भावः । **ज्ञो ऽविदर्थ ।** अत्र सूत्रे ऽविदर्थस्येति छेदो, व्याख्यानात् । **सर्पिषो ज्ञानमिति ।** जानातेः प्रवृत्तिरर्थः । सर्पिः—सम्बन्धिनी प्रवृत्तिरित्यर्थः । **अधीग ।** अधीगर्थः—स्मृतिः । कर्मणि किम् ? । मातुर्गुणस्मरणम् । करणे शेषे(तु)अनेन षष्ठ्यभावे समासो भवत्येव, अत एवाऽत्र सूत्रे भाष्ये 'शेषइति वर्तत'इत्युक्तम् । प्रतिपदविधाना षष्ठी न समस्यतइत्येतैः षष्ठीसमासनिषेधात् । **एधोदकस्येति ।** 'एध'इति पृथक्पदं । दकशब्द उदकवाची । **रुजार्थानाम् ।** रोगार्थानां धातूनामित्यर्थो व्याख्यानात् । धातोर्भाववचनत्वाऽव्यभिचारेण सामर्थ्याद्वचनइति कर्तरि ल्युट् । भावशब्देन सिद्धरूपोर्थ

रुजार्थानां कर्मणि शेषे षष्ठी स्यात् । चौरस्य रोगस्य रुजा ॥ ॐ अज्वरिसंताप्योरिति वाच्यम् ॥ रोगस्य चौरज्वरः, चौरसंतापो वा । रोगकर्तृकं चौरसंबन्धि ज्वरादिकमित्यर्थः ॥ **आशिषि नाथः** ।२।३।५५। आशीरर्थस्य नाथतेः शेषे कर्मणि षष्ठी स्यात् । सर्पिषो नाथनम् । आशिषीति किम् ? । माणवकनाथनम् । तत्संबन्धिनी याच्ञेत्यर्थः । **जसिनिप्रहणनाटक्राथपिषां हिंसायाम्** ।२।३।५६। हिंसार्थानामेषां शेषे कर्मणि षष्ठी स्यात् । चौरस्योज्जासनम् । निप्रौ संहतौ विपर्यस्तौ व्यस्तौ वा । चौरस्य निप्रहणनम् । प्रणिहननम् । निहननम् । प्रहणनं वा । नट अवस्कन्दने चुरादिः । चौरस्योन्नाटनम् । चौरस्य क्राथनम् । वृषलस्य पेषणम् ।

---

कर्तृकाणाम्' इत्येव सूत्रयितुं युक्तम् । **चौरस्येति** । चुरा शीलमस्य चौरः । अत्र कर्मणि शेषत्वविवक्षायामनेन षष्ठी । **रोगस्येति** । 'पदरुज–' इति घञा रोगो भावोऽभिधीयते, स च रुजायां कर्ता । 'कर्तृकर्मणोः–' इति रोगशब्दात् षष्ठी । भावकर्तृकाणां किम् । श्लेष्मणश्चौररुजा । 'मायुः पित्तं कफः श्लेष्मा' इत्यमरः ।

**चौरज्वर इति** । इह चौरशब्दात् 'रुजार्थानां' इति षष्ठ्या अप्रवृत्तौ 'षष्ठी शेषे' इत्यनेन षष्ठ्यां षष्ठीति समासो भवत्येवेति भावः । **सर्पिषो नाथनमिति** । सर्पिर्मे भूयादित्याशासनमित्यर्थः । **माणवकनाथनमिति** । यद्यपि कर्मत्वविवक्षायां 'कर्तृकर्मणोः' इति यदा षष्ठी, तदा आशिष्यपि समासोऽस्त्येव, तथापि तत्र 'गतिकारकोपपदात्कृत' इति कृदुत्तरपदप्रकृतिस्वरः । समासान्तोदात्तत्वं तु याच्ञादावेव न त्वाशिषीति निष्कर्ष इति कौस्तुभे स्थितम् ॥ **जासि** । 'जसु ताडने', 'जसु हिंसायाम्' इति च चुरादिस्तस्येदं ग्रहणं न तु दैवादिकस्य 'जसु मोक्षणे' इत्यस्य, जासीति निर्देशात्, 'हिंसायाम्' इति वचनाच्च । **निप्रहणनमिति** । 'हन्तेरत्पूर्वस्य' इति णत्वम् । **प्रणीति** । 'नेर्गद–' इति णत्वम् । **चुरादिरिति** । 'नट नृत्तौ' इति तु न गृह्यते, दीर्घनिर्देशादिति भावः । **क्राथनमिति** । 'क्रथ हिंसायाम्' इति घटादौ पठ्यते, तस्य मित्त्वेऽपि इह निपातनाद्वृद्धिः । मित्त्वफलं तु निपातनात्परत्वात् 'चिण्णमुलोः' इति दीर्घे चरि-

---

उच्यते । ल्युट्प्रकृत्यर्थोऽविवक्षितस्तदाह–**भावकर्तृकाणामिति** । **रोगकर्तृकमिति च** । रोगोऽत्र क्षयादिः । भावकर्तृकाणां किम् ? । श्लेष्मणश्चौररुजा । श्लेष्माऽत्र न भावः । **सर्पिषो नाथनमिति** । सर्पिर्मे भूयादित्याशासनमित्यर्थः । **जासिनि** । 'जसु मोक्षणे' इति दैवादिकस्य न ग्रहणं, जासीति निर्देशाद्धिंसायामित्युक्तेश्च । निप्रोपसृष्टो हनो निप्रहणः । शब्दपरत्वेऽपि सौत्रत्वाद्धन्तेरिति णत्वम् । **चुरादिरिति** । घटादेस्तु न ग्रहणं, दीर्घनिर्देशात् । **क्राथनमिति** घटादेः क्रथेः । क्राथेति

हिंसायां किम् । धानापेषणम् ॥ **व्यवहृपणोः समर्थयोः** ।२।३।५७। शेषे कर्मणि षष्ठी स्यात् । द्यूते क्रयविक्रयव्यवहारे चानयोस्तुल्यार्थता । शतस्य व्यवहरणं पणनं वा । समर्थयोः किम् ?। शलाकाव्यवहारः । गणनेत्यर्थः। ब्राह्मणपणनं । स्तुतिरित्यर्थः ॥ **दिवस्तदर्थस्य** ।२।३।५८। द्यूतार्थस्य, क्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्मणि षष्ठी स्यात् । शतस्य दीव्यति । तदर्थस्य किम् ? । ब्राह्मणं दीव्यति ।

---

तार्थमिति घटादौ वक्ष्यति । यत्तु **हरदत्तेनोक्तम्**–घटादिपाठो 'घटादयः षितः' इत्यातिदेशिक-षित्त्वे अङ् यथा स्यादित्येतदर्थ इति । तन्मन्दम् । 'घटादयः षितः' इति हि मध्ये सूत्रितम् । तेन पूर्वेषां त्वरत्यन्तानामेव षित्त्वं, न तु ज्वरादीनां परेषामिति । अतएव 'त्वरत्यन्तास्त्रयोदशानुदात्तेतः षितश्च' इति घटादौ वक्ष्यति । **पणनमिति** । 'स्तुतावेव' इति वक्ष्यमाणत्वादायस्याऽभावः । **ब्राह्मणपणनमिति** । 'आयादय आर्धधातुके वा' इत्यायस्य विकल्पः । **दिवस्तद्** । तच्छब्देन व्यवहृपणौ परामृश्येते, तौ च द्यूते क्रयविक्रयव्यवहारे च तुल्यार्थौ पूर्वसूत्रे गृहीतावित्याशयेनाह–**द्यूते इति**। पूर्वसूत्रे एव दिवेः पाठे तदर्थस्येति न कर्तव्यमिति यद्यपि लाघवं, तथापि योगविभाग उत्तरार्थः । **कर्मणीति** । इह शेष इति न सम्बध्यते, उत्तरसूत्रे विकल्पारम्भसामर्थ्यात् । अन्यथा षष्ठ्यां विकल्पितायां तया मुक्ते शेषे विभक्त्यन्तरस्याऽप्राप्त्या वृथैव विकल्पारम्भः स्यादिति भावः । अन्ये त्वाहुः–लाघवात् पूर्वसूत्रे एव दिवो ग्रहणे कर्तव्ये पृथग्योगकरणसामर्थ्यादत्र शेष इति न सम्बध्यते । न चोत्तरार्थत्वापृथग्योगस्य नोक्तार्थज्ञापकत्वमिति वाच्यम् । सङ्कोचे मानाऽभावेन फलद्वयस्यापि सुवचत्वादिति । शेष इत्यस्याऽसम्बन्धादिह त्रिसूत्र्यां तिङन्तमुदाहरति–**शतस्य दीव्यतीति**। **प्रेष्यब्रुवोः**। इष्यतेर्दैवादिकस्य लोटो मध्यमपुरुषैकवचनं–प्रेष्येति । तत्साहचर्याद्ब्रुविरपि तथाभूत एव गृह्यते। अत एवेह शेषग्रहणं न सम्बध्यते । तिङन्तेन सह समासस्याऽप्रसक्तत्वात्।

---

सूत्रे निपातनाद्वृद्धिरिति वृत्तिः । परे तु एतत्सूत्रप्रामाण्यान्नटसाहचर्याच्चाऽयमपि चुरादिर्बोध्यस्तस्याकृतिगणत्वात् । निपातनस्य शेषषष्ठीसन्नियोगशिष्टत्वे कर्मत्वेन विवक्षायां 'चोरस्य क्राथन'मित्यस्यानापत्तिः । सामान्येन निपातने चिण्णमुल्विषये क्रथंक्रथमित्यादेः क्रथयतीत्यादेश्चानापत्तिरित्याहुः । **समर्थयोरिति**। समपर्यायसंशब्देन समासः,शकन्ध्वादित्वात् पररूपं वा। **ब्राह्मणपणनमिति**। आयप्रत्ययो वैकल्पिकत्वान्न कृतः। उदाहरणे स्तुतावेवेति नियमादपि न। **दिवस्त**। **कर्मणि षष्ठी स्यादिति**। शेष इति त्वत्र न संबध्यते, व्याख्यानात् । अत एव 'द्वितीया ब्राह्मणे' इति सूत्रभाष्ये उक्तं । तद्वनयन् ब्रामस्य तदहः सभायान्दीव्येयुरित्यत्र नित्यं षष्ठीप्राप्तौ द्वितीयार्थमिति भाष्ये उक्तं । तद्वनयन् तिङन्तमुदाहरति–**शतस्य दीव्यतीति**। यद्यपि पूर्वसूत्रे दिवं पठित्वा तदर्थस्येति त्यक्तुं शक्यते

स्तौतीत्यर्थः ॥ **विभाषोपसर्गे** ।२।३।५९। पूर्वयोगापवादः । शतस्य शतं वा प्रतिदीव्यति ॥ **प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने** ।२।३।६१। देवतासंप्रदानेऽर्थे वर्तमानयोः प्रेष्यब्रुवोः कर्मणो हविर्विशेषस्य वाचकाच्छब्दात्षष्ठी स्यात् । अग्नये छागस्य हविषो वपाया मेदसः प्रेष्य अनुब्रूहि वा ॥ **कृत्वोऽर्थप्रयोगे कालेऽधिकरणे** ।२।३।६४। कृत्वोऽर्थानां प्रयोगे कालवाचिन्यधिकरणे शेषे षष्ठी स्यात् । पञ्चकृत्वोऽह्नो भोजनम् । द्विरह्नो भोजनम् । शेषे किम् ? । द्विरहन्यध्ययनम् ॥ **कर्तृकर्मणोः कृति** ।२।३।६५। कृद्योगे कर्तरि कर्मणि च षष्ठी स्यात् । कृष्णस्य कृतिः।

---

प्रेष्यब्रुवोः किम् ? । अग्नये छागस्य हविर्वपां मेदो जुहुधि । हविषः किम् । अग्नये गोमयानि प्रेष्य। देवतासम्प्रदाने किम् । माणवकाय पुरोडाशान् प्रेष्य । 'हविषः प्रस्थिततत्वेन विशेषणे प्रतिषेधो वक्तव्यः' । इन्द्राग्निभ्यां छागस्य हविर्वपां मेदः प्रस्थितं प्रेष्य।

**कृत्वोऽर्थ** । कृत्वसुचोऽर्थ इवार्थो येषां प्रत्ययानां ते कृत्वोऽर्थाः । **शेषे इति** । इह 'दिवस्तदर्थस्य' इत्यादिसूत्रषट्के विच्छिन्नमपि शेषग्रहणमनुवर्तते, व्याख्यानात् । **पञ्चकृत्व इति** । 'सङ्ख्यायाः क्रिया-' इत्यादिना कृत्वसुच् । **द्विरिति** । 'द्वित्रिचतुर्भ्यः सुच्' ।

**कर्तृकर्मणोः कृति** । शेष इति निवृत्तं, 'कर्तरि च कृति' इति सूत्रे कृतेन चका-

---

तथापि योगविभाग उत्तरार्थः। शेषइत्यस्याऽसंबन्धार्थश्च । **विभाषोप** । अत्राऽपि शेषइति न संबद्ध्यते, तदर्थस्येति च वर्तते । तदाह—**पूर्वयोगेति** । अत एवेयं प्राप्तविभाषेति न वेति सूत्रे भाष्ये स्पष्टम् ।

**कृत्वोऽर्थप्रयो** । **शेषे किमिति** । दिवस्तदर्थस्येत्यादिना विच्छेदादधिकरणकारकएव षष्ठ्याविधानं युक्तमिति प्रश्नः । **द्विरहनीति** । वृत्त्यादिप्रामाण्यान्मण्डूकानुवृत्तिः स्वीकार्येत्युत्तरम् । अधीगर्थेति सूत्रे कर्मादीनामविवक्षा शेष इति भाष्ये बहुवचनेनाऽत्रापि शेषपदसंबन्धबोधनाच्च । वस्तुतस्तु कर्माश्रयषष्ठीविषये सूत्रोपात्तसकर्मकाणामकर्मकवद्वचनमिति वार्तिकप्रत्याख्यानाय शेषइति वर्तते इति भाष्यकृतोक्ते, परेण 'शेषश्च क' इति पृष्टे, शेषे षष्ठीति सूत्रोक्तं 'कर्मादीनामविवक्षा शेष' इति सिद्धान्तिना स्मारितं, नैतावता कृत्वोऽर्थेत्यत्र तत्संबन्धो लक्ष्यते । किंचैतद्भाष्यबलात् दिव इति सूत्रेऽपि शेषपदसबन्ध आवश्यकः । अन्यथा वार्तिकरीत्या शतस्य दीव्यते इति भावे इष्टस्य प्रयोगस्याऽसिद्धिः । अत एव वार्तिकव्याख्यायां 'मधीगर्थादयः प्रेष्यब्रूपर्यन्ताः कर्माश्रयपदेनोच्यन्ते' इति कैयटः । एवञ्च शेषइत्यनुवृत्त्या वार्तिकप्रत्याख्यानवदेतत्सूत्रद्वयप्रत्याख्याने एव भाष्यतात्पर्यम्।द्वितीया ब्राह्मणे इति सूत्रस्थभाष्यं तु वार्तिकरीत्येत्याहुः । किंच यदा कर्म विवक्षितं भवति तदा षष्ठी न भवति, स्मराम्यहं मातरमिति भाष्ये उक्तम् । त्वद्रीत्या तु यदा कर्मादि विवक्षितं भवतीति वदेत् । एवंच ज्ञोऽविदर्थस्येत्यत्रापि तदसंबन्ध एव । एवञ्च तद्योगे न कदापि तृतीया । शतं दीव्यतीत्यादि च सिद्धयति । अधीगर्थेत्यादौ च मण्डूकानुवृत्तिरिति सुधियो विभावयन्तु। **कर्तृकर्मणोः**। अत्र शेष इति न सम्बद्ध्यते, सूत्रवैयर्थ्यापत्तेः, 'कृद्योगा षष्ठी समस्यते' इति वार्तिकेन तत्र समासस्येष्टत्वात् । कृतिरिति भावे

जगतः कर्ता कृष्णः ॥ ॐ **गुणकर्मणि वेष्यते** ॥ नेताऽश्वस्य स्रुघ्नस्य, स्रुघ्नं वा । कृति किम्? । तद्धिते माभूत् ।

---

रेण 'अधीगर्थ–' इति सूत्रात् 'चतुर्थ्यर्थे बहुलं छन्दसि' इति पर्यन्तमनुवर्तमानस्य कर्मणीत्यस्यानुकर्षणसम्भवेऽपि पुनरत्र कर्मग्रहणादित्याहुः । तन्मन्दम् । सन्निहितस्याधिकरणस्यानुकर्षणप्रसङ्गेन तन्निवृत्तये कर्मग्रहणसम्भवात् । तस्मात् व्याख्यानमेवात्र शरणमित्यपरे । कर्तृकर्मणोः किम् । शस्त्रेण भेत्ता । **कृतिरिति** । करणं कृतिः । 'स्त्रियां क्तिन्' । कृष्णोऽत्र कर्ता । कर्मण्युदाहरति–**जगत इति** । कृष्णस्य तृचाऽभिहितत्वात् ततः षष्ठी न भवति । **कृति किमिति** । नन्विह कर्तृकर्मभ्यां क्रिया आक्षिप्यते तद्वाची तु धातुरेव । धातोश्च द्वये प्रत्ययाः, कृतस्तिङश्च । तत्र तिङ्प्रयोगे कटं करोतीत्यादौ 'न लोका—' इति प्रतिषेधेन भाव्यम । ततश्च परिशेषात् कृद्योगे एव षष्ठी भवि-

---

क्तिन् । कृष्णः कर्ता । **जगत इति** । कर्मेदं । कर्तृसाहचर्यात् कर्मापि धात्वर्थे भेदेनान्वय्येव गृह्यते, तेन 'स्तोकं पाक' इत्यादौ न क्रियाविशेषणात् षष्ठी । किञ्च क्रियाविशेषणेन 'स्तोकम्पाचक'इत्यादौ न समानाधिकरणसमासो, नापि सुप्सुपेत्यादिः । सुबन्तार्थविशेष्येणान्वयेनाऽसामर्थ्यात् । द्वितीया श्रितेत्यादेस्तु सामर्थ्यादवयवद्वारके सामर्थ्ये प्रवृत्तिः,द्वितीयाप्रकरणोक्तपरेतुमतरीत्या वा सामर्थ्यम् । अत एव 'पूजनात्पूजित'मिति सूत्रे 'दारुणं यथा भवति तथाऽध्यापक'इत्यर्थकस्य 'दारुणाध्यापक'-इत्यस्य सिद्धयर्थं मलोपवचनमारब्धं भाष्ये । अन्यथा समासेन सिद्धे तद्व्यर्थं स्यात् । एतदेव भाष्यं-ततः षष्ठ्यभावेपि मानम्, अन्यथा षष्ठीसमासस्य 'तृजकाभ्यां कर्तरी'त्यादिनिषेधैरुक्तसामर्थ्येपि प्रवृत्त्या तत्समासेनैव सिद्धौ मलोपवचनं व्यर्थमेव स्यादिति बोद्धयम् । न च भिन्नपदत्वे ऽपि तथा प्रयोगसाधुत्वार्थं मलोपवचनमिति वाच्यम् । तथा सति वाक्ये 'मलोपश्च वक्तव्य' इति वदेत् । अत एव कैयटेन 'क्रियाविशेषणं दारुणादयस्तत्र वैयधिकरण्यात् समासाऽभावान्मलोपो विधीयते'इत्युक्तम् । सुप्सुपेत्यादिसमासो न सार्वत्रिक इति तदाशय इत्यलम् ॥

**कृति किमिति** । कर्तृकर्मभ्यां क्रिया सन्निधाप्यते, तद्वाची तु धातुरेव, कारकान्वययोग्यतावच्छेदकरूपेण साद्धयत्वेन धातुभिरेव तदुपस्थितेः । शत्योऽश्वः आश्रिक इत्यादौ तद्धितान्न तेन रूपेणोपस्थितिरिति न तत्र कारकाणामन्वय इति, एतद्भाष्यप्रामाण्यात् । अत एव हिरुगादियोगे न कर्मादिसञ्ज्ञा । एतेन 'देवदत्तेन शत्योऽश्व' इत्यादौ षष्ठीनिवृत्त्यर्थं कृद्ग्रहणमित्यपास्तम् । 'अधिका खारी द्रोणेने'त्यत्र हेतौ तृतीया, क्रियायोगाऽभावात् । कतुः कर्तृत्वाऽभावे जनकत्वरूपहेतुत्वसत्त्वात् । धातोश्च द्वये प्रत्ययास्तिङः कृतश्च । तत्र तिङ्योगे न लोकेति निषेधात्कृद्योग एव भविष्यतीति किं तेन? । न लोकेति सूत्रे कृदव्ययस्यैव ग्रहणं तु अव्ययार्थस्य ये कर्तृकर्मणी इति व्याख्यानेन सिद्धम् । उभयप्राप्तावित्यत्र बहुव्रीहिस्तु एकाचोद्वे इत्यादाविवान्यपदार्थस्याऽशाब्दत्वेऽपि व्याख्यानाद्भविष्यति । न च 'भेदिका देवदत्तस्य काष्ठाना'मित्यादौ गुणभूते णिच्प्रकृत्यर्थकर्तरि षष्ठ्यर्थं करोतीति कृदिति कर्तृपरन्तदिति वाच्यम् । तृतीयावत्तत्र षष्ठ्या अपि विनैव यत्नं सिद्धेरिति प्रश्नः । **तद्धिते इति** ।

कृतपूर्वी कटम् ॥

ष्यति, तस्मात्किं कृद्ग्रहणेनेति प्रश्नः। **कृतपूर्वी कटमिति**। अत्र करोतिक्रियापेक्षमनभिहितं कर्मत्वं कटस्याऽस्त्येवेति षष्ठी स्यात्। तद्धिताधिक्ये तु सा मा भूदित्येदर्थं कृद्ग्रहणमिति भावः। ननु कृतः कटः पूर्वमनेनेत्यस्मिन् विग्रहे क्तस्य कर्मणि विधानात्तेनैवाभिहितं कर्मेति नैव द्वितीया प्राप्नोति, नापि तदपवादभूता षष्ठी, इहाप्यनभिहिताधिकारात्। किञ्च कृतशब्दस्य कटसापेक्षतया समासो दुर्लभ एव, एवं तद्धितोऽपीति चेत्। अत्राहुः—पूर्वं कृतमनेनेति विग्रहे अविवक्षितकर्मतया भावे क्तप्रत्यये कृते कृतशब्दस्य कटसापेक्षत्वाऽभावात्समासतद्धितौ भवत एव। तथाच 'कृतपूर्वं यं पूर्वं कृतवान्' इत्यनेन समासार्थः सम्पद्यते, गुणभूतयापि क्रियया कारकाणां संबन्धस्य कटं कृतवानित्यादौ दर्शनादत्रापि करोतिक्रियापेक्षं कर्मत्वं कटस्याभ्युपगम्यते। तच्च कर्मत्वं न केनाप्यभिहितम्। भावे क्तस्य, कर्तरि इनिप्रत्ययस्य च विधानात्। अतोऽसति कृद्ग्रहणे षष्ठी स्यादेवेति। एवं च 'ओदनस्य पाचकतम' इत्यत्र षष्ठ्या असाधुत्वे इष्टापत्तिरेव शरणम्। 'कृतपूर्वी'त्यत्र समासतद्धितौ भवत एवेत्युक्तम्। तत्र समासः 'सुप्सुपा' इति बोध्यः। तद्धितस्तु 'पूर्वादिनिः' 'सपू-

---

तद्धितान्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रियायाः कर्त्तरि कर्मणि च माभूदित्यर्थः। उदाहरणे सकर्मकप्रकृतिकभावक्तान्तस्येदृशवृत्तिमात्रविषयताया भाष्यसम्मतत्वेन तस्य केवलस्य काप्यप्रयोगेण तद्धितान्तसमुदायशक्त्यैव क्रियोपस्थापकत्वात्। कृद्ग्रहणात्कृदन्तशक्तिग्रहप्रयोज्योपस्थितिविषयक्रियाकर्तृकर्मणोर्ग्रहणम्। न चात्र तथा। 'तण्डुलानां पाचकतर' इत्यादौ च पाचकादेः पृथक् प्रयोगेण तच्छक्तिग्रहस्यापि सत्त्वेन कृदन्तशक्तिग्रहप्रयोज्योपस्थितिविषयत्वं क्रियाया अस्त्येवेति भवत्येव षष्ठी। अत एव 'तद्धिते मा भू'दित्येवोक्तं न तु तद्धिताधिक्येपीति। भाष्येऽपि—'तद्धितस्य ये कर्तृकर्मणी तत्र माभूत्कृतो ये कर्तृकर्मणी तत्रैव यथा स्या'दित्येवोक्तम्। **कृतपूर्वीति**। अत्र कर्मविशेषस्य तत्तद्रूपेण प्रागन्वयाऽविवक्षयाऽकर्मकत्वाद्भावे क्ते पूर्वादिनिरिति तद्धितः। तदनन्तरं तु विशेषरूपेण कर्मयोगो भवत्येव। तत्रोक्तरीत्या षष्ठ्यभावेऽनभिहितत्वाद्द्वितीया। एवंरीत्या साधुत्वेऽत्रत्यभाष्यमेव मानम्। वृत्तेः पूर्वं कर्मान्वयाऽभावाच्च सापेक्षत्वाद्वृत्तिर्न स्यादिति न शङ्क्यम्। एवमधीती व्याकरणे इत्यादावपि बोद्धव्यम्। तदुक्तं भाष्ये—'यदा वाक्यं न तदा प्रत्ययः, यदा प्रत्ययः सामान्येन तदा वृत्ति''रिति। **न तदा प्रत्ययः**—न तदा भावे प्रत्ययः। धातोः सकर्मकत्वात्। **यदा प्रत्ययः**। 'भावे'इति शेषः। तदा वृत्तिरेव, सा च वृत्तिर्न कदापि कर्मक्तान्तेनेत्याह—**सामान्येनेति**। कर्मविशेषस्य तत्तद्रूपेण प्रागन्वयाऽविवक्षाविशिष्टो योऽर्थः तदर्थकधातुप्रकृतिकक्तान्तेनेत्यर्थः। इयमेव कर्मणोऽविवक्षा नाम। अनेन तादृशक्तान्तस्य वाक्ये न प्रयोग इति स्पष्टमेवोक्तं। प्रयोगानुरोधिनी हि विवक्षेति तद्भावः। न चाऽविवक्षितकर्मतया भावे क्तसाधनयत्नो व्यर्थः, नपुंसके भावे इत्यनेन

**उभयप्राप्तौ कर्मणि** ।२।३।६६। उभयोः प्राप्तिर्यस्मिन्कृति तत्र कर्मण्येव षष्ठी स्यात् । आश्चर्यो गवां दोहोऽगोपेन ॥ * **स्त्रीप्रत्यययोरकाऽकारयोर्नायं**

---

र्वाच्च' इति कर्तरि इनिः । तद्विधौ 'श्राद्धमनेन' इति सूत्रादनेनेत्यनुवृत्तेः । स्यादेतत्—भिदेर्ण्यन्तात् 'पर्यायार्हणोत्पत्तिषु' इति ण्वुचि 'भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठाना'-मित्युभाभ्यामप्यनेन कृद्योगषष्ठी जायते,तत्र मुख्याऽमुख्यसन्निधौ मुख्यस्यैव कार्यं सम्प्रत्ययात् प्रयोजककर्तृवाचकादेव स्यात् । अन्यथा 'पाचयत्योदनं देवदत्तेन यज्ञदत्त' इत्यत्र प्रयोज्यप्रयोजकयोरुभयोरपि लकारवाच्यत्वे उभाभ्यामपि कर्तृवाचकाभ्यां प्रथमा स्यात् । मैवं । प्रयोज्यप्रयोजकवाचकाभ्यां भेदेन षष्ठी जायते न त्वेकैवेति नेह मुख्यामुख्य-न्यायप्रवृत्तिः । तत्र तु लकारस्यैकत्वात् कर्तुस्तद्वाच्यत्वकल्पनायामुक्तन्यायः प्रवर्तत इति वैषम्यात् । एवं च ओदनः पाच्यते देवदत्तेन यज्ञदत्तेनेत्यादावुभाभ्यामपि तृतीया स्यादेवेति बोध्यम् । अत्र व्याचक्षते—'तदर्हम्' इति निर्देशात् 'कर्तृकर्मणोः कृति' इत्येतदनित्यम् । तथा च 'धायैरामोदमुत्तमम्' इति भट्टिप्रयोगः सङ्गच्छत इति ।

**उभयप्राप्तौ** । कृतीत्यनुवर्तते । तेनान्यपदार्थत्वाद्बहुव्रीहिरित्याह—**उभयोः प्राप्तिर्यस्मिन्निति** । उभयशब्देन कर्तृकर्मणी परामृश्येते । तेनैकस्मिन् कृति कर्तृ-कर्मणोः प्राप्तिलाभादाश्चर्यमिदमोदनस्य पाको ब्राह्मणानां च प्रादुर्भाव इत्यत्र नायं नियमः प्रवर्तते । तत्पुरुषे तु स्यादेवाऽत्रातिप्रसङ्ग इति भावः । पूर्वसूत्रेणैव सिद्धे नियमार्थमिदमिति ध्वनयति—**कर्मण्येवेति** । एवं च कर्तरि षष्ठीप्रतिषेधोऽस्य सूत्रस्य फलं, न तु कर्मणि षष्ठीविधानमिति स्थितम् । **स्त्रीप्रत्यययोरिति** । 'स्त्रियां क्तिन्' इत्यधिकारे विहितयोरित्यर्थः ।

**नायं नियम इति** । अकाकारयोः प्रयोगे कर्मण्येव षष्ठी न तु कर्तरीति यो नियम

---

सकर्मकेभ्योऽपि सिद्धेरिति वाच्यम् । तस्याप्यकर्मकेभ्य एवेष्टेः । अत्र चेदमेव भाष्यं मानम् । 'ददैर्दुःखस्य मादृग्भ्यो धायैरामोदमुत्तमम् । लिम्पैरिव तनोर्वातैश्चेतयः स्याज्ज्वलो न क' इति भट्टिपद्यम् । मादृग्भ्यो दुःखं ददद्भिरुत्तममामोदं पुष्पादीनां गृहीत्वा मादृशान्दत्तस्य दुःखस्य पोषकैर्मादृशां शरीरं लिम्पद्भिरिव वातैः को मादृक् विरहाग्निव्याप्तश्चेतयन् ज्वलः—ज्वलन्निव न स्यादिति तदर्थः । दाधातोः पोषणार्थाद्धाञश्च 'ददातिदधात्यो'रिति शणौ । लिम्पेः शः, ज्वलेर्णः इति जयमङ्गलाश्लोकव्याख्याप्येतज्जातीयैव तत्रेति दिक् । तत्र 'धायैरामोदमुत्तम'मित्यत्र 'गृहीत्वे'त्यध्याहृत्य तद्योगे द्वितीया बोद्धव्या । **उभयोः प्राप्तिर्यस्मिन्निति** । तेनैकनिमित्तत्वलाभादोदनस्य पाको ब्राह्मणानाञ्च प्रादुर्भाव इत्यादौ विभिन्नक्रियाकर्तृकर्मणोः षष्ठीप्राप्तौ नायं नियम इति भावः । प्राप्तिपदेन चोभयोः प्रयोग एवायं निषेध इति ध्वनितम् । **स्त्रीप्रत्यययोरिति** । स्त्रियां क्तिनित्यधिकार-

नियमः ॥ भेदिका बिभित्सा वा रुद्रस्य जगतः ॥

* **शेषे विभाषा** ॥ स्त्रीप्रत्यय इत्येके। विचित्रा जगतः कृतिर्हरेर्हरिणा वा। केचिदविशेषेण विभाषामिच्छन्ति। शब्दानामनुशासनमाचार्येणाऽऽचार्यस्य वा।

**क्तस्य च वर्तमाने** ।२।३।६७। वर्तमानार्थस्य क्तस्य योगे षष्ठी स्यात्। 'न लोके'ति निषेधस्यापवादः। राज्ञां मतो बुद्धः पूजितो वा ॥ **अधिकरणवाचिनश्च** ।२।३।६८। क्तस्य योगे षष्ठी स्यात्। इदमेषामासितं शयितं गतं भुक्तं

---

उक्तः स न प्रवर्तते, किन्तु कर्तर्यपि षष्ठी प्रवर्तत इति फलितोऽर्थः। कथं तर्हि 'सुट्तिथोः' इति सूत्रे 'सुटा सीयुटो बाधो न' इति वृत्तिः। अत्राहुः—कर्तुः करणत्वविवक्षया तृतीया बोध्येति। **भेदिकेति**। भेदनं भेदिका। 'पर्यायार्हर्णोत्पत्तिषु' इति ण्वुच्। 'धात्वर्थनिर्देशे ण्वुल् वक्तव्यः' इत्यनेन ण्वुलित्येके। 'युवोरनाकौ'। स्त्रियां टापि 'प्रत्ययस्थात्—' इति इत्वम्। **विभित्सेति**। भेत्तुमिच्छा। भिदेः सनि 'हलन्ताच्च' इति कित्त्वाद्गुणाऽभावः। 'अ प्रत्ययात्' इत्यकारप्रत्यये टाप्। **शेषे इति**। अकाऽकाराभ्यामन्यस्मिन् क्तिनादावित्यर्थः। कर्तरि षष्ठीनिषेधफलकस्य 'उभयप्राप्तौ' इति सूत्रस्य तत्रैव कर्तरि षष्ठीसम्पादनफलकस्य 'स्त्रीप्रत्यययोरकाकारयोः' इति वचनस्य च प्राक् स्थितत्वात् कर्तर्येव विभाषा अनेन शेषवचनेन क्रियते, न तु कर्मणीत्याशयेनोदाहरति—**जगतः कृतिर्हरेर्हरिणा वेति**। **अविशेषेणेति**। अकाऽकारभिन्ने कृन्मात्रे इत्यर्थः। **अनुशासनमिति**। अनुशिष्यते असाधुशब्देभ्यः प्रविभज्य बोध्यते येनेति करणे ल्युट्।

**राज्ञां मत इत्यादि**। 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तः। 'पूजितो यः सुरासुरैः' इत्यादौ तु भूते क्तो, न तु वर्तमाने। तेन तृतीया तत्रोपपद्यते। न च 'मतिबुद्धि—' इति सूत्रेण भूते क्तस्य बाधः शङ्क्यः। 'तेन' इत्यधिकारे 'उपज्ञाते' इति लिङ्गनाऽबाधज्ञापनात्। **अधिकरण**। अयमपि निषेधापवादः। **आसितमिति**। आस्यते अस्मिन्नित्यासितं, 'क्तोऽधिकरणे च—' इत्यधिकरणे क्तः। **इदमेषामिति**।

---

विहितयोरित्यर्थः। **नायं नियम इति**। तेनोभयत्रापि षष्ठी भवत्येवेति भावः। **भेदिकेति**। धात्वर्थनिर्देशे ण्वुल्। सन्नन्ताद्भिदेरप्रत्ययादित्यकारप्रत्ययः। **शेष इति**। नियमस्यायं विकल्प इत्येके। इत्येतल्लब्धमर्थं स्पष्टप्रतिपत्तये आह—**केचिदिति**। अकाऽकारभिन्ने कृन्मात्रे इत्यर्थः। **अनुशासनमिति**। अनुशिष्यन्तेऽसाधुभ्यो विविच्य बोद्ध्यन्ते येनेति करणे ल्युट्। **मत इत्यादौ** मतिबुद्धीति वर्तमाने क्तः। **इदमेषामिति**। कर्तरि षष्ठी। सकर्मकेभ्यस्त्वधिकरणे क्ते कर्तृकर्मणो-

वा ॥ **न लोकाव्ययनिष्ठाखलर्थतृनाम्** ।२।३।६९। एषां प्रयोगे षष्ठी न स्यात् । लादेशाः—कुर्वन् कुर्वाणो वा सृष्टिं हरिः। उः–हरिं दिदृक्षुः । अलंकरिष्णुर्वा। उक । दैत्यान् घातुको हरिः ॥ ॐ **कमेरनिषेधः** ॥ लक्ष्म्याः कामुको हरिः । अव्ययम् । जगत् सृष्ट्वा । सुखं कर्तुम् । निष्ठा । विष्णुना हता दैत्याः । दैत्यान् हतवान्

---

कर्तरि षष्ठीयम् । सकर्मकेभ्यस्त्वधिकरणे क्ते कृते कर्तृकर्मणोर्द्वयोरपि षष्ठी, अनभिहितत्वाऽविशेषात् । इदमेषां भुक्तमोदनस्य । 'उभयप्राप्तौ कर्मणि' इत्ययं नियमस्तु नेह प्रवर्तते, 'कर्तृकर्मणोः कृति' इत्यनन्तरस्या एव षष्ठ्यास्तन्नियमाभ्युपगमात् । एतच्च कौस्तुभे स्पष्टम् । **न लोका** । जिघृक्षितरूपविनाशप्रसङ्गात् तृनामित्यत्र णत्वं न कृतम् । उश्च उकश्च ऊकौ, लश्च ऊकौ चेति विग्रहः । ल इति लडादीनां सामान्यग्रहणं, तेषां च साक्षात्प्रयोगो न सम्भवतीति तदादेशा गृह्यन्त इत्याह-**लादेशा इति** । उदाह्रियन्त इति शेषः । कटं कारयाञ्चकारेत्यत्र कृत्सञ्ज्ञकलिडन्तामन्तेन योगेऽपि कटस्य 'कर्तृकर्मणोः कृति' इति षष्ठी न भवति, 'आमः' इति लुकोऽपि लादेशत्वादित्याहुः । नन्वेवमपि 'वज्रिर्वज्रं पपिः सोमं ददिर्गाः' इत्यत्र 'न लोका–' इति निषेधाऽप्रवृत्तेः षष्ठी दुर्वारैव, न हि किकिनौ लकारौ, नापि तदादेशौ । नैष दोषः । 'किकिनौ लिट् च' इत्यनेन लिट्कार्यातिदेशः क्रियते, न तु लिट्सञ्ज्ञा । तथा च विशेषातिदेशे च सामान्यमप्यतिदिश्यत इति नानुपपत्तिः । **दिदृक्षुरिति** । 'सनाशंसभिक्ष उः' । उकारेण कृतो विशेषणात्तदन्तमपि लभ्यत इत्याशयेनाह–**अलङ्करिष्णुरिति** । 'अलङ्कृञ्निराकृञ्–' इत्यादिना इष्णुच् । **घातुक इति** । 'लषपते'त्यादिना उकञ् । **ईषत्कर इति** ।

---

द्वयोरपि षष्ठी–'इदमेषां भुक्तमोदनस्य' । उभयप्राप्ताविति तु मध्येऽपवादन्यायेन कर्तृकर्मणोरित्यस्यैव नियम इति बोद्धव्यम् ॥

**न लोका** । **लादेशा इति** । लकारसम्बन्धिन इत्यर्थः तेन ददिर्गा इति सिद्धम् । केवलल्स्य क्वापि प्रयोगाऽभावादेवं व्याख्यातं । **कुर्वन्निति** । तृन्प्रत्याहारघटकस्तु नायम् । तृशब्दस्य तद्घटकत्वेऽपि शतुस्तद्घटकत्वाऽभावात् । लिडादेशकस्वादियोगे लिट्सदृशकिकिनोर्योगे च निषेधार्थन्तस्यावश्यकत्वाच्च । **उ इति** । उकारेण व्याख्यानात्तदन्तविधिः । व्यपदेशिवद्भावेनोकारस्यापि । सनाशंसेति अलङ्कृञिति च उइष्णुचौ । **घातुक इति** । 'लषपतपदे'त्युकञ् , वृद्धिस्तत्वम् । **कमेरिति** । 'उकान्तस्ये'ति शेषः । इदञ्च भाषायामेव, भाषायामिति भाष्योक्तेः । **निष्ठेति** । एतदपवादतया भाष्ये वार्तिकं पठ्यते–"**नपुंसके भावे क्तस्य योगे षष्ठ्या उपसंख्यानं, छात्रस्य हसित**"-मिति । इदञ्च प्रतिपदोक्तत्वात् नपुंसके भावे क्त इति सूत्रविहितक्तान्तयोग एव । अत एव 'भ्रान्तन्देव'-

---

१ स्वत्वञ्च स्वस्थानिकादेशत्व, स्वप्रतियोगिकसादृश्यपत्योभयसम्बन्धेन ।

विष्णुः । खलर्थः । ईषत्करः प्रपञ्चो हरिणा । 'तृ'न्निति प्रत्याहारः 'शतृशानचा'-विति 'तृ'शब्दादारभ्याऽऽतृनो नकारात् । शानन् । सोमं पवमानः । चानश् । आत्मानं मण्डयमानः । शतृ । वेदमधीयन् । तृन् । कर्ता लोकान् ॥ ॐ द्विषः शतुर्वा । मुरस्य मुरं वा द्विषन् ॥ सर्वोऽयं कारकषष्ठ्याः प्रतिषेधः ॥ शेषे षष्ठी तु स्यादेव । ब्राह्मणस्य कुर्वन् । नरकस्य जिष्णुः ॥ अकेनोर्भविष्यदाधम-

---

'ईषद्दुस्सुषु—' इत्यादिना खल् । अर्थग्रहणादीषत्पानः सोमो भवतेत्यप्युदाहार्यम् । अव्याप्तिं परिहर्तुमाह-**प्रत्याहार इति । पवमान इति** । 'पूङ्यजोः शानन्' । **मण्डयमान इति** । 'मडि भूषायाम्' । इदित्त्वान्नुम् 'ताच्छील्यवयोवचन—' इति चानश् ।

**अधीयन्निति** । 'इङ्धार्योः' इति शता । शाननादिषु 'लटः' इत्यननुवृत्त्या लादेश इत्यसिद्धेः प्रत्याहारग्रहणमाश्रीयत इति भावः ।

**तृन्निति** । तच्छीलादिषु 'तृन्'इति विहितस्तृन् प्रत्ययः । तृन्निति प्रत्याहारग्रहणान्नित्यं निषेधे प्राप्ते विकल्पमाह-**द्विष इति** । 'द्विष अप्रीतौ' इत्यस्मात् 'द्विषोऽमित्रे' इति विहितो यः शतृप्रत्ययस्तत्प्रयोगे वा षष्ठीनिषेध इत्यर्थः । **सर्वोऽयमिति** । 'अनन्तरस्य—' इति न्यायादिति शेषः । **शेषे षष्ठी त्विति** । शाब्दबोधे वैलक्षण्यमस्तीति भावः । एवं चाश्चर्यो गवां दोहोऽगोपेनेत्यत्र शेषत्वविवक्षायां कर्तर्यपि षष्ठी भवत्येवेति बोध्यम् । **अकेनोः** । आधमर्ण्ये अकस्याऽसम्भवादाह—**भविष्यत्यकस्येति** । इनस्तु उभयोः सम्भवादाह—**भविष्यदाधमर्ण्यार्थेनश्च योग इति** ।

---

मित्यादौ गत्यर्थाऽकर्मकेत्यनेन क्ते, नानेन षष्ठी । नपुंसके भावे क्तस्तु नात्र, तस्याप्यकर्मकेभ्य एवेष्टेः । अविवक्षितकर्मतयाऽकर्मकत्वेन क्तस्तु कृतपूर्वीत्यादिवृत्तिविषय एवेत्युक्तम् । एवंचेहाऽहेः सुप्तमित्यादौ परत्वेन क्तोऽधिकरणेचेत्यनेन भावे क्ते शेषत्वविवक्षयैव षष्ठीसाधनस्याऽवश्यकत्वेनेदं शेषत्वविवक्षया भाष्ये प्रत्याख्यातम् । वार्तिकेन चाऽनेन कारकषष्ठीनिषेधविषये शेषत्वविवक्षा नेति ज्ञाप्यते, शेषत्वविवक्षया भाष्योक्ततत्प्रत्याख्याने तु अनभिधानात् क्तातिरिक्तविषये न सा । पूरणगुणेति सूत्रे भाष्ये ध्वनितमिदं, तत्र हि—"सति किमुदाहरणं, ब्राह्मणस्य कुर्वन्, नैतदस्ति, कारकषष्ठीनिषेधात्, शेषषष्ठ्या तु ब्राह्मणस्य कटमित्यर्थेनाऽसामर्थ्या" दित्याद्यर्थकमुक्तमिति परे । **अधीयन्निति** । 'इङ्धार्योः शत्रकृच्छ्रिणी'ति शता । **द्विषन्निति** । द्विषोऽमित्र इति शता । **शेषषष्ठी त्विति** । इदं चिन्त्यमित्युक्तं परैः ।

**अकेनो** । अत्र यथासंख्यं नेष्यते । अकस्याऽऽधमर्ण्येऽसंभवादाह—**भविष्यत्यकस्येति** । 'वर्षशतस्य पूरक' इत्यादौ, एतत्कर्मकयाजनकर्तार इत्यर्थके 'ऽङ्ग यजतां लप्स्यन्ते ऽस्य याजका' इत्यादौ च षष्ठी भवत्येव । कर्तृमात्रार्थके ण्वुल्तृचाविति ण्वुलि पदान्तरसंबन्धेन भविष्यत्त्वप्रतीतावप्यकस्य तत्राऽवृत्तेः । तुमुन्ण्वुलाविति ण्वुल् तु भविष्यतीत्यधिकृत्य विधानाद्भविष्यदर्थक एवेति

र्ण्ययोः ।२।३।७०। भविष्यत्यकस्य, भविष्यदाधमर्ण्यार्थेनश्च योगे षष्ठी न स्यात्। सतः पालकोऽवतरति । व्रजं गामी। शतं दायी ॥ **कृत्यानां कर्तरि वा** ।२।३।७१। षष्ठी वा स्यात्। मया मम वा सेव्यो हरिः। कर्तरीति किम्?। गेयो माणवकः साम्नाम् । 'भव्यगेये'ति कर्तरि यद्विधानादनभिहितं कर्म । अत्र योगो विभज्यते ॥ **कृत्यानाम्** ।। उभयप्राप्ताविति, नेति चानुवर्तते । तेन

---

यथासंख्यं तु न भवति । भाष्ये 'अकस्य भविष्यति' 'इन आधमर्ण्ये च' इति योगं विभज्य व्याख्यानात्। इह भविष्यदिति स्वर्यते, तेन 'भविष्यति गम्यादयः' इत्यधिकारे विहितः 'तुमुन्ण्वुलौ–' इति ण्वुलेव गृह्यत इत्याशयेनोदाहरति—**सतः पालक इति**। सत इति शत्रन्तम्। यस्तु कालसामान्ये 'ण्वुल्तृचौ–' इति ण्वुलकस्तत्र न निषेधः, ओदनस्य पाचकः, पुत्रपौत्राणां दर्शक इतीति भावः। **व्रजं गामीति**। 'आवश्यकाधमर्ण्ययोर्णिनिः' इत्यावश्यके णिनिः। यद्यप्ययं कालसामान्ये विहितस्तथापि 'भविष्यति गम्यादयः' इत्युक्तेर्भविष्यदर्थकः। गम्यादयः केचिदुणादयः, केचिद्दृष्टाध्यायीगता इति हरदत्तः। ननु 'गत्यर्थकर्मणि चतुर्थी च' इत्येव सिद्धे द्वितीयाग्रहणमपवादविषयेऽपि द्वितीयाप्रवृत्त्यर्थमिति व्रजंगामीति सिध्यत्येवेति चेत्, अत्राहुः– इहैव सूत्रे ग्रामगन्मीति भाष्योदाहरणात्तत्सूत्रं नाङ्गीक्रियते। तेन ग्रामस्य गन्तेति षष्ठ्येव साध्वी, न तु ग्रामं गन्तेति द्वितीयेति।

**शतं दायीति** । आवश्यके'त्याधमर्ण्ये णिनिः। भविष्यदाधमर्ण्यार्थेनश्च योग इत्युक्तत्वान्नेह निषेधः। अवश्यं करोत्यवश्यंकारी कटस्य। गम्यादित्वाऽभावाद्वर्तमानेऽप्ययम्। **कृत्यानाम्**। 'कर्तृकर्मणोः–' इति नित्ये प्राप्ते विभाषेयम्। **सेव्य इति**। 'षेवृ सेवायाम्', 'ऋहलोः–' इति कर्मणि ण्यत्। **योगो विभज्यत इति**।

---

भावः। **व्रजङ्गमीति**। 'गमेरिनि'रित्यौणादिक इनिः। स च भविष्यति, 'भविष्यति गम्यादय' इत्युक्तेः। 'गामी'ति पाठे बाहुलकाद्वृद्धिः। **शतन्दायीति**। आवश्यकाधमर्ण्ययोरिति णिनिः। आवश्यके णिनावप्ययं निषेधः, सूत्रे आधमर्ण्यपदेन तत्सूत्रोक्तार्थोपलक्षणात्।' अत एवांऽशंहारीति निर्देशः संगच्छते। तत्र हि आवश्यके णिनिः। न च तत्र भविष्यदर्थकत्वेन सिद्धिः, भूतवर्त्तमानयोरावश्यकत्वबोधनस्य वैफल्येन भविष्यत एव ततो बोधादिति वाच्यम्। वस्तुतो भविष्यतो बोधेऽपि तत्त्वेनाऽबोधात्, णिनेस्तदर्थकत्वाऽभावाच्च। अत एवावश्यंकारी कटस्येति वृत्त्युदाहृतं सङ्गच्छते। तत्र हि नाऽनेन णिनिः। अवश्यंपदोपादानात्, किं तु सुप्यजातावित्येवेति नव्याः। **कृत्यानाम्**। कर्तृकर्मणोरिति नित्ये प्राप्ते विभाषा। कर्मनिवृत्त्यर्थं कर्तृग्रहणम्। **अनुवर्त्तत इति**। निषेधोऽयं कर्तरि कर्मणि च। कर्तरि वेति त्वनुभयप्राप्तिविषयमिति वृत्तिकैयटादयः।

नेतव्या व्रजं गावः कृष्णेन । ततः—**कर्तरि वा** ॥ उक्तोऽर्थः ॥ **तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्** ।२।३।७२। तुल्यार्थैर्योगे तृतीया वा स्यात्पक्षे षष्ठी । तुल्यः सदृशः समो वा कृष्णस्य कृष्णेन वा । अतुलोपमाभ्यां किम् ? । तुला उपमा वा कृष्णस्य नास्ति ॥ **चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः** ।२।३।७३। एतदर्थैर्योगे चतुर्थी वा स्यात्पक्षे षष्ठी आशिषि । आयुष्यं चिरंजीवितं कृष्णाय कृष्णस्य वा भूयात् । एवं मद्रं भद्रं कुशलं निरामयं सुखं शम् अर्थः प्रयोजनं हितं पथ्यं वा भूयात् । आशिषि किम् । देवदत्तस्यायुष्यमस्ति । व्याख्यानात्सर्वत्राऽर्थग्रहणम् । मद्रभद्रयोः पर्यायत्वादन्यतरो न पठनीयः । इति षष्ठी ॥

---

भाष्यकारैरिति शेषः । 'उभयप्राप्तौ' इत्यनेन कर्तरि निषेधे सिद्धे कर्मणि निषेधार्थमिदम् । 'गुणकर्मणि वेष्यते' इति तूभयप्राप्तिरहितस्थले नेताऽश्वस्येत्यादौ चरितार्थमिति दिक् । **तुल्यार्थैः** । शेषषष्ठ्यां प्राप्तायां विकल्पेन तृतीया अनेन विधीयते, तया मुक्ते षष्ठ्येव भवेत्तदाह–**पक्षे षष्ठीति** । बहुवचननिर्देशादेव पर्यायग्रहणे सिद्धे 'तुल्यार्थैः' इत्यर्थग्रहणं पदान्तरनैरपेक्ष्येण ये तुल्यार्थास्तेषां ग्रहणार्थं, तेन गौरिव गवय इत्यादौ नेत्याहुः । कथं तर्हि 'तुलां यदारोहति दन्तवाससा' इति कालिदासः, 'स्फुटोपमं भूतिसितेन शम्भुना' इति माघश्च । उच्यते–'सहयुक्तेऽप्रधाने' इति तृतीया । न चात्र सहशब्दयोगो नेति शङ्क्यम्, विनापि तद्योगं तृतीयेत्यभ्युपगमात् । वेति वर्तमानेऽन्यतरस्याङ्ग्रहणमुत्तरसूत्रे चकारेण स्वस्यानुकर्षणार्थम् । अन्यथा हि तृतीयैवानुकृष्येत, संनिहितत्वात् । **तुल्य इति** । तुलया संमितस्तुल्यः । 'नौवयोधर्म–' इत्यादिना यत् । **तुला उपमा वेति** । तोलनं तुला । अस्मिन्नेव सूत्रे णिलुगङोर्निपातनात्साधुरिति माधवः । उपमितिरुपमा । 'आतश्चोपसर्गे' इत्यङ् । **हितमिति** । 'हितयोगे च' इत्यनाशिषि चरितार्थमित्याशिष्ययं विकल्प इति भावः । **व्याख्यानादिति** । सूत्रेऽर्थ-

---

'व्रज'मित्यत्र 'गुणकर्मणि वेष्यत' इति विकल्पस्तु न, कृत्यातिरिक्ते चरितार्थस्य तस्य 'दोग्धव्या गावः पयः कृष्णेने'त्यादौ गुणकर्मण उक्तत्वात् प्रधाने चरितार्थेनाऽनेन परत्वाद्बाधात् । **तुल्यार्थैर्योगइति** । तुल्यत्वार्थैरित्यर्थः । अत एवाऽतुलोपमाभ्यामिति चरितार्थम् । अत एव पर्युदासादनव्यययोगएवेदं, तेनेवशब्दयोगे न । **चतुर्थी चाशिषि** । आशीर्विषयक्रियान्वय्यर्थकात् प्रातिपदिकात्तद्वारके आयुष्यादियोगे चतुर्थीषष्ठ्यावित्यर्थः । अत एवैतदर्थकचतुर्थ्यान्तेन सुखहितादिभिर्न समासः । उभयोरपि क्रियान्वयेन परस्परमसामर्थ्यात् । अत एव हि तेन चतुर्थीसमासविधानं तद्योगे चतुर्थीज्ञापकमित्याकरोक्तं सङ्गच्छते । यत्तु वृत्तावुद्देश्यविधेयभावेनाऽनन्वयादाशीर्विषये च तथा:

**आधारोऽधिकरणम्** ।१।४।४५। कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणसंज्ञं स्यात् ॥ **सप्तम्यधिकरणे च** ।२।३।३६। अधिकरणे सप्तमी स्यात् । चकाराद्दूरान्तिकार्थेभ्यः । औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा । कटे आस्ते । स्थाल्यां पचति । मोक्षे इच्छाऽस्ति । सर्वस्मिन्नात्माऽस्ति । वनस्य दूरे अन्तिके वा । 'दूरान्तिकार्थेभ्यः'—इति विभक्तित्रयेण सह चतस्रोऽत्र

---

शब्दोऽपि पृथङ् निमित्तं, तथा च द्वन्द्व एवाऽयं न त्वर्थशब्देन बहुव्रीहिरिति भावः ।

इति षष्ठी ।

**आधारः** । आध्रियतेऽस्मिन्नित्याधारः । 'अध्यायन्याय-' इति सूत्रे 'अवहाराधार-' इत्युपसंख्यानादधिकरणे घञ् । स चाधारः कस्येत्याकाङ्क्षायां कारकाधिकारात्क्रियाया इति लभ्यते । इयं च संज्ञा साक्षात् क्रियाधारयोर्न संभवति, पराभ्यां कर्तृकर्मसंज्ञाभ्यां बाधितत्वात् । अतो व्याचष्टे—**कर्तृकर्मद्वारेति** । एवं च 'भूतले घट' इत्यादौ अस्तीति क्रियाध्याहारो बोध्यः । **त्रिधेति** । एतच्च 'संहितायाम्' इति सूत्रे भाष्ये स्पष्टम् । नद्यामास्त इत्याद्यर्थं सामीपिकमधिकरणं चतुर्थमपि केचिदिच्छन्ति । **कटे आस्त इति** । कर्तृद्वारा क्रियाधारस्योदाहरणमिदम्, कर्मद्वारा क्रियाधारस्य तु—**स्थाल्यां पचतीति** । वैषयिकाधारमुदाहरति—**मोक्षे इच्छास्तीति** । अभिव्यापकस्य तु—**सर्वस्मिन्निति** । तिलेषु तैलमित्याद्यप्यभिव्यापकस्योदाहरणमाहुः ।

---

ऽन्वयान्न समास इति, तन्न, वृत्तावपि [प्राप्ता२]प्राप्तत्वादिपर्यालोचनेन लोहितोष्णीषाइत्यादौ तथान्वयदर्शनात् । भाष्ये तथान्वये वृत्तेरसाधुताया अनुक्तेश्चेति समासवादे मञ्जूषायां विस्तरः । **व्याख्यानादिति** । सूत्रेऽर्थशब्दः पृथङ्निमित्तमिति भावः । भाष्ये तु नैतद्दृश्यते ॥ **इति षष्ठी** ॥

**आधारो** । 'कारके' इत्यधिकारात्क्रियाजनके एतत्प्रवृत्त्योपस्थितत्वादाधारः क्रियाया एव । तत्रेप्सिततमस्वतन्त्रपदाभ्यां साक्षात्क्रियाधारयोः कर्मकर्तृसञ्ज्ञाभ्यां बाधात्परम्परया तदाश्रयस्य ग्रहणं, परम्परा च कर्तृकर्मद्वारिकैव व्याख्यानादित्याह— **कर्तृकर्मद्वारेति** । यद्यपि कालस्य साक्षात्क्रियापरिच्छेदकत्वं, तथापि तदधिकरणं कर्तृकर्मद्वारैव, तथैवानुभवात् । साक्षात्तदाधारत्वेऽपि [आधारपदे] स्वरितत्वप्रतिज्ञानात्परम्पराधारस्य ग्रहणम् । किंच साक्षात्तदाधारत्वे कर्तृत्वमेव तस्य स्यात्कालः पचति भूतानीतिवत् । एवंच क्रियान्वयोऽप्यस्य कर्त्राद्यन्वयद्वारैव, यस्य यद्द्वारा कारकत्वन्तस्य तद्द्वारैव क्रियान्वय इति व्युत्पत्तेः, अत एवाक्षशौण्ड इत्यादौ समासः । अत्र आसत्त्यादिक्रियान्तर्भावेण बोधाननुभवात्क्रियाद्वारा सामर्थ्यमिति कैयटाद्युक्तं न युक्तम् । 'मूले वृक्षः कपिसंयोगी'-त्यादावस्तिक्रियामध्याहृत्य तस्याः स्वकर्तृकपिसंयोगिवृक्षद्वारा मूलवृत्तित्वादाधारत्वं, विशिष्टवृक्षस्य मूलवृत्तित्वबोधेऽन्यत्राऽवयवे तद्विशिष्टवृक्षाऽभावप्रतीतेः । कपिसंयोगे तदवच्छेद्यत्वं फलतीति दिक् । **चकारादिति** । 'प्रातिपदिकार्थे' इति शेषः । **त्रिधेति** । तत्र सकलावयवव्याप्त्यै

विभक्तयः फलिताः ॥ ❀ **क्तस्येन्विषयस्य कर्मण्युपसङ्ख्यानम्** ॥ अधीती व्याकरणे। अधीतमनेनेति विग्रहे 'इष्टादिभ्यश्चे'ति कर्तरीनिः ॥ ❀ **साध्वसाधुप्रयोगे च** ॥ साधुः कृष्णो मातरि । असाधुर्मातुले ॥

❀ **निमित्तात्कर्मयोगे** ॥ निमित्तमिह फलम्। योगः संयोगसमवायात्मकः ॥

---

**चतस्र इति**। प्रातिपदिकार्थमात्र इत्यर्थः। 'दूरान्तिकार्थेभ्यः—'इत्यस्येहाऽनुवर्तनादधिकरणेऽप्येते बोध्याः। **क्तस्येन्विषयस्येति**। इन् इन्नन्तः शब्दो विषयो वर्तनभूमिर्यस्य क्तान्तस्य तस्येत्यर्थः। अन्ये त्वाहुः—इनो विषय इति षष्ठीसमासः । विषयशब्देनेह प्रकृतिरुच्यते । क्तान्तस्येनः प्रकृतित्वादिति। **अधीती व्याकरणे इति**। भावे क्तप्रत्यये तत 'इष्टादिभ्यश्च' इति कर्तरीनौ कृते पश्चाद्गुणभूतक्रियया सम्बध्यमानं व्याकरणमनभिहितं कर्मेति कृतपूर्वी कटमितिवद्द्वितीयाऽत्र प्राप्ता। मासमधीती व्याकरणे इत्यादौ त्वकर्मकैर्धातुभिर्योगे निमित्तस्य कालकर्मणो बहिरङ्गत्वादिहाऽग्रहणमिति सप्तम्यभावः। न चैवं तत्र द्वितीयापि न स्यादिति वाच्यम्। लक्ष्यानुरोधेन द्वितीयाविधाने व्यक्तिपक्षाश्रयणात्। एतच्च कौस्तुभे स्थितम्। **साध्वसाधुप्रयोगे च**। यत्राऽर्चा न विवक्षिता, किं तु तत्त्वकथनमात्रं, तत्रापि सप्तम्यर्थं वार्तिकेऽस्मिन् साधुग्रहणं, साधुर्भृत्यो राज्ञीत्यादि यथा। 'साधुनिपुणाभ्याम्' इति सूत्रे साधुग्रहणं त्वर्चायां विवक्षितायां प्रतियोगे सप्तमीनिवृत्त्यर्थमिति विवेकः। **निमित्तमिह फलमिति**। यदि

---

व्यापकाधारत्वम्। यथा 'तिलेषु तैलम्'। इदमेव मुख्यमधिकरणमिति स्वरितेनेत्यत्र साधकतममित्यत्र च भाष्ये स्पष्टम्। उपसमीपे श्लेषः सम्बन्धस्तत्कृतमौपश्लेषिकम्। अत एवेको यणचीत्यादावौपश्लेषिके आधारे सप्तम्युक्ता संहितायामिति सूत्रे भाष्ये। तत्राऽजादिसामीप्यमेवेगादीनां, यन्मासेऽतिक्रान्ते दीयते तस्य मास औपश्लेषिकमधिकरणमित्युक्तं। 'तत्र च दीयते' इति सूत्रे भाष्ये' 'तदस्मिन्नधिक'मिति सूत्रे च भाष्ये स्पष्टमिदम्। कटे आस्ते इति तु नौपश्लेषिकोदाहरणं युक्तम्, उक्तभाष्यविरोधात्। यद्वैकदेशावच्छेदेन श्लेषेऽपि श्लेषस्य समीपमुपश्लेषं तत्कृतमिति व्युत्पत्त्यौपश्लेषिकत्वमित्यभिप्रायेण तदुदाहरणं। तदेतत् सर्वं गौणमधिकरणं, 'गङ्गायाङ्गाव' इत्यादिकंचेति स्वरितेनेत्यादौ भाष्ये स्पष्टम्। गौणोऽप्याधारादिः सप्तम्यादिशक्य एवेति बोद्धम्। एतदतिरिक्तं सर्वं वैषयिकम्। अधिकरणत्वशक्तिमांश्चाऽधिकरणविभक्त्यर्थः। **इन्विषयस्येति**। इनो विषयस्य इन्प्रकृतेः क्तान्तस्य कर्मणीत्यर्थः। तेन 'कृतपूर्वी कट'मित्यत्र उदाहरणे न कर्मणिक्तः, अभिहितत्वेन सप्तम्यनापत्तेः, 'किन्तु भावे इष्टादिभ्यश्चेति। तत्र हि श्राद्धमनेनेत्यतोऽनेनेति वर्त्तते। अत्र कर्मशब्देन कालादिव्यतिरिक्तमेव गृह्यते, व्याख्यानात्, तेन 'मासमधीती व्याकरणे' इत्यत्र नेति कैयटः। **साध्वसाधु**। शेषषष्ठ्यपवादोऽयं, साधुनिपुणाभ्यामित्येव सिद्धेऽनर्चार्थमत्र साधुग्रहणन्तेन

चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥१॥

हेतौ तृतीयाऽत्र प्राप्ता तन्निवारणार्थमिदम् । **सीमाऽण्डकोशः** । पुष्कलको गन्धमृगः । योगविशेषे किम् ? वेतनेन धान्यं लुनाति ॥ **यस्य च भावेन भावलक्षणम्** ।२।३।३७। यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी स्यात् ।

---

तु कारणमित्युच्येत तर्हि जाड्येन बद्ध इत्यादावतिप्रसङ्गः स्यादिति भावः । **चर्मणीति** । चर्मद्वीप्यादीनां समवायः सम्बन्धः । **हेतौ तृतीयेति** । तादर्थ्ये चतुर्थ्यपि बोध्यम् । **सीमाऽण्डकोश इति** । तथा च मेदिनीकारः–'सीमा घाटस्थिति-क्षेत्रेष्वण्डकोशेषु च स्त्रियाम्' इति । 'अथ पुष्कलको गन्धमृगे क्षपणकीलयोः' इति च । हरदत्तस्तु–'पुष्कलकः शङ्कुः, सीम्नि सीमज्ञानार्थं हतो निहतः निखात' इत्याह । अस्मिंस्तु पक्षे सीमपुष्कलयोः संयोगसम्बन्धः । **यस्य च** । निर्ज्ञातकाला हि क्रिया अनिर्ज्ञातकालायाः क्रियायाः कालपरिच्छेदकत्वाल्लक्षणं, तत्र प्रसिद्धक्रियाश्रययोः कर्तृ-कर्मणोर्वाचकाद्ब्राह्मणादिशब्दाल्लक्ष्यलक्षणभावसम्बन्धे षष्ठ्यां प्राप्तायामियं सप्तमी । लक्षकत्वमिह क्रियायाः साक्षात्, आश्रयस्य तु ब्राह्मणादेः क्रियाद्वारेणेति बोध्यम् । 'ब्राह्मणेष्वधीयानेषु गत' इति कर्तर्युदाहरणम् ।

---

तत्त्वकथने ऽपि भवति । सूत्रेऽर्चाग्रहणन्तु निपुणार्थम् । **निमित्तादिति** । निमित्तवाचकात् सप्तमी भवति, तस्य निमित्तस्य प्रत्यासत्त्या स्वान्वयिक्रियाकर्मणा योग इत्यर्थः । निमित्तञ्चाऽत्र क्रिया-फलम् । एवञ्च फलं सप्तम्यर्थः । **चर्मणीति** । **चर्मणः** फलत्वञ्च हननस्य तल्लोभेच्छाधीनत्वात् । कर्मसम्बन्धश्च स्वरूपसन्नेव निमित्तम् । द्वीपिचर्मणोरण्डकोशमृगयोश्च समवाय इतरयोः संयोगः । 'मुक्ताफलाय करिणं रघुवीरे'त्यादौ क्रियार्थोपपदस्येति चतुर्थी । घ्नन्तीति शेषः। मुक्ताफलान्याहर्तुमित्यर्थः।

**यस्य च भा** । **भावः**–क्रिया । **ततः**। ज्ञापकक्रियाश्रयवाचकात् । तेन गोपदुह्यमानपदयोरुभयोरपि सप्तमी सिद्धा । **क्रियाश्रयः**–कर्ता कर्म च । तत्र 'ब्राह्मणेष्वधीयानेषु गत' इति कर्त्तर्युदाहरणं, कर्मण्याह–**गोष्विति** । तत्र काचित् क्रिया स्वाधारकालेनान्यां क्रियां परिच्छिनत्ति, यथा प्रकृते । काचित्तु स्वाधारकालाव्यवहितपूर्वकालेन, यथा गोषु धोक्ष्यमाणास्वित्यादौ । काचित्स्वाधारकालान्तरकालेन, यथा–गोषु दुग्धास्वित्यादौ । ज्ञापकत्वं सप्तम्यर्थः । तस्य च भावलक्षणमित्युक्तेः क्रियायामेवान्वयः । लक्ष्यलक्षणभावः शब्दबोद्धय एवैतच्छास्त्रप्रवृत्तौ निमित्तं, न तु तस्य भूयोदर्शनादिरूपमानान्तरेण ग्रहणापेक्षेति बोद्धव्यम् । अन्यथोदिते आदित्ये तमो नष्टमित्यादावेव स्यान्न तु प्रकृते । कदाचिद्धि गोषु दुह्यमानास्वसौ गतः । इदञ्च यत्र मानान्तरेण ज्ञातस्वरूपस्यार्थस्य कालविशेषादिज्ञापनार्थं शब्द-प्रयोगस्तत्रैव प्रवर्त्तते, भाष्यस्वरसात् । 'राहूपरागे स्नाया'दित्यत्र राहूपरागपदेन तदाश्रयकाल उच्यते

गोषु दुह्यमानासु गतः ॥ ॐ अर्हाणां कर्तृत्वेऽनर्हाणामकर्तृत्वे तद्वैपरीत्ये च ॥ सत्सु तरत्सु असन्त आसते । असत्सु तिष्ठत्सु सन्तस्तरन्ति । सत्सु तिष्ठत्सु असन्तस्तरन्ति । असत्सु तरत्सु सन्तस्तिष्ठन्ति ॥ **षष्ठी चानादरे** ।२।३।३८। अनादराधिक्ये भावलक्षणे षष्ठीसप्तम्यौ स्तः । रुदति रुदतो वा प्राव्राजीत् । रुदन्तं

---

कर्मण्याह—**गोष्विति** । **अर्हाणामित्यादि** । यस्यां क्रियायां ये उचितास्ते अर्हाः । तेषां कर्तृत्वे विवक्षिते सति तत्र सप्तमी वाच्या । तथा यस्यां क्रियायां येषां कर्तृत्वमनुचितं तेषामकर्तृत्वे विवक्षिते च सप्तमी वाच्या । तथा तद्वैपरीत्ये येषां कर्तृत्वमुचितं तेषामकर्तृत्वे येषां तु नोचितं तेषां कर्तृत्वे च सप्तमी वाच्येत्यर्थः । आद्यमुदाहरति—**सत्सु तरत्स्विति** । सन्तो हि तरणक्रियाऽर्हाः कर्तारश्च । द्वितीयमुदाहरति—**असत्सु तिष्ठत्स्विति** । अत्र तरणक्रियायामसतामनर्हत्वमकर्तृत्वं च तिष्ठत्स्वित्यनेन प्रतीयते । तद्वैपरीत्ये प्रथममुदाहरति—**सत्सु तिष्ठत्स्विति** । सतां हि तरणमुचितं, तेषां चाकर्तृत्वं तिष्ठत्स्वित्यनेन द्योत्यते । द्वितीयमुदाहरति—**असत्सु तरत्स्विति** । असतां हि तरणमनुचितं, तेषां च कर्तृत्वं तरत्सु इत्यनेन गम्यते । यद्यपीदं 'यस्य च भावेन—' इत्येव सिद्धं, तथापि लक्ष्यलक्षणभावाऽविवक्षायां सप्तम्यर्थमिदमिति कैयटादयः । तत्त्वतस्तु व्यर्थमेवेदमित्यन्ये । **षष्ठी चानादरे** । **अनादर इति** । 'यस्य च भावेन' इत्यनेन सप्तमी । अनादरे सति यो भावं लक्षयतीति । तदेतत्फलितमाह—**अनादराधिक्य इति** । केवलभावलक्षणे सप्तम्येव, अनादराधिक्ये तु षष्ठी-

---

इति अधिकरणसप्तम्येव । 'विवाहे नान्दीमुखङ्कुर्या'दित्यत्र विवाहपदेन तत्प्राक्काल उच्यते । 'गवान्दोहे आगत' इत्यत्राप्यधिकरणसप्तम्येवेत्यन्यत्र विस्तरः । **अर्हाणाम्**—कर्तृत्वार्हाणाम् । **तद्वैपरीत्ये**—अर्हाणामकर्तृत्वेऽनर्हाणाञ्च कर्तृत्वे इत्यर्थः । वाक्यचतुष्टयमेतत् । कर्तृसमर्पकाच्च सप्तमीत्यर्थः । सप्तम्यान्तदन्वयिक्रियावाचकाद्धातोरप्रथमासामानाधिकरण्याच्छतृशानचावेव । लक्ष्यलक्षणभावाऽविवक्षार्थमिदम् । **सत्स्विति** । सन्तो हि तरणक्रियाकर्तृत्वार्हाः। तरणक्रियाकर्तृसत्सम्बन्धि असत्कर्तृकमासनमिति बोधः । स्वक्रियाधिकरणकालवृत्तित्वं सम्बन्धः। **असत्स्विति** । तरणक्रियाकर्तृत्वानर्हाणान्तदकर्तृत्वमत्र । यद्यपि स्थितिक्रिताकर्तृत्वार्हत्वेनेदं सिद्धं, तथाप्यसतान्तरणक्रियानर्हत्वादिकमपि बोधविषय इति भावः । **सत्स्विति** । तरणक्रियाकर्तृत्वाऽर्हाणान्तदकर्तृत्वमत्र । **असत्स्विति** । तरणकर्तृत्वानर्हाणान्तत्कर्तृत्वमत्र ॥

**षष्ठी चा** । अनादरइति विषयसप्तमी, यस्य च भावेनेत्याद्यनुवर्तते । अनादरे गम्यमाने सति यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी षष्ठी चेत्यर्थः । फलितमाह,—**अनादराधिक्यइति** । लक्ष्यलक्षणभावः षष्ठ्यर्थः । अनादरविशिष्टं प्रव्रजनन्धात्वर्थः । तत्र षष्ठी तात्पर्यग्राहिका । अनादरश्च

पुत्रादिकमनादृत्य संन्यस्तवानित्यर्थः॥

**स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च** ।२।३।३९। एतैः सप्तभिर्योगे षष्ठीसप्तम्यौ स्तः। षष्ठ्यामेव प्राप्तायां पाक्षिकसप्तम्यर्थं वचनम्। गवां गोषु वा स्वामी। गवां गोषु वा प्रसूतः। गा एवानुभवितुं जात इत्यर्थः॥ **आयुक्तकुशलाभ्यां चासेवायाम्** ।२।३।४०। आभ्यां योगे षष्ठीसप्तम्यौ स्तस्तात्पर्येऽर्थे। आयुक्तो—व्यापारितः। आयुक्तः कुशलो वा हरिपूजने हरिपूजनस्य वा। आसेवायां किम्। आयुक्तो गौः शकटे। ईषद्युक्त इत्यर्थः॥ **यतश्च निर्धारणम्** ।२।३।४१। जातिगुणक्रियासञ्ज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणं यतस्ततः षष्ठीसप्तम्यौ स्तः। नृणां नृषु वा ब्राह्मणः श्रेष्ठः। गवां गोषु वा कृष्णा बहुक्षीरा। गच्छतां

---

सप्तम्याविति निष्कर्षः। **स्वामीश्वर**। 'स्वाम्यर्थे'ति वक्तव्ये स्वाम्यादित्रयग्रहणं पर्यायान्तरनिवृत्त्यर्थम्। 'विरूपाणामपि समानार्थानाम्' इत्येकशेषोऽत्र न भवति, स्वरूपपरत्वेन समानार्थकत्वाऽभावात्। **दायाद इति**। दायमादत्ते इति दायादः। सोपसर्गाद्द्म्यादन्तादत एव निपातनात्कः। 'गवां गोषु वा दायाद' इत्यत्र यद्यपि गवास्मित्येतत्समुदायस्य विशेषणं, तथापि दीयतेऽसौ दाय इति व्युत्पत्त्या अवयवार्थभूतमंशं स्पृशत्येव, तथा चात्र गवात्मकस्यांऽशस्य आदातेति फलितोऽर्थः। **पञ्चमी विभक्ते। भेद एवेति**। न तु शब्दान्तरोपात्तसामान्याक्रान्ततेति भावः। **तत्र पञ्चमी स्यादिति**। नन्वेवं 'माथुरा इत्यत्रापि पञ्चमी स्यात्। मैवम्, पूर्वसूत्रमिहानुवर्तते। तेन यतो निर्धार्यते तत एवेत्यर्थात् निर्धारणावधेरेव पञ्चमीप्रवृत्तेः। अनभिहिताधिकारान्माथुरा

---

प्रत्यासत्त्या पुत्रादिविषयक एवेति भावः। **स्वामीश्वरा**। शब्दपरत्वाद्विरूपाणामपीति नैकशेषः। पर्यायान्तरसङ्ग्रहापत्त्या स्वाम्यर्थेति नोक्तम्। दीयते इति व्युत्पत्त्या दीयमानांऽशरूपं दायमादत्ते इति सोपसर्गाद्द्म्यादन्तादत एव निपातनात्कः। गवादिकञ्च दीयमानेऽन्वेति। नित्यसाकाङ्क्षत्वाद्वृत्तिः। **दायादशब्दः** स्वामिपर्याय इत्यन्ये। **षष्ठ्यामेवेति**। शेषे षष्ठीत्यनेनेति भावः। **तात्पर्ये इति**। 'आसेवा'पदस्य तत्र रूढेरिति भावः। तात्पर्यञ्च तदेकव्यापारता। आयुक्तयोगेऽधिकरणत्वविवक्षायां सप्तमीप्राप्तौ सम्बन्धविवक्षायामत्र, कुशलयोगे च षष्ठीप्राप्तौ वचनम्। **यतश्च**। **जातिगुणक्रियासञ्ज्ञाभिरिति**।' विशिष्टस्येत्यध्याहारः। तद्विशिष्टस्य एकदेशस्य यतः स्वघटितसमुदायात्स्वेतरसमुदायघटकव्यावृत्तधर्मकरणकं पृथक्करणन्तद्वाचकात् षष्ठीत्यर्थः। यत इति किम्?। यस्य जात्यादिविशिष्टस्य स्वेतरव्यावृत्तधर्मवत्त्वबोधनन्तत एव माभूत्। षष्ठ्यपवादत्ववत् प्रथमापवादत्वस्यापि सम्भवात्। स्वघटितसमुदायावधिकस्वेतरसमुदायघटकव्यावृत्तधर्मकरणकपृथक्करणरूपनिर्धारणविषयत्वरूपोऽवधावधिभावरूपश्च सम्बन्धो विभक्त्यर्थः। नृसमुदायावधिकद्विजेतरनरव्यावृत्तधर्म-

गच्छत्सु वा धावन् शीघ्रः । छात्राणां छात्रेषु वा मैत्रः पटुः ॥ **पञ्चमी विभक्ते** ।२।३।४२। विभागो विभक्तम् । निर्धार्यमाणस्य यत्र भेद एव तत्र पञ्चमी स्यात् । माथुराः पाटलिपुत्रकेभ्य आढ्यतराः ॥ **साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः** ।२।३।४३। आभ्यां योगे सप्तमी स्यादर्चायां न तु प्रतेः प्रयोगे । मातरि साधुर्निपुणो वा । अर्चायां किम् ? । निपुणो राज्ञो भृत्यः । इह तत्त्वकथने तात्पर्यम् ॥ ***अप्रत्यादिभिरिति वक्तव्यम्** ॥ साधुर्निपुणो वा मातरं प्रति पर्यनु वा ॥ **प्रसितोत्सुकाभ्यां तृतीया च** ।२।३।४४। आभ्यां योगे तृतीया स्याच्चात्सप्तमी ।

---

इत्यत्र नातिप्रसङ्ग इत्यन्ये । **माथुरा इति** । न ह्यत्र निर्धारणावधेर्निर्धार्यमाणस्य च गवां कृष्णेत्यादाविव सामान्यविशेषभावोऽस्ति, किन्तु शब्दोपात्तयोर्धर्मयोर्विरोध एव । इदं च सूत्रं बुद्धिपरिकल्पितापायमाश्रित्यापादानप्रकरणे भाष्ये प्रत्याख्यातम् ।

**साधुनिपुणाभ्यामर्चायां** । 'पुण कर्मणि शुभे' अस्मान्निपूर्वादिगुपधलक्षणः कः । 'अर्च पूजायाम्' अस्माद्भौवादिकात् 'गुरोश्च हलः' इत्यप्रत्यये टाप् । चौरादिकात्तु 'ण्यासश्रन्थ–' इति युच्यर्चनेति स्यात् । **निपुणो राज्ञ इति** । साधुशब्दप्रयोगे त्वर्चां विना सप्तमी भवत्येव, 'साध्वसाधुप्रयोगे च' इति वार्तिकात् । **अप्रत्यादिभिरिति** । 'लक्षणेत्थम्–' इति सूत्रोपात्ताः प्रत्यादयः ।

**प्रसितोत्सुकाभ्यां** । 'तत्परे प्रसितासक्तौ' इत्यमरः । उत्सुकसाहचर्यात् प्रसितोऽपि तत्पर एवेह गृह्यते, रूढ्या च । तेन प्रकर्षेण सितः शुक्ल इत्यर्थे न भवति ।

---

त्वकरणकपृथक्करणरूपनिर्धारणविषयो नृसमुदायावयवो द्विजः श्रेष्ठ इति बोधः । संसर्गघटककरणञ्च श्रेष्ठत्वादिरूपमेव, प्रत्यासत्तेः । अत एव न निर्धारण इतिसूत्रबोधितं निर्धारणस्य विभक्त्यर्थत्वं सङ्गच्छते । उद्भूतावयवभेदविवक्षया नृणामिति बहुवचनम् । तिरोहितावयवभेदविवक्षया निर्धारणविषये एकवचनन्त्वसाध्विति कारके इति सूत्रे भाष्ये स्पष्टं । तत्र हि निर्धारणे कारकेष्विति ब्रूयादित्युक्तम् । 'मिदचोऽन्त्या' दित्यादौ तु सौत्रो निर्देश इति तदाशयः । 'द्वन्द्वः सामासिकस्य चे'त्यत्र समाससमूहमध्ये इत्यर्थः । समूहेर्थे 'ऽचित्ते' ति ठक् । **पञ्चमी वि** । 'यतश्च निर्धारण'मित्यनुवर्तते । **विभागोऽत्र** भेदः । तत्र निर्धारणे (सर्वत्र) यथाकथञ्चिद्भेदस्य सत्त्वेन विभक्तग्रहणसामर्थ्यात् यत्र भेद एव न तु केनाप्युपात्तरूपेणाऽभेदस्तत्रैव प्रवृत्तिरित्याह–**भेद एवेति** । अत्र पञ्चम्यर्थो निर्धारणविषयत्वरूप एव । पाटलिपुत्रकावधिकनिर्धारणविषया माथुरा आढ्यतरा इति बोधः । एवञ्च त्रितयोपादानएव निर्धारणप्रतीतिरिति पुरुषोत्तम इत्यादौ सम्बन्धसामान्ये षष्ठी उत्तमनिरूपितेति समाससिद्धिरिति तरप्सूत्रे कैयटः । **साधुनि** । निपूर्वात् 'पुण कर्मणि शुभे' इत्यत इगुपधलक्षणः कः । अर्चतेश्च भौवादिकाद्गुरोश्च हल इत्यप्रत्ययः । अर्चा । चौरादिकात्तु ण्यासश्रन्थेति युच

प्रसित उत्सुको वा हरिणा हरौ वा ॥ **नक्षत्रे च लुपि** ।२।३।४५। नक्षत्रे प्रकृत्यर्थे यो लुप्सञ्ज्ञया लुप्यमानस्य प्रत्ययस्यार्थस्तत्र वर्तमानात्तृतीयासप्तम्यौ स्तोऽधिकरणे। 'मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत्' । मूले श्रवणे इति वा । लुपि किम् । पुष्ये शनिः ॥ **सप्तमीपञ्चम्यौ कारकमध्ये** २।३।७। शक्तिद्वयमध्ये यौ कालाऽध्वानौ ताभ्यामेते स्तः । अद्य भुक्त्वाऽयं द्व्यहे द्व्यहाद्वा भोक्ता । कर्तृशक्त्योर्मध्येऽयं कालः । इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत् । कर्तृकर्मशक्त्योर्मध्येऽयं देशः । अधिकशब्देन योगे सप्तमीपञ्चम्याविष्येते । 'तदस्मिन्नधिक'मिति 'यस्मादधिक'मिति च सूत्रनिर्देशात् । लोके लोकाद्वाऽधिको हरिः ॥ **अधिरीश्वरे** ।१।४।९७। स्वस्वामिभावसंम्बन्धेऽधिः कर्मप्रवचनीयसंज्ञः स्यात् ॥ **यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी** ।२।३।९। अत्र कर्मप्रवचनीययुक्ते सप्तमी स्यात् । उप परार्धे

---

**नक्षत्रे च लुपि** । लुप्शब्दोऽत्रार्थविशेषे लाक्षणिक इत्याशयेनाह—**यो लुप्संज्ञयेत्यादि** । **अधिकरण इति** । एतच्च 'सप्तम्यधिकरणे च' इत्यतो मण्डूकप्लुत्यानुवर्तत इति भावः । अधिकरणे किम्, मूलं प्रतीक्षते, मूलाय स्पृहयति । **मूलेनेति** । 'नक्षत्रेण युक्तः कालः' इत्यणो 'लुबविशेषे' इति लुप् । नक्षत्र इति किम् ?। पञ्चालेषु तिष्ठति । इह 'जनपदे लुप्' इति लुप् । **सप्तमीपञ्चम्यौ** ।'कालाध्वनोरत्यन्तसंयोगे' इत्यतः कालाध्वनोरित्यनुवर्तते, तच्च पञ्चम्या विपरिणम्यते, तदाह—**यौ कालाध्वानौ ताभ्यामिति** । इह कालाध्वभ्यां विभक्त्योर्यथासंख्यं न भवत्यस्वरितत्वात् । **अद्य भुक्त्वाऽयमिति** । नन्वत्र कर्ता एक एव, तत्कथं कारकयोर्मध्ये कालः । सत्यम् । नात्र शक्त्याश्रयं द्रव्यं कारकमिति व्यवह्रियते, किंतु शक्तिरेव । सा च कालभेदाद्भिद्यत एव । एका हि अद्य भुजेः साधनम्, अपरा द्व्यहेऽतीते भुजेस्तदेतद्याचष्टे—**कर्तृशक्त्योर्मध्येऽयं काल इति** । **यस्मादधिकम्** । **उप परार्ध इति** ।

---

स्यात् । षष्ठ्यपवादोऽयम् । **अप्रत्यादिभिरिति** । 'लक्षणेत्थ'मिति सूत्रोपात्ताः प्रत्यादयः । **नक्षत्रे च** । 'लुप्'शब्देन लुप्सञ्ज्ञया लुप्तप्रत्ययार्थो लक्ष्यते इति बोद्धव्यम् । अधिकरणे किम् । अद्य पुष्यः । असत्यान्तदनुवृत्तावन्तरङ्गत्वात्प्रातिपदिकार्थे एव स्यात् । **मूलेनेति** । 'नक्षत्रेण युक्तः काल' इत्यणो 'लुबविशेष'इति लुप् । नक्षत्रे किम् ?। पञ्चालेषु तिष्ठन्ति । 'जनपदे लु'विति लुप् । **सप्तमीपञ्चम्यौ** । कालाध्वनोरित्यतस्तदनुवर्तते, तच्च पञ्चम्या विपरिणम्यते, मध्यस्यावधिद्वयसापेक्षतया द्विवचनान्तेन समासः । बोधस्तु शक्तित्वेन शक्तिद्वयस्य, न तु द्वित्वेनेति बोद्धव्यम् । ननु कर्तृरूपस्य कारकस्यैकत्वाद्भेदनिबन्धनमध्यव्यपदेशाऽसम्भवो ऽत आह—**शक्तिद्वयमध्ये याविति** । कर्तृत्वादिशक्तिरेव कारकम् । सा च क्रियाभेदेन भिन्नेति भावः । यद्यप्यवध्यवधिमतोस्साजात्यनियमान्न कालाध्वानौ

हरेर्गुणाः। परार्धादधिका इत्यर्थः। ऐश्वर्ये तु स्वस्वामिभ्यां पर्यायेण सप्तमी। अधि भुवि रामः। अधि रामे भूः। 'सप्तमी शौण्डै'रिति समासपक्षे तु रामाधीना। 'अषडक्षे'त्यादिना खः॥ **विभाषा कृञि**।१।४।९८। अधिः करोतौ प्राक्सञ्ज्ञो वा स्यादीश्वरेऽर्थे। यदत्र मामधिकरिष्यति। विनियोक्ष्यत इत्यर्थः। इह विनियोक्तुरीश्वरत्वं गम्यते। अगतित्वात् 'तिङि चोदात्तवती'ति निघातो न॥ **इति सप्तमी**॥

**॥ इति सिद्धान्तकौमुद्यां कारकप्रकरणम् ॥**

'उपोऽधिके चे'त्यनेन 'उपे'त्यस्य कर्मप्रवचनीयसंज्ञा। 'यस्य चेश्वरवचन'मित्यस्य तन्त्रादिना अर्थद्वयं विवक्षितम्। तथा हि यस्येत्यनेन स्वं निर्दिश्यते, यस्य स्वस्य संवन्धी ईश्वर उच्यते ततः सप्तमीति व्याख्याने स्ववाचकात् सप्तमीत्येकोऽर्थः। 'ईश्वर'-शब्दो भावप्रधानः। यन्निष्ठमीश्वरत्वमुच्यते ततः सप्तमीति व्याख्याने स्वामिवाचकात् सप्तमीत्यपरः। एवं स्थिते फलितमाह—**स्वस्वामिभ्यां पर्यायेणेति**। अन्यतरस्मादुत्पन्नयैव सप्तम्या इतरनिष्ठसंबन्धस्याप्युक्तत्वाद्युगपदुभाभ्यां न सप्तमी स्यादिति भावः। **रामाधीनेति**। विभक्त्यर्थेऽव्ययीभावे त्वधिरामम्। **यदत्रेति**। यो मामधिकरिष्यति विनियोक्ष्यते तस्य मद्विनियोक्तुरीश्वरत्व गम्यते इत्यर्थः। **तिङिचोदात्तेति**। उदात्तवति तिङि परे गतिर्निहन्यत इति सूत्रार्थः। अत्र करिष्यतीति तिङन्त उदात्तवान्, 'तिङ्ङतिङः' इति निघातस्य 'निपातैर्यद्यदि'इत्यादिना निषेधात्। **निघातो नेति**। मामिति द्वितीया तु 'कर्मणि द्वितीया' इत्यनेनैव सिध्यतीति भावः। **इति सप्तमी**।

**॥ इतिविभक्त्यर्थाः। इति तत्त्वबोधिन्यां कारकप्रकरणम् ॥**

कारकमध्ये सम्भवतस्तथापि शक्तिशब्देन तदाधारकालादिग्रहणान्न दोषः। षष्ठ्यपवादोऽयम्। स्वानन्तरकालवृत्तित्वादिकं विभक्त्यर्थः। शक्तिद्वयमध्यवर्तित्वन्तु-वस्तुसन्निमित्तम्। **अधिकशब्देनेति**। कर्त्तरि क्तप्रत्ययान्ताऽध्यारूढशब्दार्थकाऽधिकशब्दयोगे लोकशब्दात् षष्ठ्याम्प्राप्तायाञ्ज्ञापकादिमे इष्यते इत्यर्थः। 'तदस्मिन्नधिक'मितिसूत्रे भाष्ये तु उपश्लिष्टपदाध्याहारेणौपश्लेषिकेऽधिकरणे सप्तमीत्युक्तम्। कर्मणि क्तप्रत्ययान्ताऽध्यारूढशब्दार्थकाऽधिकयोगे तु 'अधिको लोको हरिणे'ति प्रथमैव। **उपपरार्द्धे इति**। 'उपोधिके चे'ति कर्मप्रवचनीयत्वम्। ननु मामुद्दिश्य विनियोक्ष्यत इत्यर्थादत्र कर्मणि द्वितीयैवेति किङ्कर्मप्रवचनीयत्वेनेत्यत आह—**अगतित्वादिति**। **तिङि चेति**। उदात्तवति तिङन्ते गतिर्निहन्यत इत्यर्थः। अत्र 'तिङ्ङतिङः' इति निघातस्य 'निपातैर्यद्यदी'त्यादिना निषेधात 'करिष्यती'ति तिङन्तस्योदात्तवत्त्वमिति सर्वं सुस्थम्॥

**इति श्रीनागेशभट्टविरचिते लघुशब्देन्दुशेखरे विभक्त्यर्थाः॥**

१९०१

१ कृष्णर्धिः, उपार्च्छति, पटत्पटेति, उत्थानम्, संस्कर्ता, शिवोऽर्च्यः, एते साध्याः।
२ यूष्णः, सखा, बहुश्रेयस्याम्, उत्तरपूर्वस्यै, एते कथं सिद्ध्यन्ति ?।
३ अनड्वान्, आभ्याम्, अष्टौ, युष्माकम्, अमुमुईचः ।
४ विविट्, पुमान्, असौ, अस्माकम्, अस्मभ्यम् ।
५ गवाक्शब्दस्य क्लीबे सुपि कतिरूपाणि भवन्ति ?।
६ गार्ग्यायणी, कुण्डोध्नी, द्विदाम्नी, वत्सक्रीती। मनोः स्त्रीति विग्रहे कति रूपाणि ।

१९०२

१ प्रार्च्छतीत्यत्र प्रकृतिभावो भवति न वा? कथञ्च विसर्गप्राप्तिरुद्भाव्य निराकृता?। केन च वृद्धिरिति एतत्साधूपपादनीयम् ।
२ ईदूतौ च सप्तम्यर्थे इत्यत्रार्थग्रहणस्य किं प्रयोजनम् ?।
३ उभयशब्दस्य द्विवचनमस्ति नवेति सोपपत्तिकमुच्यताम् ।
४ व्यूढशब्दस्य सप्तम्येकवचने कति रूपाणि ? तानि च साधय ।
५ सुसख्युः, पतिना, कतयः। एतानि रूपाणि साधूनि न वेति सोपपत्तिकमुच्यताम्।
६ त्रिशब्दस्य पुंनपुंसकत्वेऽन्यपदार्थस्य स्त्रीत्वे तद्वैपरीत्ये च कीदृशानि रूपाणि भवन्ति षष्ठीबहुवचने कथञ्च तत्सिद्धिः ।
७ अष्टौ, पन्थाः, हे सुपथि, पञ्चानाम्, एते, पिपठीर्भ्याम्, युष्माकम्, इयम्, दीर्घाहो निदाघः इति प्रयोगाणां या सिद्धिः सा प्रदर्शनीया ।

१९०३

१ शिवेहि, गुरावुत्कः, तवल्कारः, कानि सन्ति एतानि सशङ्कं साधनीयानि ।
२ होतृकारः, प्रल्टकारीयति, उपेडकीयति । एतानि कथं सिद्ध्यन्ति ।
३ उ इति, विष्णो इति, पटत्पटदिति, गोऽग्रम्, सञ्शम्भुः । एषां कथं सिद्धिः ।
४ अमुकेऽत्र, वाप्यश्वः, सुगण्पष्ठः, पुंस्कोकिलः, एतानि साधनीयानि ।
५ संस्कर्तेत्यस्याष्टोत्तरशतरूपाणि प्रदर्शनीयानि ।
६ क्रोष्टूनाम्, दन्भ्वम्, अतिस्त्रियै, प्रियतिस्रः, प्ररीणाम्, एतानि साधनीयानि ।
७ भक्तस्तव रूपं ध्यायति, सेदुषः, सुपुमांसि, असृक्, एते कथं सिद्ध्यन्ति ?।
भक्तस्तव रूपं ध्यायति, सेदुषः, सुपुमांसि, असृक्, एते कथं सिद्ध्यन्ति ?।

८ अन्तर्वत्नी, चौरी, उपाध्यायी, सुरापीता, सूरी, शूर्पणखा एते कथं सिद्ध्यन्ति ?।

१९०४

१ तवल्कारः, पुंस्कोकिलः, आविष्कृतम्, देवा इह, एतेषां सिद्धिः कार्या ।
२ सर्वेषाम्, बहुश्रेयसि, निट्सु, अजरांसि, एते कथं सिध्यन्ति ?।
३ अनड्वान्, विश्वौहः, युष्मान्, प्रतीचः, एतेषां सिद्धिः कार्या ।
४ अमू, बहूर्ञ्जि कुलानि, गोची एते कथं सिध्यन्ति ? ।
५ बहुधीवरी, गार्ग्यायणी, वीरपत्नी, आचार्यानी, इमान् साधयत ।

१९०५

१ शिवेहि, रामकृष्णावमू आसाते, सर्पिष्टमम्, एषको रुद्रः ।
२ वर्णाश्रमेतराणाम्, अस्याम्, प्रियतिसृणि, हे वारे, परमचतुर्णाम् ।
३ प्रियष्ट्नः, सुगण्ट्सु, अमुष्याम्, विविट्, दीर्घाहाः । एते साधनीयाः ।
४ गवाक्शब्दस्य सप्तमीबहुवचने कानि रूपाणि भवन्ति ? ।
५ शूद्रशब्दस्य सूर्यशब्दस्य च स्त्रियां किं किं रूपं कथंचेत्युक्त्वा कुण्डोध्नी सहनासिकेति साध्यताम् ।

१९०६

१ सन् शम्भुः, भ्रातुः पुत्रः इति स्थितौ किं किं कथं कथञ्च तदिति निरूप्य कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठप्रयोजनमुच्यताम् ।
२ उच्चकैः, त्वकत्पितृकः, द्विपर्यन्तानां किम् ? भवान्, भवन्तौ। धुट्सु, मघवान्, विविट्, पुमान्, एतानि रूपाणि साधयत ।
३ अमुना, असृग्, चेच्छिदि, अमीषाम्, एभिः । इमानि साध्यन्ताम् ।
४ गवाक्शब्दस्य जसि कति रूपाणि ?। शतानि, प्रियतिस्रः, अतिस्त्रियः, श्रीणाम्, प्रियाष्नः, एतेषां साधुत्वं प्रदर्शनीयम् ।
५ पञ्चार्जा, पञ्च स्त्रियः, स्वका, चौरी, पुत्रका, शूर्पणखा एते प्रयोगाः साध्याः ।

१९०७

१ विश्वपाभिरित्यत्र होढ इति ढत्वम् वाप्यश्व इत्यत्र प्रगृह्यसंज्ञा च कुतो नेति नाज्झलावित्यत्र प्लुताकारस्य प्रश्लेषोऽस्ति नवेति च सप्रमाणमुपवर्णय ।
२ उत्थानम्, सन्त्सः, चतुष्करोति, भो अच्युत एतेषां साधुत्वमुपपाद्यताम् ।
३ सर्वेषाम्, हे हरे ! विश्वपः, बहुश्रेयसौ, एतानि साधयत ।

४ भ्रुट्त्सु, भ्रुक्षु, यूयम्, तक्, प्रतीचः, भान्ती, इमानि साधयत ।
५ बहुराजन्शब्दात् नागशब्दाच्च स्त्रीप्रत्यये कियन्ति कानि च रूपाणि ।
६ शर्वरी, कर्कन्धवा, दाक्षी, चन्द्रमुखी-एतानि कथं सिध्यन्ति ? ।

१९०८

१ शिवेहि, उत्थानम्, पुंस्कोकिलः, भ्रातुष्पुत्रः । एते साधनीयाः ।
२ निर्जरैः, यूष्णः, हाहान्, अतिसखिः, सुद्यावौ ।
३ अतिखट्वाय, पुनर्भूणाम्, अजरांसि, मघवान् ।
४ राजः, युवकाभ्याम्, युष्माकम्, सेदुषः । एतान्साधयत ।
५ पञ्चाजी, मामिका, दृढपत्नी, सहनासिका । एते प्रयोगाः साधनीयाः ।

१९०९

१ अज्ग्रहणानुवृत्तावपि कुमारी शेते इत्यत्र कुतो न दीर्घापादनम् ? ।
२ ब्रह्मा ऋषि, उ इति, विष्णो इति, गौरी अत्र, गो अग्रम् । आसु स्थितिषु प्राप्तिमच्छास्त्रोपन्यासपुरस्सरं सम्भावितानि रूपाणि संसाध्य दर्शनीयानि ।
३ यू किं मात्रे । अत्र ऋकारान्ते दोषदानस्याशयः प्रदर्शनीयः ।
४ अनेन, यूना, प्रियाष्ट्नः, त्वया, चतुर्णाम्, पञ्चानाम्, अतित्वाकम्, एते साध्याः ।
५ चिकीर्ष्–पिपठिस्–पुंशब्दानां सप्तमीबहुवचने, तिर्यक्, तुदत् शब्दानां क्लीबे सर्वनामस्थाने च रूपाणि साधु साधनीयानि ।
६ बहुराजे, आसुरायणी, अञ्जलिसी, स्वङ्गी, श्वश्रूः । एतेषां साधुत्वं स्पष्टमुपपादयत ।

१९१०

१ प्रत्याहारेष्वितांग्रहणं कस्मान्न ?। इत्युपपाद्य ह्रस्वग्रहणमतन्त्रमिति फक्किकांलिख ।
२ धातृ अंशः, तव लृकारः, सन् शम्भुः, पुम् कोकिलः, अहन् पतिः । एवं स्थिते प्राप्तिमच्छास्त्रोपन्यासपुरस्सरं सिद्धरूपाणां भेदान् दर्शयत ।
३ वातप्रमीसखीअतिसखिसुसखिप्रधीदुर्धीसुधीशब्दानामामि रूपं साधयत ।
४ मघवान्, पन्थाः, अष्टौ, यूयम्, विमलदिवी, एते निर्दोषं कथं सिध्यन्ति ।
५ ज्ञका, पौंस्नी, कन्या, अपरी, कुसितायी । एते साधनीयाः ।
६ नीली, स्थली, अर्याणी, कबरी, वर्तिका एते कस्मिन्नर्थे साधुतामर्हन्ति ? ।

१९११

१ विश्वपाभिरित्यत्र दत्वाद्यभावः सावकाशमनवकाशत्वपुरस्सरमुपपादनीयः ।

२ कौतस्कुतः, मुहः कामा, चतुष्कपालः, एते कथं सिद्ध्यन्ति ? ।

३ रामान्, गाः, क्लीबे–सुल्वा, श्रीणाम्, एतान्विशेषसूत्रपदर्शनपूर्वकं साधयत ।

४ मपर्यन्ताधिकारस्य प्रयोजनं साधु दर्शयत ।

५ इह अहः अहोभ्यामित्याद्यहन्शब्दविषयककौमुदीग्रन्थस्याशय आविष्करणीयः ।

६ वक्ष्यमाणा, आसुरायणी, ब्रह्माणी । समूलमेषां साधनप्रकारो वर्णनीयः ।

१९१२

१ एकारैकारयोः सावर्ण्यं कथन्न ? । समासप्रत्ययविधौ प्रतिषेधः, उगिद्वर्णग्रहण-वर्जम् । फलमेतयोः किम् ? । अतीतिनिवृत्तं कथं सङ्गच्छते ? । शिवच्छाया, चेच्छिद्यते । साधनीयावेतौ ।

२ रामाणां, सर्वेषां, सूत्रार्थमर्यादया साधय । प्रथमहल्ग्रहणस्यय सार्थक्यं सम्यक् प्रदर्शय ।

३ विभाषा दिक्समासे । अत्र बहुव्रीहिग्रहणं कथं प्रत्याख्यातम् । नचैवमप्यतिखट्वा-येत्यादि व्याख्येयम् ।

४ टे रिति सूत्रे भाधिकारफलं लिख । हे कतरत्, अतिदध्ना, हे मधो, प्रधीणाम् इमे साध्याः । युष्मान् इति साधय । 'हरो हरिश्च मे स्वामी' । अत्रादेशः कथं कृतः । असुकः अयमपि साध्यः ।

५ अजाद्युक्तिर्ङीपो ङीपश्च बाधनार्था । लापनीयैषापङ्क्तिः । गार्गी, द्वैप्या, द्विपुरुषा समा-धेया एते । कुसिदशब्दो न दीर्घमध्योऽपितु ह्रस्वमध्यः । उपपादय कथमेतत् ।

६ पाणिगृहीता, सुशोफा, श्वश्रूः, बहुयुवा, युवतिः । एतान् सूत्रं क्रोडीकृत्य वदत ।

१९१३

१ कृष्णर्धिः, स्थूलौतुः, तवौष्ठः, ब्रह्मबन्धवित्यब्रवीत्, पतञ्जलिः । एषु सन्धि ब्रूत । कस्कादिषु सर्पिष्कुण्डिकापाठफलं सम्यक् लिखत ।

२ रामाः, उभये, कृष्णः, वस्तुतस्तु प्रियत्रयाणाम्, बहुश्रेयस्यै, नियाम्, उन्न्याम्, हे भानो । एते साधनीयाः ।

३ नोभ्याम्, निर्जिभः, मत्याम्, श्रीणाम्, एतान् साधयत । प्रियास्त्रयो यस्य कुलस्य प्रियास्तिस्रो यस्य अत्र विग्रहे सौ रूपं साधुतया लिखत ।

४ श्रीपाय, वारिणे, प्रद्युने, हे धातः, हे धातृ, सुद्युभ्याम्, अस्मै, राज्ञः, युष्म-भ्यम्, प्राञ्चः, तिरश्चाम्, स्रत्, सुत् । यथाशास्त्रं साध्याः ।

५ अमूला, निःस्विका, बहुकुरुचरा, चतुर्हायर्णा, अकेशा। स्वाङ्गं कतिविधम्। अन्तर्वत्पतिवतोर्नुक्। अत्र किं निपातितम्। सर्वं सप्रत्युदाहरणं लिखत।

१९१४

१ शिवेहि। अमुकेऽत्र। सर्पिष्टमस्। चतुर्मुखः। उत्थानम्—एतानि सशङ्कं साधनीयानि।

२ संस्कर्त्तेत्यत्र कथमष्टोत्तरशतं रूपाणि भवन्ति विशदं प्रदर्शय।

३ मुहुः कामा। भोयच्युत। मनोरथः। स इत्क्षेति।

४ समासग्रहणस्य कथं नियमार्थता? कीदृशश्च नियमाकारः?। किञ्च तत्फलम्?। प्रथमहर्लिङ्क राजा।

५ मघोनः। प्रतिदीव्नः। प्रियाष्ट्नः। हे दीर्घाहो निदाघ।

६ अमूला। महाशूद्री। एकपदा। ब्रह्माणी। श्वश्रूः। युवती। एते प्रयोगाः साधनीयाः।

१९१५

१ प्रत्याहारेष्वितां ग्रहणं कस्मान्न?। एदैतोरोदौतोश्च कथं न मिथः सावर्ण्यम्?। कति यमाः?। बाह्येष्वचां प्रयत्नाः के?।

२ गव्यम्, ओयते, औयत। कृष्णर्द्धिः। पतञ्जलिः। एते विशदं व्याख्येयाः।

३ वाप्यश्वः। पदस्येति किं गम्यते। मातुः कृपा। तृढो वृढः। अजर्घा लीढः। फक्किका इमा आञ्जस्येनोपपादय।

४ सम्बुद्ध्याक्षिप्तस्याऽङ्गस्यैङ्ह्रस्वाभ्यां विशेषणान्नेह—हे कतरत् कुलेति। बहुवचने किं रामो रामस्य। राज्ञः। एते सशङ्कासमाधि वाच्याः।

५ 'द्व्येकसङ्ख्यः समासार्थो बह्वर्थे युष्मदस्मदी' इयं कारिका व्याख्येया। उदाहरणानि चास्याः प्रदर्शनीयानि।

६ विमलदिवी। अत्युच्चैसौ। पञ्चार्जी। पञ्च। चतस्रः। अनुपसर्जनात् किं शिखा।

७ पूर्वस्य किं परस्य माभूत् कटुका। इयं फक्किका व्याख्येया।

१९१६

१ गव्यम्, शिवेहि, वाग्घरिः, प्राङ्क्ष्ठः, मातुः कृपा, स उ एकाग्निः।

२ हे सुधे हे सुधि इत्यादौ न लुमतेति सूत्रस्यानित्यत्वात् पाक्षिको गुणः कथं साधितः? [illegible]

३ त्वत्कपितृकः, यूष्णः, अतिसखिः, नोभ्याम्, अजरांसि, वृत्रघ्नः, अदमुयङ्, अहोभ्याम्, एते प्रयोगाः साधु साधनीयाः ।

४ न चाऽल्लोपः स्थानिवत् इति फक्किका विशदं व्याख्यायताम् ।

५ गार्ग्यायणी, चतुर्हायणी, दंष्ट्रा, वृषली, वेर्दा । एषु विशेषकार्याणि निरूपणीयानि ।

१९१७

१ मनीषा, गवेन्द्रः, चक्रि-अत्र, उत्थानम्, तच् शिवः, एते सम्यक् साधनीयाः ।

२ संबुद्ध्याक्षिप्तस्याङ्गस्यैङ्ह्रस्वाभ्यां विशेषणान्नेहेति पङ्क्तिः सम्यग् व्याख्येया ।

३ रामाय, हाहाः, नियाम्, तुराषाट्, राजभिः, यूना, एते सम्यक् साधनीयाः ।

४ बहुयज्वा, नदी, आसुरायणी, मनायी, कद्रुः, एतान् साधयत ।

५ गवाक्शब्दस्य प्रथमैकवचने रूपाणि ब्रूत ।

१९१८

१ उपेडकीयति, पार्श्वम्, पुंस्कोकिलः, रामस्थाता, गीर्पतिः, एषु सन्धि दर्शयत ।

२ यूष्णः, अतिसखिः, निज्भ्याम्, अजरसम्, एषां सिद्धिर्निरूप्यताम् ।

३ अनड्वान्, अतिवयम्, प्रतीचः, दृक्, बेभिर्दा । एतानि साधयत ।

४ 'समस्यमाने द्व्येकत्ववाचिनी युष्मदस्मदी' इत्यादि कारिकाणामर्थं निरूप्य तत्तदुदाहरणानि स्फुटीकुरुत ।

५ अतिधीवरी, गार्ग्यायणी, मनायी, पद्धतिः, वृषली, अलाब्वा । एषु पाक्षिक-प्रयोगप्रदर्शनपूर्वकं विशेषकार्याण्युल्लिखत ।

१९१९

१ प्राल्कारीयति, सप्त ऋषीणाम्, पुंस्पुत्रः, सर्पिष्काम्यति, भो अच्युत ।

२ उभये, दतः, निच्शु, श्रीपाय, प्रद्युना एषां सिद्धिर्निरूप्यताम् ।

३ परमाष्टौ, तादृक्, स्रक्, असृक्, अत्युच्चैसौ । एतानि साधयत ।

४ ङ्याप्प्रातिपदिकादिति सूत्रे ङ्याब्ग्रहणस्य प्रयोजनं स्फुटीक्रियताम् ।

५ बहुराजे, कुण्डोध्नी, कल्माषी, शकटिः, सुरापीता एषु विशेषकार्याण्युल्लिखत ।

१९२०

१ कृष्ण ऋद्धिरिति स्थिते कीदृशानि कति रूपाणि भवन्ति ? ।

२ चतुर्मुख [illegible] ?

३ तं राघवं वन्दे अत्रानुस्वारस्य परसवर्णो भवति न वा ?। आद्ये कीदृशं रूपम् ?।
४ वासः क्षौममित्यादौ जिह्वामूलीयो भवति नवेति सयुक्ति वक्तव्यम् ।
५ तुल्यार्थकसमशब्दस्य दुःखहन्शब्दस्य च ङे विभक्तौ कीदृशं रूपम् ?।
६ वृपलस्य पत्नी । अत्रानुपपत्तिः का, तस्याः परिहारश्च कः ?
पञ्चार्जी । अत्र केनार्थेन टाबापादितः केनार्थेन च वारितः ?।
८ प्रतीचः, अदमुयङ्, अनादये कुलाय, प्ररिणे कुलाय। एते प्रयोगाः साधनीयाः ।
९ विष्ण इह, विष्णो इति, अन्तरायां पुरि । इमे प्रयोगाः साधनीयाः ।

## १९२१

१ हरौ, पत्यौ, अह्नि, लिट्त्सु, मत्यानि, एतानि साधनीयानि ।
२ अप्लुतात्किम्, एहि सुश्रोता अत्र स्नाहि । उपदेशे किम् अधोक् । विमलदिवी ।
३ श्रीपाय, वर्णाश्रमेतराणाम्, अलोपसर्वनामकार्यं कथन्न ? ।
४ उत्थानम्, कुर्वन्ति, संस्कर्ता एते साध्याः ।
५ राया, ब्रह्मणः, उपानत्, क्रौष्टारौ, गार्गी । एतेषां साधुत्वं वक्तव्यम् ।

## १९२२

१ तथेकारोकारौ, ऋकारस्त्रिंशतः । अनयोर्वाक्ययोरर्थमुक्त्वा तत्र युक्तिः प्रदर्शनीया ।
२ 'भूवादयो धातवः' इत्यस्यार्थो वर्णनीयः । पदसंज्ञाया फलञ्च प्रदर्शनीयम् ।
३ ज्ञानानीत्यादावल्लोपनलोपौ कस्मान्न ? । अचि किं कुमारी शेते इत्यादिकां पङ्क्तिं
व्याख्याय क्रोष्टुशब्दस्य सु-ङस्-ङिषु रूपाणि वक्तव्यानि ।
४ पन्थानौ, चत्वारि, प्राची, अन्तर्वत्नी, सखी, एतानि साधयत ।
५ द्व्येकसङ्ख्यः समासार्थौ बह्वर्थे युष्मदस्मदी । इति पद्यं सोदाहरणं व्याख्येयम् ।

## १९२३

१ राज्ञः, राज्ञः पुरुषः, जबगडदशेति निरर्थकः समुदायः, एषां समुदायानां प्रति-
पदिकत्वाभाव उपपादनीयः ।
२ लोमनी, ब्रह्मणः, अमुमुईचः। इत्यत्राल्लोपयणोरभाव उपपादनीयः, अन्त्ये दीर्घश्च ।
३ धातुना संयोगस्य विशेषणादिह स्यादेव यण् । इमां पङ्क्तिं व्याख्याय अस्याः
फलं वक्तव्यम् ।
४ अष्टाध्याय्यामेकस्यैव हलन्त्यमित्यस्य सत्त्वेन कौमुद्यां तद्द्वयं कस्मात् ?। फलञ्च
तस्य किम् ?।

५ अजादिभिः स्त्रीत्वस्य विशेषणे किम्फलमुक्तम्, अर्थश्च तथासति कीदृशः ? ।

६ एकाचो बशो भष् इति सूत्रे एकाच इत्यस्य धातुना वैय्यधिकरणेनान्वये किं फलमर्थश्च कः ? ।

१९२४

१ 'वृपलस्य पत्नीति व्यस्ते कथमिति चे'दितीमां पङ्क्तिं व्याख्याय 'अजादीत्युक्ति· ङींपो ङीपश्च बाधनाये'तीयं पङ्क्ति र्व्याख्येया ।

२ यदिगन्तं प्रघु इति तस्य भाषितपुंस्कत्वाभावादेतस्याः पङ्क्तेर्व्याख्यानं कृत्वा गीर्षु इत्यत्र विसर्गाभाव उपपाद्यः ।

३ विभाषा दिक्समासे बहुव्रीहावित्यत्र बहुव्रीहिग्रहणं खण्डयित्वा ज्ञातिधनवाचिनस्तु इत्यस्यार्थो वर्णनीयः, कारणञ्चात्र वक्तव्यम् ।

४ अनेहस्शब्दस्य संबुद्धौ रूपमुक्त्वा, दुःखहन्शब्दस्य ङिविभक्तौ रूपं वदन्तु ।

५ अष्टन्शब्दस्य शसि रूपमुक्त्वा राजन्शब्दस्य भ्यामि दीर्घाभावमुपपाद्यानादिशब्दस्य टाविभक्तौ रूपं वक्तव्यम् ।

१९२५

१ उत्वविधावप्लुतादिति ग्रहणाभावे तपरकरणस्य कथमसामर्थ्यमिति स्पष्टमुपपाद्य चतुर्मुख इत्यत्र कथमनुनासिकाभाव इति सशङ्कासमाधि वाच्यम् ।

२ न बहुव्रीहावित्यत्र सूत्रकारभाष्यकारयोर्मतभेदप्रदर्शनपूर्वकं निर्जर् शब्दे वृत्तिकारमतस्य भाष्यविरुद्धत्वं सम्यक् प्रतिपादय ।

३ त्रिशब्दार्थस्य पुंनपुंसकत्वेऽन्यपदार्थस्य स्त्रीत्वे तद्वैपरीत्ये च षष्ठीबहुवचने, कीदृशानि रूपाणि भवन्ति, कथञ्च तत्सिद्धिः ? ।

४ 'मघवा बहुल'मित्यत्रारम्भप्रत्याख्यानयोः फलभेदप्रदर्शनपूर्वकं 'युवावौ द्विवचने' 'त्वमावेकवचने' इति सूत्रद्वयेऽपि द्विवचनैकवचनशब्दयोरर्थपरत्वाश्रयणे किं फलमिति सम्यक् प्रदर्शय ।

५ शूद्रोपाध्यायशब्दयोः स्त्रियां किं किं रूपं भवति कथञ्च तत् । शैषिके कपि तु विकल्प एव । ताच्छीलिकेणेऽपीति वचनयोश्च किं मानम् ? ।

१९२६

१ मध्वरिः, श्रीशः, वाग्घरिः, पुना रमते—एते कथं सिद्ध्यन्ति ? ।

२ रामस्य, हरेः, रामौ, मतये, दधि, दृशाम्—सूत्राण्युपन्यस्य साधयत ।

३ धुक्, विश्वौहः, यूनः, अष्टौ एतानि विशेषकार्याणि प्रदर्श्य साधयत ।

४ अस्मै, अमुना, पुमान्, स्वाम्पि, युवतिः । एतेषां सिद्धिप्रकारो दर्शनीयः ।

५ यूयम्, पन्थाः । एतौ सशङ्कासमाधानं साधयत ।

१९२७

१ गव्यूतिः, प्रार्पभीयति, उत्थानम्, भास्करः, एष रुद्रः एतानि रूपाणि ससूत्रनिर्देशं साधयत ।

२ सर्वस्मिन्, ल्न्युः, पुनर्भूणाम्, हे वारे इति रूपाणि साधयत ।

३ तुरापाट्, मघवान्; पञ्चानाम्, युष्माकम्, असृक्, पिधानम् । विशेषसूत्राणि प्रदर्श्य इमानि साधयत ।

४ गार्ग्यायणी, वृषलपत्नी, शूर्पणखा, आवस्या, एषु द्वौ प्रयोगौ साधयत ।

५ अचि किं कुमारी शेते, ननु त्वं स्त्री इत्यनयोः शङ्कासमाधानाभिप्रायं वर्णयत ।

१९२८

१ सवर्णगुणधातुप्रातिपदिकभसंज्ञासु तिसृणां संज्ञानां विधायकानि सूत्राणि प्रदर्शनीयानि ।

२ 'ऊकालोऽज्झ्रस्वदीर्घप्लुत' इति सूत्रस्थे ऊपदे एकद्वित्रिमात्राणां क्रमेण प्रश्लिष्टनिर्देशे प्रमाणं वर्णनीयम् । अथवा अकः सवर्णे दीर्घ इति सूत्रे इको यणचीति सूत्राद्-ज्ग्रहणानुवृत्तेः प्रयोजनमुपपाद्यताम् ।

३ गो—अग्रम्, प्राङ् षष्ठः, एतद् मुरारिः, तिरस् कर्ता, मनस् रथः एतेषां मध्ये त्रिषु सम्प्रसाणं सन्धिकार्यं प्रदर्श्य सोमो गौरी अधिश्रित इत्यत्र प्रकृतिभावः, वाप्यश्व इत्यत्र तदभावश्चोपपाद्यताम् ।

४ बहुवचने झल्येदिति सूत्रे झल्ग्रहणस्य प्रयोजनं निरूप्य अनुपसर्जनसर्वशब्दस्य पुंसि उपसर्जनसर्वशब्दस्य स्त्रियां चतुर्थ्येकवचने श्रीशब्दस्य षष्ठीबहुवचने रूपाणि यथाशास्त्रं साधनीयानि ।

५ त्वां युवां युष्मान्वातिक्रान्तायेति विग्रहे सिद्धं रूपं प्रदर्श्य, अदद्यङ्, दर्दन्ति, मामिका, अभ्रलिप्ती, इत्येतेषु त्रीणि रूपाणि संसाध्य जातिलक्षणस्य सोदाहरणं व्याख्या कार्या ।

१९३०

१ कुमार्यां शेते इत्यत्र सवर्णदीर्घः कथं प्राप्नोति ? तद्वारणप्रकारश्च कः ? ।

२ शिवेहि, मनोरथः, सर्वेषाम्, सर्वस्यै, हे कतरत्कुल, अतित्वाकम्, बहूर्ञ्जि, चतुर्णाम्, द्यौः, वृत्रघ्नः—एते प्रयोगा यथाशास्त्रं साधनीयाः ।

३ 'चतुर्मुख' इत्यत्र रेफस्यानुनासिकः कथं नेति समाधीयताम् ।

४ प्राङ्मुखी, अशिश्वी, गार्ग्यायणी, आचार्यानी, युवतिः इत्येतान् प्रयोगान् यथाशास्त्रं संसाध्य जातिलक्षणस्य सोदाहरणा व्याख्या कार्या ।

५ जरसे इति प्रयोगे याडभावं संसाध्य अतिखट्वायेत्यत्र याडापाद्यनिराक्रियताम् ।

१९३१

१ विश्वपाभिरित्यत्र ढत्वं कथं प्राप्नोति ? कथं वा निराक्रियते । सम्यङ् निरूप्यताम् ।

२ 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति सूत्रे पूर्वग्रहणस्य वैयर्थ्यमुपपाद्य सार्थक्यं प्रदर्श्यताम् ।

३ वक्ष्यमाणेत्यत्र ङीपः प्राप्तिरुद्भाव्य समाधीयताम् । अथवा 'मपर्यन्तस्येति' सूत्रस्य प्रयोजनं सुस्पष्टं प्रतिपाद्यताम् ।

४ प्रियास्तिस्रो यस्य यस्या वेति विग्रहे षष्ठीविभक्तौ यानि रूपाणि भवन्ति तानि यथाशास्त्रं संसाध्य अतित्रिशब्दस्य सप्तसु विभक्तिषु सर्वाणि रूपाणि लेखनीयानि ।

५ पटत्पटेति, संस्कर्ता, अहो रूपम्, उडुलोमाः, खलप्वः, आस्ना, अतियुष्माकम्, जक्षतः, गवाङ्क्षु, एकपदा, कर्त्री, सहोरूः, एते प्रयोगा यथाशास्त्रं साधनीयाः ।

---

